बौद्धस्य व्याप्तिप्रदर्शकोदाहरणपक्षधर्मतामात्रप्रदर्शकोपनयात्मकावयवद्वयवादितया प्रतिज्ञाद्यप्रयोगात्। विप्रतिपत्तिश्च शब्दादिः क्षणिको न वेत्याकारा क्षणिकत्वं निरुक्तमेव। केचित्तु सत्त्वमुत्पत्तिव्याप्यं न वेति विप्रतिपत्तिः व्याप्तिश्च यदा यत्र सत्त्वं तदा तस्योत्पत्तिरित्याकारा तेन क्षणिकत्वे पर्यवस्यति। यद्वा स्वाधिकरणक्षणोत्तरत्वं स्वध्वंसव्याप्यं न वेति विप्रतिपत्तिरित्याहुः। तदसत् तथा सति सत्त्वादेरुत्पत्त्यादिव्याप्यत्वस्यैव साधयितुमुचितत्वेन यत् सत् तत् क्षणिकमिति मूलासङ्गतेः। केचित्तु सत्त्वातिरिक्तधर्मो ध्वंसजनकतावच्छेदको न वेति विप्रतिपत्तिः विधिकोटिर्नैयायिकानाम् निषेधकोटिः परेषाम् परनये प्रतियोगिमात्रस्य ध्वंसजनकत्वात्। न चैतावता न क्षणिकत्वमिति वाच्यम्। प्रतियोग्यतिरिक्तस्य ध्वंसाजनकतया प्रतियोग्युत्पत्तिद्वितीयक्षण एव ध्वंसोत्पादादित्याहुः। तदप्यसत् मूलासङ्गतेः। व्यक्तिस्थलीयापत्तिवारणाय परमते ऽपि प्रतियोगिध्वंसयोस्तत्तद्व्यक्तित्वेन कार्यकारणभावस्यावश्यकतया निषेधकोटौ बाधापत्तेश्च। नव्यास्तु एतत्क्षणवृत्तयः एतत्क्षणानधिकरणसमयवृत्तयो न वेति विप्रतिपत्तिः। न च निषेधकोट्यप्रसिद्धिः खण्डशः प्रत्येकपदार्थप्रसिद्ध्या वाक्यार्थीभूतनिषेधप्रसिद्धिसम्भवात्। प्रतियोगिमद्वृत्तिहेतुमत्त्वज्ञानादेवाभावस्याप्रसिद्धस्यानुमितिसम्भवात्। मूले यत् सदित्यत्र सदित्यस्य एतत्क्षणे सदित्यर्थः। क्षणिकत्वं च एतत्क्षणानधिकरणसमयावृत्तित्वम्। यथोक्तक्षणिकत्वस्य साध्यत्वे स्वत्वस्याननुगतत्वात् व्यभिचारापत्तेः। घटश्च प्रसाध्याङ्को दृष्टान्तः पक्षतावच्छेदकं शब्दादित्वमप्येतत्क्षणवृत्तित्वमेव। एकदेशि-

नामन्वयप्रसङ्गे ऽंशतः सिद्धसाधनवारणाय विवादेति। स्वरूपकथन-मात्रं वा। यद्वा एतत्क्षणवृत्तयः एतत्क्षणाव्यवहितोत्तरसमयवृत्ति-ध्वंसप्रतियोगिनो न वेति विप्रतिपत्तिः। विधिकोटिः परेषाम्। निषेधकोटिश्च नैयायिकानाम्। पक्षतावच्छेदकावच्छेदेन विधेस्तत्सा-मानाधिकरण्येन निषेधस्य सिद्धेरुद्देश्यतया ऽंशतः सिद्धसाधन-बाधौ। मूले यत् सदित्यत्र सदित्यस्य एतत्क्षणे सदित्यर्थः। क्षणिकत्वं च एतत्क्षणाव्यवहितोत्तरसमयवृत्तिध्वंसप्रतियोगित्वम्। दृष्टान्ते च घटपदम् एतत्क्षणाव्यवहितोत्तरसमयोत्पत्तिकध्वंस-प्रतियोगिघटपरम्। नातः प्रसाध्याङ्गता। पक्षतावच्छेदकमपि शब्दा-दित्वम् एतत्क्षणवृत्तित्वं विवादाध्यासित इति स्वरूपकथनमिति प्राहुः। तदसत् मूलस्य उदत्तरतापत्तेः। प्रतिबन्धासिद्धेरिति। प्रतिबन्धो व्याप्तिः तदसिद्धेरित्यर्थः। न च ध्वंसस्य प्रतियोगिमात्र-मेव हेतुः समवायिकारणनाशादेर्हेत्वन्तरस्य कल्पने ऽतिगौरवात्[१]। तथा च तत्क्षणे सतो भावस्य तदव्यवहितोत्तरक्षणे विनाशस्यावश्यक-तया प्रतिबन्धसिद्धिरिति वाच्यम्। अप्रामाणिकानन्तक्षणिक-घटादितन्नाशतद्विशेषहेतुहेतुमद्भावानां क्षणिकपूर्वपूर्वघटादिव्यक्तेः क्षणिकोत्तरोत्तरघटादिव्यक्तिं प्रति हेतुहेतुमद्भावानां च कल्प-नामपेक्ष्य समवायिकारणनाशादेर्हेतुत्वकल्पनाया एव लाघवादिति भावः। यद्वा घटस्य प्रसाध्याङ्गकदृष्टान्ततया अन्वयसहचारनिश्चया-भावेन व्याप्त्यनिश्चयादिति भावः॥

---

(१) अस्य गौरवात्—पा० १ पु०।

सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गेण भेदसिद्धौ तत्सिद्धिरिति चेत्। न विरुद्धधर्मसंसर्गासिद्धेः। प्रसङ्ग-विपर्ययाभ्यां[1] तत्सिद्धिरिति चेत्। न सामर्थ्यं हि कारणत्वं[2] वा योग्यता वा। नाद्यः साध्याविशिष्टत्वप्रसङ्गात्। व्यावृत्तिभेदादयमदोष इति चेत्। न तदनुपपत्तेः। व्यावर्त्यभेदेन विरोधो हि तन्मूलम्॥

प्रक० टी०। सामर्थ्येति। प्रतिक्षणं क्वचित् सामर्थ्यं क्वचिद-सामर्थ्यमिति विरुद्धधर्माध्यासात् क्षणिकत्वसिद्धौ व्याप्तेः सिद्धि-रित्यर्थः। यद्यपि विरुद्धधर्माध्यस्तत्वादेव भेदसिद्धिरिति सत्त्वहेतो-र्वैयर्थ्यं तथापि ततो भेदमात्रमनेन तु क्षणिकत्वमिति प्रकारभेद इति भावः। विरुद्धेति। स्वरूपयोग्यत्वस्वरूपायोग्यत्वयोर्ययोर्विरोध-स्तयोः संसर्ग एव नास्ति संसृष्टत्वेनानुभूयमानकारित्वाकारित्वयोः साहित्यासाहित्ययोस्तु न विरोध इत्यर्थः। प्रसङ्गेति। प्रसङ्गाभ्यां विपर्ययाभ्यां चेत्यर्थः। तथाहि कुशूलस्थं बीजं यद्यङ्कुरसमर्थं स्यादङ्कुरं कुर्यात् न च करोति तस्मान्न समर्थमेवं क्षेत्रपतितं यद्यसमर्थं स्यान्न कुर्यात् करोति च तस्मान्नासमर्थमिति प्रसङ्गाभ्यां विपर्ययाभ्यां च कुशूलस्थक्षेत्रपतितबीजयोर्भेदः। तथा च क्षणिकत्वमेव पर्यवस्येदिति भावः। समर्थस्य क्षेपायोगादिति

(१) प्रसङ्गतद्विपर्ययाभ्यां—पा० १ पु०।
(२) करणं वा—पा० १ पु०।

तत्कालीनं सामर्थ्यं तत्कालीनफलोपधानलक्षणं कारित्वमापादय-तीति यदा कदाचित् करणेन न सिद्धसाधनम्। करणमिति। फलोपधानमित्यर्थः। साध्याविशिष्टत्वादिति(१)। आपाद्याविशिष्ट-त्वात्। साध्यसाधनयोरिवापाद्यापादकयोरपि भेदे सत्यापादन-प्रवृत्तेः। असमर्थव्यावृत्तिरापादिकाकारित्वव्यावृत्तिश्चापाद्येति ना-पाद्याविशेष इत्याह। व्यावृत्तीति। व्यावृत्त्योरपि भेदः प्रकृते नास्तीत्याह। नेति। कथं नास्तीत्यत आह। व्यावर्त्यभेदेनेति। तन्मूलं व्यावृत्तिभेदमूलमित्यर्थः॥

---

भगी० टी०। यद्यपि पूर्वक्षणवर्त्ती भावः तदव्यवहितोत्तरक्षण-वर्त्तिभावभिन्नो विरुद्धधर्माध्यस्तत्वादिति सिद्धसाधनम् यतः कुतश्चित् सिद्धावपि मिथः प्रतियोगिकभेदासिद्धेः। न च मिथः प्रतियोगिकभेदाश्रयत्वं साध्यं यतः कुतश्चिद्भेदस्यापि मिथोभेदत्वेन प्रकृतव्याप्यसिद्धेः। तथापि सामर्थ्याश्रयो धर्मसामर्थ्याश्रयाद् भिन्न इति साध्यम् तादृशस्तालीक एव तन्मते प्रसिद्ध इत्याह। साम-र्थ्येति। न चैवं प्रतिक्षणविरुद्धधर्माध्यासादेव क्षणिकत्वसिद्धेः सत्त्वं हेतुर्व्यर्थमिति वाच्यम्। सत्त्वरूपोपधानेन साध्यसिद्धौ तदुपयोगा-दिति भावः। स्वरूपयोग्यत्वायोग्यत्वरूपसामर्थ्यासामर्थ्ये एकत्र न वर्त्तेते कारित्वाकारित्वरूपे साचित्यासाचित्यरूपे च ते प्रत्यक्षेणैव धर्मिगतत्वेनानुभवान्न विरुद्धे इत्याह। विरुद्ध इति। यद्यपि यदि

---

(१) साध्याविशिष्टत्वादित्येव मूलपाठमनुसृत्य व्याख्यातम्।

कुशूलस्थबीजमङ्कुरकारणं स्यात् तदा कुर्यादित्येवेष्टापत्तिः यदा कदाचित् करणात्। तथापि यद्यं कुशूलस्थबीजक्षणोऽङ्कुरकारणाधारः स्यादङ्कुरोत्पत्तिपूर्वक्षणः स्यादिति प्रसङ्गोऽतादृशत्वान्न तथाभूत इति। विपर्ययस्य व्याप्तिग्राहक इत्यभिप्रेत्याह। प्रसङ्गेति। करणं कार्योपधानम्। योग्यता तदवच्छेदकरूपवत्त्वम्। साध्येति। साध्यमत्र व्यापकमात्रमापाद्यानुमेयसाधारणं विवक्षितम्। सामर्थ्यं यदि कार्योपधानं तदा कुर्यादिति प्रसङ्गे आपाद्यावैशिष्ट्यम् अकारित्वादकारीति हेतौ च साध्यावैशिष्ट्यमित्यर्थः। अपोहपदार्थपक्षे समर्थकारिपदयोरसमर्थव्यावृत्त्यकारिव्यावृत्ती वाच्ये इति नोक्तदोष इत्याह। व्यावृत्तीति। व्यावृत्त्योर्भेदः स्वरूपत औपाधिको वा नाद्य इत्याह। तदिति। अलीकत्वप्रसङ्गादित्यर्थः। ननु व्यावर्त्यभेदाद्व्यावृत्त्योर्भेद इत्यत आह। व्यावर्त्येति। व्यावर्त्यमिह व्यावृत्तेराश्रयो विशेष्यं तयोर्यो विरोधस्तादात्म्यानुपपत्तिः। स्वव्यावृत्त्योर्भेदे मूलं स चात्र नास्ति यावदेवासमर्थव्यावृत्तेर्व्यावर्त्यं तदेवाकारित्वव्यावृत्तेरपीति तयोर्न भेद इत्यर्थः॥

---

रघु० टी०। भेदसिद्धाविति। अङ्कुरमकुर्वाणादङ्कुरकारिण इव तदकुर्वाणात् तत्कारिणः। एवं तत्तदकुर्वाणात् तत्तत्कारिणो भेदसिद्धा क्षणिकत्वसिद्धौ तेषु क्षणिकत्वसत्त्वयोर्व्याप्तिसिद्धिरित्यर्थः। किञ्चिद्धि व्याप्तिकाच सत्त्वात् सम्भावे क्षणिकत्वानुमानमिति। किञ्चित्सामर्थ्यादिकमविरुद्धं किञ्चित्साधिष्ठमित्याशयेनाह। विरुद्धेति।

प्रसङ्गेति । यद्यदा यत्कार्यमङ्कुरं वा प्रति समर्थं तत् तदा तत् करोति । यथा सहकारिसध्यमध्यासीनबीजमङ्कुरसमर्थं तत् तदानीं कुशूलस्थबीजमुपेयते परैरिति प्रसङ्गः । यद्यदा यत्कार्यमङ्कुरं वा न करोति तत् तदा न तत्समर्थं यथा यावत्स्वमङ्कुराकारि शिलाशकलमङ्कुरासमर्थम् न करोति च कुशूलस्थबीजं तदानीमङ्कुरमिति विपर्ययः । तेन कुशूलस्थतादशायां संयोगादेरन्तरबीजस्य वा कालान्तरे चाङ्कुरस्य जननाभ्युपगमे ऽपि न क्षतिः । यन्नाङ्कुरसमर्थं तन्नाङ्कुरं करोति यथा शिलाशकलमङ्कुरासमर्थं च सहकार्यसमवहितं बीजमिष्यते परैरिति प्रसङ्गः । यदङ्कुरं करोति तदङ्कुरसमर्थं यथा धरण्यादिभेदः करोति च सहकारिसमवहितं बीजमङ्कुरमिति विपर्ययस्तु सामर्थ्यसाधनाय नोपादेयः अनभ्युपगमेन प्रसङ्गहेतोरसिद्धेः सामर्थ्यस्य सहकारियोग्यतायाः स्वरूपयोग्यताया वा अभ्युपगतत्वेन विपर्यये सिद्धसाधनादिति । सामर्थ्यं हि करणत्वं तद्द्विविधम् । फलोपधानं योग्यता च । फलोपधानं च फलाव्यवहितप्राक्कालसम्बन्धः । तदेव करणं कारित्वं च । योग्यतापि द्वेधा सहकारियोग्यता स्वरूपयोग्यता च । चरमापि द्विविधा जनकतावच्छेदकरूपं बीजत्वादि कुर्वद्रूपत्वं वा सहकारिविरहप्रयुक्तकार्याभाववत्त्वं च । तच्च क्रमेण विकल्प्य दूषयति । सामर्थ्यं चेति । नाद्यः पक्षः । एवमग्रे ऽपि । साध्येति । साध्यं व्यापकम् । तथा चापाद्यानुमेयाभ्यामापादकानुमापकयोरविशेषप्रसङ्गादित्यर्थः । असमर्थाकारित्वावृत्त्योर्भिन्नयोरेव समर्थाकारिपदाभ्यामभिधानाच्च साध्याविशेष इत्याह । व्यावृत्तीति । तदनुपपत्तेर्व्यावृत्तिभेदानुप-

पत्तेः। व्यावर्त्यभेद एकेन व्यावर्त्यस्य विशेष्यस्य भेदोऽपरव्यावर्त्यात्। एकोपगृहीतस्यापरेण परित्याग इति यावत्। स च द्विविधः। एकोपगृहीतस्य अन्येन नियमतः परित्यागः कस्यचिदुपग्रहे सति कस्यचित्परित्यागस्य असावप्येकतरमात्रेण परस्परेण च। तत्राद्यो विरुद्धयोरेव मध्यमो व्याप्यव्यापकयोरेव चरमो व्यभिचारिणोरेव। तादृशेन भेदेन विरोध ऐक्यानुपपत्तिः। तन्मूलं व्यावृत्तिभेदमूलं तच्चेह नास्तीति॥

---

मथु० टी०। सामर्थ्येति। क्वचित्सामर्थ्यं क्वचिच्चासामर्थ्यमिति विरुद्धधर्माध्यासात् सिद्धे चणिकत्वे व्याप्तेः सिद्धिरिति भावः। यद्यपि विरुद्धधर्माध्यासादेव भेदसिद्धिरिति सत्त्वस्य हेतोर्वैयर्थ्यं तथापि तस्माद्भेदमात्रमनेन च चणिकत्वमिति प्रकारभेद इत्याशयः। स्वरूपयोग्यत्वास्वरूपयोग्यत्वात्मकसामार्थ्यासामर्थ्ये एकत्र न वर्त्तेते कारित्वाकारित्वरूपे साहित्यासाहित्यरूपे च ते प्रत्येकेणैव धर्मिगतत्वेनानुभवाच्च विरुद्धे इत्यत आह। विरुद्धेति। प्रसङ्गेति। प्रसङ्गाभ्यां विपर्ययाभ्यां चेत्यर्थः। तथाहि कुशूलस्थं बीजं यद्यङ्कुरसमर्थं स्यादङ्कुरं जनयेत् न चोत्पादयति तस्मान्न समर्थमेवं चेत्रपतितं यद्यसमर्थं स्यान्न जनयेत् जनयति च तस्मान्नासमर्थमिति प्रसङ्गाभ्यां विपर्ययाभ्यां च बीजयोर्भेद इति भावः। करणं कार्योपधानम्। योग्यता तदवच्छेदकरूपवत्त्वम्। साध्येति। साध्यं व्यापकम्। तथा चापाद्यानुमेयाभ्यामापादकानुमापकयोरविशेष-प्रसङ्गादित्यर्थः॥

**स च न तावन्मिथो व्यावर्त्यप्रतिक्षेपाद् गोत्वाश्वत्ववत् तथा सति विरोधादन्यतरापाये[1] बाधासिद्ध्योरन्यतरप्रसङ्गात् ॥**

प्रक्ष० टी०। विरोधमेव प्रतिक्षिपति। स चेति। अन्योन्यव्यावर्त्यं प्रतिक्षिपतो[2]र्गोत्वाश्वत्वलक्षणव्यावृत्त्योर्भेदः सम्भवतु गोत्वस्य व्यावर्त्यां विशिष्टां गोव्यक्तिमश्वत्वं प्रतिक्षिपति। अश्वत्वव्यावर्त्यां चाश्वव्यक्तिं गोत्वमिति हि तयोर्भेदः। प्रकृते तु नेवमित्यर्थः। ननु प्रकृते ऽपि तथैव किं न स्यादत आह। तथा सतीति। यदि कारित्वं सामर्थ्येन प्रतिक्षिप्येत तदापाद्यबाधः स्यात् यदि कारित्वेन सामर्थ्यं प्रतिक्षिप्येत तदापादकासिद्धिरित्यर्थः। आपाद्यबाधो गुण एवेति चेत्। न आपाद्यापादकयोः क्वापि सामानाधिकरण्यं न स्यादिति मूलशैथिल्यं विपर्ययापर्यवसानं चेति भावः॥

---

भगी० टी०। एतदेव विशदयति। स चेति। व्यावर्त्ययोर्व्यावृत्त्युपयाययोः मिथोऽन्योन्यप्रतिक्षेपादन्योन्यपरिगृहीतव्यक्तिव्यावर्तनात्र तावद्व्यावृत्तिभेद इत्यर्थः। गोत्वेति। अगोव्यावृत्तेर्यत् परियाप्यं गोत्वलक्षणं तत्प्रतिक्षेपकमश्वत्वमनश्वव्यावृत्तिपरियाप्याश्व-

---

(१) अन्यतरापायेन—पा० १ पु०।

(२) प्रतिक्षिपतोः – पा० १। ३ पु०।

प्रतिक्षेपकं च गोत्वमिति। तथा सतीति। गोत्वेनाश्वत्वसाधन इव सामर्थ्यात् कारित्वे यदि पक्षे हेतुरस्ति तदा न साध्यमिति बाधः। साध्यसत्त्वे च हेतोरसिद्धिः कारित्वात् सामर्थ्यसाधनेऽप्युक्तदोषः। एवमकारित्वादसामर्थ्यसाधनेऽप्यकारित्वसत्त्वे सामर्थ्यसत्त्वाद्बाधोऽसामर्थ्यसत्त्वे च कारित्वं ध्रुवमिति स्वरूपासिद्धिरित्यर्थः। नन्वापाद्यस्य बाधो न तर्के दोषः किं तु गुण एव अन्यथापाद्यसत्त्वे इष्टापत्तेः एवमसिद्धिरापादकासिद्धिः आपादकं च सर्वत्र पराभ्युपगतमेव तत्राचास्त्येव। अथ विपर्ययविषयेयं फक्किका तथाहि ययोर्विरोधस्तदभावयोरपि विरोध इति समर्थत्वकारित्वयोर्विरोधे तदभावयोरपि विरोध इति। यद्यकारित्वं हेतुस्तत्र तदा बाधः अथ साध्यमस्ति तदा हेतोरसिद्धिरिति। न हि ययोर्विरोधस्तदभावयोरपि विरोध इति नियमः गोत्वाश्वत्वाभावयोरेकत्र सत्त्वात् किं च निर्विशेषितसामर्थ्येन निर्विशेषितकारित्वं नापाद्यते प्रसङ्गे तथा सतीष्टापत्तेः। यावत्सत्त्वं किञ्चित् करणात् विपर्यये साध्यहेत्वोर्बाधासिद्धी किन्त्वङ्कुरसामर्थ्येनाङ्कुरकारित्वमापाद्यते। एवं विपर्यये ऽङ्कुराकारित्वाङ्कुरासामर्थ्ययोर्घटेन सहभाव एवेति क्व विरोधः। यत्तु सामर्थ्येन कारित्वापादने बाधो विरोधः अत एवासिद्धिर्व्याप्यसिद्धिरिति। तन्न उपजीव्यत्वेन व्याप्यभावस्यैव दोषत्वे विरोधाभिधानस्याप्रयोजकत्वात्। अपि च सामर्थ्यकरणयोः परस्परविरोधे ऽकरणादसमर्थमिति विपर्यये गोत्वाश्वत्वयोस्तृतीयकोटिवत् सामर्थ्यकरणातिरिक्तकोटिसम्भवे व्यभिचारोऽपि स्यात्। अत्राहुः तर्कपक्षे आपाद्यताप्रयोजकव्याप्तिबाध

एवापाद्यबाधः आपादकताप्रयोजकव्याप्यत्वरूपप्रयोजकविरह एवापादकासिद्धिः व्याप्यत्वासिद्धिपदेन च व्यभिचारोऽपि उच्यते प्रकरणादसमर्थमिति विपर्यये तृतीयकोट्यङ्गीकारेण व्यभिचारसत्वे व्याप्यत्वस्य तत्राप्यभावात्। यद्वा गोत्वाश्वत्वयोरिव विरोधाभ्युपगमे करणात् सामर्थ्यानुमितिर्न स्यात्। व्यावृत्त्योर्विरोधेन नियतसामानाधिकरण्यरूपव्याप्त्यभावात् दृष्टान्त इत्यव्यावृत्य व्याख्येयमिति वयम्। दृष्टान्ते घटादौ यदि हेतुरस्ति तदा बाधः साध्याभावः साध्यविकलो दृष्टान्त इत्यर्थः। अथ दृष्टान्ते साध्यमस्ति तदा साधनं नास्तीत्यसिद्धिः साधनासिद्धिः साधनविकलो दृष्टान्त इत्यर्थः॥

---

रघु० टी०। तदेव व्युत्पादयति। न चेति। न त्विरोधः। मिथ इत्यादि। व्यावर्त्यस्य नियमेन प्रतिक्षेपात् प्रतिक्षेपमात्रस्य व्यभिचारिसाधारण्यादेतावतैव सामञ्जस्ये मिथ इति व्यावृत्त्योरसामानाधिकरण्यस्य स्फुटतरप्रतिपत्तये। बाधासिद्धी धर्मिणि साध्यसाधनयोरभावौ। तथा चासमर्थाकारिव्यावृत्त्योरेकतरसत्त्वेऽन्यतराभावनियमेन सामानाधिकरण्यविरहे प्रसक्ते त्विरोधो विपर्यये च व्यभिचार इति भावः॥

---

नापि तदाक्षेपप्रतिक्षेपाभ्यां वृक्षत्वशिंशपात्ववत् परा-

परभावानभ्युपगमात्। अभ्युपगमे वा समर्थस्याप्यकरण-मसमर्थस्यापि वा करणं प्रसज्येत॥

शङ्क० टी०। ननु गोत्वाश्वत्ववत् परस्परात्यन्ताभावसामानाधिकरण्यं मास्तु वृक्षत्वशिंशपात्ववद्व्याप्यव्यापकभाव एव व्यावृत्त्योः स्यादेतावतापि भेदः सिद्ध्यत्येवेत्यत आह। नापीति। आक्षेपः सङ्ग्रहः प्रतिक्षेपो व्यवच्छेदः तथा च वृक्षत्वस्य पनससङ्ग्राहकत्वं शिंशपात्वस्य च तद्व्यवच्छेदकत्वम्। न चैकस्यैतदुपपद्यते इति तयोर्भेदोऽस्तु स च व्याप्यव्यापकभावाधीनः। प्रकृते च तथाभ्युपगमे सामर्थ्यस्य व्यापकत्वे कथमापादकत्वं व्यभिचारात्। व्याप्यत्वे तु सामर्थ्यं विनापि कारित्वं स्यादित्यनिष्टमित्यर्थः॥

---

भगी० टी०। नापीति। आक्षेपो व्याप्यापेक्षयाऽधिकसंग्राहकत्वमिति यावत्। प्रतिक्षेपो व्यापकोपगृहीतकिञ्चित्प्रतिक्षेपकत्वं व्याप्यत्वमिति यावत्। यथा वृक्षत्वेनाक्षिप्तपनसादिप्रतिक्षेपकं शिंशपात्वमित्यपि नास्ति। कारित्वसमर्थत्वयोर्व्याप्यव्यापकभावानभ्युपगमादित्यर्थः। अभ्युपगमे वा परापरभावस्येति शेषः। कारित्वस्य समर्थत्वव्यापकत्वे दोषमाह। समर्थस्यापीति। तथा च तच्चैवानैकान्तिकमिति भावः। व्याप्यत्वे दूषणमाह। असमर्थस्यापीति। तथा च समर्थत्वं विहायापि कारित्वमिति विरोध इति भावः॥

---

रघु० टी० । नापीत्यादि । तयोरेकेन व्यावर्त्तयोरपरेणाक्षेप-प्रतिक्षेपाभ्यां परिग्रहपरित्यागाभ्यां द्विविधाभ्यामुपदर्शिताभ्यां वृक्षत्व-शिंशपात्ववत् यवत्वाङ्कुरत्वकुर्वद्रूपवच्च । परापरभावेति । मिथो व्यभिचारस्याप्युपलक्षकम् । परापरभावस्य मिथो व्यभिचारस्य चाभ्युपगमे दोषमाह । अभ्युपगमे चेत्यादिना । सामर्थ्यस्य परत्वे समर्थस्याप्यकरणं कारित्वस्य परत्वे तु असमर्थस्यापि करणं मिथो व्यभिचारे तूभयं प्रसज्येत । तथा च समर्थस्याकरणे व्यभिचारः असमर्थस्य करणे तु विरोधः । विरोधाय इत्ते जलाग्नौ च विरुद्धधर्माध्यास इति भावः ॥

**नाप्युपाधिभेदात् कार्यत्वानित्यत्ववत् तदभावात् । न च शब्दमात्रमुपाधिः पर्यायशब्दोच्छेदप्रसङ्गात् ॥**

शङ्क० टी० । ननु गोत्वाश्वत्ववत् परस्परपरिहारो वृक्षत्व-शिंशपात्ववत् सामान्यविशेषभावो वा मास्तु उक्तदोषात् किं तु कार्यत्वानित्यत्ववत् समव्याप्तिरस्तु तथा च स्याद्देवापाद्यापादक-भावो भेदाधीन इत्यत आह । नापीति । उक्तोपाधेरन्यस्मादुपाधि-भेदादित्यर्थः । प्रागभावावच्छिन्नसत्तायोगित्वं[१] कार्यत्वं ध्वंसा-वच्छिन्नसत्तायोगित्व[२]मनित्यत्वमित्युपाधेर्भिन्नत्वमस्तु प्रकृते तु न तथोपाधिरस्तीत्याह । तदभावादिति । ननु समर्थपदवाच्यत्वाद-

(१) सत्ताप्रतियोगित्वं—पा० २ पु० ।

(२) सत्ताप्रतियोगित्वात्—पा० २ पु० ।

न्यदेवकारिपदवाच्यत्वमिति कथं न भेद इत्यत आह। न चेति। शब्दभेदादेव यद्यर्थभेदस्तदैकस्मिन्नर्थे शब्दानां वृत्तिः पर्यायत्वं तन्न स्यादित्यर्थः॥

---

भगी० टी०। औपाधिकं व्यावृत्त्योर्भेदमाशङ्क्य दूषयति। नापीति। यथा कार्यत्वानित्यत्वयोः प्रागभावध्वंसरूपोपाधिभेदाद्भेद-स्तथा प्रकृते ऽपि व्यावृत्त्योर्न कश्चिदुपाधिभेद इत्यर्थः। ननु कारित्व-पदवाच्यत्वसमर्थपदवाच्यत्वरूपोपाधिभेदाद्व्यावृत्तिभेदः स्यादित्यत आह। न चेति। यद्यपि शब्दभेदस्योपाधित्वे ऽप्यभिन्नप्रवृत्तिनिमि-त्तकतया पर्यायत्वं स्यादेव तथापि शब्दभेदादर्थभेदः कल्प्यत इति मते पर्यायशब्दोच्छेदो दूषणमित्यर्थः। वस्तुतो यदि कुशूलस्थं बीजं समर्थपदवाच्यं स्यात् कारिपदवाच्यं स्यादित्यचेष्टापत्तिः। तस्यापि कारिपदवाच्यत्वाभ्युपगमात् विपर्यये च हेतुसिद्धिरिति भावः॥

---

रघु० टी०। ननु माभूदिह स्वव्यावर्त्यभेदेन विरोधः स्वाव-च्छेदकोपाधिव्यावर्त्यभेदेन तु स्यात् प्रागभावत्वध्वंसत्वलक्षणावच्छेद-कोपाधिव्यावर्त्यभेदादिव कार्यत्वानित्यत्वयोरित्याशङ्क्य निराकरोति। नापीति। कार्यत्वेति। परेषामभावस्यालीकत्वेन वास्तवस्य व्यावर्त्यस्य विरहे ऽपि व्यावहारिकं तद्बोध्यम्। प्रागभावावच्छिन्नं सत्त्वं कार्यत्वं ध्वंसावच्छिन्नं चानित्यत्वं स्वमतेनोक्तमित्यपि केचित्। शब्दमात्र-बोधकशब्दवृत्तिरानुपूर्वीभेदादिरुपाधिर्विरोधकस्यादक इति शेषः।

पर्यायेति । बोधकशब्दभेदेन बोध्यव्यावृत्तिभेदे पर्यायोच्छेदः भिन्नयोरभिन्नप्रवृत्तिनिमित्तकत्वं पर्यायत्वम् ॥

**नापि विकल्पभेदः स्वरूपकृतस्य तस्य व्यावृत्तिभेदकत्वे ऽसमर्थव्यावृत्तेरपि भेदप्रसङ्गात् । विषयकृतस्य तु तस्य भेदकत्वे ऽन्योन्याश्रयप्रसङ्गात्(१) । न च निर्निमित्त एवायं व्यावृत्तिभेदव्यवहारोऽतिप्रसङ्गात् ॥**

शङ्क० टी० । कारित्वप्रकारकज्ञानात् समर्थत्वप्रकारकं ज्ञानमन्यदिति तद्भेदादपि न भेद इत्यत आह । नापीति । स्वरूपकृतस्येति । ज्ञानव्यक्तिभेदमात्रकृतस्येत्यर्थः । अन्योन्याश्रयेति । विषयभेदाधीनो विकल्पभेदो विकल्पभेदाधीनश्च विषयभेद इत्यन्योन्याश्रय इत्यर्थः ॥

---

भगी० टी० । ननु विकल्पभेद एव व्यावृत्तिभेदोपाधिः स्यादित्यत आह । नापीति । स विकल्पभेदः स्वरूपकृतो विषयकृतो वा । नाद्यः एकत्राप्यसामर्थ्यव्यावृत्तौ विकल्पव्यक्तिस्वरूपभेदाधीनभेदापातादित्यर्थः । वस्तुतो ज्ञानव्यक्तिभेदस्य विषयभेदनियतत्वेन यस्य व्याप्तिः प्रतीता न तस्य पक्षधर्मत्वमित्यनुमितिमात्रोच्छेद इति भावः । नान्त्यः व्यावृत्तिभेदविषयत्वेन विकल्पभेदसिद्धिः ततश्च व्यावृत्तिभेदसिद्धिरित्यन्योन्याश्रयादित्याह । विषयकृतस्येति ।

---

(१) परस्पराश्रयत्वप्रसङ्गात्—पा० १ पु० ।

अतिप्रसङ्गादिति। सामर्थ्यभेदव्यवहारो यदि यावत् तावत् प्रयोजकविरहे ऽपि स्यात् अभिन्ने ऽपि स्यादित्यर्थः ॥

---

रघु० टी० । विकल्पभेद इति। उपाधिरित्यादिकमनुषज्यते। भेदप्रसङ्गादिति। तथा च व्याप्तिपक्षधर्मताज्ञानाभ्यां विषयीकृतयोर्भेदे ऽ प्रसङ्गादिवार्तेति भावः ॥

नापि द्वितीयः। सा हि सहकारिसाकल्यं वा प्रातिस्विकी वा। न तावदाद्यः पक्षः सिद्धसाधनात् परानभ्युपगमेन हेत्वसिद्धेश्च। यत् सहकारिसमवधानवत् तद्धि करोत्येवेति को नाम नाभ्युपैति[१] यमुद्दिश्य साध्यते। न चाकरणकाले सहकारिसमवधानवत्त्वमस्माभि[२]रभ्युपेयते यतः प्रसङ्गः प्रवर्तेत ॥

शङ्क० टी० । योग्यतापक्षं दूषयति। नापीति। सा हीति। प्रति स्वं नियता प्रातिस्विकी। यथा बीजेषु बीजत्वं तन्तुषु तन्तुत्वम्। तत्तत्कारणतावच्छेदिका जातय इत्यर्थः। सिद्धसाधनादिति। संग्रहं विवृणोति। यदिति। परानभ्युपगमेनेति विवृणोति। न चेति। अकुर्वतः कुसूलस्थस्य बीजस्य परेण नैयायिकेन सहकारिसमवधानानभ्युपगमात् तर्कस्य पराभ्युपगममादायैव प्रवृत्तेरित्यर्थः ॥

---

(१) नाभ्युपगच्छति—पा० १ पु० ।

(२) समवधानवत्त्वमस्माभि—पा० १ पु० ।

भगी० टी० । योग्यता कार्यप्रयोजकरूपवत्ता । सा च द्वयी कार्योपधानप्रयोजकरूपवत्ता कारणतावच्छेदकरूपवत्ता च । तत्राद्या सहकारियोग्यता अन्त्या स्वरूपयोग्यता । तामिमां क्रमेण विकल्पयति । सहकारीति । प्रातिस्विकी स्वरूपयोग्यतेत्यर्थः । सहकारिमद्बीजमधिकृत्य यदि बीजं सहकारिसमवहितं स्यात् तदा कुर्यादिति प्रसङ्गे सिद्धसाधनमिष्टापत्तिः तदसमवहिते तु करणप्रयोजकसहकारिसमवधानरूपापादकासिद्धिः विपर्यये तत्कारित्वात् । सहकार्यसमवहितमित्यत्र सहकारिविरहिणि सिद्धसाधनम् सहकारिसमवहिते तु कारिण्यकारित्वस्य हेतोरसिद्धिरित्याह । सिद्धसाधनादिति । परः स्थिरवादी । प्रसङ्गे सिद्धसाधनं विवृणोति । यदिति । तत्रैवासिद्धिं स्पष्टयति । न चेति । विपर्यये त्वसिद्धेर्विवरणं यदिति । सिद्धसाधनस्य तु न चेति ॥

---

रघु० टी० । प्रातिस्विकी प्रतिकारणजातीयनियता । सिद्धसाधनादिति । सिद्धसाधनहेत्वसिद्धी विपर्ययप्रसङ्गयोः । परः स्थिरवादी । विपर्यये सिद्धसाधनं विवृणोति । यदित्यादिना । यदि कञ्चिदकुर्वाणमपि कारणजातीयं सहकारिसमवहितमभ्युपेयात् तदा तं प्रति तथाकारित्वेन सहकारिसमवधानाभावः साधयितुमुचितः न त्वेतदस्ति सहकारिसमवहिते करणनियमाभ्युपगमेनार्थतोऽकारिणः सहकारिसमवधानाभावनियमस्याप्यभ्युपगतत्वात् । तथा चाकुर्वाणे सहकारिसमवधानाभावसाधने सिद्ध-

साधनमिति भावः । यत्तु सहकारिसमवहिते सहकारिसमवधानेन करणप्रसञ्जने सिद्धसाधनमिष्टापत्तिरिति । तन्न तादृशप्रसङ्गस्याप्रस्तुतत्वेन तत्र दूषणोपन्यासायोगात् ॥

**प्रातिस्विकी तु योग्यता अन्वयव्यतिरेकविषयीभूतं बीजत्वं वा स्यात् तदवान्तरजातिभेदो वा सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं वा ॥**

शङ्क० टी० । बीजे सत्यङ्कुरं तद्विना नेत्यन्वयव्यतिरेकौ । तदवान्तरजातिभेदः कुर्वद्रूपत्वं पराभ्युपगतमित्यर्थः । उभयसाधारणीं योग्यतामाह । सहकारीति । सहकारिवैकल्यप्रयुक्तो व्याप्यो यः कार्याभावस्तद्वत्त्वमित्यर्थः । शिलाशकले कार्याभावो न सहकारिवैकल्यप्रयुक्तः किं तु शिलात्वप्रयुक्त एव बीजे सहकारिसाकल्ये कार्याभावो न भवत्येव ॥

---

भगी० टी० । बीजत्वमिति स्वमते अन्वयेत्यादिना तत्र मानं सूचितम् । तदवान्तरेति । बौद्धाभिमतकुर्वद्रूपतेत्यर्थः । उभयमतसाधारणमाह । सहकारीति । सहकार्यभावावच्छिन्नकार्याभावनिरूपितव्याप्यत्वम् । सहकार्यभावस्य व्यर्थत्वात् नेदं सहकार्यभावव्याप्यजनकत्वं वा स्वरूपयोग्यत्वमित्यर्थः । बीजादौ कार्याभावव्याप्यतायाः सहकार्यभावेनावच्छेदात् शिलायां तु शिलात्वेनैवावच्छेदात् ॥

---

रघु० टी० । अन्वयव्यतिरेकेति । अन्वयव्यतिरेकघटेत्यर्थः । बीजत्वमिति बीजमधिकृत्य । एतच्च बीजस्यैवाङ्कुरजनकत्वमितिमतेन बीजे विनष्टे तदवयवेभ्य एवाङ्कुरोत्पाद इतिमतेन कपालादिव्यावृत्तकलमयवाद्यवयवानुगतजातिविशेषपरं बीजत्वपदमिति वदन्ति । तदवान्तरेति । बीजत्वव्याप्यं कुर्वद्रूपत्वं वेत्यर्थः । कार्याभावः कार्यकारित्वाभावः । चरमकारणस्याप्युत्तरकाले कार्यकारित्वाभावः सहकारिविरहप्रयुक्त इति भावः । यथाश्रुतं त्वस्माकं निमित्तासमवायिनोः परेषामुपादानस्याप्यसिद्धमिति द्रष्टव्यम् ॥

## न तावदाद्यः अकुर्वतोऽपि बीजजातीयस्य प्रत्यक्षसिद्धत्वात् । तत्रापि तत्त्वाविप्रतिपत्तेः ॥

शङ्क० टी० । अकुर्वतोऽपीति । यदि कुशूलस्थं बीजं स्यात् तदा कुर्यादिति प्रसङ्गो न च करोति तस्मान्न बीजमिति विपर्ययस्य व्यभिचारबाधाभ्यामनुपपन्न इत्यर्थः ॥

---

भगी० टी० । बीजजातीयमङ्कुराकारित्वादित्यत्र व्यभिचारमाह । अकुर्वतोऽपीति । तथा च विपर्यये व्याप्त्यभावात् प्रसङ्गे मूलशैथिल्यमिति भावः । तत्रापीति । अङ्कुरानुपहितस्य बीजत्वे ऽनुभवसिद्धे तत्रापि सम्प्रतिपत्तिः । भावत्वे परं तस्य विवाद इत्यर्थः ॥

---

रघु० टी० । अकुर्वतोऽपीत्यादि । तथा च बीजत्वस्य करण-व्यभिचारोऽकरणस्य बीजत्वाभावव्यभिचारश्चोभयसिद्ध इति न प्रसङ्गविपर्ययप्रवृत्तिरिति भावः ॥

न द्वितीयः(१) तस्य कुर्वतोऽपि मयानभ्युपगमेन दृष्टान्तस्य साधनविकलत्वात् । को हि नाम सुस्थात्मा प्रमाणशून्यमभ्युपगच्छेत् । स हि न तावत् प्रत्यक्षेणानुभूयते तथानवसायात् । नाप्यनुमानेन लिङ्गाभावात् । यदि न कश्चिद्विशेषः कथं तर्हि करणाकरणे इति चेत् क एवमाह नेति । परं किं जातिभेदरूपः सहकारित्लाभालाभरूपो वेति नियामकं प्रमाणमनुसरन्तो न पश्यामः । तथापि योऽयं सहकारिमध्यमध्यासीनोऽक्षेपकरणस्वभावो भावः स यदि प्रागप्यासीत् तदा प्रसह्य कार्यं कुर्वाणो गीर्वाणशापशतेनाप्यपहस्तयितुं न शक्यते इति चेत् युक्तमेतत् । यदक्षेपकरणस्वभावत्वम्(२) भावस्य प्रमाणगोचरः स्यात् तदेव कुतः सिद्धमिति नाधिगच्छामः । प्रसङ्गतद्विपर्ययाभ्यामिति चेत् न परस्पराश्रयप्रसङ्गात् । एवंस्वभावत्वसिद्धौ(३) हि तयोः प्रवृत्तिः तत्प्रवृत्तौ चैवंस्वभावत्वसिद्धिरिति ॥

---

(१) नापि द्वितीयः—पा० १ । ३ पु० ।　　(२) धर्मत्वं—पा० १ पु० ।
(३) स्वभावसिद्धौ—पा० १ पु० । अयमेव भगीरथाभिप्रेतः ।

शङ्क० टी०। कुशूलस्थं बीजं यदि कुर्वद्रूपत्वजातिमत् स्यात् कुर्यात् क्षेत्रपतितबीजवदिति प्रसङ्गं निरस्यति। न द्वितीय इति। तस्य जातिविशेषस्य। दृष्टान्तस्येति। क्षेत्रपतिते ऽपि बीजे कुर्वद्रूपत्वं नास्ति। तथा चापादकविकलो दृष्टान्त इत्यर्थः। ननु तवानभ्युपगममात्रेण कथं जातिविशेषविरह इत्यत आह। को हीति। प्रमाणाभावाधीन एवानभ्युपगमो ममेति भावः। प्रमाणाभावमेवोपपादयति। स हीति। अनुभव आलोचनम् तस्यैव तन्मते प्रमाणत्वात्। तथानवसायादिति। अवसायः सविकल्पकं तदेवालोचनोन्नायकम्। तदभावादालोचने प्रमाणान्तरं नास्तीत्यर्थः। लिङ्गाभावादिति। स चानुपलम्भादिति भावः। ननु करणान्यथानुपपत्त्यैव एव जातिविशेषस्तदभावश्चाकरणोन्नेयः कुशूलस्य इत्याह। यदीति। अर्थापत्तावन्यथोपपत्तिशङ्कामाह। क एवमाहेति। सहकारिलाभाधीनं करणं तदलाभाधीनमकरण-मिति[1] यद्यपि निश्चय एव तथाप्यापाततः सन्देहादप्यर्थापत्ति-र्दूषिता भवति तमेवाह। परमिति। बीजस्याक्षेपकरणस्वाभाव्ये साध्ये ऽपि[2] पूर्वापरबीजयोरैक्ये दोषमाह। तथापीति। वस्तुत एवाक्षेपकरणस्वाभाव्ये दोषोऽयं न त्वन्यथापीति परिहरति। युक्त-मेतदिति। अक्षेपकारित्वस्वाभाव्यं वास्तवं शङ्कते। प्रसङ्गेति। बीजं यदि अक्षेपकरणस्वभावं न स्यात् न कुर्यात् करोति च तस्मादक्षेपकारिस्वभावमिति प्रसङ्गविपर्ययाभ्यामक्षेपकारिस्वाभाव्य-

(१) तदभावाधीनमकरणमिति—पा० २ पु०।

(२) स्वाभाव्यमारोप्य—पा० २। ३ पु०।

सिद्धिरित्यर्थः। परिहरति। नेति। अक्षेपकरणस्वाभाव्यस्य प्रतियोगिनः प्रसिद्धौ तदभावमादाय प्रसङ्गप्रवृत्तिस्तत्प्रवृत्तौ च स्वाभाव्यसिद्धिरित्यर्थः॥

---

भगी॰ टी॰। यदीदं बीजमङ्कुरकुर्वद्रूपत्वजातिमत् स्यात् अङ्कुरकारि स्यादिति प्रसङ्गमूलव्याप्तिः सहकारिसमवहिते ग्राह्या तत्रैव च तदसिद्धिरिति दृष्टान्तस्य साधनेनापादकेन वैकल्यम्। एवं विपर्यये ऽप्यङ्कुराकारित्वेन तज्जात्यभावे साध्ये दृष्टान्तस्य शिलाया-स्तज्जात्यप्रसिद्धौ तदभावाप्रसिद्धेर्व्याप्यग्रहात् साधनवैकल्यमित्याह। तस्येति। सामग्रीमध्यप्रविष्टबीजे ऽपि तदभावमाह। को हीति। तदेव स्पष्टयति। स हीति। अवसायः सविकल्पकम्। तदभावे तद्धेयं न निर्विकल्पकमपीत्यर्थः। बीजमङ्कुरं करोतीति बुद्धेः फलोपहितस्वरूपविषयकत्वादिति भावः। ननु करणदशायामकरणदशाव्यावृत्तं बीजं यदि न स्यात् न कुर्यादिति तादृशी जातिः स्यादित्याह। यदि नेति। सर्वसामर्थ्ये सर्वदाकार्यकरणम् असामर्थ्ये न कदापीत्यर्थः। अत्राप्यन्यथासिद्धिमाह। क एवमिति। सहकारिसमवधानरूपदृश्योपाधिनैव तदुपपत्तेर्न जातौ मानमित्यर्थः। तथापीति। कार्योत्पत्त्यव्यवहितपूर्वक्षणव्याप्यकालवृत्तित्वमक्षेपकारित्वं भावानां स्वभावः तथा च कुशूलस्थं बीजं यद्यङ्कुराक्षेपकारिस्वभावाभिन्नं स्यादग्रिमक्षण एवाङ्कुरकारि स्याद् अतत्स्वभावत्वे वा सहकारिमध्यस्थमपि तन्न स्यात् उभयस्वभावत्वे च विरोध इत्यर्थः अत्रापादकासिद्धिमाह। युक्तमिति। कुत इति। न च सामग्री-

मध्यस्थितबीजे तद्ध्यक्षसिद्धं तस्योच्छूनत्वादिविषयतया (?) तादृश-स्वभावाविषयत्वात् तस्य च सहकारिरूपत्वात् । यद्यक्षेपकरणस्वभावं बीजं न स्यात् न कुर्यादुच्छूनत्वावदिति । सामग्रीमध्यनिविष्टबीजे तत्सिद्धमित्याह । प्रसङ्गेति । तादृशस्वभावस्य प्रतियोगिनोऽप्रसिद्ध्या तदभावासिद्धिरिति न प्रसङ्गावतार इत्याह । परस्परेति । प्रति-योगितादृशस्वभावसिद्धौ तदभावप्रसिद्ध्या प्रसङ्गसिद्धिस्ततश्च प्रति-योगिसिद्धिरित्यर्थः ॥

---

रघु० टी० । तस्य कुर्वद्रूपत्वस्य दृष्टान्तस्य । अङ्कुरकारिणो बीजस्य साधनं प्रसङ्गसाधनं कुर्वद्रूपत्वं तद्विकलत्वं तदप्रसिद्ध्या तद्ग्र-न्वयग्रहाभावः । तथा च प्रसङ्गहेतोरप्रसिद्धिः । अत एव तदभाव-रूपस्य विपर्यये साध्यस्याप्रसिद्धिः अतो व्याप्यत्वासिद्ध्या नैकस्यापि प्रवृत्तिरिति भावः नाभ्युपगममात्रेण प्रामाणिकार्थो निवर्तेत इत्याह । को हीति । प्रत्यक्षं निर्विकल्पकम् । अनुभवनं विषयी-करणम् । प्रत्यक्षमिन्द्रियमनुभवो निर्विकल्पकमिति वा । अवसायः सविकल्पकम् । तदभावे निर्विकल्पकाभावस्य तवाप्यभिमतत्वादिति भावः । बीजमङ्कुरं करोतीति बुद्धेश्च फलोपहितं स्वरूपं फला-व्यवहितप्राक्कालवृत्तिस्वरूपं वा विषयो न तु कुर्वद्रूपत्वमिति । लिङ्गाभावादिति । साध्याप्रसिद्ध्या व्याप्यग्रहेण लिङ्गत्वायोगादिति तज्जातीयत्वाविशेषे ऽपि करणाकरणेन विना प्रयोजकविशेषमुप-पद्येत । अतः करणोपपादकतया विशेषः सिध्यन् परिशेषाज्जाति-रूप एव सिद्ध्यति तदभावादेव चाकरणमित्याशङ्कते । यदीति ।

जातिभेदः कुर्वद्रूपत्वं तद्रूपसत्त्वरूपः तन्निरूपणस्तदभावस्य जाति-भेदस्याभिधानात् तदभावोऽर्थतो लब्ध इत्यन्ये। न पश्याम इति सन्देहे ऽपि न परिशेषावकाश इत्यभिप्रायेण। तथापीति। स्वोत्पत्त्यव्यवहितोत्तरसमयवृत्तिकार्यमात्रकारित्वं स्वकार्यव्यवहित-प्राक्कालावृत्तित्वं स्वकार्यप्रागभावसमानकालीनध्वंसप्रतियोगिसमया-वृत्तित्वं स्वोत्पत्तिसमय एव कारित्वं वाऽऽक्षेपकारित्वम्। तथा च पूर्वं कार्यानुत्पादात् तदानीन्तनानामक्षेपकरणस्वभावस्य विरहेण बीजत्वस्य तन्नियामकत्वानुपपत्त्या तन्नियामकं कुर्वद्रूपत्वं नाम जात्यन्तरमास्थेयमिति भावः। तादृशस्वभावत्वसिद्धौ सत्यामेवमेतत् तदेव त्वसिद्धमित्याह। युक्तमित्यादिना। प्रसङ्गेति। यत्र यत्कार्या-क्षेपकारि तत्र तत्कारि यथाऽऽलीकं शिलाशकलं वा नाङ्कुराक्षेप-कारि च सामग्रीसमवहितं बीजमुपेयते परैरिति प्रसङ्गः यद्य-दङ्कुरं करोति तत् तदक्षेपकारि यथा धरण्यादिभेदः करोति चाङ्कुरमिदं बीजमिति विपर्ययः। परस्परेति। चक्रके ऽपि पर-स्पराश्रयत्वमक्षतम्॥

स्यादेतत्। कार्यजन्मैव अस्मिन्नर्थे प्रमाणं विलम्ब-कारिस्वभावानुवृत्तौ कार्यानुत्पत्तिः सर्वदेति चेत्। न विलम्बकारिस्वभावस्य सर्वदैवाकरणे तत्त्वव्याघातात्। ततश्च विलम्बकारीत्यस्य यावत्सहकार्यसन्निधानं तावन्न करोतीत्यर्थः। एवं च कार्यजन्म सामग्र्यां प्रमाणयितुं शक्यते न तु जातिभेदे। ते तु किं यथानुभवं विलम्ब-

कारिस्वभावाः परस्परं प्रत्यासन्नाः कार्यं कृतवन्तः किं वा यथा त्वत्परिकल्पनं क्षिप्रकारिस्वभावा इत्यत्र कार्यजनन[1]मजागरूकमेवेति ॥

शङ्क० टी० । ननु विलम्बकारित्वे कदापि कार्यजन्म न स्यादिति तदन्यथानुपपत्त्यैवाक्षेपकारित्वसिद्धिरिति शङ्कते । कार्येति । विलम्बकारित्वे ऽपि कार्यजन्मोपपद्यत एवेत्याह । विलम्बेति । ननु विलम्बकारित्वस्वाभाव्यं चेत् तदा ध्वंसपर्यन्तं तत्स्वाभाव्यानुवृत्तौ कार्यजन्म न स्यादेवेति विलम्बकारित्वमन्यथा समर्थयति । ततश्चेति । ततश्च यदधीनं कार्यजन्म तत् तदेव गमयेत् न त्वक्षेपकारित्वमित्याह । एवं चेति । न तु जातिभेदे पराभ्युपगते । विलम्बकारित्वे ऽपि कार्यजन्मोपपादयति । ते त्विति । सामग्रीघटकाः सहकारिण इत्यर्थः । तथा चाक्षेपकारित्वे कार्यजन्माप्रयोजकमिति भावः ॥

भगी० टी० । अस्मिन्नर्थे भावानामक्षेपकारित्वे कुर्वद्रूपत्वे वा । ननु विलम्बकारिस्वभावादेव कार्यजन्मान्यथासिद्धमित्याह । विलम्बेति । स्वाधारक्षणाव्यवहितोत्तरक्षणाकारित्वं विलम्बकारित्वम् । तथा चाङ्कुरोत्पत्तिक्षणे यदि विलम्बकारिबीजोत्तरक्षणः स्यादङ्कुरक्षणो न स्यात् पूर्वक्षणवदित्यर्थः । तस्मादक्षेपकारिस्वभावस्य पूर्वमपि सत्त्वे तदापि कार्योत्पत्तिः स्यादित्याधुनिकव्यक्तिविशेष

(१) कर्मोपजनन—पा० ३ पु० ।

एव तादृशस्वभाव इति क्षणभङ्गः सिद्ध इति भावः। विलम्ब-कारिस्वभावत्वमुपजीव्य सर्वापादने विरोध इत्याह। विलम्बेति। न हि विलम्बकारित्वमकारित्वं तथा च दैवात् करणे विलम्ब-कारित्वव्याघात इत्यर्थः। ननु विलम्बकारिस्वभावस्य कथमविलम्बेन कारित्वमिति समाधान एव विलम्ब्य करोतीति व्यवहारे निमित्त-माह। ततश्चेति। तथा चार्थात् सहकारिसन्निधावपि न विलम्बत इत्यर्थः। ततश्च कार्यजन्म न तत्र मानमित्याह। एवं चेति। ननु सामग्र्यपि तादृशस्वभावानां मेलकमेवेत्यत आह। ते त्विति। ते सहकारिणः। यथानुभवमिति स्वपक्षे प्रमाणमुक्तम्। विलम्ब-कारिणोऽपि सहकारित्वाभादेव कार्यजन्मान्यथासिद्धमिति न तत्र मानमित्यर्थः। यथा वा त्वत्परिकल्पनमित्यस्य व्याख्यानं क्षिप्रकारि-स्वभावा इति। न च करणारम्भबीजमकरणारम्भबीजावृत्तिजाति-मदङ्कुराक्षेपकारित्वात् क्षित्यादिवदिति वाच्यम् अबीजत्वस्योपाधि-त्वात् विपक्षबाधकाभावाच्चेति भावः॥

---

रघु॰ टी॰। अस्मिन्नर्थे ऽक्षेपकारित्वे अक्षेपविलम्बयोरन्यस्य प्रकारस्यासम्भवाद्विलम्बबाधे परिशेषादक्षेपसिद्धिरिति भावः। विलम्बो ह्यनाकरणं तच्च सर्वदैव कदाचिद्वा। आद्ये विलम्बकारित्वाप्रसिद्धिः। द्वितीये तु कार्योत्पत्तेरविरोधाच्च परिशेषावतारः। तथा चाक्षेप-करणस्वभावस्यासिद्धौ न तन्नियामकत्वेन कुर्वद्रूपत्वसिद्धिरित्याह। न विलम्बेत्यादिना। एतेनाविवक्षितविशेषं सामान्यतो जनकतावच्छेदकरूपवत्त्वमेव सामर्थ्यमभिहितमिति परास्तम्। स्वरूपयोग्य-

नापि करणप्रयोजकसहकारिसाहित्यविरहेणाकरणोपपत्तेर्मूलशैथिल्यात्। ते बीजादयः॥

नापि तृतीयः विरोधात्। सहकार्यभावप्रयुक्तकार्याभाववांश्च सहकारिविरहे कार्यवांश्चेति व्याहतम्। तस्माद् यद् यदभावे एव यन्न करोति तत् तत्सद्भावे तत् करोत्येव इति तु स्यात्। एतच्च स्थैर्यसिद्धेरेव परं बीजं सर्वस्वमिति॥

प्रक्र॰ टी॰। ननु कुशूलस्थं बीजं यदि सहकारिविरहप्रयुक्तकार्याभाववत् स्यात् कुर्यात् न च करोति तस्मान्न तथेति प्रसङ्गविपर्ययौ स्यातामित्यत आह। नापीति। कुशूलस्थस्य सहकारिवैधुर्यमुभयसिद्धम् तथा च सहकारिविधुरं बीजं यदि सहकारिविरहप्रयुक्तकार्याभाववत् स्यात् तदा कुर्यादिति विरुद्धमित्याह। विरोधादिति। तस्मात् यत् सहकारिविरहान्न करोति तदेव सहकारिसत्त्वे करोतीत्यायातम् तच्च स्थैर्यसिद्धावेव स्यादित्याह। तस्मादिति॥

---

भगी॰ टी॰। सहकार्यभावप्रयुक्तकार्याभाववत्त्वेन सहकार्यभावकाले कार्यकारित्वापादानं व्याघातमात्रमित्याह। विरोधादिति। कथमेकत्र करणाकरणे न सम्भवतो विरोधादित्यत आह। यद्यदिति। यत्कारणं यस्य सहकारिसमवधानस्याभावे यत्कार्यं न जनयति तत् तत्समवधान एव जनयतीत्यौपाधिके करणाकरणे

न विरुद्धे इत्यर्थः । यदभाव एवेत्येवकारेण स्वभावप्रयोज्यत्वम-करणस्य निषिद्धम् । ननु सहकारिसमवधानासमवधाने एकस्यां व्यक्तौ परस्परविरुद्धे तज्जातीयस्य तु ते क्षणिकत्वे ऽप्युपपद्येते । न तज्जातीयस्य करणाकरणे सहकारिलाभालाभप्रयुक्ते इत्यभ्युपगमे क्षणिकत्वासिद्धेः तदा तादृग्वेति न्यायादेकत्रापि तदुपपत्तेरिति भावः । बीजं प्रत्यभिज्ञानम् तस्य सर्वस्वमुपपादकत्वात् ॥

---

रघु० टी० । नापीत्यादि । यद्यदा सहकारिविरहप्रयुक्त-यत्कार्याभाववत् तत् तदा तत्कार्यं करोत्येवं वा प्रसङ्गः किं वा यदा तदेति परित्यज्य । नाद्यः विरोधात् । द्वितीये ऽपि किमा-पाद्यापादकयोर्योगपद्येन सामानाधिकरण्यस्य ग्रहः कालभेदेन वा । नाद्यः विरोधेन तथा ग्रहासम्भवात् । द्वितीये तु एकस्यैव धर्मिणः पूर्वापरकालावस्थायित्वलक्षणं स्थैर्यमवगाहमाना सामानाधिकरण्य-बुद्धिरेव क्षणिकत्वं विघ्नन्तीत्यर्थः । यदित्यादावेवकारौ भिन्नक्रमेण यदैव तदैवेति । यदभावे यस्य सहकारिसाकल्यस्याभाव इत्यन्ये । तौ च नियतान्वयव्यतिरेकाभ्यां कार्यकरणाकरणयोः सहकारि-समवधानासमवधानप्रयुक्तत्वस्य प्रदर्शनाय ॥

एतेन समर्थव्यवहारगोचरत्वं हेतुरिति निरस्तम् । तादृग्व्यवहारगोचरस्यापि बीजस्याङ्कुराकरणदर्शनात् नासौ मुख्यस्तद्व्यवहारः[1] तस्य जननर्निमित्तकत्वात्

---

(१) तत्र व्यवहारः—पा० १ पु० ।

अन्यथा त्वनियमप्रसङ्गादिति चेत् कीदृशं पुनर्जननं मुख्यसमर्थव्यवहारनिमित्तं न तावदक्षेपकरणं तस्यासिद्धेः नियमस्य च सहकारिसाकल्ये सत्येव करणं करणमेवेत्येवं स्वभावत्वेना[1]प्युपपत्तेः ततश्च जननिमित्त[2] एवायं व्यवहारो न व्याप्तिसिद्धिरिति ॥

प्रक०. टी०। ननु कुशूलस्थं यदि समर्थव्यवहारगोचरः स्यात् तदा कुर्यान्न च करोति तस्मान्न समर्थव्यवहारगोचर इति प्रसङ्गविपर्ययौ स्यातामित्यत आह। एतेनेति। अत्रापि प्रसङ्गे मूलशैथिल्यं विपर्यये च बाध इत्याह। तादृगिति। ननु मुख्यसमर्थव्यवहारजनकत्वनिबन्धनौ प्रसङ्गविपर्ययाविति नोक्तदोष इति शङ्कते। नासाविति। अन्यथेति। यदि यथा कथञ्चित् समर्थव्यवहारनिबन्धनमेव करणं स्यात् तदा भ्रान्ततादृशव्यवहारगोचरशिलाशकलादेरप्यङ्कुरः स्यादित्यर्थः। यद्वा कुशूलस्थस्यापि मुख्यसमर्थव्यवहारगोचरत्वे ततोऽप्यङ्कुरः स्यादित्यनियमप्रसङ्ग इत्यर्थः। मुख्यव्यवहारं प्रति निमित्तं विकल्प्य दूषयति। न तावदिति। अनियमप्रसङ्गं परिहरति[3]। नियमस्य चेति। कुशूलस्थस्य मुख्यसमर्थव्यवहारगोचरत्वे ऽप्यङ्कुराजननं सहकारिवैधुर्यप्रयुक्तमिति नानियम इत्यर्थः। एवं बीजं जनयत्येवेत्यत्यन्तायोगव्यवच्छेदो नियमः सहकारिसमवहितमेव जनयति जनयत्येवेत्यन्ययोगात्यन्तायोगाभ्यां

(१) स्वभावत्वे—पा० १ पु०। (२) जननिबन्धन—पा० १ पु०।

(३) दूषयति—पा० १ पु०।

नियमस्य शिलायां न प्रथमः केवलबीजे तु न द्वितीय[1] इति भावः। मुख्यसमर्थव्यवहारगोचरत्वमुपसंहरति। तत्रेति। कदाचिज्जननमेव शिलाशकलादिविलक्षणमुख्यसमर्थव्यवहारगोचरत्वे मूलम्। तथा च यदि समर्थव्यवहारगोचरः स्यात् तदा कुर्यादिति न व्याप्तिरस्तीत्यतः प्रसङ्गे मूलशैथिल्यमित्यर्थः। यद्वा सत्त्वक्षणिकत्वयोरेतावता न व्याप्तिसिद्धिरित्यर्थः॥

---

भगी॰ टी॰। प्रागुक्तापाद्यावैशिष्ट्यपरिहाराय समर्थव्यवहारगोचरत्वमापादकमाशङ्क्य निराकरोति। एतेनेति। हेतुरापादकः सामर्थ्यं व्यवहारे यदि विशेषणं तदाऽपि तत आपाद्यावैशिष्ट्यमेव दूषणमित्यर्थः। अथ तत् तत्रोपलक्षणं तत्राह। तादृशेति। तत्रेति। अङ्कुराद्यनुपहिते बीजे। ननु मुख्यः स कथं न तत्रेत्यत आह। तस्येति। अन्यथेति। तस्य जननानिमित्तत्वे शिलाशकलेऽप्यजनयति मुख्यसमर्थव्यवहारप्रसङ्गादित्यर्थः। तस्य जननिमित्तत्वे ऽपि कदाचिज्जननादजनयत्यपि समर्थव्यवहारो मुख्य एव जननयोग्यतायास्तत्र सत्त्वादित्याह। कीदृशमिति। अपेक्षणीयव्याप्यव्यवहितोत्तरक्षणे जननमक्षेपकारित्वम् तद्यदि सामग्रीमध्यप्रविष्टं बीजमधिकृत्यापादनं तदेष्टापत्तिः अतादृशे चापादकाभावः। तथा चोत्पत्त्यव्यवहितोत्तरक्षण एव जनकत्वमक्षेपकारित्वं वाच्यं तत्राह। तस्येति। ननु कार्यानुपधानाविशेषाच्छिलायामपि समर्थव्यवहारः स्यादित्यत आह। नियमस्य चेति। समर्थव्यवहारविषयतायां कादाचित्कत्वस्या-

---

(१) न तु द्वितीय—पा॰ २ पु॰।

त्यन्तायोगव्यवच्छेदेन कदाचिज्जननिमित्तकत्वेनाप्युपपत्तेः करण-मेवेत्यत्रापि सहकारिसाकल्ये सतीत्यनुषञ्जनीयम् नाकरण-मित्यर्थात्। ततश्चेति। जननयोग्यतासमर्थव्यवहारनिमित्तं न तु जननोपधानमित्यर्थः। नन्वङ्कुरकारणं बीजं यद्येतत्क्षणवृत्ति स्यादे-तदव्यवहितोत्तरक्षणे ऽङ्कुरजनकं स्यात् अयं क्षणो यद्यङ्कुरकार-णाधारः स्यादङ्कुरोत्पत्तिपूर्वक्षणः स्यात् अङ्कुरो यद्येतत्क्षणवृत्ति-कारणकः स्यात् एतदव्यवहितोत्तरक्षणोत्पत्तिकः स्यादिति तर्कात् क्षणिकत्वं स्यादित्यत आह। नेति। सर्वत्र विपक्षबाधकाभावेन व्याप्त्यभावान्मूलशैथिल्यमित्यर्थः॥

---

रघु० टी०। समर्थेति। तथा च न प्रागुक्तसाध्यावैशिष्ट्यमिति भावः। हेतुः प्रसङ्गहेतुः। तादृगित्यादि। तथा च व्यभिचार इति भावः। मुख्यत्वेन व्यवहारस्य विशेषणाच्च व्यभिचार इत्याशये-नाशङ्कते। नासाविति। कथं न मुख्यता अत आह। तस्येति। अन्यथा जनकजातीयत्वस्य सहकारिविरहप्रयुक्तकार्याभाववत्त्वस्य वा निमित्तत्वे ऽनियमप्रसङ्गात्। द्रव्यत्वादिना बीजजातीयशिलादौ समर्थव्यवहारस्य सहकारिसमवहिते कुर्वत्यपि तदभावस्य वा प्रसङ्गात् नियतं करणं तथा स्यादत आह। नियमस्य चेति। नियमस्य करणनियमस्य नियतकरणस्येति यावत्। सत्येव करणमित्यत्रस्य एवकारलभ्ये सहकारिवैकल्ये करणाभावे तात्पर्यम्। तथा च यद्धर्मावच्छिन्नस्याकरणं सहकारिविरहप्रयुक्तं तद्धर्मवत्त्वमित्यर्थः। अस्ति चेदं कुर्वद्दशायामपि बीजे नास्ति च शिलाशकलादौ सत्यपि

सहकारिसाकल्ये तच्च कार्यानुत्पादेन स्वभावस्यैव तत्प्रयोजकत्वात्। अथ बीजमपि भृष्टं भिन्नासमानमिति चेत् न अभृष्टबीजत्वमेवास्तां तादृशो धर्मः आसादयतु वा भर्जनाद्यभावोऽपि सहकारिभावं करणमेवेत्यस्य च सत्यन्तानुषङ्गात्। यद्धर्मावच्छिन्नस्य सहकारिसाकल्ये ऽवश्यं करणं तद्वत्त्वमर्थः। एवं चैतन्निमित्तकसमर्थव्यवहारविषयस्यापि सहकारिरहितस्य बीजादेः करणविरहाद्व्यभिचारेण न व्याप्तिसिद्धिरित्याह। ततश्चेति न च यावत्सत्त्वं करणं करणनियतजातिमत्त्वं वा तथा असिद्धत्वात् अकरणदशायामपि तादृशत्वाविरोधाच्च अनियमप्रसङ्गं निरस्यति नियमस्य चेति तु सम्प्रदायः। अथ भवता पटादौ नीलव्यवहारस्य नीलं रूपमिव समर्थव्यवहारस्य शुद्धं जननं निमित्तं लाघवात्। अत एव जनकतावच्छेदकरूपवत्त्वमपि परास्तमिति चेत् अस्तु तावदेवं तथापि निमित्तसत्त्वासत्त्वाभ्यामेव व्यवहारतदभावोपपत्तेरविरोधात्। निमित्ततदभावयोः करणाकरणरूपयोरेव विरोध इति चेत् न तस्याग्रे निरसनीयत्वात्। एतेन कारिपदबोध्यत्वेन करणप्रसञ्जनं करणविरहेण च कारिपदबोध्यत्वाभावसाधनमपि व्याख्यातम्॥

स्यादेतत्। एतावतापि भावस्य कः स्वभावः समर्थितो भवति न हि क्षेपाक्षेपाभ्यामन्यः प्रकारोस्तीति चेत्। न दूषणाभिधानसमये(१) निश्चयाभावेनैव सन्दि-

(१) दूषणावसरे—पा॰ १ पु॰। अयमेव भगीरथसम्मतः।

ग्धासिद्धिनिर्वाहे कथापूर्वरूपपर्यवसानात् । उत्तरपक्षावसरे तु सोऽपि न दुर्वचः ॥

प्रक्र॰ टी॰ । क्षेपकारित्वस्वाभाव्ये सर्वदैवाकरणमित्यक्षेपकरणस्वाभाव्यमेव भावानामङ्गीकार्यम् तच्च स्वोत्पत्त्यव्यवहितोत्तरक्षण एव करणे सति स्यात् तथा च समर्थासमर्थबीजक्षणयोर्भेदसिद्धौ सिद्धं क्षणिकत्वमित्याशयेन भावस्वाभाव्यं पृच्छति । स्यादेतदिति । न हीति । परस्परविरोधे हि न प्रकारान्तरस्थितिरिति यत इति भावः । अक्षेपकारित्वस्वाभाव्यं सामर्थ्यमालम्ब्य यदि समर्थं स्यात् कुर्यादिति प्रसङ्गस्यावतारितत्वाच्च तत्स्वाभाव्यसन्देहादपि सन्दिग्धासिद्धिर्दूषणमुक्तम् एतावतैव परोक्तसाधने दूषणाभिधानस्य कथापूर्वरूपस्य पर्यवसानात् तव पराजय इत्याह । दूषणाभिधानेति । ननु जल्पे स्वपक्षसाधनमपि वक्तुमुचितमित्यत आह । उत्तरेति ॥

---

भगी॰ टी॰ । सम्यर्थक्रियाकारित्वं सत्त्वं तच्च क्षेपकारित्वाक्षेपकारित्वाभ्यां व्याप्तम् तत्र यदि भावस्य क्षेपकारित्वं स्वभावस्तदा सहकारिसमवहितस्याप्यकरणप्रसङ्गः अथाक्षेपकारित्वं स्वभावस्तदा स्वोत्पत्त्यनन्तरमेव सहकार्यभावेऽपि कुर्यात् । न च तृतीयः प्रकारः शङ्कितुमपि शक्यते परस्परविरहरूपत्वादिति स्थैर्ये भावस्वभावानुपपत्तेः परिशेषात् क्षणिकत्वं सेत्स्यतीत्यभिप्रेत्याह । एतावतापीति । सहकारिविरहे क्षेपकारित्वं तत्सान्निध्ये चाक्षेपकारित्वं भावानां

स्वभाव इति मनसि कृत्वाह । दूषणेति । भावस्वभावसन्देहे ऽपि वितण्डाकथायां वादिसाधननिष्ठदूषणावसरे क्षेपकारित्वाक्षेपकारित्वरूपस्वभावानिश्चयोऽपि सहकारिसाहित्यासाहित्याभ्यां करणाकरणे उपपन्ने व्याप्तिग्राहकमानाभावात् कथायां वादिसाधनदूषणाभिधानरूपं यत् पूर्वरूपं तस्य निर्वाहेण कथापर्यवसानादित्यर्थः । तथापि स्थैर्यपक्षे भावस्वभावः समर्थनीय एवेत्यत आह । उत्तरेति ॥

---

रघु० टी० । अक्षेपकारित्वान्यथानुपपत्त्या क्षणिकत्वं सिसाधयिषुर्भावस्वभावं पृच्छति । स्यादेतदिति । कथायाः जल्पस्य । पूर्वरूपं परपक्षखण्डनम् उत्तरपक्षः स्वपक्षस्य प्रकृते स्थैर्यस्य स्थापनम् ॥

तथाहि करणं प्रत्यविलम्ब इति कोऽर्थः । किमुत्पत्तेरनन्तरमेव करणं सहकारिसमवधानानन्तरमेव वा । विलम्ब इत्यपि कोऽर्थः । किं यावन्न सहकारिसमवधानं तावदकरणं सर्वथैवाकरणमिति वा । तत्र प्रथमचतुर्थयोः प्रमाणाभावादनिश्चये ऽपि द्वितीयतृतीययोः प्रत्यक्षमेव प्रमाणम् । बीजजातीयस्य हि सहकारिसमवधानानन्तरमेव करणं करणमेवेति प्रत्यक्षसिद्धमेव । तथा सहकारिसमवधानरहितस्याकरणमित्यपि ॥

मथु० टी० । क्षेपाक्षेपयोरविवेचितयोरेकतरकोटिपरिग्रहोऽनुचित इति विवेक्तुं विकल्पयति । उत्पत्तेरनन्तरमेवेति ।

र्यौत्पत्त्यवच्छिनोत्तरक्षण एवेत्यर्थः। प्रथमचतुर्थयोरिति। उत्पत्त्यनन्तरमेव करणे प्रमाणाभावः सर्वथैवाकरणे कार्यजातं कदापि नोपलभ्येतेति सकलविपक्षदण्ड इत्यर्थः। प्रमाणाभावादित्यापाततो विपरीतमेव प्रमाणमिति वस्तुगतिः। प्रत्यक्षमेवेति। अन्वयव्यतिरेकवत्प्रवृत्तमित्यर्थः। अत्यन्तायोगव्यवच्छेदे चायमेवकारः। बीजत्वेनैव कारणतेति विवक्षन्नाह। बीजजातीयस्येति। ताद्रूप्येणैवान्वयव्यतिरेकप्रदर्शनप्रवृत्तेरिति भावः। अयोगान्ययोगव्यवच्छेदाभ्यामक्षेपकारित्व[1]मेव द्रढयति। क्षेपकारित्वमाह। तथेति॥

---

भगी॰ टी॰। प्रत्यक्षमित्यनेन स्वपक्षे प्रमाणमुक्तम्। नन्वेकस्यां क्षणिकव्यक्तौ समवधानासमवधानयोरभावात् कथमेतत्प्रत्यक्षगोचर इत्यत आह। बीजजातीयस्येति। करणमिति। देशस्थवाक्यस्थं स्वभावपदमनुषज्यते। तज्जातीयव्यक्तिषु जातिपुरस्कारात् प्रत्यक्षेण तद्ग्रह इत्यर्थः॥

---

रघु॰ टी॰। उत्पत्तेरनन्तरकरणमुत्पत्त्यनन्तरकालीनकार्यकारित्वम् उत्पत्तिकाले कारित्वमिति यावत्। एवमग्रे ऽपि नेयम्। प्रथमेति। कस्यचिदुत्पत्तेरनन्तरमेव किञ्चित्कार्यकारित्वे ऽपि न सर्वत्र तथात्वनियमः तस्य तदानीं सहकारिसाकल्यनिबन्धनत्वादिति भावः। क्षणिकत्ववादिभिरेकस्यां व्यक्तौ करणाकरणयोरनङ्गीकारा-

---

(१) व्यवच्छेदाभ्यामेवोपकारित्व—पा॰ २ पु॰।

दाह । बीजजातीयस्येति । तथेति । अविलम्बकारित्वे एवकारे-णान्तर्भावितोऽयमर्थः प्राधान्येन विलम्बरूपतया पृथगुपदर्शितः ॥

अत्र च भवानपि न विप्रतिपद्यत एव प्रमाणसिद्धत्वात् विपर्यये बाधकाच्च । तथाहि यदि सहकारिविरहे ऽकुर्वाणस्तत्समवधाने ऽपि न कुर्यात् तज्जातीयमकरणमेव स्यात्[१] समवधानासमवधानयोरुभयोरप्यकरणात् । एवं तत्समवधानविरहे ऽपि यदि कुर्यात् सहकारिणो न कारणं स्युः तानन्तरेणापि करणात् । तथा चानन्यथासिद्धान्वयव्यतिरेकवतामप्यकारणत्वे कार्यस्याकस्मिकत्वप्रसङ्गः[२] तथा च कादाचित्कत्वविहतिरिति ॥

शङ्क० टी० । नन्वेवं न मन्यामह इत्यत आह । अत्र चेति । प्रमाणेति । सहकारिषु सत्सु करणस्यासत्सु चाकरणस्य प्रत्यक्षसिद्धत्वादित्यर्थः । विपर्यये बाधकं स्फुटयति । तथाहीति । यज्जातीयं सहकारिसमवधानासमवधानयोरकारणं तज्जातीयमकारणमेव शिलाशकलवदिति व्याप्त्युपष्टम्भेनाह[३] । यदीति । न च दीपोपरिमयनात् पक्वबीजे व्यभिचारः । तत्रापि सहकारिविशेषविरहस्य कल्पनीयत्वात् । यत्कार्यं यद्व्यतिरेकेण यत् करोति तत्कार्यं न तस्य

(१) तज्जातीयमकारणं स्यात्—पा० १ पु० ।

(२) कार्यस्याकारणकत्वप्रसङ्गः—पा० २ पु० ।

(३) व्याप्त्यवष्टम्भेनाह—पा० २ पु० ।

तत्सहकारित्वं यथा दण्डस्य घटे अनयितत्वे तन्तुरिति। व्याप्तव-ष्टम्भेनाह। एवमिति। यदि सहकारित्वेनाभिमताः क्षित्यादयोऽङ्कुरे अनयितत्वे बीजेन नापेक्षेरन् तदा ते तत्र सहकारिणो न स्युः रासभवदित्यापादनार्थः। न चेष्टापत्तिः अन्वयव्यतिरेकसिद्धकार्य-कारणभावतिरस्कारे तद्व्यवस्थैव न स्यात् स्याच्च कार्यस्याकस्मिकत्व-मित्याह। तथा चेति। ततः किमित्यत आह। तथा चेति। किञ्चित्काले ऽसतः किञ्चित्कालसत्त्वं कादाचित्कत्वं सुदृढप्रमाणाव-ष्टतमपि न स्यादित्यर्थः॥

---

भगी॰ टी॰। क्षणिकत्वपक्षे सहकार्यनपेक्षायामपि तैः सहार्थः समाज इत्यभ्युपगमे ऽपि सहकारिविरहितस्याकरणमित्यत्र सम्प्रतिपत्तिरेव। तद्राहित्ये स्वस्याभावादेवाकरणमेतावांस्तु विशेष इत्याह। अत्र चेति। तथापि व्यभिचारशङ्कया प्रमाणसिद्धत्वमेव कथमित्यत आह। विपर्यय इति। एवमप्यकरणमेवेति नियमः कुतस्त्य इत्यत आह। तथाहीति। कारित्वं कार्योपहितत्वं कारणत्वं स्वरूपयोग्यतेति भेदः। तथा चेति। बीजत्वं यद्यङ्कुरकारणवृत्ति स्याद् बीजमात्रवृत्ति न स्यात् बीजेतराजन्योऽङ्कुरो यदि बीजजन्यो न स्यादजन्यः स्यादित्यर्थः॥

---

रघु॰ टी॰। तज्जातीयं तद्धर्मावच्छिन्नम्। अकरणमस्वरूप-योग्यं तथात्वं च प्रामाणिकमिति भावः। एवमिति। सहकारिणो यदि तत्कार्यकारणापेक्षणीया न स्युः तत्कार्यकारणानि न

त्युरित्यर्थः । तेन न वैयधिकरण्यम् । तथा चेति । तुल्यन्यायतया सर्वेषामेवाकारणत्वादिति भावः ॥

एवं च द्वितीयपक्षविवक्षायामक्षेपकारित्वमेव भावस्य स्वभावः। तृतीयपक्षविवक्षायां तु क्षेपकारित्वमेव भावस्य स्वरूपमिति नोभयप्रकार[१]निवृत्तिरिति ॥

शङ्क० टी०। ननु तथापि भावस्य कः स्वभाव इति प्रश्ने किमुत्तरमत आह। एवं चेति। सहकारिसमवधानासमवधानरूपावच्छेदभेदमादायाक्षेपकारित्वक्षेपकारित्वयोरुभयोरप्येकस्मिन् बीजजातीये दर्शनाज्ञानयोर्विरोध इत्यर्थः[२]।

---

भगी० टी०। आशयं स्फुटयति। एवं चेति। तथा चैकधर्मिगतत्वेन न तयोर्विरोध इत्यर्थः।

---

रघु० टी०। एवं चेत्यादि ॥

तथापि किमसमर्थस्यैव सहकारिविरहः स्वरूपलाभानन्तरं कर्तुरेव वा सहकारिसमवधानम् अन्यथा वेति। किं नियामकमिति चेत् इदमुच्यते कुशूलस्थबीजस्याङ्कुरानुकूलः शिलाशकलात् कश्चिदस्ति विशेषो वा न चेन्नियमेनैकत्र प्रवृत्तिः अन्यस्मा[१]न्निवृत्तिश्च

---

(१) नोभयाकार—पा० १ पु०। (२) इति भावः—पा० २ पु०।
(३) अपरस्मा—पा० १ पु०।

तदर्थिनो न स्यात्। परम्परयाङ्कुरप्रसवसमर्थबीजक्षण-जननादस्त्येवेति चेत् कदा पुनः परम्परयापि तथाभूतं करिष्यतीति। तत्र सन्देह इति चेत् स पुनः किमा-कारः किं सहकारिषु समवहितेष्वपि करिष्यति न वेति उतासमवहितेष्वपि तेषु करिष्यति न वेति॥

प्रक०टी०। नन्वेवं स्वभावद्वयस्थितावपि न स्थैर्यं यतः कुर्व-द्रूपत्वेव सहकारिसमवधानमतद्रूपत्वेव तद्विरह इति क्षणिकत्व-मुपपद्यत इत्यभिप्रेत्याह। तथापीति। कर्तुरेवेति। कुर्वद्रूपत्व-जातिमत इवेत्यर्थः। अकुर्वदपि बीजत्वाविच्छिन्नं समर्थमेवेत्येकस्यैव सहकारिभावाभावाभ्यां करणाकरणे इति स्थैर्यमेवेत्यभिप्रेत्य पृच्छति। कुशूलस्येति। अङ्कुरादिप्रवृत्त्यन्यथानुपपत्त्यैव कुशूलस्य-स्यापि सामर्थ्यमित्याह। न चेदिति। तदर्थिप्रवृत्तेरन्यथोपपत्ति-माह। परम्परयेति। असमर्थमपि कुशूलस्थं समर्थं जनयिष्यति शिलाशकलं तु न तथेति विशेष इत्यर्थः। अस्त्येवेति। तदर्थि-प्रवृत्तिरित्यनुषङ्गः। यदा शिलाशकलादिशेष इत्यनुषज्यते। काचिद्धुणनष्टा व्यक्तिः समर्थक्षणं न जनयत्यत्र च तथापि तदर्थिप्रवृत्तिरिति बीजत्वेनैव सामर्थ्यं वाच्यमिति हृदि निधाय पृच्छति। कदेति। परम्पराकारणे प्रवृत्तौ कालावच्छेदज्ञानमतन्त्र-मित्याशयेनाह। तत्रेति। बीजं सहकारिसमवधाने करिष्यत्येव समवधानं कदेति सन्देहो वाच्यस्तथा च बीजत्वेनैवाङ्कुरं प्रति सामर्थ्यं वाच्यमित्याशयेन संशयाकारं विकल्पयति। स पुनरिति॥

---

भगी० टी०। ननु सहकारिविरहितस्यासमर्थस्यैवाकरणं न तु स्वरूपयोग्यस्य तत्समवहितस्य च करणं कुर्वद्रूपत्वजातिमत एवेत्यर्थः। न नियमेनेति। कुशूलस्थं बीजं यद्यङ्कुरकारणतावच्छेदकरूपवत् स्यान्नियमेनाङ्कुरार्थिप्रवृत्तिविषयो न स्यादित्यर्थः विपर्यये-ऽप्यनुमानमित्यर्थः। ननु साक्षात्प्रयोजकत्वे साध्ये ऽङ्कुरार्थिप्रवृत्ति-विषयत्वादित्यनैकान्तिकम् परम्पराप्रयोजकत्वे च साध्ये तद्रूपेक्षिताविशिष्टा सिद्धसाधनमित्याह। परम्परेति। शिलाशकलादिशेष इत्यनुषज्यते। तत्परम्पराजन्यव्यक्त्यन्तरे ऽपि प्रवृत्तिसंवाद उपपद्यत इति भावः। कदेति। कालविशेषे फलजनकत्वानिश्चये प्रेक्षावन्तो न प्रवर्तेरन्निति भावः। साधनत्वनिश्चयात् कालसन्देहेऽपि प्रवृत्तिः स्यादित्याह। तचेति॥

---

रघु० टी०। ननु यद्युपदर्शितं करणमकरणं च स्वभावो भावस्य तदा यावत्सत्त्वं तदुभयापत्तिः सति धर्मिणि स्वभाव-विरहायोगादिति चेत् न स्वभावत्वं तत्तादात्म्यं वा स्याद् यावत्सत्त्वं तत्र तत्सत्त्वं वा तद्धर्मतामात्रं वा। तत्राद्ययोरनभ्युपगमोऽन्तिमस्तु धर्मधर्मिणोरत्यन्तभेदेन धर्मिसत्त्वे ऽप्यसत्त्वं न विरुणद्धि। स्यादेतत् बीजत्वेन सामर्थ्ये सिद्धे समर्थानां बीजजातीयानामिवैकस्यापि बीजस्य सहकारिसाकल्यवैकल्याभ्यामेव करणाकरणयोरुपपत्तौ सिद्ध्यति स्थैर्यं न त्वेतदस्ति समर्थस्य क्षेपायोगादिति तथा च कुर्वद्रूपत्वेनैव सामर्थ्यं न बीजत्वेन समर्थ एव च सहकारिणां लाभो लाभ एव तथा च न सहकारिसाकल्यवैकल्यप्रयुक्ते करणाकरणे किं तु सामर्थ्या-

सामर्थ्यप्रयुक्ते इत्याशयेनाशङ्कते । तथापीति । असमर्थस्यादि । समर्थस्यापि सहकारिविरहे तदानीं कार्यस्यानुत्पत्तौ समर्थस्याप्य-करणानुत्पत्तौ च सहकारिणामकरणत्वम् । असमर्थे च सहकारि-साकल्ये समर्थबीजविरहे ऽपि कार्यस्योत्पत्तौ बीजस्याकरणत्वम् अनुत्पत्तौ च बीजविरहेण समर्थस्यापि सहकारिणोऽकरणं प्रसज्येत । तेन तदुभयं व्युदस्तम् । अन्यथा वेति । समर्थस्यापि कदाचित्सह-कारिणां वैकल्यं कदाचित् साकल्यं तेनाकरणं करणं चेति प्रवृत्त्य-न्यथानुपपत्त्या बीजत्वेनैव सामर्थ्यमित्याशयेन पृच्छति । कुशूलेत्यादि । प्रवृत्तिमन्यथोपपादयति । परम्परेति । अस्त्येवेति । शिलाशकला-दिशेषः समर्थक्षणं प्रत्येवानायत्या बीजत्वेन सामर्थ्यं वाच्यम् । तथा च समर्थस्यापि सहकारिविरहादकरणमित्यायातमित्याशयेन पृच्छति । कदेत्यादि ।

केचित्तु तज्जातीयानां सहकारिलाभालाभयोः करणाकरणेन स्थैर्यसाधके क्षणिकत्वे ऽप्युपपन्नत्वात् एकस्यैव तु तेनाद्यापि सिद्धे प्रत्यभिज्ञानं च व्यभिचारिजातीयमसिद्धप्रमाभावं न साधकमतः कथं स्थैर्यमित्या[१]शयेनाह । तथापीति । असमर्थस्यादिनियम-द्वयं समर्थस्यापि सहकारिणा वैकल्यादकृतवतः पश्चात् साकल्ये सति करणस्य प्रतिक्षेपकं प्रवृत्त्यन्यथानुपपत्त्या बीजत्वेन सामर्थ्यसिद्धौ न तादृशनियमसिद्धिरित्याशयेन पृच्छति । कुशूलेतीति प्राहुः ॥

**अथ यदा सहकारिसमवधानं तदैव करिष्यत्येव[२] परं कदा तेषां समवधानमिति सन्देहः । न तावत्**

(१) स्थैर्यसिद्धिरित्या—पा० २ पु० । (२) करोत्येव—पा० १ पु० ।

पूर्वः सामान्यतः कारणत्वावधारणे तस्यानवकाशात् अवकाशे वा कारणत्वानवधारणात्। नापि द्वितीयः सहकारिणां तत्त्वावधारणे तस्यानवकाशात् अवकाशे वा तेषां तत्त्वानवधारणात्। तृतीये तु सर्व एव तत्सन्तानान्तःपातिनो बीजक्षणाः समानशीलाः प्राप्नुवन्ति यत्र तत्र सहकारिसमवधाने सति करणनियमात् सर्वत्र च सहकारिसमवधानसम्भवात्॥

शङ्क० टी०। सामान्यत इति। न च सौगतानभ्युपगतमिदं बीजजातीयस्य सहकारिसमवधाने सत्येव करणं करणमेवेति प्रत्यक्षसिद्धमित्यादिना तत्साधनात्। तेषामिति। न चेष्टापत्तिः सहकारिणो न कारणं स्युरित्यादिना पूर्वमेव साधनात्। समानशीला इति। समानसामर्थ्यरूपं शीलं येषां ते तथा। एवं तर्हि कुशूलस्थस्यापि स्यादित्यत आह। सर्वत्र चेति॥

---

भगी० टी०। सामान्यत इति। बीजत्वेनैव रूपेणेत्यर्थः। यद्यपि परस्यैतदसिद्धम् तेन कुर्वद्रूपत्वजात्या कारणत्वोपगमात् तथापि बीजजातीयस्य बीजत्वेन रूपेणाङ्कुरे प्रयोजकत्वमित्युभयसिद्धम्। तत्र तस्य कारणकारणतावच्छेदकत्वमस्याहोकारणतावच्छेदकत्वमिति संशये प्रथमे गौरवादन्त्ये बाधकाभावादेतदेव न्याय्यमित्यभिप्रायः। असमवधानवत् समवधाने ऽप्यङ्कुराकरणाद्बीजस्यातत्कारणत्वात् तदर्थिनः प्रवृत्तिर्न स्यादित्याह। अवकाशे वेति।

तत्त्वेति। सहकारित्वनिश्चये तादृशसन्देहाभावात् तदभावे ऽपि भवतस्तदकारणत्वादित्यर्थः। समानेति। बीजत्वेनैव रूपेण सहकृद्योग्या इत्यर्थः॥

---

रघु० टी०। सामान्यत इति। न चाङ्कुरसमर्थबीजवत्त्वं सत्यपि परेषां बीजत्वेन न कारणत्वम् अपि तु तत्कुर्वद्रूपत्वेनैवेति वाच्यम्। तथात्वे ऽपि बीजजातीयस्य सत्यां सहकारिसम्पत्तौ अवश्यं करणमिति सामान्यतोऽवधारणात् अनवधारणे वा नियतप्रवृत्त्यनुपपत्तेः। समानशीलाः समानयोग्यताकाः। तथा च सिद्धं बीजत्वेन कारणत्वमिति भावः॥

समर्थं एव क्षणे क्षित्यादिसमवधानमिति चेत् तत् किमसमर्थे सहकारिसमवधानमेव नास्ति समवधाने सत्यपि वा तस्मान्न कार्यजन्म। नाद्यः शिलाशकलादावपि क्षितिसलिलतेजःपवनयोगदर्शनात्। न द्वितीयः शिलाशकलादिव कदाचित् सहकारिसाकल्यवतोऽपि बीजादङ्कुरानुत्पत्तिप्रसङ्गात्॥

शङ्क० टी०। समर्थासमर्थयोरेव सहकारिसमवधानासमवधाने इति नैकस्यैव तदधीने फलोपधानानुपधाने इति कथमेकशीलत्वमित्याह। समर्थ एवेति॥

---

भगी० टी०। ननु कुर्वद्रूपत्वे बाधकाभावात् तेनैव रूपेण बीजस्य स्वरूपयोग्यत्वं न तु बीजत्वेन बीजत्वान्वयव्यतिरेकयोस्तद-न्वयव्यतिरेकाभ्यामन्यथासिद्धेरित्याह। समर्थ एवेति। अङ्कुरानु-त्पत्तीति। तथात्वे वा तथा दृश्येतेति भावः॥

---

रघु० टी०। समर्थ एवेति। तथा च न समानशीलत्वमिति भावः॥

एवमपि स्यात्। को दोष इति चेत् न तावदिदमुप-लब्धम्। आशङ्क्यत इति चेत् न तत्समवधाने सत्यपि अकारणवत् तद्विरहे कारणमप्याशङ्क्येत। आशङ्क्यता-मिति चेत् तर्हि बीजविरहेऽप्याशङ्क्येत। तथा च सति साध्वी प्रत्यक्षानुपलम्भपरिशुद्धिः॥

शङ्क० टी०। एवमपीति। सहकारिसमवधानवतोऽप्यङ्कुरानु-त्पत्तिः स्यादित्यर्थः। न तावदिति। सर्वे ऽपि तर्हि कदाचिदङ्कुरो न स्यादिति भावः। आशङ्क्यत इति। लभ्यते समर्थादपि कुशूल-स्थादङ्कुरानुत्पत्तिश्चेत् तदा सहकारिसमवहितादपि तदनुपपत्तिः शङ्क्यास्तदं स्यादित्यर्थः। अनुभवमतिक्रम्यापि यदि शङ्का तदाह। तत्समवधान इति। आशङ्क्यतामिति। एतावतापि न क्षणिकत्व-क्षतिरिति भावः। अभिसन्धिना चेच्छङ्का तदाह। तर्हीति। तथा चाङ्कुरार्थिप्रवृत्तिर्नियमतो न स्यादिति भावः। तथा चेति। प्रत्यक्षानुपलम्भावन्वयव्यतिरेकौ। तत्परिशुद्धिः तदुपस्थितकार्य-

कारण[1]भावानिश्चयः । तथा च प्रवृत्तिनिवृत्त्योरभावे निरीहं[2] जगज्जायेतेति भावः ॥

---

भगी॰ टी॰ । तर्हीति । तथा चाङ्कुरार्थिनो नियमेन बीजे प्रवृत्तिर्न स्यादिति भावः । तथा चेति । अन्वयव्यतिरेकयोरित्य-नुपप्लवे ऽर्थक्रियाकारित्वरूपं सत्त्वमपि न निश्चीयेतेत्यर्थः ॥

---

रघु॰ टी॰ । बीजजातीयस्य सहकारिसमवधाने सत्येव करणं सति करणमेवेति तावन्नियतान्वयव्यतिरेकाभ्यामवधारितं तच्च यद्येकस्मिन्नंशे ऽप्याशङ्का स्यात् स्यादंशान्तरे ऽपि विपरीतनिश्चय-स्याकिञ्चित्करत्वादित्याह । तत्समवधान इत्यादिना । तस्यां सह-कारिणः परामृशति ॥

स्यादेतत् न बीजादीनां परस्परसमवधानवतामेव कार्यकरणमङ्गीकृत्याशङ्क्यते येन समवधाननियमात्[3] सर्वेषामेव तज्जातीयानामेकरसतानिश्चयः स्यात् नापि यच्च तच्च समर्थोत्पत्तिमङ्गीकृत्य येन विकलेभ्योऽपि कदाचित् कार्यजन्मसम्भावनायां प्रत्यक्षानुपलम्भ-विरोधः[4] स्यात् ॥

---

(१) तदुपप्लवे कार्यकारण—पा॰ २ पु॰ ।

(२) निर्बाधं—पा॰ २ पु॰ ।

(३) समवधानानियमात्—पा॰ २ पु॰ ।

(४) प्रत्यक्षानुपलब्धिविरोध इति पुस्तकान्तरसम्मतः पाठः ।

प्रकृ० टी०। स्यादेतदिति। पूर्वं कुर्वद्रूपत्वे बाधकाभाव उक्त इदानीं विस्तरेण बाधकमभिधीयत इत्यपौनरुक्त्यम्। बीजं सहकारिसमवहितं सदङ्कुरं करोति सहकारिसमवधानमेव कदा भविष्यतीति सन्देहे बीजानां सर्वेषां समानशीलता प्रसक्ता अतस्तत्सन्देहं निरस्यति। न बीजादीनामिति। प्रकृत इति। कदा सहकारिसमवधानं स्यादिति सन्दिह्यत इत्यर्थः। एकरसतां बीजत्वेनैव सर्वेषां बीजानामङ्कुरकारणतामङ्गीकृत्येत्यनन्तरं प्रकृत इत्यनुषज्यते। प्रत्यक्षानुपलम्भविरोधो गृहीतान्वयव्यतिरेकभङ्गः॥

---

भगी० टी०। प्रकृते कदा पुनस्तेषां सहकारिसमवधानमिति सन्दिह्यत इत्यर्थः। येनेति। सर्वेषां बीजानां सहकारिसमवधानं कदाचिद् भविष्यतीत्यात्मकानियमाभ्युपगमे बीजजातीयानां सर्वेषामेकरसतानिश्चयो बीजत्वेन स्वरूपयोग्यतानिश्चय इत्यर्थः। अङ्गीकृत्येत्यस्य प्रकृत इत्यनुषज्यते॥

---

रघु० टी०। ननु नियतान्वयव्यतिरेकाभ्यां बीजजातीयस्याङ्कुरं प्रति सामर्थ्यमेवावधृतम् तच्च न बीजत्वेन समर्थस्य क्षेपायोगात्। कुशूलस्थादेरपि बीजादङ्कुरोत्पादप्रसङ्गात् परं तु बीजत्वावान्तरेण कुर्वद्रूपत्वेन समर्थानां च स्वकारणसामर्थ्याधीनः समाजनियमः प्रमाणबलादेव कल्प्यते एकविरहे ऽपरस्मात् कार्योत्पादे तस्याकारणत्वप्रसङ्गात् अनुत्पादे च सामर्थ्यायोगात् क्षित्यादिमिलितास्तु बीजविशेषाः क्षित्यादयो न समर्थाः कार्याजनक-

मा(१)दित्याशयेनाशङ्कते। श्वादेतदिति। परस्परेति। एवकारे-णातिप्रसङ्गे नैरपेक्ष्यलाभः। आशङ्कते दृश्यते। क्षणिकत्वमिति शेषः। एकरूपत्वमेकस्वभावत्वमेककार्यसामर्थ्यमिति यावत् जातिभेदः कुर्वद्रूपत्वम्। एतदङ्गीकारस्यानुगताङ्कुरजातीयनियामकतया कार्य-व्यक्तिभेदस्य तथोत्पादककारणव्यक्तिभेदादेवोपपत्तेः। जातिश्च नैयायि-कानां विधिरूपा व्यावृत्तिरूपा परेषाम् धर्मिणि वर्तमाना अन्यत्वजनकत्वयोरवच्छेदिका अनुगतव्यवहारादिनियामिका चेति॥

किन्नाम बीजादिषु समवहितेष्ववान्तरजातिविशेष-माश्रित्यापि कार्यजन्म सम्भाव्यत इति। न दृष्टसमव-धानमात्रेणैवोपपत्तौ तत्कल्पनायां प्रमाणाभावात् कल्प-नागौरवप्रसङ्गप्रतिहतत्वात् अतीन्द्रियेन्द्रियादिविलोप-प्रसङ्गात् विकल्पानुपपत्तेः विशेषस्य विशेषं प्रति प्रयो-जकत्वाच्चेति॥

शङ्क० टी०। किन्नामेति। बीजत्वं वा कारणतावच्छेदकं कुर्व-द्रूपत्वं वा तथेति सन्दिह्यते इत्यर्थः। दृष्टेति। अन्वयव्यतिरेक-विषयीभूते सति बीजत्वे तदन्यकल्पनायां न प्रमाणमित्यर्थः। तच्च कुर्वद्रूपत्वे विप्रतिपन्नयः। अङ्कुरकारणतावच्छेदकत्वं फलोपहित-बीजमात्रवृत्ति न वा बीजवृत्तिजातित्वं प्रत्यक्षविषयत्वव्याप्यं न वा अङ्कुरोपहितमात्रवृत्ति धर्मोऽङ्कुरकारणतावच्छेदको न वा।

(१) कार्यानजंकत्वा—पा० २ पु०।

प्रमाणाभावादिति। योग्यानुपलब्धेर्योग्यव्यक्तिवृत्तिजात्यन्तराभाव एव सिद्धो यत इत्यर्थः। दोषान्तरमाह। कल्पनेति। बीजत्वेनैव प्रत्यक्षसिद्धेनाङ्कुरकारणतावच्छेदे सम्भवति तदर्थमतीन्द्रियजातिकल्पना न सम्भवतीत्यर्थः। दोषान्तरमाह। अतीन्द्रियेति। बाह्यालोकादेरेव कुर्वद्रूपात् साक्षात्कारोपपत्ताविन्द्रियकल्पनापि न स्यादित्यर्थः। दोषान्तरमाह। विकल्पेति। शालित्वादिना परापरभावादिविकल्पवज्जाति[1]विशेषत्वानुपपत्तेरित्यर्थः। दोषान्तरमाह। विशेषस्येति। बीजत्वसामान्यस्य क्वचित्प्रयोजकत्वमावश्यकं तच्च निरूप्यमाणमङ्कुरं प्रत्येव स्यादित्यर्थः॥

---

भगी० टी०। किन्नामेति। बीजजातीयं कारणमित्युभयवादिसिद्धम्। किन्त्वङ्कुरानुपहितवृत्तित्वाद् बीजत्वं न कारणतावच्छेदकमपि तु कुर्वद्रूपत्वमिति तन्निरासं विना नैकरूपतासिद्धय इत्यर्थः। तच्च चाङ्कुरकारणतावच्छेदकरूपवत्त्वं कारिमात्रवृत्ति न वा बीजवृत्तिजातित्वं प्रत्यक्षविषयत्वथाप्यं न वा कारिमात्रवृत्तिधर्मे ऽङ्कुरकारणतावच्छेदकजातित्वं न वेति विप्रतिपत्तयः। प्रमाणाभावादिति। यद्यपि साधकबाधकप्रमाणाभावात् संशयो युक्तस्तथापि तस्य प्रामाणिकत्वे कल्पनागौरवस्यानवतारात् तदुत्थापनार्थमेतदुक्तम्। अत एव दूष्यमवधानेत्यादिप्रतिक्षतत्वादित्यन्तमेकं दूषणम्। तथा च लाघवसहकृतान्वयव्यतिरेकाभ्यामङ्कुरकारणतावच्छेदकं बीजत्वमेव क्लृप्तमिति न जात्यन्तरकल्पनमित्यर्थः। कार्यो-

---

(१) जातिविकल्पेन—पा० २ पु०।

...ने तु सहकारिसमवधानं तन्त्रमिति भावः । अतीन्द्रियेति । ...पि परेषां गोलकमेवेन्द्रियं तच्च नातीन्द्रियं तथापि धर्मप्रधानो ...र्देश इतीन्द्रियत्वमिन्द्रियपदवाच्यं तच्च कुर्वद्रूपत्वविशिष्टप्रत्यक्ष-ज्ञानजनकत्वमित्यतीन्द्रियमेव । यदा गोलकमात्रं नेन्द्रियं प्रत्यक्षार्थ-ज्ञापि[1] सत्वात् किन्तु भोगजनकादृष्टोपष्टब्धोतमिति विशि-ष्टमतीन्द्रियम् अतीन्द्रियमिन्द्रियं परेषां समनन्तरप्रत्ययोऽस्माकं तु मनस्तदुभयमप्यतीन्द्रियमित्येके । इन्द्रियादीत्यतद्रूपसंविज्ञानो बहुव्रीहिरित्यन्ये । विकल्पेति । शालित्वकुर्वद्रूपत्वयोर्गोत्वाश्वत्वयो-रिव विरोधः अविरोधे वा शालित्वं तद्व्यापकं तदेव वा शालित्व-व्यापकमिति विकल्प्य यथायथं दूष्यत्वादित्यर्थः । एतत्तु समत-माश्रित्योक्तम् बौद्धैर्जातिमात्रानभ्युपगमात् कुर्वद्रूपत्वस्य च सामग्री-प्रविष्टकारणजन्यस्वरूपविशेषरूपत्वात् । न चातिप्रसङ्गोऽप्यतिरिक्त इत्यन्यत्र स्वयमेवाभिधानात् । विशेषणेति । यदि बीजं बीजत्वेन काञ्चिदर्थक्रियां न कुर्यात् तदा तेन रूपेण तस्य सत्त्वं न स्यात् यद्येन रूपेणार्थक्रियाजनकं तत् तेन सदिति तवाभ्युपगमादिति । बीजत्वमपि क्वचित् प्रयोजकं तच्च सर्वेषामविशिष्टमिति कथं न समानशीलत्वमिति भावः ॥

---

रघु॰ टी॰ । सम्भाव्यत इतीति । अङ्गीकृत्योपगम्यत इत्यनु-षज्यते । अङ्कुरकारीति बीजान्यङ्कुराकरणदशापन्नबीजादृत्तिजाति-मन्ति न वा तादृशबीजादृत्यङ्कुरजनकतावच्छेदकजातिमन्ति न

---

(१) प्रत्यक्षार्थस्यापीति—पा॰ १ । २ पु॰ ।

नेत्यादिकां कुर्वद्रूपत्वे विप्रतिपत्तिं वदन्ति। बीजव्यक्तिजातित्वं प्रत्यक्षत्वव्याप्यं न वेति तु न वाच्यम् कुशूलस्थबीजसाधारणातीन्द्रियजातिसिद्धावपि कुर्वद्रूपत्वासिद्धेः बीजत्वेन सामर्थ्ये ऽपि सहकारिविरहादेव क्षेप उपपद्यत इत्याशयवान्निराकरोति। नेत्यादिना प्रमाणाभावादिति। परेषां प्रमाणाभावमात्रेणैव प्रमेयाभावावधारणम्। यद्वक्ष्यति यो यदर्थमित्यादि। पारमार्थिकं बाधकमाह। कल्पनेति। तादृशजातितदभावान्यतरवत्त्वस्य तादृशजातितदभावान्यतरप्रकारकप्रमाविषयत्वस्य(१) वा साधकात् सत्त्वादेः क्लृप्तजातिबाधात् क्लृप्तकल्पनागौरवप्रतिसन्धानसहकृतात् तदभावसिद्धिरिति भावः। संमिश्यैव चाग्रे बाधकद्वयविवरणं प्रमाणवतो गौरवस्याबाधकत्वात् प्रमाणाभावसहकृतं तद्बाधकत्वेनोपात्तमित्यपरः। अतीन्द्रियेति। न च नेदमनिष्टं परेषामिति वाच्यम्। अपरिदृश्यमानगोलकादिव्यक्तिविलोपप्रसङ्गादित्यर्थात्। न च विना गोलकं कथं रूपोपलब्धिः यतो गोलकस्य गोलकत्वेन न हेतुत्वम् अपि तु कुर्वद्रूपत्वेन तथा च कुर्वद्रूपत्वशालिनस्तात्कालिककायादेरेव तदुत्पत्तिसम्भवात् शालिवृत्तेः कुर्वद्रूपत्वस्याशालाविव गोलकवृत्तेस्तस्यागोलके ऽपि सम्भवात्। अथैवं वा कार्येण कारणानुमानं विलीयेतेति चेन्न विलीयेत किं न विलीयेत भवता तदुक्तं प्रत्यक्षानुपलम्भगोचरो न कार्ये प्रयोजक इति वदतो बौद्धस्य शिरस्येव प्रहार इति। इन्द्रियादीत्यतद्गुणसंविज्ञानो बहुव्रीहिरित्यन्ये।

(१) तादृशजातिप्रकारकप्रमाविषयत्वतदभावप्रकारकप्रमाविषयत्वान्यतरस्य—पा० २ पु०।

विकल्पानुपपत्तेः । सहकारिकत्वप्रतिक्षेपकत्वविकल्पानुपपत्तेः । विशेष-स्येति । बीजगतविशेषस्य बीजकार्याङ्कुरस्य विशेषं प्रति प्रयोजकत्वं न बीजसामान्यस्याङ्कुरसामान्यप्रयोजकतायाः प्रतिक्षेपकत्वं यत इत्यर्थः ॥

तथाहि उत्पत्तेरारभ्य मुद्गरप्रहारपर्यन्तं घटस्तावत् जात्यन्तरानाक्रान्त एवानुभूयमानः क्रमवत्सहकारि-वैचित्र्यात् कार्यकोटीः[१] सरूपा विरूपाः करोति तत्र एतावतैव सर्वस्मिन् समञ्जसे अनुपलभ्यमानजाति-कोटिकल्पना[२] केन प्रमाणेन केन वोपयोगेन येन कल्पनागौरवप्रसङ्गदोषो न स्यात्[३] । यो यदर्थं कल्प्यते तस्यान्यथासिद्धिरेव तस्याभाव इति भवानेवाह इति ॥

शङ्क० टी० । तथाचं विवृणोति । उत्पत्तेरारभ्येति । जात्य-न्तरानाक्रान्त इति । यदि तदाक्रान्तः स्यात् तदा तथोपलभ्येत न चोपलभ्यते तस्मान्न जात्यन्तराक्रान्त इत्यर्थः । तर्हि प्रथममेव किन्नाकार्षीदित्यत आह । क्रमवदिति । कार्यकोटीरिति । अन्यथा तत्तत्कार्यं प्रति कुर्वद्रूपत्वरूपजातिकोटिकल्पना स्यादिति भावः । अत एवाह । सरूपा विरूपा इति । द्वितीयं हेतुं विवृणोति । यो यदर्थमिति । अन्ये तु भवानेवाहेतिपर्यन्तं प्रमाणाभावादित्यस्यैव विवरणप्रपञ्च इत्याहुः ॥

---

(१) कर्मकोटीः—पा० २ पु० । (२) कल्पनं—पा० १ पु० ।
(३) न सिद्ध्येत—पा० २ पु० ॥

भगी० टी० । आद्यं हेतुं विवृणोति । तथाहीति । आत्यन्त कुर्वद्रूपत्वम् । एतच्च स्वदर्शनाभिप्रायेणोक्तम् । परैस्तु जातेर्योग्यव्यक्ति- वृत्तावप्ययोग्यत्वाभ्युपगमात् तत्तत्कालीनविचित्रकार्यजनकत्वादपि न तत्सिद्धिरन्यथोपपत्तेरित्याह । क्रमवदिति । केन वेति । उपयोग- स्यापि प्रमाणत्वाद् गोवृषन्यायेन पृथगुपादानम् । ननु बीज- त्वस्य कारणतावच्छेदकत्वसिद्धावपि कुर्वद्रूपत्वाभावः कुत इत्यत आह । यो यदर्थमिति । अन्यथोपपत्तेरन्यथानुपपत्तिस्तत्कल्पनाबीजं नास्तीत्यर्थः ॥

---

रघु० टी० । आत्यन्तरेति । जातेर्योग्यव्यक्तिवृत्तितयैव योग्य- त्वात् तदभावस्य सुग्रहत्वात् । एतदतीन्द्रियत्वकल्पनायास्त्वप्रामा- णिकत्वात् । एवकारबललभ्ये आत्यन्तरवत्त्वानुभवाभावे वा तात्पर्यम् । यद्वक्ष्यति अनुपलभ्यमानजातीति । केन वेति । उपयोगस्यापि प्रमाणत्वात् गोबलीवर्दन्यायेन पृथगुपादानम् ॥

दृष्टं च जातिभेदं तिरस्कृत्य स्वभावभेदकल्पनयैव(१) कार्योत्पत्तौ(२) सहकारिणोऽपि दृष्टत्वात् कथञ्चित् स्वीक्रियन्ते अतीन्द्रियेन्द्रियादिकल्पना तु विलीयेत मानाभावात् विकल्पानुपपत्तेश्च ॥

---

(१) स्वभावकल्पनयैव—पा० १ पु० ।

(२) कार्योपपत्तौ—पा० १ पु० ।

प्रक॰ टी॰ । तृतीयं हेतुं विघटयति । दृष्टं चेति । स्वीक्रियत इत्यनन्तरमनुमन्यामह इति शेषः । तदयमर्थः अन्वयव्यतिरेकविषयीभूतबीजत्वतिरस्कारे स्वस्य भावो धर्मः कुर्वद्रूपत्वं तत्कल्पनयैव कार्योपपत्तौ दृष्टत्वात् सहकारिणः स्वीक्रीयन्त इत्यनुमन्यामहे । इन्द्रियं त्वतीन्द्रियं न कल्पनीयं सहकारिण एव कुतश्चित् कुर्वद्रूपात् कार्योपपत्तेरिति । आदिपदात् समनन्तरप्रत्ययादीनां ग्रहणम् । अत एवाह । मानाभावादिति । अन्यथानुपपत्तिरतीन्द्रियकल्पनायां मानम् सहकारिण एव कस्यचित् कुर्वद्रूपत्वकल्पनायां सा नास्तीत्यर्थः । गोलकादीनामपीन्द्रियत्वे अदृष्टादिविशिष्टं तदतीन्द्रियमेव । अतद्गुणसंविज्ञानबहुव्रीहिर्वा । चतुर्थं दूषयति । विकल्पेति । त्वदभ्युपगतानां विविधानां कल्पानामनुपपत्तेरित्यर्थः ॥

---

भगी॰ टी॰ । द्वितीयं प्रसङ्गं विवृणोति । दृष्टं चेति । जातिभेदं बीजत्वम् । तिरस्कृत्याङ्कुरकारणतावच्छेदकीकृत्य । यदि स्वभावभेदादेव कार्यजातिनियमस्तर्हि कृतं सहकारिस्वीकारेणेत्यापादिते दृष्टत्वात् सहकारिणः स्वीक्रीयन्त इति समाधानेऽप्यतीन्द्रियं त्वदभ्युपगतं न सिद्ध्येत् दृष्टादेव कुर्वद्रूपत्वविशिष्टात्तज्जन्यकार्योपपत्तेरित्याह । सहकारिणोऽपीति ॥

---

रघु॰ टी॰ । जातिभेदं बीजत्वादिकम् । स्वीक्रियते भवद्भिः ॥

स खलु जातिविशेषः शालित्वसंग्राहको[१] वा स्यात् तत्प्रतिक्षेपको वा। आद्ये कुसूलस्थस्यापि शालेः कथं न तद्रूपत्वं[२] द्वितीये त्वभिमतस्यापि शालेः कथं तद्रूपत्वम्। एवं शालित्वमपि तस्य संग्राहकं प्रतिक्षेपकं वा। आद्ये ऽशालेरतत्त्वप्रसङ्गः[३] द्वितीये तु शालेरेवातत्त्वप्रसङ्गः॥

शङ्क० टी०। शालित्वसङ्ग्राहकः शालित्वव्यापकः। तत्प्रतिक्षेपकस्तद्विरोधी। कथमिति। तथाप्यङ्कुरकुर्वद्रूपत्वस्य सत्त्वादित्यर्थः। तद्रूपत्वमिति। कुर्वद्रूपत्वमित्यर्थः। परस्परविरोधादिति भावः। एवमिति। यद्यपि परस्परप्रतिक्षेपकत्वं विकल्पितमेव तथापि शालित्वं पुरस्कृत्य विकल्प्यत इत्यपौनरुक्त्यम्। आद्य इति। अतत्त्वापत्तिरिति। अङ्कुराकुर्वद्रूपत्वापत्तिरित्यर्थः। द्वितीय इति। शालित्वं पुरस्कृत्य[४] कुर्वद्रूपत्वव्यापकत्वे यवादीनामङ्कुरकारित्वं न स्यादित्यर्थः॥

---

भगी० टी०। शालित्वसङ्ग्राहकः शालित्वव्यापकः। प्रतिक्षेपकस्तदभावव्याप्यः। तद्रूपत्वं कुर्वद्रूपत्वम्। तथा च तन्मते ऽपि

(१) शालित्वस्य सङ्ग्राहकः—पा० २ पु०।
(२) तद्रूपवत्त्वं—पा० २ पु०।
(३) अतत्त्वापत्तिः—पा० २ पु०। ग्रन्थरमिप्रसम्मतोऽयम्।
(४) शालित्वस्य—पा० ३ पु०।

कुशूलस्थशालेः सहकार्यभावात् कार्याभाव इति स्थैर्येऽप्यविरोध इति भावः । अभिमतस्य सहकारिसमवहितस्य । अतत्त्वप्रसङ्गोऽकुर्वद्रूपत्वप्रसङ्गः ॥

---

रघु० टी० । स इति । अङ्कुरसामान्यप्रयोजको बीजमात्रवृत्तिरित्यर्थः । शालित्वस्य सङ्ग्राहको व्यापकः । प्रतिक्षेपको व्यापकीभूताभावप्रतियोगी । एकस्य सङ्ग्राहकत्वप्रतिक्षेपकत्वे वा लब्धे निरस्ते वान्यस्य सङ्ग्राह्यत्वं प्रतिक्षेप्यत्वं वा लभ्यते निरस्यते वेति न तदुभयं विकल्प्य निराकृतम् । न तद्रूपवत्त्वं न तज्जातिविशेषवत्त्वम् । तथा च कृतं तेन बीजत्वसमनैयत्यात् । अभिमतस्याङ्कुरकारिणः । तस्य जातिविशेषस्य प्रतिक्षेपकं वेति । यद्यप्येकस्याः जातेरपरप्रतिक्षेपकत्वविधिनिषेधयोरपरस्या अपि तत्प्रतिक्षेपकत्वविधिनिषेधावर्थलभ्यौ तथापि स्पष्टार्थं विकल्प्य क्रमानुरोधेनैतदभिहितम् । अतत्त्वप्रसङ्गः तज्जातिविशेषशून्यत्वप्रसङ्गः ॥

न च नोभयमपीति वाच्यम् विरोधाविरोधयोः प्रकारान्तराभावात् । व्यक्तिभेदेन सङ्ग्रहप्रतिक्षेपावपि न विरुद्धाविति[1] चेत् विलीनमिदानीं तदतज्जातीयताविरोधेन परिदृश्यमानकतिपयव्यक्तिप्रतिक्षेपेऽपि मिथः क्वचित् तुरगविहगयोरपि सम्भेदसम्भवात् ॥

---

(१) सङ्ग्रहप्रतिक्षेपावविरुद्धाविति—पा० १ पु० ।

शङ्क० टी० । गोभयमपीति । न विरोधो न वा व्याप्यव्यापकभाव इत्यर्थः । व्यक्तिभेदेनेति । कस्याञ्चिद्व्यक्तौ चेत्रपतितायां शालित्वकुर्वद्रूपत्वयोः समावेशे ऽपि क्वचिदसमावेशः स्यादित्यर्थः । त्रिणीनमिति । परस्परात्यन्ताभावसमानाधिकरणयोरपि जात्योः सामानाधिकरण्ये जातिप्रतिनियमो न स्यादित्यर्थः । एतदेवाह । परिहृश्येति ॥

---

भगी० टी० । न चोभयमिति । पूर्वविकल्पितपचद्वयमित्यर्थः । विरोधेति । अविरोधे तु जात्योर्व्याप्यव्यापकभावनियम इत्यर्थः । न च शालित्वादिव्याप्यं भिन्नमेव कुर्वद्रूपत्वमिति वाच्यम् । अङ्कुरसामान्यस्याहेतुकतापत्तेः । तस्याङ्कुरविशेष एव प्रयोजकत्वादिति भावः । ननु यस्यां व्यक्तौ जात्योः समावेशस्ततोऽन्यस्यां प्रतिक्षेप इति व्यक्तिभेदेनाविरोधादेकजातीय एव सङ्करप्रतिक्षेपौ स्यातां भूतत्वमूर्तत्वयोरिवेत्याह । व्यक्तिभेदेनेति । तदतज्जातीयत्वं तज्जातीयत्वं तद्विरोधिजातीयत्वं चेत्यर्थः । इयं जातिर्यद्येतज्जात्यत्यन्ताभावसमानाधिकरणैतदधिकरणा स्यात् समस्तैतद्व्यक्तिवृत्तिः स्यात् व्यक्तिभेदेनाविरोध इति भावः । परिहृश्यमानेति । एतदिहगव्यक्तिवृत्ति तुरगत्वं यदि विहगत्वसामानाधिकरण्याविरोधि न स्याद्विहगवृत्ति स्यात् । न चेष्टापत्तिः तुरगत्वविहगत्वाश्लिष्टव्यक्त्योर्योग्यानुपलम्भेन तत्सामग्र्योरपि विरोधेन सहकारित्वानुपपत्तेः । भूतत्वमूर्तत्वयोरेकव्यक्तिवृत्तित्वेनाविरोध इति भावः । ननु समाविष्टयोर्जात्योर्न परापरभावनियमः सवर्णत्वघटत्वयोर्व्यभिचारात । न च

तथोपष्टम्भकभागवृत्त्येव घटत्वं न सुवर्णवृत्तीति वाच्यम् तथापि पाषाणघटादावप्रतीकारात्। न च मार्द एव घटे घटत्वमन्यत्र तु तथाविधसंस्थानवत्त्वगुणयोगाद्गौणो घटव्यवहारः मुख्यत्वस्य विनिगन्तु-मशक्यत्वात्। अथ संस्थानवृत्त्येव घटत्वं न द्रव्यवृत्तीति न तयोः समावेशः तच्चावयववृत्तिः संयोगविशेषः युक्तं चैतत् कथमन्यथा तस्मिन्नेव सुवर्णे तत्संस्थानसत्त्वासत्त्वाभ्यां घटतदभावव्यवहारादिति चेत् न तत्राप्यन्यतरकर्मजत्वादिना जातिसङ्करप्रसङ्गात् गुणवृत्तिजातौ साङ्कर्यमदोष इति तु निर्बीजमेव। अत्राहुः सुवर्णत्वादिव्याप्यं नानैव घटत्वं सुवर्णादिघटेषु नानाजातीयेषु तादृक्संस्थानवत्त्वेनोपा-धिनानुगतघटव्यवहारात् तर्हि संस्थानवृत्त्येवान्यतरकर्मजत्वादिव्याप्यं नानैव घटत्वमस्तु तन्नानात्वस्यावश्यकत्वात्। एतावता संस्थानविशेषा-न्वयव्यतिरेकानुविधानमपि घटव्यवहारस्य सङ्गच्छत इति चेत् न महान् नीलो घटश्चलतीति परिमाणरूपकर्मसामानाधिकरण्येन घटत्वप्रतीतेः संस्थाने च गुणे तदसम्भवात् यद्वा संस्थानविशेषैकार्थ-समवायिद्रव्यत्वमुपाधिर्घटत्वम्॥

---

रघु० टी०। नोभयमपीति। न सङ्ग्राहकं नापि प्रतिक्षेपक-मित्यर्थः। विरोधाविरोधौ सहानवस्थानावस्थाने। तथा च विरोधे प्रतिक्षेप्यप्रतिक्षेपकभावोऽविरोधे चावश्यं सङ्ग्राह्यसङ्ग्राहकभावः लाघ-वेन सामान्यत एव मिथो व्यभिचारिजात्योः सामानाधिकरण्यविर-हस्य समानाधिकरणजात्योश्च मिथो व्यभिचारिविरहस्य विशेषतश्च तज्जातिसमानाधिकरणाभावप्रतियोगिन्यास्तदभावसमानाधिकरणा-

त्वाच्च जातेस्तत्सामानाधिकरण्याभावस्य तज्जातिसमानाधिकर-
णाभावप्रतियोगितत्समानाधिकरणजातेस्तदभावासामानाधिकरण्या-
भावस्य तादृशसमानाधिकरणधर्मस्य वा तदभावसमानाधिकरण-
जातित्वाभावस्यैव तत्समानशीलनियमानां चावधारणादिति भावः।
अथैवं मृत्पाषाणसुवर्णादिघटेषु कथं घटत्वमेका जातिः। न च
संस्थानविशेषवृत्त्यैव घटत्वं परम्परासम्बन्धेन रूपादिसामानाधिकरण्य-
बुद्धिस्तादृशसंस्थानवत्त्वमुपाधिर्वा घटत्वमिति वाच्यम्। तथाप्यन्य-
तरकर्मजत्वादिना साङ्कर्येण एकजात्यसम्भवात्। गुणगतजातौ तु न
साङ्कर्यमिति तु निर्बीजम्। अत्राहुः सुवर्णत्वादिव्याप्यं नानैव
घटत्वं घटपदमपि नानार्थमेव अनुगतव्यवहारस्तु संस्थानैकजात्या-
द्येकैकजातीयसंस्थानग्रहनिबन्धनः सर्वजनीनानुगतप्रतीतिसिद्धाया-
स्तादृशजातेर्व्याप्यं भिन्नमेवान्यतरकर्मजत्वादिकं बाधकबलेन अन्य-
तावच्छेदकभेदेऽप्यदोषात् अन्यतरकर्मजत्वादिजात्यनङ्गीकाराद्वा।
अपरे तु प्रतिनियतपरस्परविरुद्धसंस्थानादिव्यङ्ग्यानां मिथो विरुद्ध-
सामग्रीप्रयोज्यानां जातीनां व्यञ्जकसामग्रीसङ्करासम्भवेन सङ्करो
नेष्यते न पुनः प्रमाणे सत्यपि परासाम् अत एवानुद्भूतरूपादि-
वादिनां शुक्लपीतशीतोष्णादिसाधारणं प्रत्यक्षत्वप्रयोजकम् उद्भूतत्व-
मनुद्भूतत्वं च न जातिर्मानाभावात्। शब्दसुखादिव्यावृत्तस्तु अनुद्भूत-
व्यवहारोऽप्रत्यक्षत्वनिमित्तकः। अत एव मन्दं सुखमपेक्ष्यानुगतो
विभिन्नजातीयेषु तेषु तेषूत्कृष्टत्वव्यवहारो ऽननुभूते सुखे माना-
भावेन सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वायोगात्। इत्थं च
परमाणुमहत्त्वमपेक्ष्य गगनादिमहत्त्वपर्यन्तमुत्कर्षो गगनादिमहत्त्व-

...षेण परमाणुपरिमाणपर्य्यन्तमपकर्षेणैवैक एवेति भावः। ...तिभेदेनेति। व्यक्तिविशेषवृत्तित्वावच्छिन्नसङ्कोचकत्वव्यक्तिविशेष-...वृत्तित्वावच्छिन्नप्रतिक्षेपकत्वेनेत्यर्थः। तदुतज्जातीयेति। तज्जाति-...प्रतिक्षेपकजातिमत्त्वे मिथो व्यभिचारिजात्योः समावेशे बाधकं ...परिदृश्यमानेति॥

यश्च यस्य जातिविशेषः स चेत् तं व्यभिचरेद् व्यभिचरेदपि शिंशपा पादपमविशेषात् तथा च गतं स्वभावहेतुना। विपर्यये बाधकं विशेष इति चेत् न तस्येहापि तत्त्वात्[१] तदभावे स्वभावत्वानुपपत्तेः। उपपत्तौ वा किं बाधकानुसरणव्यसनेनेति विशेषस्य विशेषं प्रति प्रयोजकत्वाच्च। तथाहि कार्य्यगतमङ्कुरत्वं प्रति बीजत्वस्याप्रयोजकत्वे ऽबीजादपि तदुत्पत्तिप्रसङ्गः॥

प्रकृ॰ टी॰। यश्चेति। शालित्वव्याप्यं कुर्वद्रूपत्वं यदि यवे ऽपि स्यात् तदा शिंशपात्वमपि वृक्षत्वं व्यभिचरेदित्यर्थः। किं स्यात इत्यत आह। तथा चेति। विपर्यय इति। यदि शिंशपा वृक्षं व्यभिचरेत् तदात्मानमपि[२] व्यभिचरेदिति विपक्षबाधकबलेन स्वभावहेतुः प्रवर्त्ततामित्यर्थः। तस्येहापीति। कुर्वद्रूपस्यापि शालित्वस्वभावत्वादिपक्षबाधकस्यास्य[३] सत्त्वादित्यर्थः। तदभावे विपक्षबाधकाभावे।

(१) सम्भवात्—पा॰ २ पु॰।

(२) आत्मानमेव—पा॰ १ पु॰।

(३) बाधकस्य तुल्यत्वात्—पा॰ २ पु॰।

उपपत्तौ वेति। विपक्षबाधकाभावे ऽपि स्वभावत्वोपपत्तौ किं तदुपन्यासेनेत्यर्थः। तथाहीति। अङ्कुरत्वावच्छिन्ने कार्य्ये बीजत्वावच्छिन्नमेव कारणं शाल्यङ्कुरत्वावच्छिन्ने तु शालिबीजत्वमित्यर्थः॥

---

भगी० टी०। ननु परापरभावानुपपत्तिर्व्यक्तिभेदेन समाधास्यत इत्यत आह। यद्येति। शिंशपात्वं यदि वृक्षत्वात्यन्ताभावसामानाधिकरण्यविरोधिधर्मवत् स्याद्वृक्षत्वाभाववद्वृत्ति स्यात् विरोधी च धर्मस्तद्व्यापकत्वे सति तत्सामानाधिकरण्यमेवेत्यर्थः। तथा च शिंशपात्वेन वृक्षत्वानुमानं तादात्म्ये हेतुर्न स्यादिति भावः। यदि वृक्षस्वभावा शिंशपा वृक्षं व्यभिचरेदात्मानमेवातिपतेदिति यदि विपक्षबाधकं तदा शाल्यन्तर्भावेनैव जायमानव्यक्तिवृत्तिवेजात्यं यदि तदतिपतेदात्मानमेवातिपतेदिति प्रकृते ऽपि तुल्यमिति शङ्कोत्तराभ्यामाह। विपर्य्यय इति। यदि च विपक्षबाधकाभावे-ऽपि स्वभावत्वं सिध्यति तदा व्याप्तिग्रहार्थं तदनुसरणं व्यर्थमित्याह। उपपत्तौ वेति। चतुर्थं पक्षं कुर्वद्रूपमङ्गीकृत्य विवृणोति। तथाहीति। ननु न बीजभिन्नादङ्कुरोत्पत्त्यासञ्जनमिष्टापत्तेः बीजासमवहितसामग्रीकत्वापादने च वैयधिकरण्यम्। अत्राहुः अङ्कुरत्वावच्छिन्नकार्यताप्रतियोगिककारणतानवच्छेदकत्वं बीजत्वस्याप्रयोजकत्वम् तथा चाङ्कुरत्वं यदि बीजत्वानवच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं स्यात् बीजजन्यवृत्तिर्न स्यादित्यापादनार्थः॥

---

रघु० टी०। समाविष्टजात्योर्मिथो व्यभिचारे बाधकं यद्ये-

स्यादि। यस्य यज्जातीयस्य विशेष एकदेशवृत्तिः तं तज्जातीयं तां जातिमिति यावत्। शिंशपा शिंशपात्वं स्वभावहेतुना तादात्म्यहेतुना विपर्यय इति। वृक्षस्वभावा वृक्षसामान्यान्तर्गतसामग्रीका च शिंशपा यदि वृक्षमतिपतेत् तत्सामग्रीमतिपत्य वा जायेत तदा आत्मानमेवातिपतेत् स्वसामग्रीमेवातिपत्य जायेतेति बाधकं तस्येति। अङ्कुरकुर्वद्रूपस्वभावस्तत्सामान्यान्तर्गतसामग्रीकश्च शालिरङ्कुरकुर्वद्रूपं च शालिस्वभावं तत्सामान्यान्तर्गतसामग्रीकं च यदि तदतिपतेत् तत्सामग्रीमतिपत्य वा जायेत स्वात्मानमेवातिपतेत् स्वसामग्रीमेव चातिपत्य जायेतेत्येवंरूपस्य विपर्यये बाधकस्येत्यर्थः। तदभावे विपर्यये बाधकाभावे। अप्रयोजकत्वे अङ्कुरत्वावच्छिन्नकार्यताप्रतियोगिककारणतानवच्छेदकत्वे। अबीजादपीति। न च वैयधिकरण्यम् इष्टापत्तिश्च बीजभिन्नधरण्यादेस्तदुत्पादादिति वाच्यम् अङ्कुरत्वं यदि जातित्वे जन्यतावच्छेदकत्वे वा सति बीजमात्रवृत्तिधर्मावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्यात् बीजजन्यान्यवृत्तिः स्यात् बीजासमवहितसामग्रीजन्यवृत्तिर्वा स्यादित्यत्र तात्पर्यात् अङ्कुरत्वं यदि बीजमात्रवृत्तिधर्मावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्यात् अङ्कुरमात्रवृत्तिजातिर्न स्यादित्यत्र तात्पर्यमित्यन्ये॥

**बीजस्य विशेषः कथमबीजे भविष्यतीति चेत् तर्हि शालेर्विशेषः कथमशालौ स्यादिति शाले(१)रङ्कुरानु-**

(१) अशालौ भविष्यतीत्यशाले—पा॰ १ पु॰।

त्यतिप्रसङ्गः। अशालिवद्वीजेऽप्यसौ भवतु विशेषः तथापि बीजत्वैकार्थसमवेत एवासावङ्कुरं प्रति प्रयोजक इति चेत् न शालित्वव्यभिचारे शालित्वैकार्थसमवायवद् बीजत्वव्यभिचारे बीजत्वैकार्थसमवायेनापि नियन्तुमशक्यत्वादविशेषात्॥

शङ्क॰ टी॰। अशालेर्यवादितः कुर्वद्रूपत्वं यथा शालित्वं व्यभिचरति तथा बीजत्वमपि व्यभिचरतु न चातिप्रसङ्गः बीजत्वैकार्थसमवेतस्यैवाङ्कुरकुर्वद्रूपत्वस्याङ्कुरजनकतावच्छेदकत्वमित्याह। अशालिवदिति। यथाऽशालेरङ्कुरस्तथाऽबीजादपि भवन् केन वारणीयः। अथ यदि बीजत्वं विशेषणं तदा तस्य प्रयोजकत्वमेव स्यात् उपलक्षणं चेत् तदा तु न तस्यानुपलक्षतावच्छेदकैकस्याभावा[1]दित्याह। शालित्वेति॥

---

भगी॰ टी॰। ननु बीजत्वस्याप्रयोजकत्वेऽपि नैव दोषोऽङ्कुरकुर्वद्रूपत्वस्य बीजत्वव्याप्यत्वादित्याह। बीजस्येति। अङ्कुरकुर्वद्रूपत्वं यथाऽशालित्वव्याप्यत्वेऽपि शालित्वं व्यभिचरति तथा बीजत्वव्याप्यत्वेऽपि तद्बीजत्वं व्यभिचरेदित्याह। तद्वीति। न च तच्छालित्वव्यापकमेव कुशूलस्थशालौ तदभावादिति भावः। तथा चाङ्कुरत्वं यदि शालित्वव्याप्यावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं स्याद्-शालिबीजजन्यवृत्तिर्न स्यादित्यापादनम् तथाप्यबीजादङ्कुरानुत्पत्ति-

(१) वच्छेदकैकस्याभावा—पा॰ ३ पु॰।

रङ्कुरकुर्वद्रूपत्वस्य बीजत्वव्याप्यत्वेनाभ्युपपन्ना(१) न बीजप्रयोजकत्वे मानं शालित्वव्यभिचारित्वे ऽपि तस्य बीजत्वव्यभिचारस्यादर्शनात् । बीजत्वैकार्थसमवेतविशिष्टादङ्कुरोत्पत्तिरित्याह । समाप्तिवदिति । बीजत्वैकार्थसमवाये यदि बीजत्वं विशेषणं तदा तस्य प्रयोजकत्वापात इति तस्योपलक्षणत्वं वाच्यम् तच्च तदवच्छेदकैकरूपाभावादयुक्तमित्यबीजादपि तदुत्पत्तिप्रसङ्ग इत्याह । शालित्वेति । तस्मादनन्यथासिद्धान्वयव्यतिरेकानुविधायितया बीजत्वमेवाङ्कुरजनने प्रयोजकम् । न च वैजात्येन तदन्यथासिद्धिः तस्यासिद्धेः ॥

---

रघु॰ टी॰ । बीजत्वेनाजनकत्वे ऽपि बीजमात्रवृत्तिना कुर्वद्रूपत्वेन जनकत्वादापादकासिद्धिमाशङ्कते । बीजस्येति । बीजस्य विशेषः बीजैकदेशवृत्तिजातिः । शाल्येकदेशवृत्तेः शालित्वव्यभिचारवद्बीजैकदेशवृत्तेरपि जातेर्बीजत्वव्यभिचारित्वसम्भवादङ्कुरकुर्वद्रूपत्वस्य बीजमात्रवृत्तित्वमित्याशयेनाह । तर्हीति । समाप्तेः शालिभिन्नबीजाद्यच कुर्वद्रूपत्वे वस्तुगत्या बीजत्वैकार्थसमवायस्तत्प्रयोजकं किं वा तद्विशिष्टमाद्य आह । शालित्वेत्यादि । शालित्वैकार्थ समवायवदिति तृतीयासमर्थावृत्तिः शालित्वैकार्थसमवायेनेत्यर्थः । द्वितीये तु प्रत्यक्षसिद्धत्वाभावादिविशिष्टस्य प्रयोजकत्वे विशेषणस्यापि तथात्वेनावश्यकत्वाद्विशेषणविशेष्यभावे विनिगमकाभावाच्च शुद्धं बीजत्वमेव प्रयोजकमस्तु ॥

---

(१) व्याप्यत्वेनाप्युपपन्ना—इति क्वचित् ।

तस्माद् यो यथाभूतो यथाभूतमात्मनोऽन्वयव्यतिरे-कावनुकारयति तस्य तथाभूतस्यैव तथाभूते सामर्थ्यम्। तद्विशेषात्तु कार्यविशेषं प्रयोजयन्ति शाल्यादिवदिति युक्तमुत्पश्यामः ॥

शङ्क० टी०। बीजत्वेनैव कारणता अङ्कुरत्वेन च कार्यते-त्यवश्यमभ्युपगन्तव्यमित्युपसंहरति। तस्मादिति। बीजे सत्यङ्कुरस्त-दभावे तु नाङ्कुर इति बीजमङ्कुरत्वावच्छिन्नमेव कार्यं प्रत्यन्वय-व्यतिरेकावनुकारयति दृष्टत्वादित्यर्थः ॥

---

भगी० टी०। तच्चरमा तु क्षमादावपि कार्यकारणभावा-लम्बिनी न दोषायेत्याह। तस्मादिति ॥

---

रघु० टी०। कारणाकारणे तु सहकारिसाकल्यवैकल्याभ्या-मेवोपपन्ने अन्यथा सहकारिसमवहितबीजत्वेनापि जनकत्वस्य सुव-चत्वादित्याशयवानुपसंहरति। तस्मादिति ॥

कस्य पुनः प्रमाणस्यायं व्यापारकलाप इति चेत् तदुत्पत्तिनिश्चयहेतोः प्रत्यक्षानुपलम्भात्मकस्येति ब्रूमः। अथ न्यायेन विना न ते परितोषः शृणु तमपि। तदा यदङ्कुरं प्रत्यप्रयोजकं न तद्बीजजातीयं यथा शिलाशक-लम् अङ्कुरं प्रत्यप्रयोजकं च कुशूलनिहितं बीजमभ्युपेतं परैरिति व्यापकानुपलब्धिः प्रसङ्गहेतुः ॥

मथु० टी०। परः पृच्छति। कथेति। प्रमाणं विना स्वस-मवाचरणमात्रं सर्वमिदमिति भावः। प्रथममिति। बीजत्वमेवाङ्कुरं प्रति स्वरूपयोग्यतावच्छेदकं न त्वङ्कुरे कुर्वद्रूपत्वमिति प्रतिपादनार्थं यः पूर्वोक्तो व्यापारकलाप इत्यर्थः। उत्तरम्। तदुत्पत्तीति। तत उत्पत्तिस्तदुत्पत्तिः कार्यकारणभावः। स च प्रत्यक्षानुपलम्भाभ्या-मन्वयव्यतिरेकाभ्यामेव गम्यते तथा च बीजे सत्यङ्कुरस्तं विना नाङ्कुर इति प्रत्यक्षादेवान्वयव्यतिरेकग्रहसहकारिणोऽनुमानाद्वा ग्रहात इति का तव कथन्तेत्यर्थः। ननु तथापि कथायां न्याय उप-दर्शनीयो भवतीत्यत आह। प्रथेति। सौगतमतानुसारेणैव न्याय-मुपदर्शयति। यदिति। बीजजातीयं नाङ्कुरं प्रति प्रयोजकमिति त्वयाभ्युपगम्यते तदा त्वदभ्युपगमानुसारेण कुशूलस्थस्य बीजस्य बीजजातीयत्वं न स्यादित्यर्थः। यदि कुशूलस्थं बीजमङ्कुरं प्रति प्रयोजकं न स्याद्बीजं न स्यादित्यसहिम्ना तर्कोक्तिः। ननु कुशूल-स्थस्याङ्कुराप्रयोजकत्वमापादकमेवासिद्धमित्यत आह। अभ्युपेत-मिति। पराभ्युपगममात्रेणैव तर्कप्रवृत्तेर्नापादकासिद्धिस्तत्र दोष इत्यर्थः। परैः सौगतैः। प्रसङ्गात्मको हेतुः प्रसङ्गहेतुः। व्यापकानु-पलब्धिरिति। बीजत्वस्य व्यापकमङ्कुरप्रयोजकत्वं तथा च तथा नाभ्युपगम्यत इति तन्महिम्ना तदनुपलब्धिरित्यर्थः॥

---

भगी० टी०। प्रथममिति। कार्यसामान्ये कारणसामान्यं प्रयोजकमिति किं प्रमाणनिबन्धनमित्यर्थः। तदुत्पत्तीति। कारणा-न्वये कार्यान्वयस्तदभावे कार्याभाव इति ग्राहकस्य प्रत्यक्षस्येत्यर्थः।

कथायां प्रत्यक्षमप्यनुमानकक्षायामेव प्रयोक्तव्यमित्याह। अथेति। परै-रिति। नैयायिकस्यापसिद्धान्तनिरासाय व्यापकेति। बीजत्वं प्रत्यङ्कुरप्रयोजकत्वस्य व्यापकत्वात् तस्यानुपलब्धिरङ्कुराप्रयोजकत्वो-पलब्धिरित्यर्थः। ननु कुशूलस्थबीजस्याङ्कुराप्रयोजकत्वं स्वतो सिद्ध-मित्यत आह। प्रसङ्गेति। स्वमते तु यद्बीजमङ्कुरं प्रत्यप्रयोजकं स्याद्बीजजातीयं न स्यादिति प्रसङ्गाय वक्तव्यो हेतुरित्यर्थः॥

---

रघु० टी०। तदुत्पत्तिस्तस्मादुत्पत्तिः। कार्यकारणभावः। प्रत्यक्षं कारणान्वये कार्यस्य प्रत्यक्षम् अनुपलम्भश्च कारणव्यतिरेके कार्यव्यतिरेकस्योपलम्भः। तथा चान्वयव्यतिरेकग्रहसध्रीचीनस्य प्रत्य-क्षस्येत्यर्थः। परैरीत्येव परं प्रति स्वतर्कन्यायप्रयोगमाह। यदङ्कुर-मित्यादि। परैः सौगतैः। व्यापकस्य बीजत्वस्याङ्कुरप्रयोजकत्व-स्यानुपलब्धिरनुपलब्धिविषयोऽभावः। प्रसङ्गहेतुः प्रसङ्गस्य प्रसञ्जको वा हेतुः॥

विपर्ययेऽपि किं बाधकमिति चेत् अङ्कुरस्य जाति-प्रतिनियमाकस्मिकत्वप्रसङ्ग इत्युक्तं बीजत्वं तस्य प्रत्यक्ष-सिद्धमशक्यापह्नवमिति चेदस्तु तर्हि विपर्ययः। यद्बीजं तदङ्कुरं प्रति प्रयोजकं यथान्त्यसामग्रीमध्यमध्यासीनं बीजं बीजं चेदं विवादास्पदमिति[1] स्वभावहेतुः॥

शङ्क० टी०। विपर्यय इति। अङ्कुराप्रयोजकमपि बीजं स्यादित्यत्र किं बाधकमित्यर्थः। तर्कमूलव्याप्तौ विपक्षे बाधकमाह।

(१) विवादपदं—पा० २ पु०।

| | | |
|---|---|---|
| [illegible]pradipa, Fasc. 1-7 @ /10/ each ... ... ... | [illegible] | [illegible] |
| Nyāyabinduṭīkā, Fasc. 1 @ /10/ each ... ... ... | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. I, Fasc. 2-6 Vol. II, Fasc. 1-[illegible] @ /10/ each ... ... ... ... | 5 | 0 |
| Padumawati, Fasc. 1-4 @ 2/ ... ... ... ... | 8 | 0 |
| Pariçiṣṭa Parvan, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Prākrita-Paingalam, Fasc. 1-7 @ /10/ each ... .. ... | 4 | 6 |
| Prithvirāj Rāsa, Part II, Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Ditto (English) Part II, Fasc. 1 @ 1/- each ... .. | 1 | 0 |
| Prākṛta Lakṣaṇam, Fasc. 1 @ 1/8/ each ... ... ... | 1 | 8 |
| Parāçara Smṛti, Vol. I, Fasc. 1-8 Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... ... | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each ... ... ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... .. | 3 | 12 |
| Ṣaddarśana-Sa[illegible] Fasc. 1, @ /10/ each ... ... | 0 | 10 |
| *Sāma Vêda Saṁhitā, Vols. I, Fasc. 5-10; II, 1-6; III, 1-7; IV 1-6; V, 1-8, @ /10/ each ... ... ... ... | 20 | 10 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each ... .. | 3 | 0 |
| [illegible]kara Vejaya, Fasc. 2-3 @ /10/ each ... ... .. | 1 | 4 |
| [illegible]dha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... .. | 3 | 12 |
| [illegible]uta Sutra Latyayan, Fasc. 1-9 @ /10/ each ... ... | 5 | 10 |
| „ Asbalayana, Fasc. 1-11 @ /10/ each ... ... | 6 | 14 |
| [illegible]çruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each ... .. .. | 1 | 0 |
| [illegible]ddhi Kaumudī, Fasc. 1-4 @ /10/ each ... .. .. | 2 | 8 |
| [illegible]aittreya Brahmana, Fasc. 3-25 @ /10/ each ... ... | 14 | 6 |
| „ Pratisakhya, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| [illegible]aittiriya Saṁhitā, Fasc. 22-45 @ /10/ each .. .. | 15 | 0 |
| [illegible]jya Brāhmaṇa, Fasc. 1-19 @ /10/ each ... ... .. | 11 | 14 |
| [illegible]ntra Vārtika (English) Fasc. 1-6 @ 1/4/ ... ... | 7 | 8 |
| *Tattva Cintāmaṇi, Vol. I, Fasc. 1-9, Vol. II, Fasc. 2-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1 Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... ... ... | 23 | 12 |
| Tattvārthādhigama Sutram, Fasc. 1-3 @ /10/ ... ... ... | 1 | 14 |
| Trikāṇda-Maṇḍanam, Fasc. 1-3 @ /10/ .. ... .. | 1 | 14 |
| Tul'si Satsai, Fasc. 1-5 @ /10/ ... ... ... ... | 3 | 2 |
| Upamita-bhava-prapañca-kathā, Fasc. 1-9 @ /10/ each ... .. | 5 | 10 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/- ... ... | 6 | 0 |
| Vallāla Carita, Fasc. 1 @ /10/ ... ... ... ... | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc. 1-6 @ /10/ ... .. ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-7, @ /10/ each ... | 7 | 8 |
| Vidhāna Pārijata, Fasc. 1-8 @ /10/ ... ... ... .. | 5 | 0 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... .. | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1-6 @ /10/ ... . | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 2-5 @ /10/ each ... .. | 2 | 8 |

*Tibetan Series.*

| | | |
|---|---|---|
| Pag-Sam Thi S'iñ, Fasc. 1-4 @ 1/ each ... ... .. | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/ each ... ... ... ... ... | 14 | 0 |
| Rtogs brjod dpag hkhri S'iñ (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-5 @ 1/ each ... ... | 11 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Ālamgirnāmah, with Index, (Text) Fasc. 1-13 @ /10/ each ... | 8 | 2 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1-3 @ 1/- ... ... | 3 | 0 |
| Āin-i-Akbari, Fasc. 1-22 @ 1/8/ each ... ... ... | 33 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/- each ... ... ... ... | 34 | 0 |
| Akbarnāmah, with Index, Fasc. 1-37 @ 1/8/ each ... ... | 55 | 8 |
| Ditto English Vol. I, Fasc. 1-8; Vol. II, Fasc 1-3 @ 1/4/ each | 13 | 12 |
| Arabic Bibliography, by Dr. A. Sprenger @ /10/ ... ... | 0 | 10 |
| *Bādshāhnāmah, with Index, Fasc. 1-19 @ /10/ each ... ... | 11 | 14 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each ... ... | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts 1-2 @ 1/- each ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each ... ... ... ... ... | 31 | 8 |
| Farhang-i-Rashidi, Fasc. 1-14 @ [illegible] ... ... | 21 | 0 |
| Fihrist-i-Tūsi, or, Tūsy's list [illegible] Fasc. 1-4 @ 1/- each ... | 4 | 0 |
| Futūḥ-ush-Shām of Wāqi[illegible] ... ... | 5 | 10 |

[illegible] 1, PARK S[illegible]

1914.

Haft Asman, History of the ... 
History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... [illegible] 8
Iqbālnāmah-i-Jahāngīrī, Fasc. 1-3 @ /10/ each ... ... 1 14
Iṣābah, with Supplement, 51 Fasc. @ 1/- each ... ... 51 0
Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-[illegible] Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... 35 0
Maghāzi of Wāqidi, Fasc. 1-5 @ /10/ each ... ... Rs. 3 2
Muntakhabu-t-Tawārīkh, Fasc. 1-15 @ 10/ each ... Rs. 9 6
Ditto (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... ... 15 0
Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... ... 11 14
Ma'āṣir-i-'Ālamgīrī, Fasc. 1-6 @ /10/ each ... ... ... 3 12
Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... ... ... 0 10
Niẓāmī's Khiradnāmah-i-Iskandarī, Fasc. 1-2 @ /12/ each ... 1 8
Riyāẓu-s-Salāṭīn, Fasc. 1-5 @ /10/ each ... ... ... 3 2
Ditto (English) Fasc. 1-5 @ 1/ ... ... .. 5 0
Tabaquat Nasiri, Fasc. 1-5 @ /10/ each ... ... ... 3 2
Ditto (English) Fasc. 1-14 @ 1/ each ... ... 14 0
Ditto Index ... ... ... 1 0
Tārīkh-i-Firūz Shāhi of Ẓiyāu-d-dīn Barni, Fasc. 1-7 @ /10/ each 4
Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, Fasc. 1-6 @ /10/ each
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ...
Wis o Rāmīn, Fasc. 1-5 @ /10/ each ... ...
Ẓafarnāmah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /10/ each
Tuzuk-i-Jahāngīrī (Eng.) Fasc. 1 @ 1/ ... ...

धोजक

---

ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. XIX and XX @ 10/each ... ... 20 0
2. Proceedings of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. Journal of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) 1901 (7), 1902 (9), 1903 (8), 1904 (16) @ 1/8 per No. to Members and @ 2/per No. to Non-Members.

*N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

4. Journal and Proceedings, N S., 1905, to date, @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members. ... ...
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25°/o to Members.
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... ... .. 4 0
Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... 4 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1884. ... 3 8
8. Mahābhārata, Vols. III and IV, @ 20/ each ... ... 40 0
9. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
10. Tibetan Dictionary, by Csoma de Körös ... ... ... 10 0
11. Ditto Grammar " " ... ... ... 8 0
12. Kaçmiraçabdāmṛta, Parts I and II @ 1/8/ ... ... ... 3 0
13. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... 1 0
14. Memoir on maps illustrating the Ancient Geography of Kaśmir, by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... ... ... 4 0
15. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmani, and edited with notes by Major D. C. Phillott. 10 0

Notices of Sanskrit Manuscripts, Fasc. 1-33 @ 1/ each ... ... 33 0
Nepalese Buddhist Sansk[illegible]ure, by Dr. R. L. Mitra ... 5 0

*N.B.*—All Cheques, Mo[illegible] be made payable to the "Treasurer Asiatic Society," [illegible]

BIBLIOTHECA INDICA:
A
COLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1375.

# आत्मतत्त्वविवेकः।

श्रीमदुदयनाचार्यविरचितः।

श्रीशङ्करमिश्र-भगीरथठक्कुर-रघुनाथतार्किकशिरोमणि-
मथुरानाथतर्कवागीशादिविरचितटीकासहितः।

# ĀTMATATTVAVIVEKA

OR

## BAUDDHĀDHIKĀRA.

A REFUTATION OF BUDDHISTIC METAPHYSICS

BY

UDAYANĀCĀRYA,

WITH THE COMMENTARIES OF ŚAṄKARA MIŚRA, BHAGĪRATHA ṬHAKKURA, RAGHUNĀTHA TĀRKIKA ŚIROMAṆI, MATHURĀNĀTHA TARKAVĀGĪŚA, ETC.




EDITED BY

PANDIT VINDHYEŚVARI PRASĀDA DVIVEDIN,

*Librarian, Govt. Sanskrit College, Benares.*

FASCICULUS II.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1914.

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 1, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

*The Society's Agents*—

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*
AND MR. OTTO HARRASSOWITZ, BOOKSELLER, *Leipzig, Germany.*

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Advaitachintâ Kaustubha, Fasc. 1–3 @ /10/ each ... | Rs. 1 | 14 |
| Aitareya Brâhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol IV, Fasc. 1-8 @ /10/ each ... ... | 14 | 0 |
| Aitareyalocana ... ... ... ... ... | 2 | 0 |
| Amarakosha, Fasc. 1-2 ... ... ... ... | 4 | 0 |
| Anumana Didhiti Prasarini, Fasc. 1-3 @ /10/ ... ... ... | 1 | 14 |
| Aṣṭasâhasrikâ Prajñâpâramitâ, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Atmatattvaviveka, Fasc. I ... ... ... ... | 0 | 10 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Avadâna Kalpalatâ, (Sans. and Tibetan) Vol. I, Fasc. 1-11. Vol. II, Fasc. 1-11 @ 1/ each ... ... ... | 22 | 0 |
| Bâlam Bhaṭṭi, Vol. I, Fasc. 1-2, Vol. II, Fasc. 1, @ /10/ each ... | 1 | 14 |
| Baudhayana Srauta Sûtra, Fasc 1-3; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1, @ /10 each ... ... ... ... | 5 | 10 |
| Bhasavritty ... ... ... ... ... | 0 | 10 |
| Bhaṭṭa Dipikâ, Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-2 @ /10/ each ... | 5 | 0 |
| Bauddhastotrasangraha ... ... ... ... | 2 | 0 |
| Brhaddevatâ, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Bṛhaddharma Purâṇa, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Bodhicaryâvatâra of Çântideva, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Çrî Çantinatha Charita, Fasc. 1-3 ... ... ... ... | 1 | 14 |
| Çatadusanî, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| *Çatapatha Brâhmaṇa, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-7; Vol V, Fasc. 1-4 @ /10/ each ... | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 @ 1/4/ each ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... ... | 3 | 2 |
| Ditto Vol. IX, Fasc. 1-2 ... ... ... | 1 | 4 |
| Çatasâhasrikâ-prajñâpâramitâ, Part I, Fasc. 1-18 @ /10/ each ... | 11 | 4 |
| *Caturvarga Chintâmaṇi, Vol. II, Fasc. 1-25; Vol. III, Part I, Fasc. 1-18, Part II, Fasc. 1-10; Vol. IV, Fasc. 1-6 @ /10/ each | 36 | 14 |
| Ditto Vol. IV, Fasc. 7, @ 1/4/ each ... | 1 | 4 |
| Ditto Vol. IV, Fasc. 8-10 @ /10/ ... ... | 1 | 14 |
| Çlokavartika (English), Fasc. 1-7 @ 1/4/ each ... ... | 8 | 12 |
| *Çrauta Sûtra of Çânkhâyana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4; Vol. 4, Fasc. 1 @ /10/ each ... | 10 | 0 |
| Çrî Bhâshyam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dâna Kriyâ Kaumudi, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Gadadhara Paddhati Kalasâra, Vol. I, Fasc. 1-7 @ /10/ each .. | 4 | 6 |
| Ditto Âcârasâra, Vol. II, Fasc. 1-4 ... ... .. | 3 | 2 |
| Gobhiliya Grhya Sûtra, Vol. I, @ /10/ each ... ... ... | 3 | 2 |
| Ditto Vol. II, Fasc. 1-2 @ 1/4 /each ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... | 2 | 0 |
| Gobhilîya Grhya Sûtra, Grihya Sangraha ... ... ... | 0 | 10 |
| Haralata ... ... ... ... ... ... | 1 | 14 |
| Karmapradiph, Fasc. I ... ... ... ... | 1 | 4 |
| Kâla Viveka, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| Kâtantra, Fasc. 1-6 @ /12/ each ... ... ... | 4 | 8 |
| Kavi Kalpa Lata, Fasc. I ... ... ... .. | 0 | 10 |
| Kavindravacana Samuccayah ... ... ... ... | 8 | 3 |
| Kurma Purana, Fasc. 1—9 @ /10/ each ... ... ... | 5 | 10 |
| Kiranavali, Fasc. 1-3, @ /10/ ... ... ... ... | 1 | 14 |

अङ्कुरस्येति। बीजत्वस्याव्यापकमङ्कुरप्रयोजकत्वं यदि स्यात् तदाऽबीजादप्यङ्कुरः स्यात्[१] तच्चानिष्टमित्यर्थः। ननु तर्कमात्रमतन्त्रमित्यत आह। अस्तु तर्हीति। बीजत्वमेव स्वभावहेतुः तच्च कुशूलस्थे स्वरूपासिद्धं मास्यादिति प्रथमत एव परमङ्गीकारयति। बीजत्वं तस्येति। कुशूलस्थं बीजमङ्कुरप्रयोजकं बीजत्वात् क्षेत्रपतितबीजवदित्यर्थः॥

भगी० टी०। नन्वङ्कुराप्रयोजकस्यापि बीजत्वं स्यादित्याह। विपर्यये ऽपीति। जातिप्रतिनियमः कार्यमात्रवृत्तिजातीयत्वम्। अङ्कुरत्वं यदीतराप्रयोजकत्वे सति बीजाप्रयोज्यं स्यादप्रयोज्यं स्यादित्याकस्मिकार्थः। तर्कस्य पर्यायपर्यवसानायाह। बीजत्वमिति॥

रघु० टी०। आकस्मिकत्वं निर्निमित्तकत्वम्। स्वभावहेतुरनुमापको हेतुः। तादात्म्यहेतुरित्यन्ये॥

**अङ्कुरस्य हि जातिप्रतिनियमो न तावन्निर्निमित्तः सार्वत्रिकत्वप्रसङ्गात्। नाप्यन्यनिमित्तः तथाभूतस्य तस्याभावात्॥**

शङ्क० टी०। उक्तमाकस्मिकत्वप्रसङ्गं प्रपञ्चयति। अङ्कुरस्येति। निर्निमित्तत्वं नियतजातीयकारणाप्रयोज्यत्वम्। सार्वत्रिक-

(१) अङ्कुरस्येति। बीजत्वेन चेदङ्कुरप्रयोजकता न स्यात् तदा कदाचिदबीजादप्यङ्कुरः स्यात्— पा० ३ पु०।

त्वमङ्कुरातिरिक्तवृत्तित्वम्। अङ्कुरत्वं यदि बीजत्वावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्यादङ्कुरमात्रवृत्तिजातिर्न स्याद् द्रव्यत्वादिवदित्यर्थः। ननु कुर्वद्रूपत्वादिनिमित्तकमेव तत् स्यादित्यत आह। नापीति। तथाभूतस्येति। अङ्कुरमात्रनियामकस्येत्यर्थः। अभावादिति। तस्याप्रामाणिकत्वादित्यर्थः॥

---

भगी० टी०। जातिप्रतिनियमाकस्मिकत्वं स्पष्टयति। अङ्कुरस्येति। अङ्कुरत्वं यद्येकरूपावच्छेद्यकारणताप्रतियोगिककार्यतावच्छेदकं न स्यात् कार्यमात्रवृत्ति न स्यादित्यर्थः। नाप्यङ्कुरकुर्वद्रूपत्वं तन्नियामकं तस्याप्रामाणिकत्वादित्याह। नापीति॥

---

रघु० टी०। उक्ते निर्निमित्तकत्वे ऽनिष्टमाह। सार्वत्रिकत्वेति। सार्वत्रिकत्वं कार्यमात्रावृत्तित्वम्। तथा चाङ्कुरत्वं यदि किञ्चिद्रूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं न स्यात् कार्यमात्रवृत्तिजातिर्न स्यादित्यर्थः। नाप्यन्येति। तथा च सनिमित्तकत्वसाधकं कार्यमात्रवृत्तिजातित्वं क्लृप्तशालित्वादिबाधात् क्लृप्तकल्पनागौरवप्रतिसन्धानसहितं बीजत्वस्य निमित्तत्वं साधयतीति॥

---

**सेयं निमित्तवत्ता विपक्षाद् व्यावर्तमाना[१] स्वव्याप्यमादाय बीजप्रयोजकतायामेव विश्राम्यतीति प्रतिबन्धसिद्धिः॥**

(१) निवर्तमानः—पा० १ पु०।

शङ्क० टी०। विपक्षादिति। निर्निमित्तादित्यर्थः। यद्वा बीजाप्रयोज्यादित्यर्थः[१]। स्वव्याप्यं बीजप्रयोज्यताव्याप्यं कार्यमात्रवृत्तिजातिमादाय बीजप्रयोज्यतायामङ्कुरस्य विश्राम्यति। प्रयोजकतायामिति पाठे बहुव्रीहिः। प्रतिबन्धेति। यद्यद्बीजं तत्सर्वमङ्कुरप्रयोजकमिति व्याप्तिसिद्धिरित्यर्थः॥

भगी० टी०। विपक्षान्निमित्तकाद् बीजेतरप्रयोज्यत्वेत्यर्थः। स्वव्याप्यप्रतिनियतजातीयत्वमित्यर्थः। बीजेति। अन्यस्य तत्प्रयोजकस्याभावे परिशेषादित्यर्थः॥

रघु० टी०। सेयं निमित्तवत्ता विपक्षान्निर्निमित्तात् स्वव्याप्यं कार्यमात्रवृत्तिजातित्वमादाय व्यावर्तमाना अङ्कुरत्वे सिद्ध्यन्तीति परिशेषाद् बीजप्रयोजकतायामेव विश्राम्यति अङ्कुरत्वस्य बीजप्रयोज्यत्वे सिध्यति बीजस्याप्यङ्कुरप्रयोजकत्वं सिध्यतीत्यर्थः। बीजं प्रयोजकं यस्येति बहुव्रीहिरित्यन्ये। बीजप्रयोज्यतायामिति पाठस्तु सुगम एव॥

अथवा कृतमङ्कुरग्रहेण[२] बीजस्वभावत्वं क्वचित् कार्यं प्रयोजकं न वा। न चेत् न तत्स्वभावं बीजं तेन रूपेण क्वचिदप्यनुपयोगात्। एवं च प्रत्यक्षसिद्धं बीजस्वभावत्वं

(१) बीजाप्रयोजकादित्यर्थः—पा० ३ पु०

(२) किमङ्कुरग्रहेण—पा० ३ पु०।

नास्ति सर्वप्रमाणागोचरस्तु विशेषोऽस्तीति विशुद्धा बुद्धिः क्वचिदुपयोगेऽप्येकस्य तेन रूपेण सर्वेषामविशेष-स्ताद्रूप्यात्। तथा च कथं किञ्चिदेव बीजं स्वकार्यं कुर्यात् नापराणि न च वस्तुमात्रं तत्कार्यम् अबीजात् तदनुत्पत्तिप्रसङ्गात्। नापि बीजमात्रम् अङ्कुरकारिणोऽपि तदुत्पत्तिप्रसङ्गात्। नाप्यङ्कुराद्यन्यतममात्रम् प्रागपि तदुत्पत्तिप्रसङ्गात्॥

शङ्क० टी०। कृतमङ्कुरेति[१]। अङ्कुरत्वावच्छिन्नं कार्यं प्रति बीजानां बीजत्वेनैव कारणतेति किं विशिष्य व्यवस्थापनग्रहेण प्रकारान्तरेणापि परिशेषादिना तथैव पर्यवस्यतीत्यर्थः। बीजत्वेन क्वचित् कार्ये बीजं यदि प्रयोजकं न भवेत् तदा तेन रूपेण तदसत् स्यादिति। तच्च कार्यं परिशेषादङ्कुररूपमेव सेत्स्यतीति प्रघट्टकार्थः। बीजस्वभावत्वमिति। बीजत्वं किञ्चित्कार्यं प्रति कारणतावच्छेदकं न वेति विकल्पार्थः। न तत्स्वभावमिति। तर्हि बीजत्वं जातिरेव न स्यादित्यर्थः। ननु बीजत्वं मास्तु अङ्कुरकुर्वद्रूपत्वमेव तथा स्यादित्यत आह। एवं चेति। क्वचिदिति। बीजत्वेन रूपेण बीजानां किञ्चित्कार्यं प्रति जनकत्वाभ्युपगमे सर्वाण्येव[२] बीजानि तथा स्युः बीजत्वाविशेषादित्यर्थः। वस्तुमात्रमिति।

---

(१) किमङ्कुरेति— पा० १ पु०।

(२) सर्वाण्यपि— पा० २ पु०।

कार्यमात्रमित्यर्थः । यद्वा सर्वं वस्तु क्षणिकमेवेति तदभिप्रायेणोक्तं वस्तुमात्रमिति । एवं सति बीजासमवधाने घटपटाद्यपि न स्यादित्याह । अबीजादिति । ननु बीजाद्बीजमेव कार्यमस्तु समानसन्तानस्यैव तथा क्षणिकत्ववादिनाभ्युपगमादित्यत आह । नापीति । तर्हि चरमादपि बीजाद्बीजमेवोत्पद्येत नाङ्कुरः अङ्कुरस्याप्युत्पादे वा समानदेशताविरोधः बीजसन्तानानुपरमः प्राथमिकबीजानुत्पत्तिश्चेति भावः । ननु बीजमङ्कुरो बीजानुभवश्च कार्याणि बीजत्वावच्छिन्नकारणाज्जायन्तामित्यत आह । नापीति । कार्यमिति शेषः । तर्ह्युत्पन्नमात्रादपि बीजादेतानि कार्याणि स्युरित्याह । प्रागपीति । सहकारिसमवधानादिति शेषः ॥

---

भगी० टी० । यद्वा परिशेषाद्बीजत्वमङ्कुरप्रयोजकमित्याह । अथवेति । न तत्स्वभावमिति । बीजत्वं यदि कारणतावच्छेदकं न स्यात् द्रव्यत्वव्याप्यजातिर्न स्यात् । यद्वा बीजं यदि बीजत्वेन कारणं न स्यात् तद्रूपवन्न स्यादित्यर्थः । अनिष्टापत्तिं निरस्यति । एवं चेति । व्याघातान्तरमाह । सर्वेति । विशेषः कुर्वद्रूपत्वं तस्यामानकत्वादित्यर्थः । क्वचिदिति । बीजत्वेन रूपेणेति शेषः । अविशेषः बीजव्यक्तीनां सर्वासां कारणतावच्छेदकबीजत्वस्याविशेषात् कारणतया न विशेष इत्यर्थः । अन्यथा तत्राङ्कुरार्थिप्रवृत्तिर्न स्यादित्यर्थः । ननु वस्तुमात्रं प्रति बीजत्वेन कारणत्वमस्त्वित्यत आह । न चेति । वस्तुमात्रस्य बीजकार्यत्वे बीजासमवहितसामग्रीतः कार्यं न स्यादित्यर्थः । ननु बीजसन्तानाद्बीजसन्ता-

नान्तरं बीजत्वेन स्यादित्यत आह। नापीति। अङ्कुरकारिण इति पञ्चमी चरमबीजादपि बीजोत्पत्तिप्रसङ्गः। तथा च बीजाङ्कुरयोर्मूर्तयोः समानदेशतापत्तिर्बीजसन्तानानुपरमः प्रथमबीजानुत्पत्तिश्च स्यादिति भावः। अङ्कुरादीति। आदिपदाद्बीजं तदनुभवश्चेति न तमप्प्रत्ययानुपपत्तिः। तत्कार्यमित्यनुषज्यते। बीजं सहकारिनिरपेक्षं तज्जनकं तत्सापेक्षं वा आद्ये प्रागपीति। सहकारिसमवधानादिति शेषः। तद्दुत्पत्तिरङ्कुरोत्पत्तिः॥

---

रघु० टी०। यद्यपि चैतावतापि बीजत्वस्य प्रयोजकत्वं न सिद्ध्यति[१] क्षितित्वादेरपि तथात्वसम्भवात् तथाप्यकुर्वाणसाधारणरूपस्य प्रयोजकत्वसिद्ध्यैव सिद्धमीहितं क्वदत्ते च बाधके अन्वयव्यतिरेकयोस्तुल्यतया बीजत्वस्यापि प्रयोजकत्वं न दुर्लभमिति हृदयम्। प्रागुक्ते अबीजादङ्कुरोत्पत्तिप्रसङ्गे तात्पर्यमित्यन्ये इत्यनुशयेनैव वा अथवेत्यादि। परेषां जातिमात्रस्य जनकतावच्छेदकत्वनैयत्यमभिप्रेत्याह। बीजस्वभावत्वमित्यादि। बीजत्वं किञ्चित्कार्यजनकतावच्छेदकं न वेति फलितार्थः। नेति पक्षे दूषणमाह। न तदिति। तत्रेष्टापत्तावाह। एवं चेत्यादि। विशेषः कुर्वद्रूपत्वम् प्रयोजकमिति पक्षं दूषयति। क्वचिदित्यादिना। क्वचिदङ्कुरादौ कार्ये एकस्य कुर्वद्रूपस्य बीजस्य तेन बीजत्वेन रूपेण उपयोगे जनकत्वे सर्वेषामङ्कुराद्यकुर्वद्रूपाणामपि बीजानामविशेषः अङ्कु-

(१) नायाति—पा० २ पु०।

रादिकारणत्वेन न विशेषस्तादृग्ष्यात् अङ्कुरादिजनकतावच्छेदक-बीजत्वशालित्वात् स्वकार्यमङ्कुरादि अपराणि अङ्कुराद्यकुर्वद्रूपाणि बीजानि कथं न कुर्युर्यदि समर्थस्यापि सहकारिविरहादाकरणम्। अथ वस्तुमात्रं बीजत्वावच्छिन्नकार्यमस्माकं वस्तुमात्रस्यैव क्षणिकत्वेन कार्यत्वात् न च वस्त्वकारि किञ्चिदपि बीजमित्याशङ्का निराकुरुते। न चेत्यादिना। अबीजाद्वीजशून्यकारणकलापात् तस्य वस्तुनोऽनुत्पत्तेः प्रसङ्गात्। नापि बीजमात्रमिति[१]। परेषां पूर्वपूर्वबीजक्षणेनोत्तरोत्तरबीजक्षणजननात्। तदुत्पत्तीति। बीजोत्पत्तीत्यर्थः। प्राथमिकबीजानुत्पादबीजसन्तानानुपरमप्रसङ्गोऽपि द्रष्टव्यः। अङ्कुराद्यन्यतममात्रं कदाचिदङ्कुरः कदाचिद्वीजं कदाचिच्चानुभव इत्यर्थः। प्रागपीति। प्रागङ्कुरस्य पश्चाच्च बीजस्योत्पत्तिप्रसङ्गादित्यर्थः। बीजत्वेनाङ्कुरादिजननसामर्थ्यादिति भावः॥

---

यदा यदुत्पन्नं सत् यत्कार्यानुकूलसहकारिमध्यमधिशेते तदा तदेव कार्यं प्रति तस्य प्रयोजकत्वमिति चेत् तत् किमवान्तरजातिभेदमुपादाय बीजस्वभावेनैव वा। आद्ये स एव जातिभेदस्तत्र प्रयोजकः किमायातं बीजत्वस्य द्वितीये तु समानशीलानामपि सहकारिवैकल्यादकरणमित्यायातं तत्तत्सहकारिसाहित्ये[२] सति

---

(१) बीजमात्रवृत्ति—पा० ३ पु०।

(२) सहकारिसाकल्ये—पा० १ पु०।

**तत्तत्कार्यं प्रति प्रयोजकस्य बीजस्वभावस्य[१] सर्वसाधारणत्वादिति ॥**

शङ्क० टी० । सहकारिसमवधानं शङ्कते । यदेति । अवान्तरेति । अङ्कुरकुर्वद्रूपत्वादीत्यर्थः । आद्य इति । बीजत्वेन बीजानि क्वचित् कार्यं प्रयोजकानीति प्रस्तुते जात्यन्तरमतन्त्रमनुपलम्भबाधितं चेति भावः । द्वितीय इति । एवं सत्यङ्कुरमपि प्रति बीजत्वेनैव कारणत्वमायातमिति सिद्धं नः समीहितमित्यर्थः । अङ्कुरं प्रति बीजं बीजत्वेनैव निमित्तकारणमित्यभिप्रायेणापि प्रकृतसिद्धौ यद्यपि बीजस्येत्यादिशङ्का कैश्चित्कृतानादेया । समानशीलानामिति । बीजत्वेन च कारणानामित्यर्थः ॥

---

भगी० टी० । अन्यं शङ्कते । यदेति । बीजं यदा यत्कार्यसामग्रीमध्यास्ते तदा तत्कार्यजनकमित्यर्थः । तथाप्यङ्कुरे जनयितव्ये बीजस्य बीजत्वं प्रयोजकमिति सन्दिग्धमेवेति परिहरति । तत् किमिति । अवान्तरजातिभेदः कुर्वद्रूपत्वम् । स एवेति । तस्यैव कारणतावच्छेदकत्वादित्यर्थः । समानेति । बीजत्वेनैव स्वरूपयोग्यानामित्यर्थः । यद्यपि बीजस्यान्त्यावयवित्वादङ्कुरजनकत्वं तदवयवानां च न बीजत्वं घटत्ववत् तस्याप्यवयवावयव्यवृत्तित्वात् । तथापि बीजपदं लक्षणया तदवयवपरम् । प्रयोजकत्वं च अङ्कुरत्वावच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकत्वम् ॥

---

(१) स्वाभाव्यस्य—पा० १ पु० ।

रघु० टी०। अवान्तरजातिभेदं तत्तत्कार्यकुर्वद्रूपत्वम् अथाङ्कुराद्यन्यतमत्वेन कार्यता अङ्कुरादयस्तु व्यक्तिस्थानीया इति मतं नैतदपि प्राथमिकबीजानुत्पत्तिप्रसङ्गात्। अङ्कुरत्वावच्छिन्नं प्रत्यपि प्रयोजकत्वस्य वक्तव्यत्वात् अन्यतमत्वेन जन्यत्वे मानाभावाच्चेति॥

---

**अत्रापि प्रयोगः। यद्येन रूपेणार्थक्रियासु नोपयुज्यते न तत् तद्रूपम्। यथा बीजं कुञ्जरत्वेन किञ्चिदप्यकुर्वन्न कुञ्जरस्वरूपं तथा च शाल्यादयः सामग्रीप्रविष्टा बीजत्वेनार्थक्रियासु नोपयुज्यन्त इति व्यापकानुपलब्धिः प्रसङ्गहेतुः तद्रूपताया अर्थक्रियां प्रति योग्यतया व्याप्तत्वात् अन्यथातिप्रसङ्गात्॥**

शङ्क० टी०। यद्येनेति। यज्जात्यवच्छेदेन यस्य किञ्चित्कार्यं प्रति न कारणता तत् तज्जातीयं च न भवति यथा न बीजं कुञ्जरत्वजातिमदित्यर्थः। तथा च क्षेत्रपतितानामपि शाल्यादीनां बीजत्वेनाङ्कुरं प्रति कारणता नाभ्युपगम्यत इति ते बीजजातीया न भवेयुः। यद्यपि गुणानां गुणत्वेन न किञ्चित् प्रति कारणता न च ते न गुणजातीयास्तथापि परमताभिप्रायेणायं प्रयोगः। व्यापकेति। तज्जात्यवच्छेदेनार्थक्रियाकारित्वं तज्जातीयत्वव्यापकं तस्यानुपलब्धिस्तद्विपरीतोपलब्धिस्त्वदभ्युपगमेनेत्यर्थः। प्रसङ्गमूलभूतां व्याप्तिमाह। तद्रूपताया इति। अन्यथेति। अन्यथा बीजमपि कुञ्जरजातीयं स्यादित्यर्थः॥

---

भगी० टी० । परमतमाश्रित्याह । यद्येनेति । व्यापकेति । तद्रूपत्वव्यापकं तेन रूपेणार्थक्रियाकारित्वं तस्यानुपलब्धिस्तद्विपरीतोपलब्धिरित्यर्थः । तद्रूपताया द्रव्यत्वव्याप्यबीजवृत्तिजातिरूपताया इत्यर्थः । तादृशजातेश्च कारणतानवच्छेदकत्वे कुर्वद्रूपत्वमपि तथा न स्यादित्याह । अन्यथेति ॥

---

रघु० टी० । येन रूपेणेति । रूपमिह परेषां जातिमात्रम् । सामग्रीति । यत्किञ्चित्कार्यसामग्रीप्रविष्टाः कुशूलस्थादय इति यावत् । नोपयुज्यन्ते परमते अतिप्रसङ्गात् बीजादेरपि कुञ्जरत्वादिप्रसङ्गात् ॥

---

तद्रूपत्वमेतस्य प्रत्यक्षसिद्धत्वादशक्यापह्नवमिति चेत् अस्तु तर्हि विपर्ययः यद्यद्रूपं तत् तेन रूपेणार्थक्रियासूपयुज्यते यथास्वभावेन सामग्रीनिवेशिनो भावा बीजजातीयाश्चैते[१] कुशूलस्थादय इति स्वभावहेतुः तद्रूपत्वमात्रानुबन्धित्वाद् योग्यतायाः ॥

शङ्क० टी० । ननु कुशूलस्थस्यापि बीजजातीयत्वमनुभवसिद्धत्वादशक्यापह्नवमित्याह । तद्रूपत्वमिति । कुशूलस्थं बीजं बीजत्वेनैवार्थक्रियाप्रयोजकं बीजत्वात् यन्नैवं तन्नैवं यथा कुञ्जर इति व्यतिरेकी । त्वयापि कुर्वद्रूपत्वजातेरङ्कुरप्रयोजकतायामेवं

(१) बीजरूपाश्चैते पा० २ पु० ।

प्रयोक्तव्यमित्याह । यथास्वभावेनेति । कुर्वद्रूपत्वेनेत्यर्थः । तथाहि सामग्रीमध्यगतं बीजमङ्कुरकुर्वद्रूपत्वजातीयमङ्कुरप्रयोजकत्वात् यन्नैवं तन्नैवं यथा शिलाशकलमिति भावः । अनुमाने उपनयावयवमाह । बीजजातीयाश्चेत इति । आदिपदात् कृषीवलनीयमानबीजसङ्ग्रहः । यद्वा यद्यद्रूपमिति सामान्यव्याप्तावेव तन्मते कुर्वद्रूपत्वदृष्टान्तोन्वयेनैव । उपदर्शितव्याप्तौ बीजमाह । तद्रूपत्वेति ॥

---

भगी० टी० । यद्यद्रूपमिति । बीजं बीजत्वावच्छिन्नकारणताकं बीजत्वात् यन्न तथा तन्न बीजजातीयमित्यर्थः । स्वभावेन कुर्वद्रूपत्वेनेत्यर्थः ॥

---

रघु० टी० । स्वभावेनेति । स्वीयो भावो धर्मो जातिभेदः परेषां कुर्वद्रूपत्वमस्माकं तु बीजत्वादिकं सामान्यतस्तु दृष्टान्तता ॥

---

ततश्चास्ति किञ्चित् कार्यं यच्च बीजत्वेन बीजमुपयुज्यते इति बीजानुभव एवासाधारणं कार्यं यच्च बीजत्वं प्रयोजकं तच्च सर्वस्मादेव बीजाद्भवतीति किमनुपपन्नमिति चेत् न यौगिकतदनुभवस्य तदन्तरेणाप्युपपत्तेः । लौकिक इति चेत् न सत्यमेतत् न त्विदमवश्यं सर्वस्माद्बीजाद्भवति इन्द्रियादिप्रत्यासत्तेरसदातनत्वात् असार्वत्रिकत्वाच्च ॥

शङ्क० टी० । तदेवं सामान्यतः सिद्धौ बीजत्वेनाङ्कुरं प्रति प्रयोजकत्वसाधनाय परिशेषमुपक्रममाणः शङ्कते । बीजानुभव एवेति । अनुभवो निर्विकल्पकं योगिनिर्विकल्पकं न विषयजन्य-मित्याह । यौगिकेति । लौकिकं तु निर्विकल्पकं न सर्वत्र कार्य-मिति[१] शङ्कोत्तराभ्यामाह । लौकिक इति ॥

---

भगी० टी० । बीजानुभवो बीजनिर्विकल्पकं योगिनाम-तीन्द्रियविषयकसाक्षात्कारे व्यभिचारेण तदनुभवे विषयस्या-हेतुत्वमित्याह । यौगिकेति । न त्विति । व्यभिचारसन्देहेऽपि कारणत्वानिश्चयादित्यर्थः । इन्द्रियप्रत्यासत्तीनां निर्विकल्पकहेतु-त्वादाह । इन्द्रियेति ॥

---

रघु० टी० । अनुभवः साक्षात्कारः । इन्द्रियेति प्रत्यासत्ते-रित्यस्मन्मते । परमते तथोत्पादविशेषस्य ॥

---

ततश्च योग्यमपि सहकार्यसन्निधानान्न[२] करोती-त्यर्थसिद्धम् कार्यान्तरमेवातीन्द्रियं सर्वबीजाव्यभि-चारि भविष्यतीति चेत् तन्न तावदुपादेयम् अमू-

(१) न सर्वबीजकार्यमिति— पा० २ पु० ।

(२) सन्निधेर्न—पा० २ पु० ।

तस्य मूर्त्तानुपादेयत्वात् परिदृश्यमानमूर्त्तघटिततया[1] मूर्त्तान्तरस्य तद्देशस्यानुपपत्तेः नापि सहकार्यं मिथः सहकारिणामव्यभिचारानुपपत्तेः ॥

शङ्क० टी० । ननु यद्बीजमिन्द्रियप्रत्यासन्नं तन्निर्विकल्पकं जनयत्येवेत्यत आह । ततश्चेति । तावतापि स्थैर्यसिद्धिरिति भावः । सर्वबीजाव्यभिचारी सर्वबीजजन्यमुपादेयं समवेतं तन्मते दोष-माह । अमूर्त्तस्येति । द्रव्यस्येति स्वमते विशेष्यं परिदृश्यमानो मूर्त्ताङ्कुरः तथा चाङ्कुरेण तस्य कार्यस्य समानदेशत्वं प्रसज्येतेत्यर्थः । ननु तदतीन्द्रियकार्यं प्रति बीजत्वावच्छिन्नं निमित्तकारणमेव स्यादित्यत आह । नापीति । सहकार्यं सहकारिसमवहितबीज-निमित्तकमित्यर्थः । स्यादेव यदि बीजस्य सहकारिसमवधानं ध्रौव्यं भवेत् । तथा च यदैव बीजं तदसमवहितं तस्यैव तत्कार्यं न भवेदित्याह । मिथ इति । अव्यभिचारानुपपत्तेः । कार्याव्यभि-चारानुपपत्तेः । न हि सर्वेषां सहकारिणामेकं किञ्चित् सार्वदिकं कार्यमिति नियमोऽस्तीत्यर्थः ॥

---

भगी० टी० । तत् कार्यान्तरम् उपादेयं समवेतकार्य-मित्यर्थः । तदप्यमूर्त्तं मूर्त्तं वा । आद्ये अमूर्त्तस्येति । एतच्च बौद्धमत-माश्रित्य तन्मते रूपादेरपि मूर्त्तत्वात् । अन्त्ये परिदृश्यमानेति । अङ्कुरेण सह समानदेशताविरोधादित्यर्थः । नापीति । बीजत्वेन

(१) मूर्त्तप्रतिहततया—पा १ पु० ।

यत्र बीजं निमित्तकारणं तत्कार्यस्यान्यदेव समवायिकारण-मित्यपि नास्ति। सहकारिप्रत्यासत्तेरनावश्यकत्वात् तदसन्निधाने कार्यानुत्पत्तौ बीजस्य कार्याव्यभिचाराभावादित्यर्थः ॥

---

रघु० टी०। उपादेयमप्यमूर्तं मूर्तं वा आद्ये अमूर्तस्येति। एतच्च परमतेन तेषां रूपाद्यतिरिक्तस्य द्रव्यस्याभावाद्रूपादेरेव मूर्तत्वात्। अन्त्ये परिदृश्येति। परिदृश्यमानं परेषामुत्तरोत्तरबीजं सहकार्यमुपादानसाहित्येन यत् क्रियते। मिथ इति। तथा चोपादानसहकारिणोर्विरहे ऽपि सहकार्युपादानसत्त्वे कार्यस्योत्पादे व्यभिचारात् तयोरकारणत्वम् अनुत्पादे च सिद्धं समर्थस्यापि सहकारिविरहादकरणमिति। न च ध्वंस एव साधारणं कार्य-मिति कार्यातिरिक्तस्य तस्य तत्रास्वीकृत्वात् कार्यस्य च विवेचित-त्वादिति भावः ॥

---

**अपि चैवं सति प्रयोजकस्वभावो नान्वयव्यतिरेक-गोचरः तद्गोचरस्तु न प्रयोजकः दृश्यं च कार्यजातम-दृश्येनैव स्वभावेन क्रियते दृश्येन त्वदृश्यमेवेति सोऽयं यो ध्रुवाणीत्यस्य विषयः ॥**

शङ्क० टी०। अपि चैवमिति। यदि बीजत्वावच्छेदेनैवा-तीन्द्रियं कार्यं यदि च कुर्वद्रूपत्वमतीन्द्रियमङ्कुरकारणतावच्छेदकं न तु बीजत्वमित्यर्थः। कारणतावच्छेदकस्य बीजत्वस्य कार्यताव-च्छेदकस्याङ्कुरत्वादेः प्रत्यक्षसिद्धत्वमेव ध्रुवत्वं तथा च

यो ध्रुवाणि परित्यज्य अध्रुवाणि च सेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥

इति सर्वप्रकारिकानुपपत्तिरित्यर्थः ॥

---

भगी० टी० । वैजात्याभ्युपगमे ऽनिष्टान्तरमाह । अपि चेति । प्रयोजकः कारणतावच्छेदकः स्वभावः कुर्वद्रूपत्वं तद्गोचरोऽन्वय-व्यतिरेकगोचरो बीजत्वं न कारणतावच्छेदकं दृश्यं कार्यमङ्कु-राख्यम् अदृश्येन वैजात्येन दृश्येन बीजत्वेन अदृश्यं कार्यान्तरम् तथा च वैजात्यमपि न सिद्ध्येत दृश्यादृश्ययोः कार्यकारणभावे प्रत्यक्षा-भावेऽनुमानस्याप्यभावात् । वृद्धिमिच्छतो मूलमपि नश्येदित्यर्थः ।

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥

इति निदर्शनश्लोकः ।

---

रघु० टी० । अथाक्लृप्त(1)कार्यतदुपादानतदुपादानाविनाभावो-ऽपि सहकारिणः कल्पयिष्यते तत्राह । अपि चेति ।

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि । इति ॥

---

अथवा व्यतिरेकेण प्रयोगः विवादाध्यासितं बीजं सहकारिवैकल्यप्रयुक्ताङ्कुरादिकार्यवैकल्यं तदुत्पत्ति-

(1) अथ क्लृप्त इति क्वचित् ।

निश्चयविषयीभूतबीजजातीयत्वात्। यत् पुनः सह-
कारिवैकल्यप्रयुक्ताङ्कुरादिकार्यवैकल्यं न भवति न तदेवम्भूतबीजजातीयं यथा शिलाशकलमिति॥

शङ्क० टी०। सोऽयं वादी प्रघट्टकार्थी वा प्रथमप्रघट्टकार्थमेव सिंहावलोकितन्यायेन व्यतिरेकमुखेन प्रयोगमारोप्य दर्शयति। अथवेति। पूर्वतन[1]प्रयोगापेक्षयैव विकल्पः। विवादाध्यासितमिति। क्षेत्रपतितबीजभागबाधवारणार्थं सामर्थ्यासामर्थ्याभ्यां कुशूलस्थस्य विवादाध्यासितत्वात्। सहकारीति सहकारिवैकल्यप्रयुक्तमङ्कुरादिरूपकार्यवैकल्यं यस्येति बहुव्रीहिः प्रयुक्तं परिपालितं तदुत्तरकालसम्बद्धीकृतं कार्यवैकल्यं कार्यप्रागभावः दण्डादीनामपि निमित्तकारणानां कथञ्चित् कार्यप्रागभावनिरूपणात्। साध्ये ऽङ्कुरपदप्रक्षेपात् साधने ऽपि बीजजातीयत्वादित्युक्तं सामान्यव्याप्तौ तु नोभयत्रापि विशेषोपादानम्। तदुत्पत्तिनिश्चयः कार्यकारणभावनिश्चयः। पुनःपदं भवतिपदं च स्फुटार्थम्॥

---

भगी० टी०। सामग्रीमध्यवर्तिनि बीजे बाधो माभूदिति विवादाध्यासितं विशेषणमित्येके। सामग्रीमध्यनिवेशात् प्राक् तत्रापि सत्त्वान्न तत्र बाधो न वाच्यमित्येकव्यभिचारोऽतो विवादाध्यासितबीजयोः प्रत्येकमेव पक्षत्वं विवादस्य नानारूपत्वेऽपि प्रकरणान्नियम इत्यन्ये। सहकारीति। सहकारिसमवधाना-

(१) पूर्वप्रयोगा— पा० २ ३ पु०।

भावव्याप्यकार्याभाववत्त्वं तदवच्छिन्नकार्याभावव्याप्यतावच्छिन्नस्वरूपवत्त्वं वेत्यर्थः। शिलाशकले त्वकारणे सहकारिसाकल्ये ऽपि कार्याभावात् स्वरूपायोग्यत्वस्थितौ तद्वैकल्ये ऽपि कार्याभावस्य स्वरूपयोग्यत्वा-भावप्रयुक्तत्वात् अकारणे शिलादौ तत्त्वेनैव कार्याभावव्याप्यताव-च्छेदात् सहकार्यभावस्यान्यथासिद्धतया व्यर्थत्वाच्चेति भावः। तदुत्प-त्तीति। कार्यकारणभावनिश्चायकान्वयव्यतिरेकावच्छेदकबीजत्वादि-जातिमत्त्वादित्यर्थः॥

---

रघु॰ टी॰। विवादाध्यासितमिति स्वरूपकथनम् स्थैर्यपक्षे फलोपहितस्यापि प्राक्कार्यवैकल्यात्। अङ्कुरादीत्यादिपदेन सामान्य-व्याप्तिः सूचिता। एवं च हेतावपि बीजादीति बोध्यम् विशेष-व्याप्त्यादरे तु आदिपदमनुपादेयम् हेतौ च तदुत्पत्तिरङ्कुर-निरूपिता वक्तव्या। वैकल्पिकं च भूतान्तबीजपदयोरुपादानम्। तदुत्पत्तीति। यद्यपि परेषां सहकारिविरहितं न तदुत्पत्तिनिश्चय-विषयः कारणतावच्छेदकरूपेण तस्याजात्यं वासिद्धं रूपान्तरेण त्वतिप्रसक्तं[१] तथापि तदुत्पत्त्या तन्निश्चायकावन्वयव्यतिरेकावुप-लक्षितौ नियतान्वयव्यतिरेकितावच्छेदकरूपवत्त्वं तु फलितार्थः। यथेति। शिलादौ सहकारिसाकल्येऽपि कार्यवैकल्यात् स्वरूप-योग्यत्वविरहप्रयुक्तमेव तदिति भावः॥

---

(१) त्वव्यभिचारि— पा॰ १ पु॰।

न च किमुक्तसाध्यव्यावृत्तेरुक्तसाधनव्यावृत्तिरुदाहृतात् किं वा परम्परयापि तथाविध[1]प्रसवसामर्थ्यविरहादिति व्यतिरेकसन्देह इति वाच्यम् प्रागेव शङ्काबीजस्य निराकृतत्वादिति ॥

शङ्क० टी० । उदाहृतादिति । शिलाशकलादित्यर्थः । बीजं परम्परयापि कुर्वद्रूपं बीजं जनयति न तु शिलाशकलं तथा च व्यतिरेकसन्देहो व्यतिरेकव्याप्तिसन्देह इत्यर्थः । अन्यथासिद्धेरिति भावः ॥

---

भगी० टी० । ननु विपक्षे शिलादौ न साध्याभावप्रयुक्तः साधनाभावः किन्त्वङ्कुरजननसमर्थक्षणानुत्पादप्रयुक्त इति साध्यसाधनभावयोरुपाधिसत्त्वान्न व्याप्तिरित्यत आह । न चेति । प्रागेवेति । कुर्वद्रूपत्वजातिनिरासेनैव बीजत्वस्य प्रयोजकत्वनिश्चयादित्यर्थः ॥

---

रघु० टी० । उदाहृतात् शिलाशकलात् । किं वेति । तथा चोक्तसाध्यासत्त्वे ऽपि साक्षात्परम्परया वा अङ्कुरप्रसवसमर्थं बीजत्वसत्त्वं न विरुध्येत इति हेतोर्व्यतिरेकस्य विपक्षव्यावृत्तत्वस्य सन्देह इति । प्रागेव बीजत्वस्याङ्कुरप्रयोजकत्वव्यवस्थापनेन भाति ॥

---

(१) तथाभूत—पा० १ पु० ।

स्यादेतत् । माभूत् सामर्थ्यासामर्थ्यलक्षणविरुद्ध-धर्मसंसर्गः(१) अस्तु बीजत्वमेव प्रयोजकं भवतु च सह-कारिसमवधाने सति कर्तृस्वभावत्वं भावस्य तथा च तदसन्निधाने ऽकरणमप्युपपद्यताम् तथापि तज्जातीय-मात्र एवेयं व्यवस्था न त्वेकस्यां व्यक्तौ करणाकरण-लक्षणविरुद्धधर्मसंसर्गस्य प्रत्यक्षसिद्धतया तत्र दुर्वार-त्वादिति चेत् न विरोधस्वरूपानवधारणात्(२) ॥

शङ्क० टी० । वक्ष्यमाणप्रघट्टकार्थादृक्प्रघट्टकत्रयस्यार्थं विवेक्तुं तत्त्रयार्थानुवादपूर्वकं प्रघट्टकान्तरमवतारयति । स्यादेतदिति । माभूदिति । कुशूलस्थस्यापि बीजत्वेन सामर्थ्यस्यैव साधनादिति भावः । अस्त्विति । तथा च कुशूलस्थस्यापि सामर्थ्यमेवेति भावः । कुर्वद्रूपत्वाकुर्वद्रूपत्वलक्षणविरुद्धधर्माध्यासोऽपि नात्रेति वा भावः । भवतु वेति । तथा च क्षेपकारित्वाक्षेपकारित्वलक्षणोऽपि न विरुद्धधर्माध्यास इति भावः । क्रमोऽत्र न विवक्षितः । तथा च पूर्वसाधितार्थानुवादमात्रमेतदिति व्युत्क्रमाभिधानदोषो नात्र । कर्तृस्वभावत्वं जनकस्वभावत्वम् । तथापीति । बीजत्वसाम्यवच्छिन्नं किञ्चिज्जनयति किञ्चिन्न जनयति तत्र सहकारिलाभालाभौ तन्त्रम्(३) न त्वेकैकव्यक्तिः कदाचिज्जनिका कदाचिदजनिकेति

(१) धर्माध्यासः—पा० १ पु० । (२) अनवबोधात्—पा० १ पु० ।
(३) च मास्ताम्—पा० क्वचित्

व्यवस्था सहकारिलाभालाभतन्त्रेत्यर्थः। यद्यपि पूर्वमपि व्यक्तिमेवादाय सामर्थ्यासामर्थ्यादिकं चिन्तितं क्षणभङ्गानुकूलत्वात् तथापि व्यक्तेरेकस्याः फलोपधानानुपधानलक्षणविरुद्धधर्माध्यासः प्रत्यक्षत्वादुरपह्नव इत्यभिप्रायेण प्रक्रान्त्यपौनरुक्त्यम् ॥

---

भगी० टी०। पूर्वखण्डनकत्रयानुवादपूर्वकं जनकत्वाजनकत्वात्मकविरुद्धधर्मसंसर्गमाह। स्यादेतदिति। यद्यपि व्याप्तिग्राहकमानाभावः प्रथमखण्डनकार्थो न तु सामर्थ्यासामर्थ्यरूपविरुद्धधर्माध्यासाभावः तथापि क्षणभङ्गानुमानमूलव्याप्तिसिद्धिप्रसङ्गागतत्वात् तात्पर्यं तस्य तत्राप्यस्त्येवेति भावः। अस्त्विति। तथा च कुर्वद्रूपत्वाकुर्वद्रूपत्वरूपविरुद्धधर्माध्यासोऽपि नेत्यर्थः। भवतु चेति। अतो न क्षेपाक्षेपकारित्वलक्षणविरुद्धधर्माध्यास इत्यर्थः। अत्र चार्थेन क्रमेण शाब्दक्रमलङ्घनाद्यथाक्रममभिधानम्। बीजत्वस्य प्रयोजकत्वस्थितावेव कारित्वचिन्तावसरात्। तज्जातीये भिन्ने बीजजातीय इत्यर्थः। व्यवस्थासहकारिलाभालाभयोः करणाकरणरूपेत्यर्थः ॥

---

रघु० टी०। स्यादेतत् बीजत्वमतद्व्यावृत्तिरूपं व्यावृत्तित्वादेवासत् न चासतः सता स्वलक्षणेन समं सम्बन्धः सम्भवति न च कारणेनासम्बद्धं कारणतावच्छेदकं नाम। अथैवं कुर्वद्रूपत्वमपि तादृशं कथं कारणतावच्छेदकं कुतस्तदनुरोधात् कल्पनीयमङ्कुरत्वादेरप्यलीकत्वात् सत्तद्व्यक्तिविश्रान्ते च कार्यकारणभावे लोक-

थाचाविशेषप्रसङ्गश्चेति चेत् सत्यम् स्वकारणसामर्थ्यातिशयासादित-स्वभावविशेष एवोत्पद्यमानः क्षणिको ऽभावस्तत्कार्यं कुर्वाणः कुर्वद्रूप इत्यभिधीयते क्षणिकत्वं च भावानां करणाकरणलक्षण-विरुद्धधर्माध्यासाल्लौकिकस्तु व्यवहारोऽनादिविकल्पवासनावशात् कल्पितैरेवानुगतरूपैः कार्यकारणभावस्यापि(१) कल्पनादिति चेत् मैवम् तादृशविरुद्धधर्माध्यासस्य निरसनीयत्वात् अपाकरणीयत्वाच्च विधिरूपतया प्रतिभासमानेषु सामान्यादिषु बाधकानामिति । इयं सहकारिणां लाभे करणमलाभे चाकरणमिति व्यवस्था ॥

---

स खलु धर्मयोः परस्पराभावरूपत्वं वा स्यान्नित्यत्वानित्यत्ववत् धर्मिणि तदापादकत्वं वा शीतोष्णत्ववत् तद्वत्ता वा दण्डित्वकुण्डलित्ववत् ॥

शङ्क० टी० । स खल्विति । धर्मयोः करणाकरणयोः परस्परविरहरूपत्वमित्यर्थः । नित्यत्वानित्यत्ववदिति । यद्यपि ध्वंसावच्छिन्नसत्त्वमनित्यत्वम् न तु नित्यत्वाभाव एव तथापि नञर्थसम्बन्धासम्बन्धमात्रविवक्षयैवेतदुक्तम् तदापादकत्वमिति परस्परविरहापादकत्वं तच्च परस्परविरहव्याप्यतया निर्वहति यथा शैत्यं जले औष्ण्याभावमाक्षिपति औष्ण्यं च तेजसि शैत्याभावमित्यर्थः । तद्वत्तावेति । धर्मयोः परस्परभेदमात्रं वा विरोध इत्यर्थः ॥

---

(१) कार्यकारणरूपस्यापि—पा० १ पु० ।

भगी० टी० । परस्परेति । अन्योन्यविरहात्मकत्वमित्यर्थः । नित्यत्वेति । यद्यप्यनित्यत्वं ध्वंसावच्छिन्ना सत्ता सा च न नित्यत्वाभावरूपा तथापि विशेषणयोरवच्छेदानवच्छेदरूपयोस्तथात्वादृष्टान्तत्वाविरोधः । तदापादकत्वं परस्पराभावव्याप्यतया तदाक्षेपकत्वमित्यर्थः । शीतेति । यथा शीतत्वौष्ण्याभ्यां स्वाश्रये मिथोधिकरणान्योन्याभावाक्षेपकत्वमित्यर्थः । तद्वत्ता एकधर्मिवृत्तावपि मिथोन्योन्याभाववत्त्वेत्यर्थः । दण्डित्वेति । यथा दण्डित्वकुण्डलित्वयोरेकवृत्तावपि दण्डित्वेन कुण्डलित्वं तत्र च न दण्डित्वमित्यर्थः ॥

---

रघु० टी० । स विरोधः । इह नित्यत्वानित्यत्वे ध्वंसाप्रतियोगित्वप्रतियोगित्वे तस्य परस्परविरहस्यापादकत्वं तद्व्याप्यतया । तद्वत्ता परस्परभेदवत्ता । अभावत्वेन भेदस्याप्यभावपदस्मारितत्वेन तदा परामर्शसम्भवात् । तद्वत्ता परस्परं परस्परात्यन्ताभाववत्ता दण्डित्वेन कुण्डलित्वं कुण्डलित्वेन दण्डित्वमित्यन्ये ॥

---

न प्रथमः निर्विशेषणस्यासिद्धत्वात्[1] यावत् सत्त्वं किञ्चित् करणात् सविशेषणस्य तु विरोधसिद्धावप्यध्यासानुपपत्तेः । यदा यदकरणं हि तदा तत्करणस्याभावो न त्वन्यदा तत्करणस्य न चैतयो[2]रेकधर्मिसमावेशमातिष्ठामहे ॥

(१) असिद्धेः—पा० १ पु० ।

(२) न चानयोः—पा० २ पु० ।

शङ्क० टी०। निर्विशेषणस्येति। अकरणत्वमात्रस्य बीज-व्यक्तावसिद्धेः तदेवाह। यावदिति। अन्ततः संयोगादेरपि जनना-दित्यर्थः। सविशेषणस्येति। यदा तदेति। विशेषणसहितस्येत्यर्थः। तदेवाह। यदेति। अनयोर्विरोधसमावेशयोरभावो नास्तीत्याह। न चेति। न हि यद्बीजं यदैवाङ्कुरं करोति तदैव न करोतीत्यभ्युप-गच्छाम इत्यर्थः॥

---

भगी० टी०। निर्विशेषणस्येति। अकरणमात्रस्येत्यर्थः। कदाचित्तत्र करणस्य मानसिद्धत्वादकरणमात्रस्याप्रमितौ तत्-प्रतियोगिकविरोधस्याप्रमितेरिति भावः। यावदिति। अन्तः स्वाश्रयादिसंयोगादीनां जननादित्यर्थः। सविशेषणस्येति। यदा यत् करणं तदैव तदकरणमित्यनयोर्विरोधेऽपि नैकत्र समावेश इत्यर्थः। तदेवोपपादयति। यदेति। अङ्कुराकरणकाले तत्करणं विरोधि न त्वन्यदापि तयोरेकधर्म्मिसमावेशनियमात्। न चैक-दाङ्कुरकरणाकरणे बीजेऽङ्गीकुर्म इति भावः। न त्वन्यदेति। अभाव इत्यनुषञ्जनीयम्॥

---

रघु० टी०। निर्विशेषणस्य कार्यविशेषानियन्त्रितस्याकर-णस्य वस्तुनि क्षणभङ्गवादिनामसिद्धेर्विरोधस्यासिद्धत्वात्। यावत्सत्त्वं किञ्चित्करणात् किञ्चित्करणाभ्युपगमात्। अस्माकं तु तत्सिद्धावपि कालभेदादेव न विरोध इति भावः। यत्त्वस्माकमपि यावत्सत्त्व संयोगादिजननसम्भवादिति। तदसत् कदाचिदवयविनस्तथात्व-

सम्भावनायामपि गुणकर्मणोर्नित्यमात्रस्य च तदसम्भवात् प्रक्रान्तत्वाद्बीजमात्रमधिकृत्य इदमित्यपि कश्चित्। तत्कार्यकरणस्य तदभावस्य च परस्परविरहरूपत्वेऽपि स्वरूपतो न विरोधः। एकस्मिन् कालेऽङ्कुरकरणाकरणयोः समर्थबीजक्षणशिलाशकलात्मकदेशभेदेनेव एकस्मिन् धर्मिणि कालभेदेन वृत्तेरनुभवसिद्धतया दुरपह्नवत्वात् किन्त्वेककालावच्छेदेन न चैककालावच्छिन्नं तदुभयमेकत्राभ्युपगच्छाम इत्याह। सविशेषणस्येत्यादिना। सविशेषणस्य कार्यविशेषविशेषितस्य एककालावच्छेदेन विरोधसिद्धावपि अध्यासस्य एकधर्मिसमावेशस्यानुपपत्तेरनभ्युपगमात् यदा हि यत्र यत्कार्याकरणं तदा तत्कार्यकरणस्य तत्राभावः तद्धर्मिवृत्तित्वाभावः न त्वन्यदा तत्कार्यकरणस्य तद्धर्मिवृत्तित्वाभावः न चैतयोरेककालावच्छिन्नतत्कार्यकरणाकरणयोरिति॥

---

न द्वितीयः भावाभावव्यतिरिक्तयोः करणाकरणयोरसिद्धेः। व्यापारापरव्यपदेशसहकारिभावाभावौ हि करणाकरणे कार्यभावाभावौ वेति अतिरेकसिद्धावपि स्वकाल एव स्वाभावप्रतिक्षेपवत् अकरणाभावमाक्षिपेत् करणं न त्वन्यदा न हि यो यदा नास्ति स तदा स्वाभावं प्रतिक्षेप्तुमर्हतीति विरोध्यभावं वा आक्षेप्तुम्। तथा सति न कदापि तन्न स्यात् न वा

कदापि तद्विरोधी भवेदिति । नासतो विद्यते भावो नाभावो विद्यते सत इत्यायातं न वा विरोधः[1] ॥

शङ्क० टी० । भावाभावेति । परस्परविरहव्याप्यत्वं विरोधिरूपयोः सम्भवत्यपि प्रकृते करणाकरणयोर्न तादृशत्वमित्यर्थः । व्यापारापरेति । अन्यतमत्वसंयोगादिवत्सरमसामग्रीनिवेशितसहकारिभावाभावौ फलोपधानानुपधाने वा कारणाकारणे परस्परविरहात्मनी एव न तु परस्परविरहव्याप्ये इत्यर्थः । अभ्युपगम्याह । अतिरेकेति । यथा घटः स्वावच्छिन्न एव काले स्वाभावं प्रतिक्षिपति न तु स्वानवच्छिन्नेऽपि काले तथा करणमपि स्वावच्छिन्न एव काले स्वविरोधिनोऽकरणस्याभावमाक्षिपेत् न तु स्वानवच्छिन्नेऽपि काले । न हि नैल्यं स्वाकालेऽपि रक्तत्वाभावमाक्षिपति । तथा सत्यामश्यामो घटः पाके सत्यपि रक्तो न स्यादित्यर्थः । दृष्टान्तमुपपादयति । न हीति । प्रतिक्षेप्तुमर्हतीति प्रतिक्षेपात्मा भवति । दार्ष्टान्तिकमाह । विरोधीति । उभयत्र विपक्षे दण्डमाह । तथा सतीति । स्वानवच्छिन्नेऽपि काले यदि स्वाभावं प्रतिक्षिपेत् तदा यदा न स्यात् तदैव स्यादित्यायातं यदा स्वयं न स्यात् तदा तद्विरोध्यपि न स्यादिति स्वयमेव स्यादिति विचित्रो विरोध इत्यर्थः । ततः किमित्यत आह । नासत इति । तथा च क्षणिकत्वसाधने प्रवृत्तस्य तव नित्यत्वमेव भावानां पर्यवसितमिति भावः । न वेति । स्वाभावकाले स्वविरोधिकाले

(१) न चाविरोधः—पा० १ पु० ।

च यदि स्वयमेव स्यात् तदा विरोधनिरूपकस्याप्यभावाद्विरोध एव न सिद्ध्येदित्यर्थः ॥

---

भगी० टी०। भावाभावेति। यथा शैत्यमौष्ण्यं च परस्पराभावभिन्नं तदाक्षेपकं न त्वकरणं करणाभावभिन्नं येन तदाक्षेपकं स्यात् तथा च करणाकरणयोरापाद्यशरीरत्वादाक्षेपकत्वानुपपत्तिरित्यर्थः। व्यापारेति। सहकारी चरमव्यापाररूप इत्यर्थः। यद्यकरणं करणविरोध्युपाधिरन्यो नाभावस्तथा च नोक्तदोष इति ब्रूयात् तत्राह। अतिरेकेति। स्वसत्तावच्छिन्नः कालः स्वकालः तत्रैव यथा करणं स्वाभावं प्रतिक्षिपति न तु स्वाभावकालेऽपि तथा करणान्यतया स्वीकृतमकरणाभावरूपमुपाधिमपीत्यर्थः। दृष्टान्ते तथात्वमुपपादयति। न हीति। प्रतिक्षेप्तुं प्रतिक्षेपात्मीभवितुम् अभावाभावस्य प्रतियोगिप्रतिक्षेपत्वादित्यर्थः। दृष्टान्ते उपपाद्य दार्ष्टान्तिके योजयति। विरोध्यभाव इति। विरोधिनोऽकरणस्याभावमित्यर्थः। ननु दृष्टान्तेऽपि तथात्वमसिद्धमित्यत आह। तथा सतीति। यदि स्वकालवत् स्वानाश्रयेऽपि काले स्वाभावं प्रतिक्षिपेत् तदा तस्य कालान्तरेऽपि सत्त्वात् कदाचिन्न भवतीति न स्यात् किन्तु सकलं न वृत्ति स्यादित्यर्थः। यदीदमेतत्कालवृत्त्यभावाप्रतियोगित्वे सति स्वानधिकरणकालवृत्त्यभावप्रतियोगी स्यात् तदभावकालवृत्ति न स्यादित्यापादनम्। यदि च स्वाभावकालेऽपि विरोध्यभावमाक्षिपेत् तदा विरोधप्रतियोग्यनिरूपणाद्विरोध एव न निरूप्येतेत्याह। न वेति ॥

---

रघु० टी०। भावाभावेति। अभेदे आक्षेप्याक्षेपकभावानुपपत्तेरिति भावः। व्यापारापरव्यपदेशः। सहकारी चरमो व्यापारः। हि यस्मात्। एतावेतौ वा परस्परविरहरूपावेव करणाकरणे। करणाभावातिरिक्ताकरणाभ्युपगमेपि दोषमाह। अतिरेकेति। अन्यदा स्वानधिकरणकाले प्रतिक्षेप्तुं प्रतिक्षेपात्मीभवितुम् अभावाभावस्य प्रतियोगिरूपत्वात्। विरोध्यभावं विरोधिनोऽभावम्। तथा सतीति। स्वासत्त्वकालेऽपि स्वाभावप्रतिक्षेपे तदापि तदभावो न स्यात् स एव स्यात्। स्वासत्त्वकालेऽपि च स्वविरोधिनोऽभावाक्षेपे तदानीमपि तद्विरोधी न स्यादित्यर्थः। न वेति। स्वासत्त्वकालेऽपि विरोधिनोऽभावाक्षेपे तुल्यन्यायतया स्वानधिकरणदेशेऽपि तथात्वे सर्वदा सर्वत्र तस्यासत्त्वेन विरोध एव न सिद्ध्येदित्यर्थः[१]॥

नन्वेवं सति परिमाणभेदोऽपि कालभेदेन न विरुध्यते तत्राप्येवं वक्तुं सुकरत्वात् न बाधकबलेन तत्र कालभेदस्य विवक्षितत्वात्। तथाहि नारब्धद्रव्यैरेव द्रव्यावयवैर्द्रव्यान्तरमारभ्यते मूर्तत्वसमानदेशत्वयोरेकदा विरोधात्। तथा चारम्भपक्षे पूर्वद्रव्यनिवृत्तिः अनिवृत्तावनारम्भ इति। तत्र निवृत्तावाश्रयभेदादेव परिमाणभेदः अनिवृत्तौ संयोगिद्रव्यान्तरानुपपत्तये क

(१) विरोध एव न स्यादित्यर्थः— पा० ४ पु०।

परिमाणभेदोपलम्भो यो विरोधमावहेत्। तदुपचये तु[१] क्व परिमाणान्तरोत्पत्तिः आश्रयानुत्पत्तेः। अत एव स्थौल्यातिशयप्रत्ययोऽपि तत्र भ्रान्तः तस्मात् कालभेदेनापि न परिमाणभेदः एकस्मिन् धर्मिण्युपसंहर्तुं शक्यत इत्यादि पदार्थचिन्ताचतुरैः सह विवेचनीयम्[२]॥

शङ्क० टी०। एवं सति दीर्घत्वह्रस्वत्वे अपि परिमाणे कालभेदेन विरुद्धे न स्याताम् तथा च कालादिप्रत्यभिज्ञापि प्रमैव स्यादित्याह। नन्वेवमिति। स्वकाल एव स्वविरोधिपरिमाणं प्रतिक्षिपेत् न तु स्वाकालेऽपीति वक्तुं सुकरत्वादित्यर्थः। तत्र भिन्नकालयोरपि परिमाणयोरेकत्र धर्मिणि विरोधस्य प्रमाणसिद्धत्वादित्याह। नेति। तत्र परिमाणभेदो द्रव्यनाशे सत्येव भवेन्न तु पूर्वद्रव्ये सतीति तथाहीत्यादिना विवेचनीयमित्यन्तेनोपपादयति। तथाहीति। अविनष्ट एव पूर्वद्रव्ये यदि तेष्ववयवेषु द्रव्यान्तरमुत्पद्येत तदा मूर्तयोः समानदेशत्वमापद्येतेत्याह[३]। नारम्भेति। ननु घटादौ चक्षुरालोकयोर्मूर्तयोरेकदेशवृत्तित्वं स्वीकृतमेवेति चेत् न तत्र चालनिन्यायेनोभयवृत्त्यभ्युपगमात् निविडावयवमूर्तद्वयाभिप्रायेण[४] वा विरोधस्योक्तत्वात्। ननु तथा-

(१) तदुपचयेऽपि च— पा० १ पु०।
(२) चिन्तनीयम्— पा० ३ पु०।
(३) आपद्येतेत्यर्थः— पा० २ पु०।
(४) न निरवयवमूर्तद्वयाभिप्रायेण— पा० २ पु०।

प्येकतन्तुकपटे तन्तूनां पटस्य चांशुवृत्तित्वमेव स्यात् तथा च कथं न तत्र मूर्तद्वयसमानदेशताविरोध इति चेत् न तत्र पट एव नोत्पद्यते किं तु संस्थानविशेषाधीनः पटव्यवहार इत्यभ्युपगमात्। यद्वा अंशुतन्तुसंयोगस्तत्र पटासमवायिकारणं न च तद्वैवांशौ पटवृत्तित्वमिति तथापि तन्तुना समानदेशत्वमेवेति वाच्यम् अन्यूनदेशयोरेव तथाभ्युपगमात्। अनिवृत्ताविति। पूर्वद्रव्यं यदि न निवर्तते तदा समवायिकारणान्तरानुप्रवेशोऽपि नास्तीति कथं दीर्घत्वोपलम्भ इत्यर्थः। ननु स्थूलप्रत्ययो दृश्यते संयोगिद्रव्यान्तरानुप्रवेशं विना कथं स्यादित्यत आह। तदुपचयेऽपीति। द्रव्यान्तरं चेन्नोत्पद्यते तदा तत्र स्थौल्यप्रत्ययो धान्यादिराशाविव भ्रान्त इत्यर्थः। तर्हि य एव कृश आसीत् स एवेदानीं स्थूल इति प्रत्यभिज्ञा कथमत आह। अत एवेति। पदार्थचिन्ताचतुरैः वैशेषिकैः॥

---

भगी० टी०। ननु यदि कालभेदेनाविरोधात् करणाकरणयोरेकधर्मिसमावेशः तदा द्विहस्तत्वादिपरिमाणभेदोऽप्येकत्र कालभेदेन स्यादिति ततोप्याश्रयभेदो न स्यादित्याह। नन्विति। कालभेदस्येति। विरोधापादकस्येति शेषः। शरीरसमवायिकारणद्रव्यपरिमाणेनैव शरीरे परिमाणान्तरं जन्यत इति व्यवस्थिते सति बाधकमाह। तथाहीति। एकस्यैव शरीरे परिमाणान्तरोत्पत्तिः शरीरारम्भकावयवेभ्यो यदि द्रव्यान्तरोत्पत्तिमभ्युपेत्योच्यते तदापि

यदि पूर्वद्रव्यानिवृत्तिपक्षस्तदा मूर्तयोः पूर्वापरद्रव्ययोरेकत्र वृत्तिः स्यादित्यर्थः। मूर्तत्वेति। ननु मूर्तयोः समानदेशताविरोधो यदि संयोगेन तदा यदवच्छेदेनालोकसंयोगस्तदवच्छेदेन चक्षुःसंयोगस्य ग्राहकत्वाभ्युपगमविरोधः नापि समवायेन तद्विरोधः एकतन्तुक-स्यापि पटस्य दर्शनात् तत्र हि पटारम्भकतन्तुः स्वावयवेषु वर्तते पटोऽपि तत्रैव एकतन्त्ववयवानां संयोगस्य तत्रासमवायिकारणत्वात् तस्य कार्यैकार्थसमवायनियमात्। अत्राहुः चक्षुरालोकयोस्तूलानि-न्यायेन संयोगः कठिनयोरेव वा मूर्तयोः समानदेशताविरोधः एकतन्तुपटैकत्वं तु तन्तुसंयोग एवासमवायिकारणं शरीरावच्छेदेन पाणिना शरीरसंयोगावच्छेदे भेदेनांशुतन्तुसंयोगस्य विरोधात् यद्वा पट एव तत्र नोत्पद्यते कारणबाधात् तादृक्संयोगमात्रमेव पटप्रतीतिविषयः एवं पूर्वद्रव्यनिवृत्तावेव द्रव्यान्तरस्य परि-माणान्तरस्योत्पत्तिरिति नैकद्रव्ये कालभेदेन परिमाणभेद इत्याह। तथा चेति। किञ्च पूर्वद्रव्यानिवृत्तिपक्षे परिमाणान्त-रोत्पादकत्वं संयोगिद्रव्यानुपचये तदुपचये वा। आद्ये संयोगीति अन्त्ये तदुपचये त्विति। असमवायिकारणगतस्यैव संख्यापरिमाणादेः परिमाणं प्रत्यसमवायिकारणत्वनियमात् परिमाणस्य स्वसमवायि-कारणपरिमाणान्तरोत्पत्तिप्रतिबन्धकत्वाच्चेति भावः। ननु पूर्वं कृश इदानीमतिशयेन स्थूल इति प्रत्यभिज्ञानादेतत् स्यादित्यत आह। अत एवेति। उक्तबाधकबलादेवेत्यर्थः। ननु द्रव्यान्तरारम्भकाभि-मतद्रव्यान्तरप्रत्यासत्तेरेव पूर्वपरिमाणनाशः परिमाणान्तरोत्पत्तिश्च स्यात् अवयवगुणस्य वाऽसमवायिकारणतानियमः परिह्रीयताम्

यद्वा पूर्वावयवपरिमाणस्यैवासमवायिकारणत्वमस्तु मैवम् महापरिमाणद्रव्यसमवेतपरिमाणस्य स्वसमवायिसमवायिवृत्तिपरिमाणासमवायिकारणत्वनियमात् समवायिकारणेतरपरिमाणस्यानारम्भकत्वाच्च ॥

---

रघु० टी० । आरब्धद्रव्यैरारब्धद्रव्यवद्भिः । एकदेति । फलतः समानदेशत्वविशेषणं तथा च एककालावच्छेदेन मूर्त्तान्तरेण सममेकधर्मिसमवेतत्वमर्थः । न चैकतन्तुकपटे अंशुसंयोगानामेवासमवायिकारणत्वात् कार्यैकार्थसमवेतस्यैव संयोगस्य द्रव्यासमवायिकारणत्वात् पटस्यापंशुदेशत्वमिति वाच्यम् तन्तुत्वेन पटसमवायिकारणत्वादंशूनां तथात्वायोगात् वेमाद्यभिघातेन महातन्तुविनाश एव खण्डतन्तुभ्यः पटोत्पादात् अन्यथा तु पटसंस्थानसादृश्याद्भ्रान्त एव परप्रत्ययः अवयवान्तरावच्छेदेनाश्रयविसंयोगोऽवयवे न विरुध्यते शिरसि शरीरसंयुक्तः पाणिरिति प्रत्ययात् तथा चांश्वन्तरावच्छेदेन तन्तुसंयोगोऽसमवायी समवायी तन्तुरेव पटस्येत्यपि केचित् । अनारम्भ इति । पूर्वद्रव्यसत्त्व एव द्रव्यान्तरोत्पत्तौ युगपत्तादृशद्रव्यद्वयोपलम्भापत्तिरुत्तरद्रव्य एव परिमाणान्तरोपत्तौ कैकधर्मिसमावेशः पूर्वद्रव्य एव च परिमाणान्तरोत्पत्तौ द्रव्यान्तरोत्पादाभ्युपगमवैयर्थ्यमित्यपि द्रष्टव्यम् । एतेनारभ्यारम्भकवादानुसरणमपि प्रत्युक्तम् । आश्रयानुपपत्तेरिति । न चावस्थितद्रव्य एव संयोगिद्रव्योपचयात् पूर्वपरिमाणनाशः परिमाणान्तरोत्पादश्च स्यादिति वाच्यम् परिमाणस्याश्रयनाशैकनाश्यत्वात् अवयवमात्रसंयोगविशेष

बकुलादेरेवावयविपरिमाणोत्पादकत्वाच्च अन्यथा धरण्यादिपतित-मृत्पिण्डादेरवयवान्तरसंयुक्तावयवस्य च पूर्वपरिमाणनाशः प्रकृष्ट-तरपरिमाणान्तरोत्पादश्च स्यादिति भावः ॥

---

अस्तु तर्हीहापि बाधकं बलं प्रसङ्गतद्विपर्यययोरुक्त-त्वादिति चेत् न तयोः सामर्थ्यासामर्थ्यविषयत्वात् तच्च च उक्तत्वात् स्तां वा न तथापि ताभ्यां शक्त्यशक्त्योर-विवक्षितत्वात् कालभेद एव विरोधः साध्यते तथोप-संहर्तुमशक्यत्वात् यदा तदेत्युपेक्ष्य यत् समर्थं तत्करो-त्येवेत्युपसंहर्तुं शक्यमिति चेन्न कालनियमाविवक्षायां यत् समर्थं तत्करोत्येवेति कदाचित् स्यात् तथा च सम्भवविधेरत्यन्तायोगो विरुद्धो न त्वयोगः नीलं सरोजं भवत्येवेति वत् ॥

शङ्क० टी० । अस्त्विति । यदीदं द्रव्यं दीर्घं स्यात् ह्रस्वं न स्यादितिवत् यदि बीजं कारि स्यादकारि न स्यादकारि चैतत् तस्मान्न कारीति प्रसङ्गतद्विपर्ययौ स्यातामिहापीत्यर्थः। कारित्वाकारित्वे यदि सामर्थ्यासामर्थ्ये एव तत्र प्रसङ्गतद्विपर्ययौ पूर्वमेव निरस्तावित्याह। नेति। तच्चेति। ननु सामर्थ्यासामर्थ्ये प्रति प्रसङ्गतद्विपर्ययौ नोच्येते येन पूर्वनिरस्तत्वं स्यात् किं तर्हि कारित्वाकारित्वे प्रति ते च ताभ्यामन्ये एवेत्यत आह। स्तां

| | | |
|---|---|---|
| Mārkaṇḍeya Purāṇa, (English) Fasc 1-9 @ 1/- each | 9 | 0 |
| Mugdhabodha Vyakarana, Vol. I, Fasc. 1-7, @ /10/ each | 4 | 6 |
| Nirukta, (2nd edition) Vol. I, Fasc. 1-2, @ Rs. 1-4 | 2 | 8 |
| Nityācārapaddhati, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Nityācārapradīpa, Vol. I, Fasc. 1-8, Vol. II Fasc 1-4 @ /10/ each | 7 | 8 |
| Nyāyabindutīkā, Fasc. 1 @ /10/ each | 0 | 10 |
| Nyaya Vartika Tatparya Parisudhi, Fasc. 1-4 @ /10/ each | 2 | 8 |
| Nyayasarah | 2 | 0 |
| Padumāwati, Fasc 1-6 @ 2/ each | 12 | 0 |
| Prākrita-Paingalam, Fasc. 1-7 @ /10/ each | 4 | 6 |
| *Parāçara Smṛti, Vol I, Fasc. 2-8, Vol. II, Fasc 1-6; Vol. III, Fasc. 1-6 @ /10/ each | 11 | 14 |
| Parāçara, Institutes of (English) @ 1/- each | 1 | 0 |
| Parikṣamukha Sutram | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc 1-3 @ 1/4/ each | 3 | 12 |
| Rasarnavam, Fasc. 1-3 | 3 | 12 |
| Ravisiddhanta Manjari, Fasc. 1 | 0 | 10 |
| Sadukti-karna-mrita, Fasc 1-2, @ /10/ each | 1 | 4 |
| Saddarśana-Samuccaya, Fasc. 1-2 @ /10/ each | 1 | 4 |
| Samaraicca Kaha, Fasc 1-7, @ /10/ each | 4 | 6 |
| Sāṅkhya Sūtra Vṛtti, Fasc 1-4 @ /10/ each | 2 | 8 |
| Ditto (English) Fasc 1-3 @ 1/- each | 3 | 0 |
| Six Buddhist Nyaya Tracts | 0 | 10 |
| Siva Parinahya | | |
| Smriti Prakasha, Fasc. 1 | 0 | 10 |
| Srāddha Kriyā Kaumudi, Fasc 1-6 @ /10 each | 3 | 12 |
| Sri Surisarvasvam Fasc 1-2, @ /10/ each | 1 | 4 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each | 1 | 0 |
| Suddhi Kaumudī, Fasc. 1-4 @ /10/ each | 2 | 8 |
| Sundaranandam Kavyam | 1 | 0 |
| Suryya Siddhanta, Fasc. 1-2 @ 1-4 each | 2 | 8 |
| Syainika Sastra | 1 | 0 |
| Tantra Vārtika (English) Fasc. 1-14 @ /1/4 | 17 | 8 |
| *Tattva Cintāmaṇi, Vol I, Fasc. 1-9; Vol II, Fasc. 2-10; Vol. III, Fasc. 1-2; Vol IV, Fasc 1; Vol. V, Fasc 1-5; Part IV, Vol. II, Fasc. 1-12 @ /10/ each | 23 | 12 |
| Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-3, Vol. III, Fasc. 1, @ /10/ each | 7 | 8 |
| Tattva Cintamani Didhiti Prakas, Fasc. 1-6 @ /10/ each | 3 | 12 |
| Tirthacintamoni, Fasc. 1-4, @ /10/ each | 2 | 8 |
| Trikāṇda-Maṇḍanam, Fasc. 1-3 @ /10/ | 1 | 14 |
| Tul'si Satsai, Fasc. 1-5 @ /10/ | 3 | 2 |
| *Upamita-bhava-prapañca-kathā, Fasc. 1-2, 5-13 @ /10/ each | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc 1-6 @ 1/- | 6 | 0 |
| Vallāla Carita, Fasc. 1 @ /10/ | 0 | 10 |
| Varṣa KriyāKaumudi, Fasc. 1-6 @ /10/ | 3 | 12 |
| Vidhāna Pārijāta, Fasc. 1-8; Vol II, Fasc 1 @ /10/ | 5 | 10 |
| Ditto Vol. II, Fasc. 2-6 @ 1/4 | 6 | 4 |
| Vishahitam, Fasc. 1 | 0 | 10 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Vrhat Svayambhu Purāṇa, Fasc. 1-6 @ /10/ | 3 | 12 |
| Yogaśāstra, Fasc. 1-3 | 3 | 12 |

*Tibetan Series.*

| | | |
|---|---|---|
| Amarakosah | 2 | 0 |
| Amartika Kamdhenuh | 1 | 0 |
| *Bauddhastotrasangraha, Vol. I | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-4, @ 1/- each | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1-2 | 2 | 0 |
| Pag-Sam S'hi Tin, Fasc. 1-4 @ 1/- each | 4 | 0 |
| Rtogs brjod dpag hkhri S'iñ (Tib & Sans Avadāna Kalpalatā) Vol I, Fasc 1-11, Vol. II, Fasc. 1-11 @ 1/- each | 22 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/ each | 14 | 0 |
| Timed-Kun-Din | 1 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| Amal-i-Salih, or Shah Jahan Namah | 2 | 0 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1-4 @ 1/- | 4 | 0 |
| Āīn-i-Akbari, Fasc, 1-22 @ 1/8/ each | 33 | 0 |
| Ditto (English) Vol II, Fasc. 1-5, Vol. III, Fasc. 1-5, Index to Vol. II, @ 2/- each | 22 | 0 |

| | | |
|---|---|---|
| ... | 0 | 10 |
| ...anuscripts 1-2 @ 1/- each ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts Fasc. 1-3 @ 1/- each | 3 | 0 |
| Faras Nama, of Hashini ... ... ... ... | 1 | 0 |
| Ditto of Zabardast Khan ... ... ... ... | 1 | 0 |
| Farnang-i-Rashidi, Fasc. 1-14 @ 1/8/ each ... ... ... | 21 | 0 |
| Fihrist-i-Tusi, or Tūsy's list of Shy'ah Books, Fasc. 1-4 @ 1/- each | 4 | 0 |
| Gulris ... ... ... ... ... | 2 | 0 |
| Hadiqatu'L, Haqiqat, (Text & Eng.) ... ... ... | 3 | 8 |
| History of Gujarat ... ... ... ... ... | 1 | 0 |
| Haft Asman, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each .. ... | 7 | 8 |
| Iqbalnamah-i-Jahangiri, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| Isabah, with Supplement, 51 Fasc. @ 1/- each ... ... | 51 | 0 |
| Kashf al-Hujub wal Astār: ... ... ... ... | 2 | 0 |
| List of Arabic and Persian MSS. 1903-1907 and 1908-1910, @ 1/- each | 2 | 0 |
| Ma'āsir-i-Rahimi, Part I, Fasc. 1-4 @ 2 each ... ... ... | 8 | 0 |
| Maāsir-ul-Umarā, Vol. I, Fasc. 1-9; Vol II, Fasc. 1-9; Vol III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... | 35 | 0 |
| Ditto (Eng.) Vol. I, Fasc. 1-6, @ 1/4/ each ... | 7 | 8 |
| Memoirs of Tahmasp ... ... ... ... ... | 1 | 0 |
| Marhamu 'L-Ilali 'L-Mu'Dila, Fasc. 1-3 ... ... | 3 | 0 |
| Muntakhabu-t-Tawarikh, Fasc. 1-15 @ 10/ each ... ... | 9 | 6 |
| Ditto (English), Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc 2 @ 1/- each ... ... ... ... | 17 | 0 |
| Muntakhabu-l-Lubab, Fasc. 1-19 @ /10/ each... ... ... | 11 | 14 |
| Ditto Part 8, Fasc. 1-4 @ 1/- each ... ... | 4 | 0 |
| Persian and Turki Divans of Bayran Khan, Khan Khanan ... | 1 | 0 |
| Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes ... ... ... | 5 | 0 |
| Riyāzu-s-Salatin, Fasc. 1-5 @ /10/ each .. ... ... | 3 | 2 |
| Riyāzu-s-Salātin, (English) Fasc. 1-5 @ 1/- ... ... . | 5 | 0 |
| Shah Alam Nama, Fasc. 1-2 ... ... ... | 2 | 0 |
| Tadhkira-i-Khushnavisan ... ... ... ... | 1 | 0 |
| Tabaquat-i-Nasiri (English), Fasc. 1-14 and Index @ 1/- each ... | 15 | 0 |
| Tārikh-i-Firuz Shahi of Ziyau-d-din Barni, Fasc. 1-7 @ /10/ each .. | 4 | 6 |
| Tārikh-i-Firuzshahi, of Shams-i-Sirāj Aif, Fasc. 1-6 @ /10/ each .. | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each .. ... | 3 | 0 |
| The Mabani 'L Lughat: A Grammar of the Turki Language in Persian | 1 | 8 |
| Tuzuk-i-Jahangiri (Eng.) Fasc. 1 @ 1/- ... ... | 1 | 0 |
| Wis o Rāmin, Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Zafarnāmah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /10/ each ... | 10 | 10 |

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vol. XX @ 10/- each ... ... ... 10 0
2. Proceedings of the Asiatic Society from 1875 to 1899 (1900 to 1904 are out of stock) @ /8/ per No
3. Journal of the Asiatic Society for 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16) @ 1/8 per No. to Members and @ 2/- per No. to Non-Members.

N.B.—*The figures enclosed in brackets give the number of Nos. in each year.*

4. Journal and Proceedings, N.S., (Nos. 1-4 of 1905 are out of stock), 1905—1912 @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, Vol. I (21), Vol. II (11), Vol. III (6), Vol. IV (1). Price varies from number to number Discount of 25% to Members.
6. Centenary Review of the Researches of the Society from 1784-1883 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910 .. 8 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III, with 8 coloured Plates, 4to, @ 6/- each ... .. 18 0
9. Kaçmiraçabdāmrta, Parts I and II @ 1/8/ ... ... ... 3 0
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmani, and edited with notes ... ... .. 10 0

N.B.—All Cheques, Money Orders, &c., must be made payable to the "Treasurer ..."

**BIBLIOTHECA INDICA:**

A

**COLLECTION OF ORIENTAL WORKS**

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No. 1429.




# आत्मतत्त्वविवेकः ।

श्रीमदुदयनाचार्यविरचितः ।

श्रीशङ्करमिश्र-भगीरथठक्कुर--रघुनाथतार्किकशिरोमणि-
मथुरानाथतर्कवागीशादिविरचितटीकासहितः ।

# ĀTMATATTVAVIVEKA,

OR

## BAUDDHĀDHIKĀRA,

A REFUTATION OF BUDDHISTIC METAPHYSICS.

BY

UDAYANĀCĀRYA.

WITH THE COMMENTARIES OF SAṄKARA MIŚRA, BHAGĪRATHA ṬHAKKURA, RAGHUNĀTHA TĀRKIKAŚIROMAṆI, MATHURĀNĀTHA TARKAVĀGĪŚA, ETC.

EDITED BY

MAHĀMAHOPĀDHYĀYA VINDHYEŚVARĪPRASĀDA DVIVEDIN,
*Librarian, Govt. Sanskrit College, Benares.*

FASCICULUS III.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1919

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL

**No. 1, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

*The Society's Agent—*

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | As. |
|---|---|---|
| Açvavaidyaka, Fasc. 1–5 @ -/10/- each .. .. .. | 3 | 2 |
| Advaitachintā Kaustubha, Fasc. 1–3 @ -/10/- each .. .. | 1 | 14 |
| *Agni Purana (Text), Fasc. 4–14 @ -/10/- each .. .. .. | 6 | 14 |
| *Aitareya Aranyaka of Rig-Veda (Text), 2–4 @ -/10/- each .. .. | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–5, Vol. IV, Fasc. 1–8 @ -/10/- each .. .. .. | 14 | 6 |
| Aitareyalocana .. .. .. .. .. | 2 | 0 |
| Amarakosha, Fasc. 1–2 .. .. .. .. .. | 4 | 0 |
| *Anu Bhasyam (Text), Fasc. 2–5 @ -/10/- each .. .. .. | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. 1–3 @ -/10/- each .. .. | 1 | 14 |
| *Aphorisms of Sandilya (English), Fasc. 1 @ 1/- .. .. | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1–6 @ -/10/- each .. .. | 3 | 12 |
| *Atharvana Upanishads (Text), Fasc. 2–5 @ -/10/- each .. .. | 2 | 8 |
| Ātmatattvaviveka, Fasc. 1–2 .. .. .. .. | 1 | 4 |
| Avadāna Kalpalatā (Sans. and Tibetan), Vol. I, Fasc. 1–13, Vol. II, Fasc. 1–11 @ 1/- each .. .. .. .. | 24 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1–2, Vol. II, Fasc. 1 @ -/10/- each .. | 1 | 14 |
| Bauddhastotrasangraha .. .. .. .. .. | 2 | 0 |
| Baudhāyana Śrauta Sūtra, Fasc. 1–3; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–2 @ -/10/- each .. .. .. .. | 6 | 4 |
| *Bhamati (Text), Fasc. 5–8 @ -/10/- each .. .. .. | 2 | 8 |
| Bhasavritty .. .. .. .. .. .. | 0 | 10 |
| Bhāṭṭa Dīpikā, Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ -/10/- each .. | 5 | 0 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1–7 @ -10- each .. .. | 4 | 6 |
| Brahma Sutras (English), Fasc. 1 @ 1/- .. .. .. | 1 | 0 |
| Bṛhaddevatā, Fasc. 1–4 @ -/10/- each .. .. .. | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1–6 @ -/10/- each .. .. .. | 3 | 12 |
| Çatadūṣaṇī, Fasc. 1–2 @ -/10/- each .. .. .. .. | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–4 @ 2/- each .. | 8 | 0 |
| *Çatapatha Brāhmaṇa, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–7; Vol. V, Fasc. 1–4 @ -/10/- each .. | 14 | 6 |
| Ditto Vol. VI, Fasc. 1–3 @ 1/4/- each .. .. | 3 | 2 |
| Ditto Vol. VII, Fasc. 1–5 @ -/10/- .. .. | 3 | 2 |
| Ditto Vol. IX, Fasc. 1–2 .. .. .. | 1 | 4 |
| Çatasahasrikā-prajñāpāramitā, Part I, Fasc. 1–18, Part II, Fasc. 1 @ -/10/- each .. .. .. .. .. | 11 | 14 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 4–25; Vol. III, Part I, Fasc. 1–18, Part II, Fasc. 1–10; Vol. IV, Fasc. 1–6 @ -/10/- each | 35 | 0 |
| Ditto Vol. IV, Fasc. 7 @ 1/4/- each .. .. | 1 | 4 |
| Ditto Vol. IV, Fasc. 8–10 @ -/10/- .. .. | 1 | 14 |
| Çlokavartika (English), Fasc. 1–7 @ 1/4/- each .. .. .. | 8 | 12 |
| Çranta Sutra of Apastamba (Text), Fasc. 6–17 @ -/10/- each .. | 7 | 8 |
| Çranta Sutra of Çānkhāyana, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4; Vol. III, Fasc. 1–4; Vol. IV, Fasc. 1 @ -/10/- each .. .. | 10 | 0 |
| Çri Bhashyam (Text), Fasc. 1–3 @ -/10/- each .. .. | 1 | 14 |
| Çri [illegible] Charita, Fasc. 1–4 .. .. | [illegible] | [illegible] |

वेति । शक्त्यशक्त्योरिति । कारित्वाकारित्वयोरित्यर्थः । तथेति । कालभेदमनन्तर्भाव्य सामान्यतस्तयोरेकत्र धर्मिण्युपसंहाराभावात् एतदेव शङ्कापूर्वकं दर्शयति । यदा तदेति । उभयोरेककालत्वं तिरस्कृत्येत्यर्थः । यत्समर्थमिति । तथा च प्रसङ्गे इष्टापत्ति-रित्यर्थः । तदेव स्फुटयति । सम्भवेति । समर्थस्य करणं सम्भव-तीत्यत्यन्तायोगव्यवच्छेदस्याभिमतत्वादेवेत्यर्थः । अत्र कार्यविशे-षाङ्कुराद्युपधानं न विवक्षितम् । अन्यथैकस्यां व्यक्तौ तथाभ्युपगमे-ऽपसिद्धान्तापत्तेः । यत् समर्थमिति । यज्जातीयं समर्थं तज्जातीयं करोत्येवेति वा विवक्षितम् ॥

---

भगी० टी० । ननु परिमाणभेदाद्यथाश्रयभेदस्तथैवात्रापि स्यात् उभयत्र बाधकाविशेषात् प्रसङ्गविपर्ययविशेषनिरासे ऽपि तत्सामान्यस्यानिषेधादित्याह । अस्त्विति । यत् समर्थं तत्करोत्येव यन्न समर्थं तन्न करोत्येवेति प्रसङ्गविपर्ययोश्च सामर्थ्यासामर्थ्यमात्रं विषयो न तु कालभेदेनाप्येतयोरेकत्र न वृत्तिरिति विषय इत्याह । तयोरिति । यदि च कालभेदान्तर्भावेणापि तर्कान्तरं सम्भवत्येवेति ब्रूयात् तत्राह । तत्र चेति । सामर्थ्यं करणं योग्यता वेत्यादिना तस्यापि निरासादित्यर्थः । ननु सामर्थ्यासामर्थ्यविषययोः प्रसङ्गतद्विपर्यययोर्निरासे ऽपि करणाकरणविषयौ तौ स्यातामित्यत आह । स्तां वेति । शक्त्यशक्त्योः करणाकरणयोः । तथेति । काल-भेदाविवक्षायामित्यर्थः । उपसंहर्तुमिति । यदि कारि स्यादकारि न स्यादित्यत्रेष्टापत्तिः सर्वस्यैव कारित्वात् यावत्सत्त्वं किञ्चित्

करणात् विपर्यये च बाधासिद्धौ नियतकालविशेषविवक्षायां यदा कारि तदा कारीत्येतदपीष्टमेव आपाद्यापादकयोरेककालाविवक्षायां यदिदानीमिदं कारि स्यादन्यदाऽकारि न स्यात् अन्यकालाकारित्वान्नेदानीं कारीत्यप्रयोजकं कालभेदादेवोपपत्तेरित्युपसंहारोऽशक्य इत्यर्थः। तथाप्येतत्कालकारिणः कालान्तराकरणानुभवाद्व्याप्तिर्नोपेयत इति भावः। यद्यदा न करोति तत् तदा न समर्थमिति कालवाचिपदोपादानं व्यर्थम् कारिणो यावत्सत्त्वं सामर्थ्यादकारिणश्चासामर्थ्यादित्याशयेनाह। यदा तदेति। यत् समर्थं तत्करोत्येव कार्याव्यवहितपूर्ववर्त्येवेत्युपसंहारः। शक्य एवेत्यर्थः। यदीदं सर्वदापाद्यते यदा मूलशैथिल्यं लभ्यते ऽपि कारिण्येव कदाचिदकारित्वानुभवेन व्यभिचारादिति कदाचिदापाद्यं तच्च सिद्धसाधनमित्याह। कालनियमेति। कालनियमः सार्वदिकत्वं क्रियासङ्गतेव कारिणात्यन्तायोगव्यवच्छेदः सम्भवमात्ररूपोऽर्थक्रियासम्भवे विरुध्यते न तु कदाचित् सम्भव इत्यर्थः॥

---

रघु० टी०। प्रसङ्गेति। ताभ्यामकारिणोऽसामर्थ्यसाधकाभ्यां कार्यकारिभेदसिद्धिपर्यवसिताभ्यामर्थतः करणाकरणयोः स्वरूपेणैव विरोधस्य सिद्धेरिति भावः। यद्यपि ताभ्यामेव भेदसिद्धौ कृतममुना विरोधेन तदुपजीविना तथापि तावेव न सम्भवत इत्याह। तयोरिति। प्रसङ्गे सामर्थ्यस्य हेतुतया विपर्यये चासामर्थ्यस्य साध्यतया विषयत्वं सामर्थ्यप्रसञ्जनीयं करणं चेह सामर्थ्यं तच्च च

सामर्थ्यं हीत्यादिना दूषणस्योक्तत्वात् । ननु योग्यतावच्छेदकं रूपमेव सामर्थ्यमभिधित्सितं तत्र च न साध्याविशिष्ट्यादेर्दोषस्यावकाश इत्यत आह । स्वां वेति । शक्याशक्योः करणाकरणयोर्न विवक्षितो व्याप्तिघटकः कालभेदः साधको यस्य सोऽविवक्षितकालभेद इत्यग्रिमग्रन्थस्वरसेन नेयं तथा व्याप्तौ कालभेदानुप्रवेशमन्तरेण उपसंहर्तुमशक्यत्वात् कुशूलस्थे सामर्थ्येन करणप्रसञ्जन इष्टापत्तिः उत्तरकालं तत्रैव करणाभ्युपगमात् विपर्यये च हेत्वसिद्धिः । व्यापकविरोधिन एवाभावस्य व्याप्याभावसाधकत्वात् । अन्यथाति-प्रसङ्गात् करणस्य च सर्वथैवाकरणं विरुद्धम् अन्यथा तवापि सामग्रीनिवेशिनो बीजस्य देशान्तरे अकरणादसामर्थ्यापत्तेः न चेह तथा तस्यैव सहकारिसमवधाने करणस्य प्रत्यक्षसिद्धत्वात् तत्प्रामाण्यसन्देहेऽपि हेतोः सन्दिग्धासिद्धत्वात् मूलशैथिल्याच्चेति भावः । यदेति । कालभेदमुपेक्ष्यापि एवकारार्थान्तर्भावेन व्याप्ते-रादरे इष्टापत्त्यादेरभावादुपसंहारः शक्य एवेति भावः । करोत्ये-वेत्यत्र यावत्सत्त्वमिति विवक्षितम् न चानाद्यः व्याप्त्यसिद्धेः अङ्कुरकारिणोऽपि बीजस्य प्राक् तदकरणस्य प्रत्यक्षसिद्धत्वात् एतेनायोग[१]व्यवच्छेदेन नियमोऽपि निरस्तः । द्वितीये त्वाह । कालेति । एवं च जातत्वस्य स्वरूपायोग्यत्वप्रसङ्गोऽवशिष्यते वक्ष्यते च तत्र यद्यदा यत्समर्थं तत् तदा करोतीति स्यात् न स्यात् समर्थस्यापि सहकारिविरहेणाकरणत्वस्योपपत्तौ मूलशैथि-

(१) एतेनान्ययोग— पा० २ पु० ।

त्यादित्युक्तत्वात्(१) केचित्तु(२) करणाकरणविषयावेव प्रसङ्गविपर्ययौ स्यातामत आह। स्वां वेति। करणेनाकरणाभावप्रसञ्जने स्वरूपतोऽकरणेन करणाभावसाधने च प्रकारतोऽप्यवैशिष्ट्यात् कालभेदेनोभयोपपत्तेर्मूलशैथिल्याच्चोपसंहर्त्तुमशक्यत्वं यदा यत्कारि तदा न तत् कारीत्यादिप्रसङ्गविपर्ययोरापादकासिद्धिसिद्धसाधने चेति भावः। यत्समर्थमिति यत्कारीत्यर्थ इत्याहुः। अत्र करणाकरणविरोधमुपजीव्यप्रवृत्तयोस्तयोः कथं तत्साधकत्वाशङ्केति चिन्तनीयम्॥

---

ननु यदसमर्थं प्रथममासीत् तस्य सामर्थ्यं पश्चादपि कुत आगतम् प्रथमं समर्थस्य वा पश्चात् कुत्र गतम्। नैतदेवं तत्तत्सहकारिमतस्तत्तत्कारकत्वं हि सामर्थ्यम् अतद्वतस्तदन्यवतो वा तदकर्तृत्वमसामर्थ्यम्। इदं चोत्पत्तिकमस्य रूपं ते च सहकारिणः स्वोपसर्पणकारणवशाद् भिन्नकाला इत्यर्थात् कार्याणामपि

(१) वक्ष्यते च तत्र यद्यदा यत्समर्थं तदा तत् करोतीति स्यात् न स्यात् समर्थस्यापि सहकारिविरहस्यैव कार्यकालवृत्तित्वेन यावत्सत्त्वमेव कार्याभावत्वात्। शिलादौ सहकारिसाकल्येऽपि कार्यवैकल्यात् स्वरूपायोग्यत्वप्रयुक्तमेतदिति भावः। यद्यपि परेषां सहकारिविरहितं न तदुत्पत्तिनिश्चयविषयः कारणतावच्छेदकरूपेण तत्साजात्यं चासिद्धं रूपान्तरेण त्वतिप्रसङ्गः तथापि तदुत्पत्त्या तद्विरहेण कारणस्योपपत्तौ मूलशैथिल्यादित्युक्तत्वात्— पा० २ पु०।

(२) भगीरथठक्कुरस्येदं मतम्।

भिन्नकालतेति तथाप्येककालस्य एव भावो जातनष्टस्तदा तदा तत्कार्यं करोतु उत्पन्नमात्रस्य तत्स्वभावत्वात् एकदेशस्थवदिति चेत् ॥

शङ्क० टी० । ननु प्रथममसमर्थमपि क्रमेण समर्थं भवति प्रथमं वा यत् समर्थं तदपि क्रमेणासमर्थमिति किन्निबन्धनमित्याह । नन्विति । सामर्थ्यं यदि योग्यत्वं विवचित्वा प्रोच्यते तदा सर्वदैव तत् समर्थमेव । अथ कारित्वं विवचितं तदा तदुभयं सहकारिलाभालाभनन्त्वमित्यसकृदावेदितस्थमित्यत[1] आह । तत्तदिति । मत इति । सहकारिविनाशहतस्येत्यर्थः । तदन्यवतो वेति । एककार्यसहकारिसत्त्वेऽपि बलवत्कार्यान्तरसहकारतः यथानुमितिसामग्रीतः प्रत्यक्षसामग्री बलवतीत्यर्थः । तदकर्तृत्व तदजनकत्वम् । औत्पत्तिकमिति । एतत्स्वभाव एव भावो जायत इत्यर्थः । ननु तर्हि सहकारिसमवहित एव भावो जायतां तत्तत्कार्याणि प्रतीत्यात आह । ते चेति । सहकारिणः स्वकारणाधीनसन्निधयो न भावस्वरूपान्तर्गतास्तेषां चानियतकालोपसर्पणत्वात् कार्याणामपि कालानियम इत्यर्थः । उपसर्पणं सन्निधानम् । ननु यथा स्थानवच्छिन्नेऽपि देशे स्वात्मनि इन्द्रियादि ज्ञानं सुखादिकं यथा वा मृदङ्गाद्याकाशे शब्दं जनयति तथा स्थानवच्छिन्नेऽपि काले क्षणिको भावः कार्याणि जनयतु न चैकं वस्तु क्षणद्वयसम्बद्धं

(१) असकृदावेदितमित्यत— पा० २ पु०

भवितुमर्हतीत्याह। तथापीति। जातनष्टः क्षणिकः एककालस्य इति स्वसम्बन्धिकालस्य इति विवक्षायामिष्टापत्तिः॥

भगी० टी०। ननु भावानां स्वकारणजनितः स्वरूपभेदो जातिभेदो वा सामर्थ्यं तस्य च तस्यां व्यक्तौ नोपगमापगमौ सम्भवत इत्याह। नन्विति। यदस्य सामर्थ्यं तन्न कुतोप्यायाति न वा कुतोप्यपैति सहकारिसान्निध्ये हि कारित्वं सामर्थ्यं यदा कारणतावच्छेदकबीजत्वादिरूपमस्य सामर्थ्यं तच्छून्यत्वमसामर्थ्यं तस्य च नोपगमापगमावित्याह। तत्तदिति। अतद्वतः सहकारि-रहितस्य तदन्यवतः सहकारिविरोधिमत इत्यर्थः। नन्वेवं भिन्न कालीनं कार्यमेकदैव कुर्यात् सामर्थ्याविशेषात् सहकारिणामपि तत्स्वरूप एवान्तर्भावादित्यत आह। ते चेति। सहकारिणो न भावस्वरूपान्तर्भूताः किं तु तद्भिन्नाः स्वकारणाधीनसन्निधयः तानि च नियतकालीनानीति कार्याणामपि तथात्वमित्यर्थः। ननु यथैकदेशस्थमेव देशान्तराविद्यमानमपि विषयेन्द्रियादि तत्तत्सहकारिसत्तया ज्ञानसुखादि जनयति यथा क्षणिकोऽपि भावस्तत्तत्कालीनानि कार्याणि जनयेत् तस्मादेककालसम्बद्धस्य कालान्तरसम्बन्ध एव विरुद्ध इत्याह। तथापीति। जातनष्टः क्षणिक इत्यर्थः॥

---

रघु० टी०। सामर्थ्यप्रयुक्तं करणं सामर्थ्यं च जनकताव-च्छेदकं रूपमित्याशयेन शङ्कते। नन्वित्यादिना। कुत्र गतमिति

सामर्थ्यमित्यनुषज्यते। तथा च तस्योपगमापगमविरहाद्यावत्सत्त्वमकरणं करणं वा प्राप्तमिति भावः। जनकतावच्छेदकरूपवत्त्वं करणप्रयोजकमिति सत्यम् परं तु सहकारिसाकल्यविशिष्टमित्याशयेनाह। नैतदिति। तदन्यवतस्तद्विरोधिमतः। स्यादेतत् अस्तु सहकारिसम्पत्तिः कार्योत्पत्तिनियामिका तथापि यथैकदेशस्थो विषयादिर्देशान्तरे सहकारिसम्पत्तौ तत्र ज्ञानादिकं जनयति तथैककालस्थो भावः स्वनाशोत्तरकाले तत्सहकारिसम्पत्तौ तत्कार्यं जनयेत् अवश्यं चैतत् त्वयाभ्युपगन्तव्यम् कथमन्यथा चिरध्वस्तस्य यागानुभवादेः स्वर्गस्मरणादिजनकत्वमिति शङ्कते। तथापीति।

---

**सेयमेककालस्थता स्वरूपापेक्षया सहकारिसान्निध्यापेक्षया वा। आद्ये न किञ्चिदनुपपन्नं नित्यानामप्येवंरूपत्वात् वर्तमानैकस्वभावत्वात् सर्वभावानाम्। तदेव तु क्वचित् सावधि क्वचिन्निरवधीति विशेषः। सावधित्वेऽपि व्यापारफलप्रवाहप्रकर्षापकर्षाभ्यां विशेषः। द्वितीयस्तु स्यादपि यदि तेषां यौगपद्यं भवेत् क्रमिणस्तु सहकारिण इत्युक्तम् सहकारिसहितः स्वभावेन करोतीति वक्तरि तु जातनष्ट एव करोत्वित्युत्तरप्रसङ्गो निरर्गलशैशवस्येत्यलमनेन॥**

शङ्क० टी०। स्थैर्येऽपि भावानां स्वावच्छिन्न एव काले स्थितेरित्याह। स्वरूपापेक्षयेति। क्वचित् सावधीकृत्य नित्य-

भावानां क्वचिन्निरवधीति नित्यभावानाम्। नन्वेवं यागाद्यपि स्वानवच्छिन्ने काले स्वर्गादि न जनयेदित्यत आह। सावधि-त्वेऽपीति। यागादीनामपि व्यापाररूपमपूर्वादि तस्य प्रकर्षश्च परिपाकस्तदधीनस्य स्वर्गादिफलसम्बन्ध इति नोक्तदोष इत्यर्थः। तर्हि यागवद्बीजाद्यपि स्वानवच्छिन्ने काले कार्यजनकं स्यादत आह। अपकर्षेति[१]। तेषां न तादृशो व्यापार इत्यर्थः। ननु य एव सहकारिकालः स एव बीजादेरपि काल इति कथं कार्याणि जातनष्ट एव न करोतीत्यत आह। द्वितीयस्त्विति। किं च तथाप्येककालस्य एव भाव इत्यादिस्तदभिधानमपि मां प्रत्य-सम्बद्धमित्याह। सहकारीति॥

भगी० टी०। यदेककालस्य कालान्तरेणाजनकत्वमापाद्यते स कालः स्वरूपयोग्यतावच्छिन्नः सहकारियोग्यतावच्छिन्नो वेत्याह। सेयमिति। आद्ये स्वरूपयोग्यभावैकोपाधिविशिष्ट-कालवृत्तेर्भावस्य जनकत्वमापाद्यते तच्च नैयायिकैरभ्युपेयत इती-ष्टापत्तिरित्याह। आद्य इति। स्वरूपयोग्यत्वं च क्षणिकस्य स्थिरस्य वेत्यत्र विवादे तावन्मात्रे सम्प्रतिपत्तिरेवेति भावः। नित्यानामपीति। अपिशब्दादनित्यस्थिराणां सर्वेषामेव वस्तूनां स्वावच्छिन्नकालसम्बन्धस्य वर्तमानत्वादित्यर्थः। न चैवं सर्वेषां नित्यतापत्तिरित्याह। तदेवेति। नन्वेवं स्वरूपसत एव जनकत्वा-

(१) अपकर्षेति— पा० १ पु०।

भ्युपगमे यागादेः स्वर्गादावजनकत्वापत्तिरित्यत आह । व्यापारेति । व्यापाररूपफलप्रवाहानुवृत्तेर्नोक्तदोष इत्यर्थः । ननु व्यापारसत्त्वाविशेषात् कथमेकस्यैव कर्मणः फलोपभोगो नान्यस्येत्यत आह । प्रकर्षेति । सहकारिलाभालाभप्रकर्षाप्रकर्षवशादेकस्यैव फलदातृत्वं नान्यस्येत्यर्थः । द्वितीय इति । सहकारिसान्निध्यावच्छिन्नः कालो बीजस्य स्वकाल इति पक्ष इत्यर्थः । तथापि स्वकाल एव भावस्तत्तत् कार्याणि जनयेदित्यत्र न किञ्चिद्बाधकमित्यत आह सहकारीति ॥

रघु० टी० । एककालस्य इति कोऽर्थः । किं स्वाधिकरणकालस्य इति किं वा तत्तत्कार्यानुगुणतत्तत्सहकारिसाकल्याधिकरणकालस्य इतीत्याह । सेयमिति । न किञ्चिदिति । स्वकालस्यैव सहकारिसाकल्ये कार्यजनकताया अस्माभिरुपगमात् । तदेव वर्तमानत्वमेव । क्वचित् मानवधिकार्योत्पद्यमानतापूर्वकालमात्रावधि क्वचिन्निरवधिकार्योत्पद्यमानताकालस्यापि । ननु कार्याव्यवहितपूर्वकालेऽसतोऽपि यागादेः कार्यजनकत्वं कदाचिदेव कार्यं जायते नान्यदेति अत्र किं नियामकमत आह । सावधित्वेऽपीति । व्यापारेति । व्यापारस्य फलप्रकर्षाप्रकर्षाभ्यां फलानुगुणसहकारिलाभालाभाभ्यां विशेषः कार्योत्पादानुत्पादरूपः व्यापाररूपस्य फलस्य सहकारिलाभालाभाभ्यामित्यर्थ इत्यन्ये । तदयमर्थः । साक्षात्कार्यजनकत्वे स्वस्य व्यापारद्वारा जनकत्वे च व्यापारस्य सहकारिसाकल्यं तन्त्रम् । न चेदं निर्णयध्वस्तस्यापि

नियतान्वयव्यतिरेकशालिन एव च समवधानस्य नियामकत्वान्नाति-प्रसङ्ग इति। सहकारिसहित इत्यस्याग्रे स्वतो व्यापारतो वेत्यादिः। जातनष्टो निर्णयध्वस्तः॥

तस्मात् कार्यस्य स एव कालः कारणस्य तु स चान्यश्चेति सम्बन्धिकालापेक्षया पूर्वकालताव्यवहारः। अपि च यदा तदेतिस्थाने यत्र तत्रेति प्रक्षिप्य तयोरेव प्रसङ्गतद्विपर्यययोः को दोषः। न कश्चिदिति चेत् तर्हि देशाद्वैतं वा कारणभेदो वा आपद्येत। आपद्यतां तदादाय योगाचारनयनगरं प्रवेक्ष्याम इति चेत् न हेतुफलभाववादवैरिणमनपोह्य तत्र प्रवेष्टुमशक्य-त्वात्। तदपवादे वा सत्त्वाख्यसाधनशस्त्रसंन्यासिन-स्तव बहिर्वादसङ्ग्रामभूमावपि कुतो भयम्॥

शङ्क० टी०। नन्वेतावता कार्यकारणयोर्योगपद्ये कारणस्य पूर्वकालताविरहात् कारणतैव न स्यादित्यत आह। तस्मादिति। स एव सामग्र्यव्यवहितोत्तर एव। कारणस्येति। किञ्चित् कारणं तन्त्वादि सामग्र्यनन्तरमप्यनुवर्तते किञ्चित्तु व्यापारं जनयित्वा कार्यात् पूर्वमेव नश्यतीत्यनियम एवेत्यर्थः। सम्ब-न्धीति। यस्मिन् काले यत् सम्बध्यते स एव तस्य काल इत्यर्थः। प्रथमप्रकरणार्थप्रपञ्चोऽयं परस्मै यद्विरोधदानाय तमिदानीमाह।

अपि चेति। क्षेत्रपतितं बीजं यदि तस्मिन्नेव काले कुशूले-
ऽप्यङ्कुरजननसमर्थं स्यात् तदाङ्कुरं जनयेत् न तु जनयति तस्मान्न
तदा तत्समर्थमिति। क्षणिकमपि सामर्थ्यासामर्थ्यलक्षणविरुद्ध-
धर्मसंसर्गेण भिन्नं स्यादिति प्रघट्टकार्थः। अत्र प्रसङ्गे दोषाभि-
धाने कालगर्भप्रसङ्गेऽपि दोषः स्यादित्यभिप्रायेणाह। न कश्चि-
दिति। ननु बीजदेशादन्यो देशो यदि भवेत् तदा
तत्रतत्राजननिबन्धनमसामर्थ्यमापद्येत। तथा च सर्वत्र देशे
समर्थमेव बीजमिति नास्माकं विरुद्धधर्माध्यास इत्यत आह।
तर्हीति। यद्येक एव देशो भवेत् तदेतं सम्भाव्येत यदि वा
देशनानात्वेऽपि सर्वो देशो बीजाधार एव स्यात तदा स्यादाद्ये
देशादेतमन्ये कारणस्याप्येकस्यैव बीजस्य तावद्देशवृत्तितयाऽभेदः
स्यादित्यर्थः। ननु क्षेत्रकुशूलाद्यात्मापि देशो ज्ञानस्वरूपमेव
वाह्यस्यास्माभिरनङ्गीकारात्। ज्ञान चैकदेशमेवेति देशभेदेन[1]
सामर्थ्यासामर्थ्यापादनं मां प्रति निरवकाशमित्याह। आप-
द्यतामिति। ज्ञानमात्रं क्षणस्थायि न वाह्यं किञ्चिदस्तीति
योगाचारनयः तदेव नगरमित्यर्थः। भेदेन ग्राह्यग्राहकभावो
नास्ति किं तु स्वप्रकाशज्ञानमेव[2] जगदिति योगाचारमताश्रयणे
कार्यकारणभावोऽपि त्वया नेष्टव्य इदमस्य कारणमिदमस्य कार्य-
मिति भेदेन ग्राह्यग्राहकभावे सत्येव सिद्धेत् तथा च मां प्रति
सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासे यत् सत् तत् क्षणिकमिति

(१) ज्ञानस्यैव देशभेदेन— पा॰ ३ पु॰।

(२) स्वप्रकाशात्मकं— पा॰ ३ पु॰।

यत् त्वया साधयितुमुपक्रान्तं तत् सर्वं भग्नमेवेत्याह। हेतु-फलेति। ननु हेतुफलभावोऽपि मास्तु को दोष इत्यत आह। तदपवाद इति। तस्मार्थक्रियाकारित्वलक्षणेन सत्त्वेन हेतुना यत् क्षणिकत्वं त्वया साधयितुमुपक्रान्तं तच्चेद्विहाय दूरं पलायितेन त्वया मन्यस्तमेव तदा सिद्धं नः समीहितम् यतः पराजितोऽस्येव तथा च केन भयेन योगाचारनगरप्रवेशस्तत्र इत्यर्थः॥

---

भगी० टी०। ननु यदि कारणस्वरूपावच्छिन्नः कालस्तस्य स्वकालस्तदा तत्काल एव कार्यस्य भावात् तदपेक्षया कथं पूर्वकालताव्यवहार इत्यत आह। तस्मादिति। स एवेति। कार्यस्य सहकारिसमवधानानन्तरमेवोत्पत्तिकालः कारणस्य च यदा सहकारिसमवधानं स कालः यदा चासमवधानं सोऽपि। सम्बन्धौ कार्यस्य प्रागभावस्तदपेक्षया च पूर्वकालताव्यवहार इत्यर्थः। ननु कालाविवक्षयैव प्रसङ्गतद्विपर्ययाभ्यां पूर्वापरक्षणवर्तिनो भावस्य भेदः साध्यतामित्यत आह। अपि चेति। यद्देशे बीजमङ्कुरं जनयति तदन्यदेशे तत् समर्थं न वा। आद्ये स्वदेशवदङ्कुरं जनयेत् अन्त्ये तदेव तत्रैव कार्ये जनकमजनकं चेति विरुद्ध-धर्माध्यासादेकक्षणेऽपि बीजस्य नानात्वप्रसङ्गः। अथ देशभेदेनैव न विरोधस्तदाकालभेदेनैव ममापि तथेत्यर्थः। क्षणिको भावः स्वकीयासर्थक्रियां प्रति कालान्तरेऽपि समर्थ इति परैर्वक्तुं न शक्यते अतस्तदेव बीजं तत्रैव समर्थमसमर्थं च स्यादिति भावः। ननु कालान्तरे परेषां बीजस्यासत्त्वं न त्वसामर्थ्यम् एवं देशभेदेनापि

तस्यासत्त्वं न त्वसामर्थ्यमिति न देशभेदेन विरोधशङ्का । अथ सत्त्वमर्थक्रियाकारित्वमिति देशान्तरकालान्तरीयार्थक्रियां प्रति शिलाशकलस्येव बीजस्यासामर्थ्यं दुर्निवारमिति चेत् न तद्धि सत्त्वस्य लक्षणं न तु तदेव सत्त्वं तस्माद्देशान्तरे कालान्तरे च भावस्य तत्रैव कार्ये सामर्थ्यमसामर्थ्यं वेति विकल्प एव निरवकाशः । अत्राङ्कः तथापि स्वकाले सद्रूपस्य कालान्तरीयासत्त्वाभ्युपगमात् सुतरां विरोधः । न च तत्कालीनत्वतदितरकालीनत्वरूपोपाधिसामान्यद्वयस्य सत्याश्रये समवस्याभावः कथं स्यादिति वाच्यम् तत्कालसम्बन्धात्मकत्वात् तयोः तस्य चानित्यत्वात् तन्नित्यत्वं तदुपादानाय प्रवृत्त्यनुपपत्तेः तदधिके च सामान्ये मानाभावात् । प्रसङ्गस्यादृष्टत्वेऽनिष्टमाह । देशेति । यथा स्वदेशे स्वोपादेय कार्यं प्रति शक्तो भावः तत्रैव सहकार्ये ज्ञानसुखाद्यपि प्रतिसमर्थश्चेत् तत्रापि जनयेत् तथा चोपादेयसहकार्ययोर्देशाद्वैतमभिन्नदेशता स्यात् । यद्यत्र जननसमर्थं तत् तत्र जनयतीति प्रसङ्गस्यादृष्टत्वादित्यर्थः । विपर्ययस्यादृष्टत्वे दूषणमाह । कारणभेद इति । क्षणिकस्यापि कारणस्य तदतद्देशसामर्थ्यासामर्थ्यरूपविरुद्धधर्मसंसर्गाद् भेदो नानात्वं स्यादित्यर्थः । ननु विज्ञानवादिना ज्ञानभिन्नपरमाणुरूपस्य वाह्यस्याभावेऽङ्कुरादीनां ज्ञानसुखाद्यभिन्नदेशत्वं ज्ञानत्वेन देशानामभेदश्चेष्यत एवेत्याह । आपद्यतामिति । यद्यपि विज्ञाननयप्रवेशेऽपि विज्ञानस्य कालान्तरे सामर्थ्यमसामर्थ्यं वेत्यादिप्रसङ्गतद्विपर्ययाभ्यामापद्यत एव देशाद्वैतम् तथापि तद्देशजनकत्वाजनकत्वादिप्रसङ्गतद्विपर्ययाणां कार्य-

कारणभावोपजीवकत्वम् विज्ञाननये तु परोऽपरस्यावेदनात् स्वमात्रमग्नमूर्त्तिकतया इदमस्य कार्यमिदमस्य कारणमिति ग्राह्यभेदोल्लेखसाध्यो न कार्यकारणभावनिश्चयो न वा वस्तुतः स सम्भवी तस्यापि ज्ञानविशेषत्वात् न च तदेवापाद्यं ज्ञानद्वैतपच्च एकज्ञानविषयीकृतानां देशानामप्यभेदेनैवापत्तेः तथा च तत्र प्रवेशः कार्यकारणभावं वास्तवमादाय विहाय वा आद्ये हेतुफलेति। उक्तयुक्त्या तत्र हेतुफलभावादित्यर्थः। अन्त्ये तदपवादे वेति। कार्यकारणभावोपजीविनः सत्त्वाख्यसाधनस्य संन्यासं त्यागं कृतवतस्तव स्थिरवाद्यस्वीकारोऽपि न भयमिति कृतं तत्र प्रवेशेनेत्यर्थः। तथा च साधनं विना न क्षणभङ्गसिद्धिरिति भावः॥

— —

रघु॰ टी॰। कार्यकारणयोरेककालत्वेऽपि पूर्वापरभावव्यवहारं व्यवस्थापयति। तस्मादिति। स एव सहकारिसमवधानोत्तर एव। सम्बन्धीति। सम्बन्धिनोः कार्यतत्प्रागभावयोर्यौ कालौ तदपेक्षया तद्वृत्तित्वप्रतिसन्धानेन कारणकार्ययोः पौर्वापर्यव्यवहार इत्यर्थः। तद्यथेत्यादि बीजादेरेकस्मिन् देश इव देशान्तरेऽप्यङ्कुरादिसामर्थ्ये तत्राप्यङ्कुरादिजननात् सर्वेषां देशानां सर्वकार्यवत्त्वरूपमद्वैतमापद्येत। तथा च कार्याणां भिन्नकालाशेषदेशारोपवृत्तित्वेनादित्वमेव पर्यवस्येदिति साधु क्षणिकत्वम् असामर्थ्ये तु सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गाद् बीजादिव्यक्तेर्भेद आपद्येत। तथा च तस्या अपि पूर्ववदेव पुनर्भेदापत्तौ बीजादिशून्यत्वमेवापद्येतेति भावः। भावार्थे कृतनिर्भर आशङ्कते। आपद्यतामिति।

आपद्यतां बाह्यशून्यत्वं योगाचारो विज्ञानवादी। तन्मतानुसरणं हि हेतुफलभावमुपेत्य अपोद्य वा आद्ये एकस्मिन् ज्ञानात्मनि काले देशे वा ज्ञानजननसमर्थस्य विज्ञानस्य ज्ञानात्मकेषु दशान्तरेषु कालान्तरेषु च तत्सामर्थ्येषु सर्वेषु तज्ज्ञानोत्पत्तिप्रसङ्गः। असामर्थ्ये तु विरुद्धधर्मसंसर्गेणैकस्यापि भेदापत्तौ पूर्वोक्तन्यायेन शून्यत्वमेव स्यादिति क्व विज्ञानवादः। द्वितीये तु सामर्थ्यासामर्थ्ययोर्विरुद्धधर्मयोरसिद्धा भेदासिद्धावसिद्धव्याप्तिकतया अर्थक्रियाकारित्वरूपतया बाह्यत्वस्य क्षणिकत्वसाधनस्य परित्यागे बाह्यस्थिराभ्युपगमेऽप्यविरोधाद् व्यर्थं तन्मतानुसरणमित्याह। हेतुफलेति। केचित्तु विज्ञानवादिनये सर्वेषामेव कार्याणां ज्ञानाभिन्नदेशत्वं देशानां च ज्ञानत्वेनाभिन्नत्वं सिध्यत एवेत्याह। आपद्यतामिति। तन्नये परेण परस्यावेदनादेकेन कार्यकारणाभिमतज्ञानद्वयाग्रहणान्न कार्यकारणभावसिद्धिरित्याह हेतुफलेतीत्याङ्कः॥

**ननु यावत्योऽर्थक्रिया भिन्नदेशास्तावद्भेदं कारणमस्तु को विरोध इति चेत् न तेषामपि प्रत्येकं तत्प्रसङ्गस्य तदवस्थत्वात् एवमेकस्य जगति वस्तुतत्त्वस्याऽलाभे साध्वी क्षणभङ्गसाधनपरिशुद्धिः॥**

शङ्क० टी०। द्वितीयं पक्षमाशङ्क्य निराकरोति। नन्विति। यावत्य इति। यत्रयत्र देशे त्वया कारणमापाद्यते तत्र सर्वत्र तद्बीजमस्ति समर्थं च करोति चेति क्व विरोध इत्यर्थः। तेषा-

मपीति। कारणानां देशभेदेन भेदे यत् क्षेत्रपतितं तत्कुशूले करोति न वा यत् कुशूलस्थं तच्च दूरे करोति न वेति तत्तदेवाधिकृत्य प्रसङ्गतद्विपर्ययौ वक्तव्याविति। किमप्येवं जगति न स्यादिति किंधर्मिकं क्षणिकत्वं साधनीयमित्यर्थः॥

---

भगी० टी०। नन्वेकत्रैव देशे न सार्वत्रिकार्थक्रियापादनं भिन्नदेशीयतत्तदर्थक्रियासु भिन्नानां कारणत्वस्येष्टत्वादित्याशयमविद्वान् शङ्कते। नन्विति। भिन्नदेशीयतत्तदर्थक्रियां प्रति कारणानां भिन्नत्वं न प्रसज्यते अपि तु तावदर्थक्रियाभेदं प्रति कारणभेदोऽपि यत्रैकदेशे कार्यं जनयदन्यदेशे न जनयति तत्रैवोक्तरूपे विरुद्धधर्माध्यासाद्भेदः प्रसज्यत इति परिहरति। तेषामपीति। नन्वत्रापीष्टापादनमित्यत आह। एवमिति। क्षणिकस्याप्येकस्य वस्तुनोऽसिद्धिरेवं स्यादित्यर्थः॥

---

रघु० टी०। भिन्नदेशकार्यद्वयजनकस्य एककार्यदेशे कार्यान्तरसामर्थ्ये तत्रापि तत्कार्यजननमसामर्थ्ये च कारणभेद आपद्यतेत्याशयं मन्यमानो भ्रान्त आशङ्कते। नन्विति। आशयं प्रकाशयति। तेषामिति।

---

**अस्तु तर्हि कश्चिद्दोष एवानयोरिति चेत् स पुनः कस्मिन् साध्ये किं सामर्थ्यासामर्थ्ययोः किं वा तद्विरुद्धधर्माध्यासेन भेदे आहोस्वित् शक्त्यशक्त्योर्विरोधे॥**

प्रङ्क० टी०। अनयोरिति। देशगर्भप्रसङ्गतद्विपर्ययो-रित्यर्थः। सामर्थ्यासामर्थ्ययोरिति। साध्ययोरिति विपरिणामः। सामर्थ्यासामर्थ्ययोः सतोर्भेदे साध्य इत्यनेनेतनेन सम्बन्धः। तत्र यद्यपि सामर्थ्यासामर्थ्यरूपे एताद्रव्य न साध्ये किं तु तदुभय-विरुद्धधर्माध्यासाधीनो धर्मिणि भेदः साध्यः तथापि प्रसङ्गतद्वि-पर्ययाभ्यां साक्षात् ते एव साध्ये इत्यदोषः। एतदेवाह। किं वेति। शक्यशक्योरिति। करणाकरणयोरित्यर्थः। विरोध इत्यत्र साध्य इत्यनुषञ्जनीयम्। कश्चिदनयोर्दोष इति सर्वत्रानुषङ्गः॥

---

भगी० टी०। सामर्थ्यासामर्थ्ययोरिति। साध्ययोरिति वचनः भेदेनान्वयः। यद्यपि सामर्थ्यासामर्थ्ययोर्भेदसाधनत्वेनोपन्यस्तयो-साध्यत्वाभिधानमयुक्तम तथापि परेण करणाकरणाभ्यां सामर्थ्या-सामर्थ्ये साध्यते इति तन्मतेनेदमुक्तम्। किं वेति। ननु सामर्थ्यासामर्थ्ये तुल्यतया विरुद्धधर्माध्यासमाध्यभेदस्य तुल्यत्व द्विकल्पनमयुक्तम् विरुद्धधर्माध्यासेन भेदे साधिते तत्रासिद्धा-वुद्भावितायां तत्सिद्धये सामर्थ्यासामर्थ्यरूपविरुद्धधर्माध्यासस्य स्वयमेवाभिधानात्। सैवम् साक्षात् साध्याभिप्रायेण सामर्थ्या सामर्थ्ये विकल्पिते परम्परा साध्याभिप्रायेण च विरुद्धधर्माध्यास-माध्यभेदो विकल्पित इत्याशयात्। शक्यशक्योरिति। करणा-करणयोरित्यर्थः।

रघु० टी०। अनयोर्देशगर्भप्रसङ्गविपर्ययो:। स दोष:। साध्ये विषये। सामर्थ्येति। साध्ययोरिति। विपरिणतेनान्वय:। केचित्तु विरुद्धधर्मसंसर्गाद्भेदापत्तिभयेन यदि कश्चित् कारिणोऽपि सामर्थ्यं नोपेयात् तदा तं प्रति तदपि साध्यं स्यादित्युक्ति सर्वत्राशक्ताविति। अशक्तावसामर्थ्ये भेदोपि च परम्परया प्रसङ्गादिसाध्य: विरोधस्तु भेदसिद्ध्यनुगुण: प्रमाणान्तरसाध्यत्वात् साध्यत्वेन विवक्षित इत्याहु:। शक्त्यशक्त्यो: सामर्थ्यासामर्थ्ययो: अग्रे च कारित्वाकारित्वे करणाकरणे च सामर्थ्यासामर्थ्यपरे। एवं भिन्नकालशक्त्यशक्त्योरित्यपीति। यद्वा प्राक् प्रसङ्गविपर्ययोरिति भेदसाधकयोर्देशभेदेन करणाकरणयोरप्युपलक्षकम् तत्र च एकत्र कारिणो देशान्तरेऽपि कारित्वाभ्युपगमे सर्वदेशानां सर्वकार्यवत्त्वरूपमद्वैतम् एकत्राकारिण: सर्वत्राकारित्वाभ्युपगमे च सर्वदेशानां सर्वकार्यशून्यत्वरूपमद्वैतं क्वचित्कारित्वस्य क्वचिच्चाकारित्वस्य चाभ्युपगमे कारणभेद आपद्येतेति नेयम्। अनयोरिति। प्रसङ्गविपर्ययो: करणाकरणयोश्चेत्यर्थ:। शक्त्यशक्त्योरिति। करणाकरणयोरित्यर्थ:। तथा च यथाश्रुत एवाग्रिमग्रन्थ: साधीयान्।

---

नाद्य: सर्वत्र सामर्थ्ये हि प्रसह्य करणात् सर्वथाशक्तौ क्वचिदप्यकरणात् सर्वदेशसमानस्वभावत्वेऽप्यस्य स्वोपादानदेश एव तत्कार्यं करोतीति अयमस्य स्वभाव: स्वकारणादायातो न नियोगपर्यनुयोगावर्ह-

नौति चेत् तर्हि सर्वकालसमानस्वभावत्वेऽपि तत्तत्सहकारिकाल एव[1] करोतीत्ययमस्य स्वभावः स्वकारणादायात इति किन्न रोचयेः ॥

शङ्क० टी० । सामर्थ्यासामर्थ्ययोः साध्यत्वे यदि प्रसङ्गतद्विपर्ययौ दृष्टौ स्यातां तदा सर्वत्र सामर्थ्यमेव स्यादसामर्थ्यमेव वा आद्ये आह । प्रसङ्गेति । अन्त्ये आह[2] । सर्वत्रेति । देशभेदेन सामर्थ्यासामर्थ्ये नैकस्य विरुद्धे इति यदि तदा कालावच्छेदभेदेनापि[3] न विरोध इति कुतः क्षणिकत्वमिति शङ्कोत्तराभ्यामाह । सर्वदेशेति ॥

भगी० टी० ॥ ० ॥

---

रघु० टी० । स्वोपादानेति । स्वं कार्यं प्रति नियतदेशोपलक्षकं चेदं क्षणिकत्वेन कारणस्य कार्याधिकरणत्वायोगात् ॥

न द्वितीयः विरुद्धधर्माध्यासेनाप्यभेदे भेदव्यवहारस्य निर्निमित्तकत्वप्रसङ्गात् अनैकान्तिकश्च हेतुः कालतोऽपि न भेदं साधयेत् ॥

(१) लाभ एव— पा० १ पु० ।

(२) अन्त्ये त्वाह— पा० २ प० ।

(३) कालभेदेनापि— पा० १ पु०

शङ्क० टी०। ननु सामर्थ्यासामर्थ्ये विरुद्धे अप्येकत्र विद्यमाने अपि न धर्मिणं भिन्ते इत्याह। न द्वितीय इति। अनैकान्तिकश्चेति। देशभेदेन ताभ्यां विरुद्धाभ्यामपि भेदासाधनादित्यर्थः॥

---

भगी० टी०। निर्निमित्तकेति। यदीतरानिमित्तको भेदव्यवहारो विरुद्धधर्माभ्यामजन्यो न स्यात् अकारणकः स्यादित्यर्थः। विरुद्धधर्माध्यासेऽप्यभेदश्च स्यादिति भावः। अनैकान्तिकश्चेति। यदि देशतो विरुद्धधर्माध्यासेऽपि न भेदस्तदा कालतोऽपि विरुद्धधर्माध्यासो हेतुर्भेदे साध्येऽनैकान्तिकः स्यादित्यर्थः॥

---

रघु० टी०। निर्निमित्तकत्वस्य निर्विषयत्वस्य प्रसङ्गात् क्वचिदपि भेदस्यासिद्धत्वात्। अनैकान्तिक इति। भेदप्रसिद्धिमभ्युपेत्य तदप्रसिद्धौ तु व्याप्यत्वासिद्धिर्द्रष्टव्या॥

---

न तृतीयः विरोधलक्षणयोगे बाधकसहस्रेणापि विरोधस्यापनेतुमशक्यत्वात् अयोगे वा तदेव चिन्त्यम्। यद्विधाने यस्य निषेधो यन्निषेधे वा यस्य विधानं तयोरेकत्र धर्मिणि परस्परपरीहारस्थितितया विरोधः(१)

(१) परस्परपरीहारावस्थितयोर्विरोधः— पा० १ पु०

स चेह नास्ति तद्देशकार्यकारित्वं हि तद्देशकार्याकारित्वेन विरुद्धं तद्विधौ तस्य नियमेन निषेधात् न पुनर्देशान्तरे तत्कार्याकारित्वेन तस्यानिषेधात् स ह्यन्यत्र तदकरणमतत्करणं वा तत्र तत्करणस्याभावोऽपि तु तत्र तदकरणमिति चेत् हन्तैवम्भूतविरोधलक्षणव्यावृत्तिभिन्नकालशक्त्यशक्त्योरपीत्युक्तप्रायं तत्प्रतिसन्धेयाः ॥

शङ्क० टी०। ननु सामर्थ्यासामर्थ्ये विरुद्धे एव न भवत इत्याह। न तृतीय इति। विरोधेति। परस्परविरहात्मनोः परस्परविरहव्याप्ययोर्वा विरोधध्रौव्यमित्यर्थः। नन्वेकदेशावच्छेदेन कारित्वाकारित्वे विरोधलक्षणाक्रान्ते न तु देशभेदेनापीत्याह। अयोगे वेति। तदेव साम्यापादनाय परद्वारा चिन्तयति। तद्देशकार्यकारित्वमिति। यद्देशे करोति तत्रैव न कुर्यात् तदा विरोधः स्यादित्यर्थः देशान्तरे कार्यकारित्वेनेत्यत्र तद्देशकारित्वं विरुद्धमित्यनुषञ्जनीयम्। तस्येति। देशान्तरे तदकरणस्यानिषेधादित्यर्थः। नहीति। अन्यत्र यत् तत्करणं तद्विरुद्धकार्यकरणं वा न तदेव तत्र तत्करणस्याभावो येन विरोधः स्यादपि तु तत्रैव देशे तदानीमेव तदकरणं तत्करणस्याभाव इत्यर्थः। साम्यमापादयति। हन्तैवमिति। तदा तदकरणं तत्करणस्य विरोधि न त्वन्यदापि तदकरणं येन विरोधः स्यादित्युक्तमित्यर्थः॥

भगी० टी०। यद्विधान इति। यद्यपि गोत्वाश्वत्वविरोधाव्यापकमिदं विरोधलक्षणं तयोः परस्पराभावव्याप्ययोः परस्पराभावानामेकत्वात् तथापि नेदं विरोधसामान्यलक्षणं किन्तु भावाभावरूपविरोधविशेषकीर्तनमिदम्। यद्वा विधिनिषेधावत्र ज्ञानस्यैव तथा चायमर्थः यद्विधाने यस्य ज्ञाने सति यत्र धर्मिण्यपरनिषेधो नियमेन ज्ञानाभावो यन्निषेधे च यदज्ञाने च नियमतो यत्र यस्य विधिर्ज्ञानं तत् तेन विरुद्धमिति सामान्यलक्षणपरत्वमपि न पुनरिति। तद्देशकार्यकारित्वमित्यनुषज्यते। तस्य देशान्तरे तदकरणस्येत्यर्थः। एतदेव स्पष्टयति। न हीति। यत्र यत्करणं नोपलभ्यतेऽतत्करणं तद्विरुद्धजातीयकरणस्येत्यर्थः। तत्रेति। यत्र देशे तत्करणस्य तद्विरुद्धजातीयाकरणस्य च मानसिद्धत्वान्न विरोध इत्यर्थः। अपि त्विति। तथा च तत्र तदकरणमेव तस्य तत्करणविरुद्धमित्यर्थः। हन्तैवमिति। तदा तदकरणं हि तदा तत्करणविरोधिसदानवस्थाननियमात् न त्वन्यदा तदकरणमित्युक्तमित्यर्थः॥

रघु० टी०। अयोगे वा विरोधलक्षणस्य तदेव विरोधलक्षणमेव चिन्त्यम्। यद्विधान इति। भावाभावविरोधविवेचनं यद्विधाने क्रियमाणे यस्य निषेधः सिद्ध्यति यन्निषेधे च क्रियमाणे यद्विधानं सिद्ध्यति। यद्विधानं यन्निषेधो यन्निषेधो यद्विधानमिति तु फलितार्थः। केचित्तु विधाननिषेधौ ज्ञानाज्ञाने तथा च यदज्ञाने यद्ज्ञानं यदज्ञान एव यज्ज्ञानमित्यर्थाद् गोत्वाश्वत्वादि

साधारण्यमित्याह । तयोः परस्परपरीहारस्थिततया एकधर्मिणि विरोधः सहानवस्थानं सिद्धतीति । तद्विधौ तद्देशकार्यकारित्व-विधौ । तस्यैव तद्देशकार्याकारित्वस्यैव तद्विधौ तस्यानिषेधात् तस्य देशान्तरकार्याकारित्वस्यानिषेधात् । अतत्करणं कार्यान्तरकरणं दृष्टान्तार्थं चेदम् अभाव इति व्यवह्रियत इत्यर्थः । अतो नोत्तरत्र उद्देशविधेयावैशिष्ट्यम् ॥

**तस्मात् प्रसङ्गतद्विपर्ययस्थितावपि असिद्धो विरुद्ध-धर्माध्यासः । ननु यदेकदा यत् करोति तद्यावत् सत्त्वं तत्करोत्येव यथा कश्चिच्छब्दः[1] शब्दान्तरमिति प्रसङ्गोऽस्तु विपर्ययस्तु यदेकदा यन्न करोति तत् सर्व-दैव तन्न करोति यथा शिलाशकलम् अङ्कुरम् । न करोति चैकदा कुशूलस्थं बीजमङ्कुरमिति चेत् तदेत-ज्जात्यभिप्रायेण वा स्यात् व्यक्त्यभिप्रायेण वा स्यात् ॥**

शङ्क० टी० । पूर्वं प्रसङ्गतद्विपर्ययोरेवासिद्धिरुक्ता सम्प्रति तत्सिद्धावपि विरुद्धधर्माध्यासाभावमुपसंहरति । तस्मादिति । सत्त्वक्षणिकत्वयोर्व्याप्तिसाधनाय प्रसङ्गविपर्ययान्तरमवतारयति । नन्विति । यथा कश्चिच्छब्द इति । अविनश्यदवस्थोऽनन्त इत्यर्थः । अन्यथा द्वितीयक्षणेऽकरणे यावत् सत्त्वं करणानुपपत्तेः । स्वमतेनैव

(१) अविनश्यदवस्थः — इत्यधिकं पुस्तकमिश्रकृतटीकानुसारेण

वा दृष्टान्तः विपर्यय इति। यद्यावत्सत्त्वं यन्न करोति तदेकदापि न करोति यथा शिलाशकलं न करोति कुशूलस्थं बीजं यावत्सत्त्वमङ्कुरं स च कदापि तन्न कुर्यादिति विपर्यये दर्शनीये एकदाऽकरणस्यापि यावत्सत्त्वाकरणरूपतया व्यत्यासेनैव विपर्ययो दर्शित इत्यदोषः। तदेतदिति। प्रसङ्गतद्विपर्ययोपदर्शनमित्यर्थः। जातीति। यज्जातीयमेकदा न करोति तज्जातीयं यावत्सत्त्वं न करोतीति वा या व्यक्तिरेकदा न करोति सा यावत्सत्त्वं न करोतीति वा विवक्षितमित्यर्थः॥

भगी० टी०। पूर्वं प्रसङ्गविपर्यया वेवासिद्धावित्युक्तमधुना तावदभ्युपेत्य विरोधाभावमुपसंहरति। तस्मादिति। तदा तदकरणं प्रसङ्गविपर्ययान्तरं व्याप्तिग्राहकमाह। नन्विति। कश्चिच्छब्द इति। अनन्त्यशब्द इत्यर्थः। नन्वात्मापि यावत्सत्त्वं न शब्दान्तरं जनयति कार्यकारणयोरेकक्षणावस्थानात् तदा तस्य कार्याजनकत्वात्। अत्राह्रः कश्चिदित्यनेनाविनश्यदवस्थोऽपि द्रष्टव्यः जनकश्च शब्दो जन्यशब्दकाले विनश्यदवस्थ इत्यदोषः। यदेकदेति। ननु यावत्सत्त्वं यत् न करोतीति साध्यविपर्ययः न त्वेकदा यन्न करोतीति तस्य साधनविपर्ययत्वात् तस्य साध्यविपर्ययहेतुत्वात्। सेवम् एकदाऽकरणस्यापि यावत्सत्त्वकरणविपर्ययरूपत्वात्॥

---

रघु० टी०। उपसंहरति। तस्मादिति। देशभेदेनेव कालभेदेनापि सामर्थ्यासामर्थ्ययोः करणाकरणयोश्चाभ्युपगमे

विरुद्धधर्मसंसर्गोऽसिद्ध इत्यर्थः । नन्वेकदेशे समर्थस्य देशान्तरे किमिदमसामर्थ्यं यद्विरुध्यते किं सामर्थ्याभावविशिष्टस्य देशान्तरे तत्कार्याकारित्वस्यानिषेधात् सत्त्वं देशान्तरावच्छेदेन तस्य सामर्थ्याभाववैशिष्ट्यं किं वासामर्थ्यविशिष्टस्य तस्य तद्विशिष्टसामर्थ्यस्य वा देशान्तरेऽभावः । नाद्यः द्वयमनभ्युपगमात् । न चेतरः अविरोधात् । एतेनाकरणं व्याख्यातम् । न चेकदेशकालसतो देशान्तरे कालान्तरे वा कथमसत्त्वमिति वाच्यम् तत्रासत्त्वं हि तद्वत्यभावः[1] तद्विशिष्टाभावप्रतियोगित्वं वा न चेदमन्यत्र सत्त्वेन विरुध्यते अतद्विरहत्वादतदाक्षेपकत्वाच्चेति । मैवम् एवमपि नैमित्तिकसुखादिसमर्थस्य रूपादेरूपादेयकार्यदेशे सुखादिकारित्वं स्यात् सामर्थ्याविशेषात् । असामर्थ्ये च विरुद्धधर्माध्यासाद्भेदापत्तिः । यदि च सामर्थ्याविशेषेऽपि स्वभावादेव प्रतिनियतदेशकार्यकारित्वं तदा तथैव प्रतिनियतकालकार्यकारित्वमस्त्वित्युक्तत्वात् । अभिहितं च देशभेदावच्छेदेनैकस्य कालस्येव कालभेदावच्छेदेनैकस्यापि देशस्य करणाकरणादिकमविरुद्धमिति प्रसङ्गविपर्ययस्थितावपीत्यपिना सूचितम् । प्रसङ्गविपर्ययसामान्यासम्भवमसहमानोऽन्तराप्रसङ्गविपर्ययान्तरमाशङ्कते । नन्विति । कश्चिदनन्त्यः स्वमतेनेदम् । अन्त्यशब्दचणिकतामते तु यथान्त्यः शब्दः स्वनाशमिति द्रष्टव्यम् । यावत्सत्त्वमित्यत्र कार्यप्रागभावावच्छिन्नत्वेन सत्त्वं विशेषणीयमित्यपि कश्चित । यत्तु कश्चिदित्यनेनाविनश्यदवस्थोऽपि बोध्य इति कश्चित् तन्न स्वतोऽसिद्धेः

(१) तद्वृत्त्यभावः— पा० २ पु० ।

यत् किञ्चिद्रूपविशिष्टस्य यावत्सत्त्वकरणेनैव साध्यसत्त्वे च सहकारि-विशिष्टस्य तथात्वादिष्टापादनाच्च इत्यनेन प्रकारेण प्रयोगोऽस्तु तेन कुशूलस्थबीजस्य पराभ्युपगतमेकदाङ्कुरकारित्वरूपहेतुमत्त्वं लभ्यते। एकदा कदाचिद्भवतः कदाचिदकरणसार्वदिकाकरणे यावत्सत्त्वकरणकदाचित्करणव्यतिरेकाविति न विपर्ययासङ्गतिः। यज्जातीयमेकदा यत् करोति तज्जातीयं किञ्चिद्यावत्सत्त्व तत् करोति यज्जातीयं किञ्चिदपि यावत्सत्त्वं यन्न करोति तज्जातीयं किमपि कदाचिदपि तन्न करोतीति यदि विवक्षितं तदा आद्ये कस्यचिद् बीजस्य यावत्सत्त्वमङ्कुरकारित्वापत्तावपीतरेषामेकदा-ङ्कुरकारिणां कालान्तरे तदकरणमविरुद्धम्। द्वितीये च ततो हेत्वसिद्धिः। समर्थबीजक्षणस्य यावत्सत्त्वमङ्कुरकारित्वोपगमात् बाधश्च(१)बीजजातीयस्यैव सहकारिसम्पन्नस्याङ्कुरकारित्वात्॥

---

**प्रथमे द्वयमपि अनैकान्तिकम् अनियमदर्शनात्। द्वितीये द्वयमप्यन्यथासिद्धम् एकान्तासामर्थ्यप्रयुक्त-त्वादत्यन्ताकरणस्य सामर्थ्ये सति सहकारिसन्निधि-प्रयुक्तत्वात् करणनियमस्य॥**

शङ्क० टी०। अनियमेति। बीजजातीय एव करणा-करणयोर्दर्शनान्नेयं व्याप्तिरित्यर्थः। द्वयमपीति। प्रसङ्गस्तद्विपर्यय-श्चेत्यर्थः। अन्यथासिद्धिमाह। एकान्तेति। शिलाशकलादावे-

(१) बाधकाभावे— इति क्वचित्।

कदाकारित्वे सत्यन्यदाप्यकारित्वं स्वरूपायोग्यत्वप्रयुक्तं स्वरूपयोग्यत्वे एकदाकरणं सहकारिवैकल्यप्रयुक्तं यावत्सत्त्वं च करणं सहकारिलाभप्रयुक्तमित्यर्थः ।

भगी० टी० । अनियमेति । बीजजातीय एव सहकारिसाहित्यासाहित्ययोरङ्कुरकरणाकरणदर्शनादित्यर्थः । इयमपीति । प्रसङ्गस्तद्विपर्ययश्चेत्यर्थः । अन्यथासिद्धिमुपपादयति । एकान्तेति । एकदा तदकारिणोऽन्यदापि तदकारित्वं शिलाशकलादौ स्वरूपायोग्यत्वप्रयुक्तम् न त्वेकदा तज्जनकत्वप्रयुक्तम् एकदा कारिणश्च स्वरूपयोग्यस्य यावत्सत्त्वं करणं यावत्सत्त्वं सहकारिसमवधानप्रयुक्तमित्यर्थः ।

रघु० टी० । अथ यज्जातीयमेकदा यत्करोति तज्जातीयं सर्वं यावत्सत्त्वं तत् करोति यज्जातीयं किञ्चिद्यावत्सत्त्वं यन्न करोति तज्जातीयं किमपि कदापि तन्न करोतीति तत्राह । इयमपीति । इय प्रसङ्गस्य विपर्ययस्य च साधनम् । अनियमेति । अङ्कुरकारिणामङ्कुराकारिणां च बीजजातीयानां भवताप्यङ्गीकारादिति भावः । अन्यथासिद्धं व्याप्यत्वासिद्धम् । एकान्तेति । सामर्थ्यं स्वरूपयोग्यता सहकारियोग्यता च । अत्यन्ताकरणं यावत्सत्त्वमकरणम् । तथा च शिलादेः सहकारिसहितस्याप्यकरणं स्वरूपायोग्यत्वात् स्वरूपयोग्यस्य च बीजादेरकरणं सहकारिवैकल्यात् तस्य चात्यन्तिकत्वकादाचित्कत्वाभ्यामकरणस्याप्यात्यन्तिकत्वकदाचित्कत्वे इत्यर्थः ॥

एतेन यद्यत्करोति तत्तदुत्पन्नमात्रं यथा कर्मविभागं यदुत्पन्नमात्रं यन्न करोति तन्न कदाचिदपि यथा शिलाशकलमङ्कुरमिति निरस्तम्। अत्रापि पूर्ववदनैकान्तान्यथासिद्धौ दोषा[1]विति ॥

शङ्क० टी०। सत्त्वक्षणिकत्वव्याप्तिग्रहानुकूलमेव प्रसङ्गविपर्ययान्तरमाशङ्क्य निराकरोति। एतेनेति। पूर्ववदितिजात्यभिप्रायेणानैकान्तिकत्वं न हि बीजजातीयमुत्पन्नमात्रमेव करोति। या च व्यक्तिरुत्पत्त्यनन्तरमेव करोति तत्र तत्तत्सहकारिलाभस्तत्त्वमित्यर्थः[2]।

भगी० टी०। उक्तयुक्त्यैव प्रसङ्गविपर्ययान्तरं निराकरोति। एतेनेति ॥

रघु० टी०। एतेनेत्यादि। उत्पन्नमात्रं करोति तन्न कदाचिदपि तत् करोति उदाहरणाभ्यां तदनुरूपावुपनयावपि सूचितौ। पूर्ववदिति जात्यभिप्रायेऽनेकान्तः व्यक्त्यभिप्राये चान्यथासिद्धिर्दोषः॥

---

नापि तृतीयः कृतकत्वानित्यत्वादेरपि[3] परस्पराभाववत्तामात्रेणैव विरोधप्रसङ्गादिति ॥

(१) अन्यथासिद्धदोषौ— पा० १ पु०।
(२) तत्त्वमित्यर्थः— पा० ३ पु०।
(३) कृतकत्वानित्यत्वयोरपि— पा० १ पु०।

शङ्क० टी०। तदन्ता वा दण्डिकुण्डलिवदिति यत्पूर्वं विकल्पितं तद्दूषयति। नापीति। विरोधप्रसङ्गादिति। तथा च तदुभयाभ्यामाधीनधर्मिभेदप्रसङ्गादित्यर्थः॥

भगी० टी०। नापीति। तदन्ता वा दण्डिकुण्डलि-वदिति पक्षोऽपि नेत्यर्थः। परस्परेति। अन्योन्याभावस्य तयो-रपि सत्त्वेनेत्यर्थः॥

रघु० टी०। तदन्तेति पक्षं दूषयति। नापीति।

---

**अस्तु तर्हि तस्यैव तेनैव सहकारिणा सम्बन्धोऽसम्बन्धश्चेति विरोधः न विकल्पानुपपत्तेः। तथाहि सम्बन्धिनः सम्बन्ध्यन्तरे स्वाभावस्वाभाव्यं वा विरुद्धोत अभावप्रतियोगित्वं वा तदैवेति सहितं वा तत्रैवेति सहितं वा उभयसहितं वा तथैवेति सहितं वेति॥**

शङ्क० टी०। सहकारिसमवधानात् समवधानाधीने करणा-करणे इति यत् समाहितं तत्रापि विरोध इत्याह। अस्तु तर्हीति। सम्बन्धिन इति। सहकारिसमवधानं तावन्न सम्भवति यत एकस्य सहकारिणः सहकार्यन्तरमभावस्वरूपमेव न च भावा-भावयोः समवधानसम्भावनेत्यर्थः। असमवधाने विरोधमाह। अभावेति। (विरुद्धत इति सम्बद्धते सहकारिणो यद्यभावः

स्यात् तदा तदसमवधानं स्यात् तदेव तु नास्ति नहि भावस्याप्यभावप्रतियोगित्वं सम्भाव्यते विरोधादिति द्वितीयविकल्पार्थः। भवतु वा भावस्याप्यभावप्रतियोगित्वं तथापि स्वावच्छिन्न एव काले स्वाभावः कथं भवेत् येन विद्यमानेनापि क्षेत्रेण बीजस्य समवधानं न भवेदिति तृतीयविकल्पार्थः। ननु भवतु विद्यमानस्यापि तत्कालोऽप्यभावोऽस्तु तथापि यत्रैव प्रतियोगी तत्रैव तदभावो विरुद्ध इति चतुर्थविकल्पार्थः। यत्र काले यत्र देशे यः प्रतियोगी तस्य तत्र तदानीमभावो विरुद्ध इति पञ्चमविकल्पार्थः। यदवच्छेदेन यदा यत्र प्रतियोगी तदवच्छेदेनैव तदैव तस्यैवाभावो विरुद्ध इति षष्ठविकल्पार्थः। सम्बन्धिन इति। सहकारिसमवधानं तावन्न सम्भवति यत एकस्य सहकारिणः सहकार्यन्तरमभावस्वरूपमेव न च भावाभावयोः समवधानसम्भावनेत्यर्थः। समवधाने विरोधमाह। स्वभावेति।)[१] विरुद्ध्यत इति सम्बद्ध्यते। सहकारिणो यद्यभावः स्यात् तदा तदसमवधानं स्यात् तदेव तु नास्ति नहि भावस्याप्यभावो विरोधादित्यर्थः। भवतु वा भावस्याप्यभावो विरुद्ध इत्याह। तदेवेति। अत्राभावप्रतियोगित्वं विरुद्ध्यत इत्यनुषङ्गः। एवं परत्रापि भवतु वा भावसमानकालीनोऽप्यभावस्तथापि यत्रैव भावस्तत्रैव तदभावः कथं स्याद्विरोधादित्याह। तत्रैवेति। कालभेदेनैकदेशत्वसम्भवेऽपि यदा यत्र यत्सत्त्वं तदैव तस्य तत्रासत्त्वं विरुद्धमित्याह। उभय-

(१) ( ) कुण्डलीस्थं पाठान्तरं तृतीयादर्शपुस्तकेऽधिकं दृश्यते।

सहितमिति । येनावच्छेदेन प्रतियोगं तेनैवावच्छेदेन तत्रैव तदभावो न सम्भवतीत्याह । तथैवेति ॥

भगी॰ टी॰ । नन्वेकत्र करणाकरणे सहकारिसमवधाना-समवधानाभ्यामुपपाद्येतयोरेवैकत्र विरोधादसंसर्ग इत्याह । अस्त्विति । तथाहीति । एकस्य सम्बन्धिनः स्वकीयाभावतादात्म्यं सम्बन्ध्यन्तरे विरुध्यते एकत्र सम्बन्धासम्बन्धयोः सत्त्वाभ्युपगमे सम्बन्धस्य स्वाभावतादात्म्यमेवाभ्युपेतं स्यात् । तथा च भावस्य स्वाभावप्रतिक्षेपस्वभावत्वं विरुद्धमित्यर्थः । अभावेति । यत्र सम्बन्धिनि बीजादौ सहकारिणामभावप्रतियोगित्वं तत्रैव तद-प्रतियोगित्वं विरोधित्वमित्यर्थः । सामान्यतो विरोधं विशेषतो विकल्पयति । तदेवेति । सहितमित्यत्र सर्वत्राभावप्रतियोगित्व-मित्यनुषज्यते । भावकाल एवाभावप्रतियोगित्वं वेत्यर्थः । तथैवेति । येनैव प्रकारेण सम्बन्धस्य यत्राभावस्तेनैवेति सहितं वेत्यर्थः ॥

रघु॰ टी॰ । वारिबीजादीनां सम्बन्धः संयोगोऽभ्युपेयते स च सम्बन्धिस्वरूपः । निरन्तरोत्पन्नक्षणिकाभ्यां ताभ्यामेव मिथः संयुक्तप्रत्ययादिसम्भवेऽतिरिक्ते मानाभावात् । अभावोऽपि चाधि-करणस्वरूप एव एकत्र च सम्बन्धतदभावोपगमे सम्बन्धात्मकस्य तस्य सम्बन्धाभावात्मकत्वं स्यात् न च स्वं स्वस्याभावो भवितुमर्हतीत्याह । सम्बन्धिन इति । सम्बन्ध्यन्तरे कदाचिदसत्त्वे तस्य । अभावेति । नाभावो विद्यते सत इति न्यायादिति भावः । अभावप्रति-

योगित्वमिति परत्र सर्वत्रानुषज्यते। तदा स्वकाले तत्र स्वदेशे। उभयेति। स्वाकाल एव स्वदेश इति। तथैव स्वकाले स्वदेशे स्वावच्छेदकावच्छेदेनेति॥

न प्रथमः अनभ्युपगमात्। न द्वितीयः सत्कार्यप्रतिषेधात्[(१)]। न तृतीयः प्राक्प्रध्वंसाभावयोर्भावसमानकालत्वानभ्युपगमात्। न चतुर्थः स हि न तावत् स्थितियौगपद्यनियमेन सम्बन्धिनोस्तदसिद्धेः इत एव तत्सिद्धावितरेतराश्रयत्वं नियमसिद्धौ हि विरोधसिद्धिः तत्सिद्धौ च भेदे सति नियमसिद्धिरिति। न चान्यतस्तत्सिद्धिस्तदभावात् अनियतोपसर्पणापसर्पणकारणप्रयुक्तत्वाच्च सम्बन्धासम्बन्धयोः नापि विनाशस्य अहेतुकत्वात् अयं विरोधोऽर्थात् सिद्ध्यति तस्याप्यसिद्धेः ध्रुवभावित्वे तु वक्ष्यामः। नापि पञ्चमः न हि तदेव तत्रैव स एव सहकार्यस्ति नास्ति चेति अभ्युपगच्छामः।

शङ्क० टी०। अनभ्युपगमादिति। सम्बन्ध्यन्तरमेव सम्बन्ध्यन्तरस्याभाव इति नाभ्युपगम्यते अधिकरणस्वभावस्याभावो न भवतीति निषेत्स्यत एवेति भावः। सत्कार्येति। अभावप्रतियोगित्वं भावस्य नास्तीत्यभ्युपगमे तव सांख्यमतप्रवेशेऽप्यपसिद्धान्तः क्षणिकत्वसाधनविरोधोऽनुभवविरोधश्चेत्यर्थः। प्रागिति। प्रागभाव-

(१) प्रतिक्षेपात्— पा० ७ पु०।

प्रध्वंसयोः प्रतियोगिसमानकालत्वानुपपत्तावप्यत्यन्ताभावमादाय सहकार्यसमवधानसम्भवात् । सहकारिप्रागभावप्रध्वंसावपि प्रतियोगिभिन्नकालावादाय तथा सम्भवादित्यर्थः । स हीति । विरोधे यदि सहकारिणा स्थितियौगपद्यनियमो भवेत् तदैकसहकारिदेशे सहकार्यन्तराभावो न भवेत् स च नास्तीत्यर्थः । ननु प्रतियोगितदभावयोः समानदेशत्वविरोधादेव स्थितियौगपद्यनियमः स्यादित्यत आह । इत एवेति । तदेव स्फुटयति[१] । नियमेति । तत्सिद्धौ विरोधसिद्धौ भेदे सति क्षणभङ्गे सति नियमसिद्धिरित्यर्थः । क्षणभङ्गे सति सहकारिणां तथोत्पादनियमाद्यौगपद्यं सिद्ध्येत् स एवाद्यापि न सिद्ध इत्यर्थः । ननु विरोधादेव स्थितियौगपद्यं मासैत्वीदन्यत एव कुतश्चित्प्रमाणात् सिद्ध्यतु तदित्यत आह । न चेति । तदभावादिति । प्रमाणान्तराभावादित्यर्थः । ननु सहकारिणां यौगपद्यमेव कथं न भवतीत्यत आह । अनियतेति । ननु ध्वंसस्य प्रतियोगिभिन्नं कारणं नास्ति तथा च स्वोत्पत्त्यव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगित्वे क्षणिकत्वे सिद्धे पुञ्जात् पुञ्जोत्पत्तिसिद्धावर्थादेव सहकारिणां स्थितियौगपद्यनियमः सेत्स्यतीत्याह । नापीति । तस्यापीति । विनाशस्याहेतुकत्वस्येत्यर्थः । ननु विनाशो भावानां ध्रुवभावी तथा च कुतो हेत्वन्तरापेक्षेत्यत आह । ध्रुवभावित्व इति । उभयसहितं वेति दूषयति । नापीति ॥

---

(१) तदेव स्पष्टयति— पा० ३ पु०

भगी० टी०। अनभ्युपगमादिति। सम्बन्धान्तरे सम्बन्धस्य स्वाभावतादात्म्यानभ्युपगमादित्यर्थः। भेदेन तयोरनुभवाच्चेति भावः। सत्कार्येति। करणाकरणयोरिव कालभेदेनैकत्र तत्सत्त्वे ऽप्यन्यदाभावप्रतियोगित्वं न विरुद्धं कालभेदेऽपि तदाविरोधः स्याद्यदि नाभावो विद्यते सत इत्यादि मयाभ्युपगम्येतेत्यर्थः। प्रागिति। ध्वंसप्रागभावयोरेककालवृत्तित्वं नाभ्युपगम्यत एवेत्यत्यन्ताभावप्रतियोगिनोस्तद्विरुद्धं वाच्यम् तच्च देशभेदेनैवाविरुद्धमित्यर्थः। प्रागित्यत्राभाव इति योज्यम्। स हीति। स विरोधः क्षणिकत्वे हि वस्तूनां स्वरूपयोग्यस्य सहकारिस्थितियौगपद्यनियमः सहकार्यनियमः[1]। स्वरूपायोग्यस्यैवैकत्र सहकारिसम्बन्धासम्बन्धरूपविरुद्धधर्मसंसर्गः स्यात् तदेव त्वसिद्धमित्यर्थः। परस्पराश्रयत्वं विवृणोति। नियमसिद्धाविति। तयोत्पादरूपस्थितियौगपद्यनियमसिद्धावित्यर्थः। ननु सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गात् क्षणभङ्गसिद्धौ सम्बन्धिनः स्थितियौगपद्यनियमः स्यादित्यत आह। न चेति। तयोरविरोधस्य साधितत्वादित्यर्थः। तथाप्येकत्र सम्बन्धासम्बन्धौ कुतस्त्यावित्यत आह। अनियतेति। अहेतुकत्वादिति। प्रतियोगिभिन्नहेत्वनपेक्षत्वादित्यर्थः। अर्थादिति। उत्पत्त्यनन्तरं कारणविलम्बान्नाशे विलम्ब स्यात् स च नास्त्येवेत्युत्पत्त्यव्यवहितोत्तरक्षणवर्त्तिध्वंसप्रतियोगित्वे भावानां सिद्धे स्थितियौगपद्यनियमोऽपि सिद्ध इत्यर्थः। ध्रुवभावित्वाच्च यथा न नाशस्याहेतुकत्वसिद्धिस्तथोपरिष्टादच्यामह

(१) सहकार्यसम्बन्धः— पा० २ पु०।

इत्याह । ध्रुवेति । तथैवेति । सहितमित्ययमपि पक्षोऽनभ्युपगमेनैव निरस्त इति पृथङ् न दूषितः नास्ति चेत्यतो विरोध इत्यध्याहार्थम् ॥

रघु० टी० । अनभ्युपगमादिति । अनन्तरोत्पाद[1]क्षणिकत्वयोरसिद्ध्या संयोगस्य धर्मिवृत्तित्वानुगतप्रतीत्या चाभावस्यातिरिक्तस्य सिद्धेरिति भावः । प्रागसत एव कार्यस्योत्पत्तेः प्रामाणिकतया त्वयापि सत्कार्यत्वनिषेधादित्याह । सत्कार्येति । प्रागित्यादि । संयोगिनि संयोगस्य प्रागभावध्वंसयोः कालभेदेनैव वृत्त्युपगमात् अत्यन्ताभावस्य चावच्छेदभेदेन वृत्तौ विरोधाभावादिति भावः । स हीति । स विरोधः सम्बन्धिनोरेकतरसम्बन्धिसत्त्वकाले नैरन्तर्येणापरस्य सम्बन्धिनोऽवश्यं सत्त्वमित्येवं रूपेण नियमेन तावन्न सिद्ध्यति यतस्तदसिद्धरुक्तरूपनियमासिद्धेः । इत एव विरोधादेव नियमसिद्धावुक्तरूपनियमसिद्धौ । तत्सिद्धिः विरोधसिद्धिः । तत्सिद्धौ विरोधसिद्धौ । भेदे सति सम्बन्धासम्बन्धलक्षणविरुद्धधर्माध्यासाद्धर्मिभेदे सिद्धे सतीत्यर्थः । एतावता चक्रकेऽपि परस्पराश्रयत्वमक्षतम् । मानान्तरान्नियमसिद्धं निराकरोति । न चेति । ननु प्रथमं सम्बद्धस्यासम्बद्धस्य वा पश्चात् कथमसम्बद्धत्वं सम्बद्धत्वं चेत्यत आह । अनियतेति । अहेतुकत्वात् प्रतियोग्युत्तरभावित्वेऽनपेक्षितत्वात् । अर्थादुत्पत्त्यनन्तरमेव भावानां नाशादेकस्य कालभेदेनापि सम्बन्धासम्बन्धायोगात् तस्याहेतुत्वस्य । ननु यद्यस्य ध्रुवभावि तत्तदुत्पत्त्यनन्तरमेव

(१) निरन्तरोत्पाद — पा० २ पु०

जायते यथास्माकं समर्थस्य कार्थं भवतां च द्रव्यादेः परिमाणादि ध्रुवभावौ च भावस्य विनाश इत्यतोऽर्थाद्विरोधः सेत्स्यतीत्यत आह । ध्रुवेति । नष्टौत्यादिकं व्याप्यवृत्त्यभिप्रायेण ॥

---

ननु समवधानं नाम सहकारिणां धर्मः संयोगो भवद्भिरिष्यते स च तेभ्यो व्यतिरिक्तोऽव्याप्यवृत्तिश्चेत्यपि। तथा च स एव तदैव तत्रैवास्ति नास्ति चेति अनतिरेके स्थिरवादिनो व्यस्तान्यपि बीजवारिधरणिधामानि तान्येवेति तेभ्योऽपि कार्योत्पत्तिप्रसङ्गः। व्याप्यवृत्तित्वे च सर्वत्र रक्तादिविभ्रमः शब्दादिकार्योत्पत्तिप्रसङ्गश्च। तस्मादसंयुक्तेभ्योऽन्य एव संयुक्तस्वभावाः परमाणवो जाता इत्येव न्यायः। नैतदेवं क्षणिकपरमाणावप्यस्य विरोधस्य दुर्वारत्वात्। तथाहि पूर्वदिगवस्थितः परमाणुर्यथा परदिगवस्थितेन परमाणुना ऽपरदिगवच्छेदेनावृतरूप उत्पन्नः तथैव किं पूर्वदिगवच्छेदेनापि न वा उभयथा वा आद्ये उभयतोप्यनुपलब्धिप्रसङ्गः द्वितीये तु उभयतोप्युपलम्भापत्तिः तृतीये पुनः स एव दुरात्मा विरोधः स एव तेनैव तदैवावृतोऽनावृतश्चेति ॥

शङ्क० टी०। एतावता प्रघट्टकेन सहकारिसमवधानासमवधानाधीने करणाकरणे इति यदुक्तं तत्समाहितं तथैवेति।

सहितं वेति षष्ठं[१] पक्षं परप्रतिवन्दिमुखेन समाधित्सुः प्रतिवन्दिन-मुत्थापयितुं पीठं रचयति । नन्विति । न हि तदैव तत्रैव स एवास्ति नास्ति चेत्यभ्युपगच्छाम इति यदुक्तम् तत्संयोगे शब्दे ज्ञानादावभ्युपगमेन तवापसिद्धान्त इति पूर्वपक्षिणोऽभिसन्धिः । तेभ्य इति । सहकारिभ्य इत्यर्थः । इत्यपीत्यतो[२] भवद्भिरिष्यते इत्यनुषङ्गः । व्यस्तान्यपीति । विशकलितान्यपीत्यर्थः । रक्तादीति । अरक्तेऽपि भागे महारजनसंयोगस्य व्याप्यवृत्तितया[३] रक्तधी[४]-प्रसङ्ग इत्यर्थः । संयोगाकाशसंयोगस्य च सकलाकाशवृत्तितया सर्वत्र शब्दोत्पत्तिप्रसङ्गः विभुकार्याणामसमवायिदेशानुरोधित्वात् । आदिपदेन सुखदुःखादिसङ्ग्रहः[५] स्वसिद्धान्तानुसारेणोपसंहरति । तस्मादिति । यद्वा तस्मादित्यतिरिक्तसंयोगपक्षे विरोधादक्ता-दित्यर्थः । संयुक्तस्वभावा इति । अविरलदेशेनोत्पन्नाक्षणिक-परमाणव एव तथोत्पादाद् घटपटादिभावमापन्ना इत्यर्थः । अस्य विरोधस्येति । आवृतानावृतरक्तारक्तादिविरोधस्येत्यर्थः । आद्य इति । उभयदिगवच्छेदेनानावृतत्व इत्यर्थः । द्वितीय इति । क्वचिदावृतः क्वचिदनावृत उत्पन्न इत्यर्थः ॥

---

भगी० टी० । संयोगस्यानतिरेकव्याप्यवृत्तित्वे क्रमेण दूष-यति । अनतिरेक इति । रक्तादीति । शुक्लपटे रक्तत्वभ्रम-

(१) पूर्वे— पा० ३ पु० (२) इत्यतोपीत्यतो— पा० २ पु० ।
(३) सर्ववृत्तितया— पा० २ पु० । (४) रक्तत्व— पा० २ पु० ।
(५) सुखदुःखादिपा०ग्रहः— पा० २ पु० ।

निमित्तं सहारञ्जनसंयोगः स यदि व्याप्यवृत्तिः स्यात् तदा समग्र एव पटे रक्तधीः स्यात् तथा भेर्याकाशसंयोगस्य शब्दासमवायिकारणस्य नभोवृत्तित्वे सर्वत्र शब्दोत्पत्तिः स्यात् यावति देशे विभुकार्याणामसमवायिकारणं तावति कार्यविशेषभावादित्यर्थः। आवृतानावृतत्वादिबोधादवयव्यभावे परमाणुसमूहो घटस्तेषां परमाणूनामतीन्द्रियत्वेऽपि तथोत्पादात् प्रत्यक्षत्वसिद्धिरिति बौद्धसिद्धान्तादाह। तथाहीति। न वेति। उभयदिगवच्छेदेनानावृत एवेत्यर्थः। यत् क्रमयौगपद्याभ्यामर्थक्रियासु नोपयुज्यते तदसद् यथा कूर्मरोम तथा चाक्षणिकं शशविषाणादौ त्वचापि प्रसङ्गविपर्ययोः साध्याविशिष्ट्यसन्वये व्याप्त्यभावेऽपि व्यतिरेकेऽपि तदभावः॥

---

रघु० टी०। पक्षमपि प्रतिवन्दिमुखेनानभ्युपगमादेव निरसितुमाशङ्कते। नन्विति। इत्यपौत्यस्यार्थो भवद्भिरिष्यते नास्ति चेतीत्यस्याग्रे विरोध इति शेषः। सर्वत्रेति। तत्तत्कार्योत्पत्तिनियामकानां सहारञ्जनभेर्यादिसंयोगानां सकलावयवदिग्देशाद्यवच्छेदेन वृत्तौ तत्तत्कार्याणामपि तथैवोत्पत्तिप्रसङ्गादित्यर्थः। परमाणवः। क्षणिकपरमाणुपुञ्जरूपा वारिबीजादयः कार्यविशेषसमर्था जाता इति। न चेति। परदिगवच्छेदेनाप्यनावृतरूप इत्यर्थः। उभयथा वेति। परदिगवच्छेदेनावृतरूपः पूर्वदिगवच्छेदेन चानावृतरूप इत्यर्थः॥

---

प्रकारभेदमुपादायाविरोध इति चेत् कः पुनरसौ[१] दिगन्तरावच्छेदः। यदि हि यद्दिगवच्छेदेनैव संयुक्तस्तद्दिगवच्छेदेनैवासंयुक्तोऽपि ततो विरोधः स्यात् इह तु नैवमिति चेत् हन्त संयोगसंयोगिनोर्भेदपक्षेऽपि यद्ययं सिद्धान्तवृत्तान्तः स्यात् कीदृशो दोष इति। एतेन व्यतिरेकपक्षोऽपि निरस्तः।

शङ्क० टी०। कश्च पुनरसाविति प्रश्नः दिगन्तरावच्छेदेन इत्युत्तरम् अयं सिद्धान्तवृत्तान्त इति अङ्गुल्यवच्छेदेन महारजनसंयोगेऽपि दशावच्छेदेन तदभावान्न सर्वत्र रक्तविभ्रम इत्यर्थः। एतावता तथैवेति सहितं वेति पक्षः पक्षोऽभ्युपगमेन निरस्त इति सिद्धं सहकारिसमवधानासमवधानप्रयुक्तं करणाकरणं एकस्यामेव व्यक्ताविति। एतेनेति। सत्त्वक्षणिकत्वयोरन्वयव्याप्तिभङ्गेनेत्यर्थः। यन्न क्षणिकं तन्न सत् यथा शशविषाणमिति व्यतिरेकव्याप्तिस्त्वया वाच्या। केवलान्वयिनोऽनभ्युपगमात्। व्यतिरेकव्याप्तिश्चान्वयव्याप्तिव्याप्ता सा चेन्नास्ति तदा व्यतिरेकव्याप्तिरपि नास्तीति भावः॥

---

भगी० टी०। सन्दिग्धासिद्धत्वादिदूषणमेवेत्याह। एतेनेति।

---

रघु० टी०। पृच्छति कः पुनरिति। उत्तरयति दिगन्तरेति।

(१) कश्च पुनरसौ— इति शङ्करमिश्रसम्मतः पाठः।

एतेन व्याप्तिविरहेण। व्यतिरेकपक्षः यत् क्रमयौगपद्यरहितं तदसत् यथा शशविषाणं क्रमयौगपद्यरहितश्च स्थिरो भाव इति स्थिराणां सत्त्वव्यतिरेकसाधनम् ॥

---

**अधिकस्य तत्राश्रयहेतुदृष्टान्तसिद्धौ प्रमाणाभावः अवस्तुनि प्रमाणाप्रवृत्तेः प्रमाणप्रवृत्तावलीकत्वानुपपत्तेः। एवं तर्ह्यव्यवहारे स्ववचनविरोधः स्यादिति चेत् तत् किं स्ववचनविरोधेन तेषु प्रमाणमुपदर्शितं भवति व्यवहारनिषेधव्यवहारो वा खण्डितः स्यात् अप्रामाणिकोऽयं व्यवहारोऽवश्याभ्युपगन्तव्य इति वा भवेत्।**

शङ्क० टी०। अधिक इति। अन्वयव्याप्त्यपेक्षयात्र बहूनि दूषणानीत्यर्थः। तान्येवाह। आश्रयेति। आश्रयपदं साध्याभावपरं तदाश्रित्य व्यतिरेकव्याप्तिप्रवृत्तेः हेतुपदं साधनाभावपरं तद्विपर्ययस्य हेतुत्वोपगमात् दृष्टान्तपदं स्फुटार्थमेव। तथा च शशविषाणादौ साध्याभावो न साधनाभावो नवा शशविषाणादि प्रमाणगणगम्यमित्यर्थः। यद्वा अक्षणिकमसत् क्रमयौगपद्याभ्यामर्थक्रियारहितत्वात् कूर्मरोमवदित्याश्रयासिद्धिः सन्देहसिषाधयिषयोरभावात्। अत एव हेत्वसिद्धिः। व्याप्तिपक्षधर्मताविशिष्टस्यैव हेतुत्वात्। एवं तर्हीति। प्रमाणसाध्य एव व्यवहारस्तदेत्यर्थः। तथा च ज्ञानमात्रं व्यवहाराङ्गं न तु प्रमैवेति भावः। अलीके कोऽपि

व्यवहारो न संभवति इति वदतस्तव स्ववचनविरोधः । अस्यैव व्यवहारस्याभ्युपगमादित्याह । स्ववचनेति । तत्किमिति । प्रमाणाधीन एव व्यवहारस्त्वया न व्यवहारनिषेधव्यवहारः क्रियते । तन्नूनं शशविषाणाद्यपि प्रामाणिकमित्यायातमित्यर्थः । व्यवहार निषेधेति । प्रमाणमन्तरेण व्यवहारनिषेधव्यवहारोऽप्ययमनुपपन्न इत्यर्थः । अप्रामाणिकोऽपीति । अप्रामाणिकोऽपि व्यवहारश्चेत् त्वया नेष्यस्तदा तव स्ववचनविरोधो भवेदित्यर्थः ॥

भगी॰ टी॰ : अधिकञ्चेति । पूर्वानुमाने हेत्वाश्रयदृष्टान्तासिद्धिः स्फुटैव । यदि त्वत्क्षणिकमसत् क्रमयौगपद्याभ्यामर्थक्रियारहितत्वात् कूर्मरोमवदिति ब्रूयात् तदा क्षणिकत्वरूपसाध्याप्रसिद्धा पक्षविशेषणस्याश्रयाभावादाश्रयासिद्धिः अत एव हेत्वभावः व्याप्तपक्षधर्मस्यैव हेतुत्वात् दृष्टान्तासिद्धिरप्यत एव साध्याप्रसिद्धा साध्याभावव्यापकाभावप्रतियोगित्वग्रहस्यत्वाभावात् । ननु साध्यज्ञानमात्रं तद्व्यतिरेकग्रहोपयिकं न तु साध्यप्रमा शशशृङ्ग नास्तीति व्यवहारात् अन्यथा न तत्र व्यवहार इत्यपि वचन व्याहतम् अस्यैव व्यवहारस्य सत्त्वात् तथा चाश्रयादौ प्रमाणा प्रवृत्तावपि नोक्तदोष इत्याह । एवं तर्हीति । तत् किमिति । नहि तत्र व्यवहारः प्रामाणिकः सम्भवति अलीकानामकारणतया प्रत्यक्षाविषयत्वात् व्याप्तिग्राहकतादात्म्यतदुत्पत्त्योरभावेऽनुमानासम्भवादित्यर्थः । व्यवहारनिषेधेति । अवस्तुविषयकस्य व्यवहारस्य यो निषेधरूपो व्यवहारः सोऽपि खण्डितः तथा च व्यवहार निषेधोऽपि तत्र न कर्तव्य इत्यर्थः ॥

रघु०टी०। आश्रयः पक्षः स्थिरो भावस्तस्यासिद्धिस्तत्स्वरूपस्य परेण प्रामाणिकत्वानभ्युपगमात्। यत् तदस्त्विति नहि विरोधसहस्रेणापीत्यादि। तद्विशेषणस्यासत्त्वलक्षणस्य साध्यस्याप्रसिद्धा च हेत्वसिद्धिः हेतोः क्रमादिविरहस्याप्रसिद्धिः सति त्वया तदनभ्युपगमादसतः प्रमाणागोचरत्वात् पक्षस्य हेतोश्चाप्रसिद्धा पक्षधर्मत्वासिद्धिश्च दृष्टान्तासिद्धिर्दृष्टान्तस्यालीकस्याप्रसिद्धिः तस्य साध्यसाधनयोश्चाप्रसिद्धा च तत्र तदुभयवत्त्वाप्रतीतिः अलीकत्वाद्यास्येवासति पक्षादौ प्रमाणमनुमानं पुनरसत्ख्यात्येव व्यवहारवत् प्रवर्तते। अथ व्यवहारोपि प्रमाणाधीन एव तत्राह। एवं तर्हीति। स्ववचनमसत्याश्रयादौ प्रमाणाभाव इति वचनम्। व्यवहारेति। तेष्वित्यनुषज्यते॥

न तावत् प्रथमः न हि विरोधसहस्रेणापि स्थिरे तस्य क्रमादिविरहे वा शशशृङ्गे वा प्रत्यक्षमनुमानं वा दर्शयितुं शक्यं तथात्वे वा कृतं भीतकलहेन, द्वितीय[1]स्त्विष्यत एव प्रामाणिकैः अवचनमेव तर्हि प्राप्तं किं कुर्मो यत्र वचनं सर्वथैवानुपपन्नं तत्रावचनमेव श्रेयः त्वमपि परिभावय तावन्निष्प्रामाणिकेऽर्थे मूकवावदूकयोः कतरः श्रेयान्[2]।

(१) द्वितीयं त्विष्यत – पा० क्वचित

(२) कतरः प्रामाणिक इति – पा० १ पु०

प्रक्ष० टी०। अक्षणिकमसत् क्रमयौगपद्यरहितत्वात् कूर्म-रोमवदित्यनुमाने पक्षसाध्यहेतुदृष्टान्तेषु प्रमाणानुपपत्तिमाह। नहीति। इन्द्रियसन्निकर्षाभावात् प्रत्यक्षानुपपत्तिर्व्याप्त्यभावा[1]-दनुमानानुपपत्तिरिति भावः। तथात्व वेति। प्रमाणोपदर्शने इत्यर्थः। भीतो वर्वरः भूताविष्टो वा। द्वितीयस्त्विति। व्यवहारा-भावः। व्यवहारखण्डनपक्ष इत्यर्थः। अप्रतिभानिग्रहस्थानमुद्भा-वयति। अवचनमेव तर्हीति। निरनुयोगमाह सिद्धान्ती किं कुर्म इति। उत्तरार्हे उत्तराप्रतिपत्तिरप्रतिभा इदं तूत्तरार्हमेव भवतीति नाप्रतिभेति भावः। एतदेवाह। त्वमपीति। अवचन मेवाच श्रेय इत्यर्थः। निःप्रामाणिक इति। वचनस्यापि मूलभूत प्रमाणसापेक्षत्वादिति भावः॥

भगी० टी०। क्रमादिविरहहेतौ शशशृङ्गे दृष्टान्ते अलीके मानाभावात् विधिव्यवहारवन्निषेधव्यवहारोऽपि नेष्यते शशशृङ्गं नास्तीति व्यवहारस्य च शशे शृङ्गं नास्तीत्यर्थ इत्याह। द्वितीय स्त्विति। नन्वेवमप्रतिभानिग्रहस्थानं प्राप्तमित्याह। अवचनमेवेति। अलीके वचनहेतुविवक्षाकारणस्याभावेन वचनं न सम्भवतीत्याह। किं कुर्म इति। न चाप्रतिवचनार्हे उत्तराप्रतिपत्तिरप्रतिभेति तल्लक्षणात् न वा त्वया साधनं किञ्चिदुक्तं यत्रानुत्तरादप्रतिभा स्यादित्याह। त्वमपीति।

---

(१) व्याप्तिग्रह भवतु - पा० ३ पु०।

रघु० टी०। शशशृङ्गे वेति। तस्य क्रमादिविरहे। असत्त्वे चेत्यपि द्रष्टव्यम्। तथात्वे वेति। प्रमाणप्रवृत्तावसत्त्वानुपपत्तेरिति भावः। अवचनमेवेति। तथा चाप्रतिभेति भावः। उत्तरार्हे उत्तराप्रतिपत्तिरप्रतिभा। न चेदमुत्तरार्हमित्याह। त्वमपीति॥

एवं विदुषापि भवता न मूकीभूय स्थितम् अपि तु व्यवहारः प्रतिषिद्ध एवासतीति चेत् सत्यम् यथा अप्रामाणिकः स्ववचनविरुद्धोऽर्थो माप्रसाङ्क्षीदिति मन्यमानेन त्वया अप्रामाणिक एवासति व्यवहारः स्वीकृतस्तथास्माभिरपि प्रमाणचिन्तायामप्रामाणिको व्यवहारो माप्रसाङ्क्षीदिति मन्यमानैरप्रामाणिक एव स्ववचनविरोधः स्वीक्रियते। यदि तूभयत्रापि भवान् समानदृष्टिः स्यादस्माभिरपि तदा न किञ्चिदुच्यत इति।

शङ्क० टी०। एवं विदुषापीति। अप्रामाणिकेऽर्थेऽत्र मूकतैव शरणमिति विदुषापीत्यर्थः। यथेति। सत्त्वं क्षणिकत्वव्याप्यमित्यस्माकं स्ववचनं तद्विरुद्धोऽर्थः सत्त्वे ऽसत्यपि शशविषाणादौ न क्षणिकत्वमिति विपक्षगामित्वप्रसङ्गात्। स माभूदेतदर्थं क्षणिकत्वव्यावृत्त्या सत्त्वव्यावृत्तिरप्रामाणिक्यवेति त्वया यथा व्यवह्रियते तथास्माभिरपि। क्षणिकत्वे किं प्रमाणमिति चिन्तायां त्वदुपदर्शितः शशविषाणादौ व्यतिरेकग्रहव्यवहारो मा प्रसक्तः स्यादित्येतदर्थं स्वमिथ्यात्वेऽय एवं बोध्यन्त इत्यर्थः। यदि त्विति। त्वं चेत्तत्र

व्यतिरेकव्याप्तिं न दर्शयसि तदा तत्र व्यतिरेकभङ्गाय मयापि न यतनीयमित्यर्थः॥

---

भगी॰ टी॰। ननु नावस्तुनि कस्यचिद्धर्मस्य विधिनिषेधव्यवहाराविति जानतापि तत्र व्यवहारो निषिध्यते न तु मूकत्वमालम्ब्यत इत्याह। एवमिति। यथेति। सामर्थ्यनिवृत्तिव्यवहार निषेधस्ववचनविरोधादेवाप्रामाणिकोऽर्थः शशशृङ्गादिस्तत्र निषेध व्यवहाराकरणे सोऽस्तीति भ्रान्तिरूपा प्रसक्तिः सा माभूदित्यभि मानाद्यथा तत्रानुमित्यर्थमप्रामाणिक एव व्यवहारः स्वीकृतस्तथा प्रमाभूतायामनुमितौ प्रमारूप एव लिङ्गपरामर्श करणमिति शिष्यशिक्षार्थं स्ववचनविरोधोऽङ्गीकृतः। न चेवं साध्यसिद्धिः स्याद्वाश्रयासिद्ध्यादिस्फादवस्थ्यादित्यर्थः॥

---

रघु॰ टी॰। यथेति। अप्रामाणिकः प्रमाणाविषयः स्ववचनविरुद्धः असति पक्षदृष्टान्तादौ प्रमाणाभावे ऽप्यसत्ख्यात्यैवान् मानं प्रवर्तत इति वचनविरुद्धोऽर्थः असति व्यवहारनिषेधरूपः अप्रामाणिकः प्रमाणामूलकः प्रमाणाविषयार्थको वा व्यवहारोऽसति शशशृङ्गादौ क्रमादिविरहासत्त्वादिव्यवहारः। प्रमाण चिन्तायाम् असदादौ प्रमाणं किमितिचिन्ताया व्यवहारोऽसति क्रमादिविरहादिव्यवहारः अप्रामाणिक इति प्रकृते विरोधस्याम-द्घटितत्वादसति प्रमाणाभावाद्विरोधोऽप्यप्रामाणिक इत्यर्थः। केचित्तु स्वोपदर्शितसत्त्वक्षणिकत्वव्याप्तिविरोधिनोऽक्षणिकसत्त्वस्य निराकर णाय क्षणिकत्वव्यावृत्त्या सत्त्वव्यावृत्तिरप्रामाणिकी यथा तथा।

व्यवह्रियते तथास्माभिरपि चणिकत्वेऽप्रमाणचिन्तायां त्वदुपदर्शितस्य शशशृङ्गादौ व्यतिरेकव्यवहारस्य निराकरणाय शिष्यादय एवं बोध्यन्त इत्यर्थ इत्याहुः। परे तु यत्र व्यवहारनिषेधे स्ववचनविरोधः स्यात् सोऽप्रामाणिकोऽर्थो मा प्रमाङ्क्षीदस्तीति भ्रमविषयो माभूदेतदर्थं यथा तत्रासत्त्वानुमित्यर्थमप्रामाणिको व्यवहारस्त्वया स्वीकृतस्तथा प्रमितादेव लिङ्गात् मत्यानुमितिर्भवतीति शिष्यबोधनायास्माभिरपि स्ववचनविरोधोङ्गीकृत इत्यर्थ इत्याहुः। यदि त्विति। असति व्यवहारनिषेध इवासतो दृष्टान्तत्वादिकमपि न संभवति प्रमाणविरहादिति प्रतिसन्धाय यदि भवानुक्तरूपमनुमानं न प्रयुङ्क्ते इत्यर्थः॥

---

तृतीये त्वप्रामाणिकस्याप्यवस्थाभ्युपगन्तव्यस्येति कस्येयमाज्ञेति भवानेव प्रष्टव्यः। व्यवहारस्य सुदृढनिरूढत्वादिति चेत् अप्रामाणिकस्य सुदृढनिरूढस्येति व्याघातः कथञ्चिदपि व्यवस्थितत्वादिति चेत् अप्रामाणिकस्येन्न कथञ्चिदपि व्यवतिष्ठते प्रामाणिकस्येत् तदेवोच्यतामिति वादे व्यवस्था।

श० टी०। अभ्युपगन्तव्यस्येति। अभ्युपगमस्य प्रमाणमूलकत्वस्थितेरित्यर्थः। नन्वभ्युपगमे प्रमामूलत्वं (?) न तन्त्रम् किन्तु निश्चयमूलत्वमात्रं निश्चयश्चासत्ख्यातिरूपोऽपि ततस्तदधीनो व्यवहारोऽपि प्रकृते स्यादित्याह। व्यवहारस्येति। अत्र विरोधमाह।

अप्रामाणिकश्चेति । सुदृढत्वमसङ्गृहीतसंवादत्व निरूढत्वमिदमित्थमेवेति गृहीतप्रामाण्यत्वम् । कथञ्चिदिति । संवृतिसिद्धत्वेनेत्यर्थः । अप्रामाणिकश्चेदिति । संवृतिरप्रमैव चेत् तदा तन्मूलोऽपि व्यवहारः कथं व्यवतिष्ठताम् । प्रमाख्पैव चेत् संवृतिस्तदा तन्मूलं प्रमाणमेवोच्यताम् । तच्च नास्तीति भावः । ननु जल्पवितण्डयोः परस्परजयार्थमप्रमाणेनापि व्यवह्रियत एव तत्कथं व्याघात इत्यत आह । वाद इति । वाद एव त्वया महाशयमुपक्रान्तः स्थिरं वा विश्वं क्षणिकं वेति तत्त्वनिर्णीषया तत्र कथम् अप्रमाणेन व्यवहरिष्यसीत्यर्थः । यद्वा वादकथायां स्ववचनविरोधो न निग्रहस्थानं नाप्यप्रतिभा किं तु न्यूनाधिकापसिद्धान्तहेत्वाभासपञ्चकानामेव तत्रोद्भावनीयत्वादित्यर्थः ॥

भगी॰ टी॰ । सुदृढत्वमबाधितविषयत्वम् । निरूढव्यवहारः स्वरूपानपहारः । कथञ्चिदिति । सांवृतत्वेनेत्यर्थः । अप्रामाणिकश्चेति । सांवृतेरप्रमाणतायां नावश्यस्वीकरणीयत्व प्रमाणत्वे च स एव व्याघात इत्यर्थः । वादकथा स्ववचनविरोधाङ्गीकारेऽपि प्रवर्तत एवेत्याह । वादेति ॥

रघु॰ टी॰ । सुदृढनिरूढत्वमिदमित्थमेवेति प्रमाविषयत्वं तत्किं स्वरूपत एव विषयतोऽपि वा आद्ये शशगवदवगादिवदभ्युपगम्यत एव शशविषाणं नास्तीत्यादिप्रत्यक्षसिद्धाः शब्दाः द्वितीये त्वाह । अप्रामाणिक इति । प्रमाणाविषयार्थक इत्यर्थः । कथञ्चिदिति । संवृतिसिद्धत्वादित्यर्थः । न कथञ्चिदिति । अप्रामाणिकस्य

सत्रतिसहस्रेणापि वास्तवीकरणायोगादित्यर्थः। तदेव प्रमाणमेव; वाद इति। स्ववचनविरोधेऽप्यसिद्धेन हेतुना निर्णयाजननात् वक्ष्यमाणा जल्पादिरीतिरिहापि न निवार्यत इति तात्पर्यम्।

---

जल्पवितण्डयोस्तु पक्षादिषु प्रमाणप्रश्नमात्रप्रवृत्तस्य न स्ववचनविरोधः तत्र प्रमाणेनोत्तरमनिष्टमशक्यं च अप्रमाणेनैव तूत्तरे स्ववचनेनैव भङ्गः मदुक्तेषु पक्षादिषु प्रमाणं नास्तीति स्वयमेव स्वीकारात्। अनुत्तरे त्वप्रतिभैवेति।

शङ्क० टी०। ननु न त्वया समं तत्त्वनिर्णयार्थमहं प्रवृत्तः किन्तु विजयार्थमेव तत्र च स्ववचनविरोधेनाप्रतिभया वा निगृहीत एवासीत्यत आह। जल्पेति। अनिष्टमिति। शशविषाणादेरपि प्रामाणिकत्वप्रसङ्गादित्यर्थः। तेन स्ववचनविरोधभङ्गीकृत्यापि प्रमाणमवश्यं प्रष्टव्योसि तत्र चोत्तरानुत्तरयोस्त्वमेव निग्राह्य इत्यर्थः। एतदेवाह। मदुक्तेष्विति।

भगी० टी०। नापि जल्पवितण्डयोः क्षणिकत्वसिद्धिरित्याह। जल्पेति। जल्पे विपक्षखलीकारमात्रमुद्देश्यं वादे तु तत्त्वनिर्णय उद्देश्य इति स्ववचनविरोधाङ्गीकारः। अनिष्टमिति। अक्षणिकस्यापि धर्मिणः प्रामाणिकत्वापत्तेः। अशक्यमिति। क्रमयौगपद्यविरहस्यालीके प्रमाणेन ग्रहणमशक्यमित्यर्थः।

रघु० टी० । जल्पेति । शशशृङ्गादिशब्दा हि पदविषया नार्थभेदबोधका असामयिकत्वात् वाक्यविषया तु तथात्वे शृङ्गादौ शशादिसंसर्गं बोधयेरन् तथा च नित्यः शब्द इत्यत्र शब्दे नित्यत्व इव शृङ्गादौ शशादिसंसर्गे प्रमाणप्रसरो न व्याहन्यत इति भावः । अनिष्टम् । प्रकृतपक्षादेः प्रामाणिकत्वानभ्युपगमात् । अशक्यम् । शृङ्गादौ संसर्गसाधकप्रमाणाभावात् ॥

**यदि च व्यवहारस्वीकारे विरोधपरिहारः स्यात् असौ स्वीक्रियेतापि न त्वेवं न खलु सकलव्यवहाराभाजनं च तन्निषेधव्यवहारभाजनं चेति वचनं परस्परविरोधि ।**

शङ्क० टी० । नन्वलौकिं स्ववचनविरोधभयेन सकलसङ्गीकृत्याप्रतिभा स्वीकृता । व्यवहार एव कथं तत्र नाङ्गीकृत इत्यत आह । यदि चेति । सकलविधिनिषेधव्यवहाराभाजनेऽलौकिकव्यवहारस्वीकारेऽपि विरोधस्य तादवस्थ्यादित्यर्थः । एतदेवाह । न खल्विति ॥

भगी० टी० । स्ववचनविरोधिनालौकिं व्यवहारोऽभ्युपेतव्य इत्यपि नास्ति तत्र निषेधव्यवहारस्वीकारेऽपि विरोधादित्याह । यदि चेति । न खल्विति । सकलव्यवहाराभाजने निषेधव्यवहारभाजनत्वस्य व्याहतत्वादित्यर्थः ॥

---

रघु० टी०। व्यवहाराभाजनत्वेन स्वयमभ्युपगते अलीके क्रमाद्यभावव्यवहारता त्वयापि स्ववचनविरोधः स्वदृष्मित एवेत्याह यदि चेति ॥

---

विधिव्यवहारमात्राभिप्रायेणाभाजनत्ववादे कुतो विरोध इति चेत् हन्त सकलविधिनिषेधव्यवहाराभाजनत्वेन किञ्चिद्व्यवह्रियते न वा उभयथापि स्ववचनविरोधः उभयथाप्यवस्तुनैव तेन भवितव्यम् वस्तुनः सर्वव्यवहारविरहानुपपत्तेः।

शङ्क० टी०। ननु येन सकलव्यवहाराभाजनत्वमलीकस्याङ्गीक्रियते तस्य तत्र निषेधव्यवहारं मया क्रियमाणं निषेधः स्यात् स्ववचनविरोधो मया तु विधिव्यवहाराभाजनत्वमात्रमङ्गीक्रियते तच्च तथा च सत्त्वक्षणिकत्वादिनिषेधव्यवहारं कुर्वतो मम कुतः स्ववचनविरोध इत्याह। विधीति। विधिव्यवहारमात्रेतिवदता त्वया विधिनिषेधव्यवहाराभाजनत्वेन न किञ्चिदङ्गीकरोमीति मात्रपदस्वरसः। तथा प्रतीयते च तावतापि तव स्ववचनविरोध एवेति विकल्प्यते। दर्शयति। हन्तेति। उभयथेति व्यवहाराव्यवहारयोरित्यर्थः। उभयथापीति। सकलविधिनिषेधव्यवहाराभाजनत्वव्यवहारो यस्मिन् धर्मिणि तदवस्तु कथं न स्यात्। यदि च सकलव्यवहाराभाजनत्वं व्यवह्रियते। तदा सकलव्यवहारभाजनत्व

क्वापि प्रसिद्धं प्रतिषिध्येत । तथा च यत्र प्रतीतं तदेवावस्तु कथं न स्यादित्यर्थः । उभयमभिप्रेत्याह । वस्तुन इति ॥

---

भगी० टी० । विधीति । सकलव्यवहाराभाजनत्वेन विधिव्यवहाराभाजनत्वमेव विवचितमतो निषेधव्यवहारभाजनत्वं तचाविरुद्धमित्यर्थः । उभयथापीति । सकलविधिनिषेधव्यवहाराभाजनत्वव्यवहारः क्वचित् प्रतीतो न वा अन्त्ये कथं निषेधः आद्ये तदाश्रयोऽपि प्रत्येतव्यः । तथा च सकलविधिनिषेधव्यवहाराभाजनत्वं च व्यवह्रियते चेति स्ववचनविरोध इत्यर्थः ।

रघु० टी० । विविधविधिव्यवहाराभाजनत्वमेवावस्तुनो वयमभ्युपगच्छाम इत्याशङ्कते । विधीति । तेनेति । सकलव्यवहाराभाजनेनेत्यर्थः ॥

**नेतिपक्षे सकलविधिनिषेधव्यवहारविरहीत्यनेनैव व्यवहारेण विरोधात् अव्यवहृतस्य निषेद्धुमशक्यत्वात् व्यवह्रियत इतिपक्षेऽपि विषयस्वरूपपर्यालोचनयैव विरोधात् न हि सर्वव्यवहाराविषयश्च व्यवह्रियते चेति ।**

शङ्क० टी० । नेतिपच इति । विधिनिषेधव्यवहारविरहित्वस्य निषेधस्य प्रतीत्यर्थं तदाश्रयप्रतीतेरावश्यकत्वात् । तथालीकमेवेत्यर्थः । अव्यवहृतस्येति । अप्रतीतस्येत्यर्थः । व्यवह्रियत इति । सकलविधिनिषेधव्यवहाराभाजनं च व्यवह्रियते चेति विषयस्वरूप-

मेव तथोपस्थितम् येन स्फुटतरः स्ववचनविरोध इत्यर्थः। एत-देवाह। नहीति॥

भगी० टी०। ननु विधिव्यवहाराभाजनत्वनिषेधव्यवहारा भाजनत्वाभ्यां न व्यवह्रियत इत्यत्र विरोधेऽपि न व्यवह्रियत इत्यत्र न विरोधव्यवहारनिषेधमात्रस्य विवक्षितत्वादित्यत आह। नेति पक्ष इति। तथापि न व्यवह्रियते तद्विरहितत्वव्यवहारस्येति विरोधस्तदवस्थ एवेत्यर्थः। ननु व्यवहारमात्रनिषेधात् तद्विर-हितत्वव्यवहारोऽपि नानुमत एवेत्यत आह। अव्यवहृतस्येति। प्रतियोगिव्यवहारनिरूपणं विना निषेधव्यवहारोऽपि तत्र न स्यादित्यर्थः। विषयेति। सकलविधिनिषेधव्यवहाराभाजनत्व-व्यवहारेणैव विरोध इत्यर्थः। तदेवाह। नहीति।

रघु० टी०। उभयथा विरोधं व्युत्पादयति। नेतीत्यादिना। सकलेति। सकलव्यवहारशून्यत्वं यत्र प्रतीतं तत्रैव तद्व्यवहारात् कथं सर्वत्र तद्व्यवहारनिषेधः। अथ न क्वापि तत्प्रतीतं तदा तद्व्यवहारस्याप्यप्रत्ययात् कथं निषेध इत्याह। अव्यवहृतस्येति। अज्ञातस्येत्यर्थः। विषयेति। सकलव्यवहाराभाजनस्य व्यवहारा-भावव्यवहाराभ्युपगमादित्यर्थः। तदेवाह। नहीति॥

यदि चावस्तुनो निषेधव्यवहारगोचरत्वं विधिव्यव-हारगोचरतापि किं न स्यात् प्रमाणाभावस्योभयत्रापि तुल्यत्वादिति। वन्ध्यासुतस्यावक्तृत्वे ऽचेतनत्वादिकमेव

प्रमाणं वक्तृत्वे तु न किञ्चिदिति चेन्न तत्रापि सुतत्वस्य विद्यमानत्वात्। न हि वन्ध्यायाः सुतो न सुतः तथा सति स्ववचनविरोधात्। वचनमात्रमेवैतत् न तु परमार्थतः सुत एवासाविति चेन्न अचैतन्यस्याप्येवंरूपत्वात्। चेतनादन्यत् स्वभावान्तरमेव ह्यचेतनमित्युच्यते चैतन्यनिवृत्तिमात्रमेवेह विवक्षितम् तच्च सम्भवत्येवेति चेन्न तत्राप्यसुतत्वनिवृत्तिमात्रस्यैव विवक्षितत्वात्।

शङ्क० टी०। यथा चालीके सत्त्वं क्षणिकत्वं च व्यतिरेकसिद्ध्यर्थं निषेध्यते तथा तयोर्विधिरेव कथं न क्रियते विधिवन्निषेधस्यापि प्रमाणाधीनत्वात्। निषेधव्यवहारे प्रमाणं शङ्कते। वन्ध्यासुतस्येति। अत्राश्रयासिद्धिः स्वरूपासिद्धिश्च द्वयोरपि प्रमाणाविषयत्वादिति यद्यपि तथापि परपरिहासाय सत्प्रतिपक्षमाह। तत्रापीति। वक्तृत्वेपीत्यर्थः। स्वरूपासिद्धिं निरस्यति। न हीति। तथा सतीति। असुतत्वे सतीत्यर्थः। वन्ध्यासुतो न वक्तेति वदता त्वयैव तत्सुतत्वाभ्युपगमादिति भावः। वचनमात्रमिति। अर्थशून्यमित्यर्थः। त्वया तु साधनत्वेनोपात्तं सुतरां न वचनमात्रं भवितुमर्हतीति स्वरूपासिद्धिरिति भावः। पर्युदासाभिप्रायेणाह। अचैतन्यस्यापीति। पर्युदासमेव विवृणोति। चेतनादिति। तथा च तत्रापि स्वरूपासिद्धिरेवेति भावः। प्रसज्यप्रतिषेधाभिप्रायेण शङ्कते। चैतन्येति। तथा चाभावस्यापि तुच्छत्वात्तुच्छत्वे च

तत्संभवान्न स्वरूपासिद्धिरिति भावः। तत्रापीति। असत्प्रयोग-ऽपीत्यर्थः। तन्मते ऽन्यापोह(१)स्यैवापदार्थत्वादिति भावः॥

---

भगी० टी०। किञ्चिद्विधिव्यवहारवन्निषेधव्यवहारोऽपि प्रमाणासाध्यत्वाविशेषादलीके न स्यादित्याह। यदि चेति। नन्वलीके प्रामाणिक एवाभावव्यवहारः स्यादित्याह। बन्ध्यासुतस्येति। बन्ध्यासुतेलीके ऽनलीकः प्रामाणिको निषेधव्यवहारो न सम्भवतीति दूषणं मत्वैवाह। तत्रापीति। तथा सतीति। बन्ध्यासुतस्यासुतत्वे सतीत्यर्थः। वचनमात्रमिति। मात्रपदेनार्थशून्यत्वमुक्तम्। बन्ध्यासुतपदमयोग्यत्वात्रान्वयबोधकमिति हेतोः स्वरूपासिद्धिरित्यर्थः। पर्युदासनञमाश्रित्याह। चेतनादिति। प्रसज्यप्रतिषेधमाश्रित्याह। चैतन्येति॥

रघु० टी०। नन्वयं प्रश्नो भवतोऽपि दुरुत्तर इत्यत आह। यदि चेति। उभयत्र। निषेधे विधौ च। निषेधे प्रमाणमाशङ्कते। बन्ध्येति। प्रमाणप्रवृत्तावलीकत्वानुपपत्तौ मत्वासमेवाह। तत्रापीति। वक्तृत्वं वचनकरणयोग्यता। मूकस्यापि मूकत्वविरहेण वा सुतत्वं विशेष्यं मूकत्वस्य तद्विशेषत्वात्। वचनस्योपलक्षणतया क्रियान्तरकर्तृत्वे वा तात्पर्यम्। अचैतन्यं हि चेतनभिन्नधर्मो वा चेतन्यविरहो वा आद्य आह। चेतनादिति। द्वितीयं शङ्कते। चैतन्येति। असुतत्वं सुतेतरस्वभावत्वं तन्निवृत्तिरसति निःस्वभावे न विरुध्यत इति भावः॥

---

(१) न्यायोह – पा० २ पु०।

असुतत्वनिवृत्तिमात्रस्य स्वरूपेण क्षतिशब्दयोरसामर्थ्ये समर्थमर्थान्तरमध्यवसेयमनन्तर्भाव्य कुतो हेतुत्वमिति चेन्न अचैतन्येऽप्यस्य न्यायस्य समानत्वात्। व्यावृत्तिरूपमपि तदेव गमकं यदतस्मादेव यथा शिंशपात्वं वन्ध्यासुतस्त्वसुतादिव घटादेः सुतादपि देवदत्तादेर्व्यावर्तते अतो न हेतुरिति चेत् नन्विदमचैतन्यमपि अस्यैवंरूपमेव नहि वन्ध्यासुतश्चेतनादिव देवदत्तादेरचेतनादिकाष्ठादेर्न व्यावर्तते।

शङ्क० टी०। असुतत्वनिवृत्तेरलीकत्वेन वक्तृत्वं साधयितुमयोग्यतयाध्यवसेयमालोचनीयवस्तुस्वरूपमन्तरेण हेतुत्वं न संभवतीत्याशङ्कते। असुतत्वेति। परिहरति। अचैतन्येपीति। व्यावृत्तिरूपतया द्वयोरपि हेत्वोरपि[1] विशेष इत्यर्थः। अस्य न्यायस्येति। व्यावृत्तिरूपतया तुच्छत्वरूपस्येत्यर्थः। वन्ध्यासुतस्त्विति। वन्ध्यासुतनिष्ठं सुतत्वमित्यर्थः। तेन न पूर्वविरोधः। अतस्मादेव स्वावच्छिन्नप्रतियोगिकान्योन्याभाववत एवेत्यर्थः। यथा शिंशपात्वमिति। शिंशपात्वं हि घटादेरेव व्यावर्तते न तु शिंशपातोऽपीत्यर्थः। तथा च तन्मते व्यावृत्तिरूपतया[2] शिंशपात्वादिवत् सद्धेतुत्वं तदुभयव्यावृत्तितयाऽतितुच्छत्वमिति भावः। अतस्मादिति विपक्षादेवेत्येके। तथा च सपक्षविपक्षोभयव्यावृत्ततया

(१) बुद्ध्योरपि – पा० २ पु०।

(२) तन्मात्रवृत्तिरूपतया – पा० २ पु०।

ऽसाधारण्यमिति भावः। परोक्तेपि हेतौ दोषमिममतिदिशति नन्विदमिति। नहि बन्ध्यासुत इति। बन्ध्यासुतनिष्ठमचेतनत्वमित्यर्थः। बन्ध्यासुते यदचेतनत्वं वर्त्तते तदेव न काष्ठादौ वस्तुनि तथा च तुल्यमसाधारण्यमिति भावः॥

---

भगी० टी०। अतस्मादेवेति। विपक्षादेव न सपक्षादपि। यथा शिंशपा त्वशिंशपात एव व्यावर्त्तते न तु शिंशपातोऽपि बन्ध्यासुतस्तु सुतादपि सपक्षाद्व्यावर्त्तते इत्यसाधारणतया न गमक इत्यर्थः। अलौकानलौकव्यावृत्तेरेकस्य धर्मस्याभावादिति भावः। ननु पुत्रं सुतत्वमात्रमेव हेतूक्तं न तु बन्ध्यासुतत्वम् न च तस्य सुताद् देवदत्तादेर्व्यावृत्तिः। अत्राहुः सुतादपीति भावप्रधानो निर्देशः देवदत्तादेरिति व्यधिकरणे षष्ठी। तथा च देवदत्तादिनिष्ठसुतत्वादिधर्मशून्यत्वं बन्ध्यासुतस्येत्यर्थः। एवंरूपमेवेति। असाधारणानैकान्तिकमित्यर्थः। तदेवाह। नहीति। नहि बन्ध्यासुतोऽचेतनादिव काष्ठादेश्चेतनादपि देवदत्तादेर्न व्यावर्तत इति योजना अतो विपक्षादिव सपक्षाद्व्यावृत्तिरुक्ता भवति। काष्ठादिसाधारणस्याचैतन्यस्य प्रामाणिकस्यालीके वृत्त्यभावात् तन्मात्रवृत्त्यचैतन्यं हेतूकर्त्तव्यम् तच्च चासाधारणत्वमेवेत्यर्थः॥

---

रघु० टी०। असुतत्वेति। निवृत्तेस्तुच्छत्वादिति भावः। स्वरूपेण स्वतः। इतिर्वचनस्य। ज्ञप्तिर्वक्तृत्वस्य। अवसेयम् परिचेयम्। अवसायजनकं निर्विकल्पकं वा। अत्रावसायः तद्विषयं

स्वलक्षणं स्वलक्षणमपि सविकल्पकविषय इतिमतेनेदम् इत्यपि कश्चित् बन्ध्यासुतस्यालीकत्वादसमर्थ इति भावः। अस्य न्यायस्य तुच्छत्वेनासमर्थतया ज्ञप्तिजनकत्वविरहस्य। वक्ष्यते च बन्ध्यासुतादे रप्यसामर्थ्ये प्रमाणाभावः। आशङ्कते। व्यावृत्तीति। सैव व्यावृत्ति-स्तद्धर्मावलीढस्य धर्मं साधयति या तद्धर्मशून्यत्वावच्छिन्नाद्व्यावृत्त्य तद्धर्मावच्छिन्नाद्वा व्यावृत्ते वर्तते तथा शिंशपात्वमशिंशपात्मनि शिंशपात्मनि वर्त्तमानं शिंशपाधर्मं वृक्षत्वम्। अत्रैवकारबलाभ्ये तद्धर्मावलीढमात्रवृत्तित्वे तात्पर्यम्। बन्ध्यासुतस्तु सुतासुतोभयव्या-वृत्तोऽतो न तद्वृत्तिरसुतत्वनिवृत्तिः सुतधर्मस्य साधिका। न च यथासुतमात्रव्यावृत्तमैत्रादिवृत्तिरसुतत्वनिवृत्तिः सैव बन्ध्यासुते ऽपीति वाच्यम् सदसतोरेकधर्मवत्त्वायोगात्। या तन्मात्रव्यावृत्ते पक्षे वर्त्तत इति वार्थः तथा च तन्मात्रव्यावृत्तपक्षधर्मतामस्यन्त्यैव व्यावृत्तिर्गमिकेति फलितार्थः। सैव व्यावृत्तिर्गमिका याऽतस्मादेव विपक्षादेव व्यावर्तते बन्ध्यासुतस्य बन्ध्यासुतवृत्तिरसुतत्वनिवृत्तिस्य सपक्षविपक्षव्यावृत्तत्वेनासाधारणतया न हेतुरिति तु व्याख्यानम असुतादेरचेतनादेरित्याद्यग्रिमग्रन्थस्वरसविरुद्धमिव प्रतिभाति॥

---

वक्तृत्वं वस्त्वेकनियतो धर्मः स कथमवस्तुनि साध्यो विरोधादिति चेत् स पुनरयं विरोधः कुतः प्रमाणात् सिद्धः। किं वक्तृत्वविविक्तस्यावस्तुनो नियमेनोपलम्भात् आहोस्विद् वस्तुविविक्तस्य वक्तृत्वस्यानुपलम्भादिति।

न तावदवस्तु केनापि प्रमाणेनोपलम्भगोचरः तथात्वे वा नावस्तु नाप्युत्तरः समानत्वात्। नहि वक्तृत्वमिव अवक्तृत्वमपि वस्तुविविक्तं कस्यचित् प्रमाणस्य विषयः।

शङ्क० टी०। स्वरूपासिद्धिं निरस्य बाधमाशङ्क्य साम्यापादनेन निराकरोति। वक्तृत्वमिति। विविक्तस्य शून्यस्य यदलीकं तन्न वक्तृ इति तावन्न केनचित्प्रमाणेनोपलभ्यते यतो विरोधः स्यादित्यर्थः। आहोस्विदिति। वस्तुशून्ये वक्तृत्वं क्वापि नोपलब्ध-मित्ययं विरोध इत्यर्थः। तदयमर्थः। किं वक्तृशून्यस्यालीकस्य नियमेनोपलम्भाद्विरोध उत वस्तुशून्ये वक्तृत्वस्यानुपलम्भाद्विरोध इत्यर्थः। आद्य आह। न तावदिति। द्वितीय आह। समान-त्वादिति। अत्रापि प्रमाणापेक्षया आवश्यकत्वादित्यर्थः। अनु-पलम्भस्याप्यभावग्राहकत्वे प्रमाणमेव मूलम्। अनुपलम्भमात्रं तु केवलमतन्त्रं स्वादृष्टिमर्वादृष्टिविकल्पकरंवितत्वादिति[१] भावः॥

भगी० टी०। वक्तृत्वमिति। घटादौ प्रमितस्य वक्तृत्वस्य साध्यत्वे बाध इत्यर्थः। वक्तृत्वविविक्तस्य वक्तृत्वशून्यस्येत्यर्थः। वस्तु-विविक्तस्य वस्तुसम्बद्धस्येत्यर्थः। नहीति। यथा वक्तृत्वं वस्तुविविक्तं प्रमाणाविषयस्तद्वदवक्तृत्वमपि तत् कथमवस्तुनि साध्ये बाधादित्यर्थः। ननु वस्तुविविक्तस्यावक्तृत्वस्य प्रमाणागोचरत्वेऽप्यनुपलब्धिरस्त्वेताव-तेवावक्तृत्वावस्तुनोर्विरोधः स्यात् मैवम् सा ह्यनुपलब्धिर्न वस्तुविविक्ते-

(१) कवलितत्वादिति – पा० २ पु०

तदुपलब्धिर्विरोधात् नहि वक्तृत्वविविक्तमवस्तु प्रमाणगोचरः नाप्यनुपलब्धिनिवृत्तिमात्रं स्वादृष्टेर्व्यभिचारात् सर्वादृष्टेश्च सन्देहात् ॥

---

रघु० टी०। स पुनरित्यादि। वक्तृत्वस्यावस्तुत्वेन समं विरोधो हि अवस्तुत्वाभाववस्तुत्वव्याप्यत्वं तच्च किमवस्तुनि नियमेन वक्तृत्वाभावोपलम्भात् सिद्धम्। अवस्तुनि वक्तृत्वस्यानुपलम्भमात्राद्वेत्यर्थः। वक्तृत्वविविक्तस्य वक्तृत्वासंसृष्टस्य वक्तृत्वशून्यस्येति यावत्। वस्तुविविक्तस्य वस्त्वसंसृष्टस्य वस्तुभिन्नसंसृष्टस्येति यावत्। समानत्वादिति। यथाऽवस्तुनि वक्तृत्वस्यानुपलम्भेन वस्तुत्वव्याप्यत्वं तद्वदवक्तृत्वस्याप्यवस्तुन्यनुपलम्भेन वस्तुत्वव्याप्यत्वं स्यात् तथा च अवक्तृत्वमपि विरोधादवस्तुनि न सिद्ध्येदित्यर्थः॥

---

तद्विविक्तविकल्पमात्रं तावदस्तीति चेत् तत्संसृष्टविकल्पनेऽपि को वारयिता। ननु वक्तृत्वं वचनं प्रति कर्तृत्वं तत् कथमवस्तुनि तस्य सर्वसामर्थ्यविरहलक्षणत्वादिति चेत् अवक्तृत्वमपि कथं तत्र तस्य वचनेतरकर्तृत्वलक्षणत्वादिति। सर्वसामर्थ्यविरहे वचनसामार्थ्यविरहो न विरुद्ध इति चेत् अथ सर्वसामर्थ्यविरहो वन्ध्यासुतस्य कुतः प्रमाणात् सिद्धः अवस्तुत्वादेवेति चेत् नन्वेतदपि कुतः सिद्धम् सर्वसामर्थ्यविरहादिति चेत सोऽयमितस्ततः केवलैर्वचनैर्निर्धनाधमर्णिक इव साधून् भ्रामयन् परस्पराश्रयदोषमपि न पश्यति।

शङ्क० टी०। तद्विविक्तेति। बन्ध्यासुतो न वक्तेति वस्तुविवेकेनावक्तृत्वं गृह्यत एवेत्यर्थः। तत्संसृष्टेति। बन्ध्यासुतो वक्तेति वक्तृत्वसंसृष्टमप्यवेदनमप्यसत्ख्यातिरूपं तन्मते स्यादेवेत्यर्थः। प्रत्यक्षमाने बाधकमाशङ्कते। नन्विति। पर्युदासपक्षे तत्रापि तुल्यमिदमाह। अवक्तृत्वमपीति। स्वसाध्ये प्रसज्यप्रतिषेधमाश्रित्याह। अवक्तृत्वं वचनसामर्थ्याभाव एव मया साध्यत इति न विरोध इति भावः। सर्वसामर्थ्यविरहात् वचनसामर्थ्यविरहस्तदा स एव कुतः सिद्ध इत्याह। अथेति। एतदपीति। अवस्तुत्वमपीत्यर्थः। केवलैरिति। अर्थशून्यैरित्यर्थः। परस्पराश्रयेति। अवस्तुत्वात् सामर्थ्यविरहस्तत एव चावस्तुत्वमिति प्रसजति॥

---

भगी० टी०। तद्विविक्तेति। वस्तुविविक्तमवक्तृत्वमितिज्ञानमात्रमित्यर्थः। तत्संसृष्टेति। प्रमाणाभावस्योभयत्रापि तुल्यत्वाद् वक्तृत्वसंसृष्टावस्तुज्ञानमस्त्येवेति न विरोधनिश्चय इत्यर्थः। पूर्वं वक्तृत्वस्य वस्तुत्वव्याप्यत्वे चावस्तुनि विरोधः शङ्कितः इदानीं तमवस्तुनि सामर्थ्यात् स्वरूपं विरोधं शङ्कते। नन्विति। अवक्तृपदे पर्युदासनञमाश्रित्य परिहरति। अवेति। अवक्तृत्वं वचनकर्तृत्वाभाव इति प्रसज्यप्रतिषेधनञमाश्रित्याह। सर्वेति। आश्रयासिद्धौ सत्यामेव स्वरूपासिद्धिमप्याह। अथेति। केवलैर्निरर्थकैः वादिनो धनं प्रमाणमेव तेन हीनो निर्धनः।

---

रघु० टी०। माभूदवस्तुनि वक्तृत्वाभावस्य प्रमाणजन्मा निर्णयो

विकल्पमात्रं तु स्यादिति सिंहावलोकितेन शङ्कते तद्विविक्तेति वक्तृत्वविविक्तावस्तुविकल्पनमात्रमित्यर्थः । तत्संसृष्टेति वक्तृत्वसंसृष्टावस्तुविकल्पन इत्यर्थः । तथा च विपक्षवृत्तित्वग्रहात् व्याप्तिबुद्धिरित्यर्थः । अपरे पुनः सन्निधिमनुरुन्धाना वर्णयन्ति । तद्विविक्तेति । वस्तुविविक्तावक्तृत्वविकल्पनं वन्ध्यासुतो न वक्तेत्येवमाकारमित्यर्थः । तत्संसृष्टेति । वक्तृत्वसंसृष्टावस्तुविकल्पन इत्यर्थ इति । तत्कथमिति । कर्तृत्वं हि कारित्वविशेषो वा तत्सामर्थ्यं वा द्वयमपि सर्वसामर्थ्यविरहिण्यवस्तुनि न सम्भवतीत्यर्थः । अनर्हत्वमित्यत्र नञ्-र्थस्य धात्वर्थेनान्वयः तद्धितार्थेन वा आद्ये वचनाभावो वचनभिन्नो वाऽर्थः निषेधविधौ प्राभाकराणां क्रियाविरहवत् अप्रमाणमित्यत्र प्रमाभिन्नज्ञानवद्वा उभयथापि वचनेतरकार्यकर्तृत्वं पर्यवस्यतीत्याह । तस्येति द्वितीयं शङ्कते । सर्वेति । केचित्तु विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकतायाः औत्सर्गिकत्वाद्वचनकर्तृत्वनिषेधेनुज्ञातं वचनेतरकर्तृत्वं दूषयति । अवक्तृत्वमपीति आपत्तादिकनिषेधमात्रपरत्वाभिप्रायेण शङ्कते सर्वेत्यादीत्याहुः । वचनेत्यादि । उपलक्षणमेतत् वचनकारित्वविरहोपि द्रष्टव्यः ॥

---

क्रमयौगपद्यविरहादिति चेन्न तद्विरहसिद्धावपि प्रमाणानुयोगस्यानुवृत्तेः । सत्त्वे च परामृष्यमाणे तदविनाभूतसकलवक्तृत्वादिधर्मप्रसक्तौ कुतः क्रमयौगपद्यविरहसाधनस्यावकाशः कुतस्तरां चावस्तुत्वसाध-

# नस्य कुतस्तमां चावक्तृत्वादिसाधनानाम् तस्मात् प्रमाणमेव सीमा व्यवहारनियमस्य तदतिक्रमे त्वनियम एवेति।

शङ्क० टी०। क्रमयौगपद्यविरहात् सामर्थ्यविरहे साध्ये कान्योन्याश्रय इत्यर्थः। न हि क्रमयौगपद्यविरहात् सर्वसामर्थ्यविरहः ततश्चावस्तुत्वमवस्तुत्वाच्च क्रमयौगपद्यविरह इति चक्रकमिति भावः। सुतत्वेनैव हेतुना वक्तृत्वं क्रमयौगपद्यं वस्तुत्वं च सर्वमेकवारमेव मया साधनीयमिति त्वत्साधनानामनवसरपराहतत्वमित्याह। सुतत्वे चेति। एवं प्रतिबन्दिमुखेन परमतेन दूषयित्वा स्वमतमुपसंहरति। तस्मादिति॥

---

भगी० टी०। क्रमेति। क्रमयौगपद्यविरहाभ्यां सर्वसामर्थ्यविरहसिद्धौ नान्योन्याश्रय इत्यर्थः। कुत इति। अर्थक्रियायामवस्तुनि कर्तव्यतायां कुतः क्रमयौगपद्यविरहसिद्धिः तदसिद्धौ च न तत्साध्यसर्वसामर्थ्यविरहसिद्धिस्तदसिद्धौ च न तत्साध्यावक्तृत्वसिद्धिरित्यर्थः। एवं परमतं दूषयित्वा स्वमतमाश्रित्योपसंहरति। तस्मादिति। तथा चालोके मानाभावान्नावक्तृत्वादिसाधनमित्यर्थः।

---

रघु० टी०। अवस्तुत्वात् काल्पनिकत्वात् अर्थक्रियाकारित्वशून्यत्वाद्वा क्रमादिविरहादवस्तुत्वसिद्धिरित्याशङ्कते। क्रमेति। शङ्कां निरस्यति। नेति। न वा क्रमादिविरहः साधयितुमपि शक्य

इत्याह । सुतत्वे चेति । सुतत्वमविनाभूतं येन सुतत्वव्यापकमिति यावत् वक्तृत्वादीत्यादिपदात् सामर्थ्यवस्तुत्वक्रमादीनां परिग्रहः । क्रमादिविरहादवस्तुत्वसामर्थ्यविरहाद्वक्तृत्वादीनां पूर्वपूर्वस्याभिद्धा तत्साध्योत्तरोत्तरासिद्धिरित्यर्थः । अस्तु तर्हि विधिनिषेधव्यवहार-भाजनत्वमेवासत इत्येतदुपसंहारव्याजेन निरस्यति । तस्मादिति । तथा चाऽसति प्रमाणविरहाच प्रवृत्तिरिति ॥

---

न ह्यप्रतीते देवदत्तादौ स किं गौरः कृष्णो वेति वैयात्यं विना प्रश्नः तत्रापि यद्येकोऽप्रतीतपरामर्ष-विषय[1] एवोत्तरं ददाति न गौर इति अपरोऽपि किं न दद्यान्न कृष्ण इति । न चैवं सति काचिदर्थसिद्धिः प्रमाणाभावविरोधयोरुभयत्रापि तुल्यत्वादिति ।

शङ्क० टी० । व्यवहाराविषये[2] सर्वविधिनिषेधव्यवहार-मर्यादाविलोपमुदाहरणेन दर्शयति । नहीति । वैयात्यं धार्ष्ट्यं । अव्यवस्थामेव दर्शयति । तत्रापीति । अर्थसिद्धिरिति । प्रश्न-विषयार्थसिद्धिरित्यर्थः ।

भगी० टी० । अप्रामाणिकेऽर्थे उत्तरवादीव प्रष्टाप्यप्रामा-णिक एवेत्याह । न हीति । वैयात्यं धार्ष्ट्यम स्वाज्ञानानावरणं

(१) अविदितपरामर्शविषय इति भगीरथसम्मतः पाठः ।

(२) व्यवहाराविमर्शेऽपि – पा० २ पु०

वा। अविदितेति। न विदितः स इति सर्वनाम्नः परामर्श-विषयो येन स तथा। न चैवमिति। अप्रामाणिकाद्यथा क्रम-यौगपद्यविरहादप्रामाणिकोऽसद्व्यवहारस्तद्वदप्रामाणिकात् क्रमयौग-पद्यसद्भावादप्रामाणिकः सद्व्यवहारोऽपि किं न स्यादिति भावः।

रघु० टी०। वैयात्यं धार्ष्ट्यम्। अप्रतीतेति। न प्रतीतः स इति तच्छब्दपरामर्शविषयो येन सः॥

नन्वप्रतीते व्यवहाराभाव इति युक्तं कूर्मरोमादयस्तु प्रतीयन्त एव न ह्येते विकल्पाः कञ्चिदर्थभेदमनुल्लि-खन्त एव उत्पद्यन्ते न च प्रमाणास्पदमेव व्यवहारास्पद-मिति तत्त्वमुक्तम्[१] तथाहि शशविषाणमिति ज्ञान-मन्यथाख्यातिर्वा स्यात् असत्ख्यातिर्वा। न तावदाद्यस्ते रोचते तथा सति हि किञ्चिदारोप्यं किञ्चिदारोप-विषय इति स्यात् तथा चारोपविषयस्तच्चैवास्ति आरो-पणीयस्त्वन्यच्चैवेति जितं नैयायिकैः। नापि द्वितीयः कारणानुपपत्तेः। इन्द्रियस्य ज्ञानजनने विषयाधिपत्येनैव व्यापारात्। लिङ्गशब्दाभासयोरन्यथाख्यातिमात्रजन-कत्वात्। अपहस्तितस्वार्थयोश्चासत्ख्यातिजनकत्वे शश-

(१) तन्न युक्तम् — पा० २ पु०

**विषाणादिशब्दात् कूर्मरोमादिविकल्पानामप्युत्पत्तिप्रसङ्गात् नियामकाभावात् ।**

शङ्क० टी० । ननु लाघवाद् ज्ञात एव व्यवहारोऽस्तु किं प्रमितत्वपर्यन्तेनेत्याशङ्कते ननुचेति । एव इति । कूर्मरोमशशशृङ्गादिगोचरा इत्यर्थः । न चेति । गौरवादिति भावः । भ्रमविषयत्वं प्रमाविषयत्वव्याप्यं न वेत्यसत्ख्यातौ विप्रतिपत्तिः व्याप्यत्वव्यतिरेको निरधिकरण आकाशादौ प्रसिद्धः सामानाधिकरण्यविशेषस्य व्याप्तित्वात् । यद्वा नित्यद्रव्याविषयकमिदं रजतमिति ज्ञानं विशेषणान्यव्यासज्यप्रतियोगिकात्यन्ताभावात्यन्ताभावाप्रतियोगिमात्रं(?) स्वातिरिक्तप्रमेयातिरिक्तविषयं न वेति विप्रतिपत्तिः । ज्ञितमिति । प्रमितमेव व्यवहारविषय इति वादिभिरित्यर्थः । तद्विशेषेण कारणाभावमेव व्यवस्थापयति । इन्द्रियस्येति । विषयाधिपत्यं विषयसहकारिता इन्द्रियार्थसन्निकर्षजन्यत्वात् प्रत्यक्षस्येत्यर्थः । आरोप्यस्यासन्निकर्षेऽपि क्वचित्सन्निकर्षो वक्तव्य एवेति भावः । ननु प्रत्यक्षाभासाभावेऽपि लिङ्गाभासाच्छब्दाभासाद्वा स्यादसत्ख्यातिरित्यत आह । लिङ्गेति । धूलीपटले धूमारोपादसद्वह्निर्भासेत पर्वते तत्र धूमस्य धूलीपटलस्य वह्नेश्च प्रमितत्वं क्वचिद्वाच्यमेवेत्यन्यथाख्यातिपर्यवसानमेवं चानाप्तोदीरिताच्छब्दात् पदार्थो वाक्यार्थो वा प्रतीत एव भासत इत्यन्यथाख्यातिरेवेत्यर्थः । ननु स्यादेवं यदि व्याप्तिबलात् सङ्केतबलाद्वा भानं भवेन्न त्वेवमित्यत आह । अपहस्तितेति । तिरस्कृतस्वार्थयोरित्यर्थः । लिङ्गस्य स्वार्थो व्यापको वह्न्यादिः शब्दस्य चार्थः सङ्केतविषयः तत्तिरस्कारे नियमो न स्यादिति भावः ॥

भगी॰ टी॰। ननु यदज्ञातं तन्मा व्यवहारि ज्ञाते तु कूर्मरोमादौ व्यवहारः स्यादेव न च प्रमात्वं व्यवहारप्रयोजकं लाघवाज्ज्ञानमात्रस्यैव तत्प्रयोजकत्वात् कथानारम्भापत्तेश्चेत्याह। नन्विति। तथाहीति। असत्ख्यातौ विप्रतिपत्तिः। भ्रमविषयत्वं प्रमाविषयत्वव्याप्यं न वा नवेत्याकाशादौ प्रसिद्धम् आकाशस्यानधिकरणत्वेन नियतसामानाधिकरण्यरूपव्याप्यत्वस्य तत्राभावात्। यद्वा नित्यद्रव्याविषयकमिदं रजतमिति भ्रमज्ञानं विशेषणान्यकेवलान्वय्यत्यन्ताभावप्रतियोगिमात्रविषयकं न वा अत्र सत्यपि कस्मिन्नासतामित्यर्थान्तरवारणाय मात्रपदम्। एवं चाकाशज्ञानेऽप्याकाशत्वादेः केवलान्वय्यत्यन्ताभावप्रतियोगिनो भानान्मात्रार्थस्यासिद्धिः स्यादिति विशेषणान्येति विशेषणम् केवलान्वय्यत्यन्ताभावाप्रतियोगिनो विशेषणस्यैवाकाशत्वस्य भानात् केवलान्वयित्वं चात्यन्ताभावस्यात्यन्तभावाप्रतियोगित्वं तत्र शुक्त्यतिरिक्तो देशः भ्रमविषयीभूतरजतत्वाभाववान् देशत्वात् शुक्तिवत् न चाप्रयोजकत्वं पुरोवर्तिरजतयोः सत्त्वेन भ्रमत्वाभावापत्त्या तयोस्तादात्म्यस्य परिशेषेण विषयत्वात् तस्य चात्यन्तमसत्त्वादित्यपरे। जितमिति। बौद्धानामक्षणिको घट इति धीर्यद्यन्यथाख्यातिस्तदारोप्यस्याक्षणिकत्वस्य क्वचित् सिद्ध्यापत्तेरिति भावः। अलीकस्य प्रतीतिरेव नास्ति तत्कारणाभावादिति कुतो व्यवहार इत्याह। कारणेति। विषयाधिपत्येति सन्निकृष्टविषयसहकारित्वेनेत्यर्थः। स्वप्नादिभ्रमाणामप्यारोपविषयार्थसन्निकर्षजत्वात् आरोप्यं च यद्यपि क्वचिदसन्निकृष्टमपि भासते तथापि स्थानान्तरे तेनेन्द्रियसन्नि-

कर्षोऽस्त्येव तथा च तथात्वोपगमेऽलौकिकत्वव्याघात इति भावः। शशविषाणादिशब्दाः स्वार्थस्मृत्यपेक्षाः संसर्गमसन्तं बोधयेयुस्तन्निरपेक्षा वा एवमलिङ्गं लिङ्गतया गृहीतं स्वव्यापकस्मृत्यपेक्षमनुमित्याभासं जनयेत् तन्निरपेक्षं वा आद्ये नामत्ख्यातिः तेषामन्यत्रसत्त्वेनान्यथाख्यातिपक्षप्रवेशादित्याह। शब्देति। अन्ये त्वाह। अपहस्तितेति। स्वार्थः शङ्कितविषयः स्वव्यापकश्च। तथा च शशविषाणमिति पदं विकल्पजनकत्वे सति कूर्मरोमाद्यविषयकविकल्पप्रयोज्यरूपवद्यदि न स्यात् तद्विषयकविकल्पोत्पादकं स्यादित्यापादनम्।

---

रघु॰टी॰। तथा व्यवहारे ज्ञानत्वेनैव प्रयोजकत्वं न तु प्रमात्वेन गौरवात् त्वयापि भ्रान्तेस्तथात्वोपगमादित्याशयेनाह। नन्विति। एते शशविषाणं कूर्मरोमेत्याद्याकाराः विषयाधिपत्यं विषयसन्निकर्षः। विभ्रमादौ च ज्ञानादिकमेव तथेति भावः। लिङ्गेति। अलिङ्गमपि लिङ्गतया गृहीतं गृहीतव्यापकभावं तज्जातीयं वा पक्षासंसृष्टमेव पक्षसंसृष्टं बोधयदन्यथाव्याख्यातिमेवोत्पादयेत् व्याप्तिग्रहानपेक्षणेऽतिप्रसङ्गात्। अनन्वितौ च स्वार्थावन्वितौ बोधयन्तौ शब्दावपि तथैव। स्वार्थतिरस्कारेण शब्दस्य बोधकत्वे पुनराह अपहस्तितेति॥

---

**स हि सङ्केतो वा स्यात् शब्दस्वाभाव्यं वा। आद्यस्तावत् सङ्केतविषयाप्रतीतेरेव पराहतः तत एव**(१) **तत्-**

(१) इत एवेति भगीरथठक्कुरसम्मतः पाठः।

प्रतीताविन्तरेतराश्रयत्वम् पदसङ्केतबलेनैव प्रतीतौ स्वार्थापरित्यागात् तथा चानन्विताः पदार्था एवान्वित- तया परिस्फुरन्तीति विपरीतख्यातिरेवानुवर्तते। स्वार्थ- परित्यागे तु पुनरप्यनियमः असामयिकार्थप्रत्यायनात् शब्दस्वाभाव्यात् तु नियमे व्युत्पन्नवदव्युत्पन्नस्यापि तथाविधविकल्पोदयप्रसङ्गादिति।

शङ्क० टी०। शशविषाणशब्दादित्युपलक्षणं शशविषाणव्याप्यत्वेन गृहीतादित्यपि द्रष्टव्यम्। उपलक्षणविधया शब्दाभासमेव तत्त्वं कृत्वा विकल्पयति। स हीति नियामक इत्यर्थः। सङ्केतग्रहः स्वार्थे पदं नियमयेत् स च नास्तीत्यर्थः। वाक्यार्थनियमोऽपि सङ्केतविषयाप्रतीतेरेव परास्त इति भावः। ननु शशविषाण- शब्दादेव गृहीतसङ्केतस्ततो नियतमर्थं प्रतीयादित्यत आह। तत एवेति। नन्वखण्डः शशविषाणपदार्थः कश्चिन्मास्तु शश- विषाणशब्दयो[१]र्गृहीतसङ्केतयोरेव सामर्थ्याद्वाक्यार्थः कश्चिदसन्नेव भासतामित्यत आह। पदसङ्केतेति। एवं च शशसम्बन्धित्वं विषाणांशे समारोप्यत[२] इत्यन्यथाख्यातिरेवेत्यर्थः। ननु पदयोः स्वार्थस्फुरणं स्यादेव न त्वेतदस्तीत्यत आह। स्वार्थेति। कथम- नियम इत्यत आह। असामयिकेति। ननु विषयाप्रतीतेः सङ्केतो मा गृह्यतां शशविषाणादिपदानामीदृश एव स्वभावभेदो

(१) पदयो– पा० २ पु०।

(२) शशसम्बन्धित्वं विषाणे विषाणसम्बन्धित्वं वा शशे समारोप्यत– पा० २ पु०।

येन नियतार्थप्रतीतिः स्यादित्यत आह। शब्देति। एवं सति सर्वेषां पदानामेवं स्वारस्ये सङ्केतग्रहोपयोगो न स्यादेवेत्यर्थः।

---

भगी० टी०। स हीति। स नियामकः सङ्केतश्च शश-विषाणमितिपदसमुदायस्य वा प्रत्येकं वा शशविषाणपदयोः प्रथमे आद्यस्तावदिति। इत एवेति। तत्र सङ्केतग्रहे शशविषा-णादिपदात् तत्प्रतीतिः तत्पदादेव च तत्प्रतीतौ तत्र सङ्केतग्रह इत्यर्थः। नन्वस्तु द्वितीयः। तथाहि यथा सुभ्रुपदे प्रत्येकगृहीत-सङ्केतपदस्यार्थमुपजीव्य वाक्यार्थे सङ्केतग्रहस्तथा शशविषाणपदेऽपि स्यादित्यत आह। पदसङ्केतेति। पदानां प्रत्येकपदार्थमुपजीव्य संसर्गबोधकत्वमनुपजीव्य वा आद्येऽन्यथाख्यातिरेवेत्याह। तथा चेति। अन्ये प्रत्येकपदार्थानुपजीवनम् प्रत्येकपदार्थपरित्यागे सत्यवेति पूर्वोक्तानियमप्रसङ्ग एवेत्याह। स्वार्थेति॥

---

रघु० टी०। स हीति। स नियामकः। सङ्केतो वाक्यस्य पदयोर्वा आद्ये आद्य इति। वाक्यस्य सङ्केतविषयोऽखण्डशश-विषाणादिः। द्वितीये त्वभिहितवान्यथाख्यातिरावर्तत इत्याह पदेति।

---

वासनाविशेषादिति चेत् अथासदुल्लेखिनः प्रत्ययस्य वासनैव कारणम् उत वासनापि। न तावदाद्यः शश-विषाणादिप्रत्ययानां सदातनत्वप्रसङ्गात्। कदाचित् प्रबोधात् कदाचिदिति चेत् न प्रबोधोऽपि सहकार्यन्तरं

वा अतिशयपरम्परापरिपाको वा । आद्ये वासनैवेति पक्षानुपपत्तिः द्वितीयेऽपि यद्यर्थान्तरप्रत्यासत्तेस्तदा पूर्ववत् । स्वसन्ततिमात्राधीनत्वे तु वाह्यवादव्याघातः नीलादिबुद्धीनामपि वासनापरिपाकादेवोत्पादात्[1] । वासनापीति पक्षे तु तदन्योऽपि हेतुः कश्चिद्वक्तव्यः स च विचार्यमाणः पूर्वन्यायं नातिवर्तत इति ।

शङ्क० टी० । वासनाविशेषादित्यनन्तरं नियमः स्यादिति शेषः । सदातनत्वप्रसङ्गादिति । अपेक्षणीयान्तराभावादिति भावः । कदाचिदिति । शशविषाणादिप्रत्यया इति विपरिणामेनानुषङ्गः । अतिशयेति । अतिशयो वासना तत्परम्परायाः । स कश्चित्परिपाको येन शशविषाणादिप्रत्ययोत्पत्तिरित्यर्थः । परिपाकोपि वासनाया यद्यर्थान्तरप्रत्यासत्त्यधीनस्तदा वासनैवेति पक्षानुपपत्तिरेवेत्याह । यद्यर्थान्तरेति । ननु स्वसन्ततिमात्राधीन एव तत्परिपाको न तु तत्रापि सहकार्यन्तरापेक्षेत्यत आह । स्वसन्ततीति । एवं सति नीलादिविकल्पः कादाचित्कत्वमपि वासनापरीपाकादेव स्यादित्यर्थः । नीलादिविकल्पकादाचित्कत्वेन त्वया नीलादीनि वाह्यानि स्वीक्रियन्ते । तच्च कादाचित्कत्वं यदि वासनामात्राधीनमेव तदा गतं वाह्यनीलादिस्वीकारव्यसनेनेति भावः । पूर्वन्यायमिति प्रत्यक्षलिङ्गशब्दाभासानां तत्र निराकृतत्वात् । सहकार्यन्तराभावादित्यर्थः ।

(१) परिपाकादरेवोत्पादात्– पा० १ पु० ।

भगी० टी० । वासना संस्कारः । शशेति । अनादिवासना सन्ततेः सदानुवृत्तौ तन्मात्रप्रभवं ज्ञानं सदोत्पद्येतेत्यर्थः । कदाचिदिति । वासनोद्बोधस्य कदाचिदिति कार्यमपि कदाचित् स्यादित्यर्थः । अतिशयेति । कुर्वद्रूपत्वजातिविशिष्टोत्पत्तिरित्यर्थः । द्वितीये त्विति । तादृशवासनाक्षणा यद्यर्थान्तरप्रत्यासत्तिस्तदा वासनैवेति पक्षानुपपत्तिरित्यर्थः । न चार्थान्तरप्रत्यासत्तिरकारणं परिपाकमात्रस्य जनकत्वादिति वाच्यम् वासनावदन्वयव्यतिरेकतौल्यात् परिपाकद्वाराविकल्पे तज्जनकत्वात् परिपाकतस्तादृशकारणान्तरस्याभावात् परिपाकाभावे वासनाया एव कारणत्वे प्रागुक्तसदातनत्वप्रसङ्ग इत्यर्थ इत्यन्ये । स्वसन्ततिः वासनासन्ततिः । पूर्वन्यायमिति । इन्द्रियादीनां ज्ञानजनकत्वानुपपत्त्या कारणत्वाभावादित्यर्थः ।

---

रघु० टी० । अथ सतोरेवार्थयोर्दोषवशादसत्संसर्गो लिङ्गशब्दाभासाभ्यां बोध्यत इति चेत् तत्रासन्निति सत्यं सर्वथैवासन्निति तु कुतः वासनाविशेषवशात् नियतविषयाऽसत्ख्यातिरिति शेषः । सदातनत्वेति । वासनासन्तानस्याविच्छिन्नतया शशविषाणादिविकल्पसन्तानोऽप्यविच्छिन्नः स्यादित्यर्थः । कदाचिदिति । वासनायाः कदाचित्प्रबोधात् शशविषाणादिप्रत्ययानां कदाचिदुत्पत्तिरिति । अतिशयस्तत्तत्कार्यानुकूलः स्वभावविशेषः । यदीति । अर्थान्तरस्य सहकारिणः प्रत्यासत्तेर्यदि परिपाकः तदा पूर्वस्मिन् प्रत्ययस्य सहकार्य्यन्तराधीनत्वे यद्दूषणं सहकार्यसम्भवो वक्ष्यते

मोचापीत्यर्थः। केचित्तु परिपाको यदि सहकारिविशेषात् तदा परिपाकद्वारावश्यकत्वात् साक्षादेव वा विकल्पे तस्य कारणत्वाद्वासनैवेति पक्षानुपपत्तिरित्यर्थ इत्याहुः। पूर्वन्यायं इन्द्रियादेर्विषयाधिपत्यादिकम्। न चादृष्टविशेष एव सहकारी वक्तव्यो नीलादिविकल्पानामपि वासनासमुत्थत्वप्रसङ्गात्। वस्तुतस्त्वसत्ख्यातिप्रमाणसत्त्वे तत्र कारणं कल्पनीयं तदेव तु नास्ति प्रमाणेनासदंशस्यानुल्लेखेऽसत्ख्यातित्वासिद्धिः उल्लेखे तु प्रमाणस्याप्रमाणताया असतो वा सत्त्वस्य प्रसङ्गादिति।

**न च शशविषाणादिशब्दानामसदर्थैः सह सम्बन्धावगमोऽपि तथाहि परबुद्धीनामनुल्लेखात् तद्विषयस्याऽप्यनुल्लेख एव। न चार्थक्रियाविशेषोऽप्यस्ति यतो विषयविशेषमुन्नीय तत्र सङ्केतो गृह्यतां न च सङ्केतयितुरेव वचनात् तदवगतिः तद्विषयाणां सर्वेषां वचनानामप्रतीतविषयत्वेनागृहीतसमयतया अप्रतिपादकत्वात्।**

शङ्क० टी०। निराकृतमप्यर्थं विशिष्य निराकरणार्थमाह। न चेति। ननु शशविषाणादिपदप्रयोक्तुरवश्यं तद्विषयज्ञानमस्ति। अन्यथा प्रयोगानुपपत्तेरिति श्रोतुस्तत्र सङ्केतधीः स्यादित्यत आह। परेति। तद्बुद्धेः परोक्षतया तद्विषयस्य विशिष्यानवगमादित्यर्थः। ननु प्रयोजकवृद्धोदीरितात् तु शशविषाणादिशब्दात् प्रयोज्यवृद्धस्य व्यवहारं दृष्ट्वा तटस्थस्य व्युत्पत्तिः स्यादत आह।

न चेति। अर्थक्रिया नयनानयनादिरूपा। ननु यथा कम्बुग्रीवा-वानर्थो घटपदवाच्य इति यथा सङ्केतग्रहस्तथात्रापि स्यादित्यत आह। न चेति। येन पदकदम्बेन योऽर्थ उपनेतव्यः सोप्य-परिचितार्थ एवेत्यर्थः।

---

भगी॰ टी॰। पूर्वं सङ्केतविषयाप्रतीतौ सङ्केतासम्भवात् कारणाभावेनासत्ख्यात्यभाव उक्तः सम्प्रति तत्सत्त्वेऽप्यलीकस्य ज्ञानं न सम्भवतीत्याह। न चेति। शब्देति। ननु ख्यात-व्येणेन्द्रियाणामलीकज्ञानाजनकत्वेऽपि ज्ञानावच्छेदकतया मान-सप्रत्यक्षेऽलीके सङ्केतग्रहः स्यादित्यत आह। तथाहीति। अलीकोपनायकं मानसप्रत्यक्षं यदि परकीयं तत्राह। परबुद्धीना-मिति। न चेति। अलीकत्वव्याघातादित्यर्थः। उन्नीय पर-बुद्धिविषयमिति शेषः। ननु सङ्केतयितृवचनादेव सङ्केतविषयो-पस्थितिः स्यादित्यत आह। न चेति। तद्धि शब्दविधया तमुपनयेल्लिङ्गीभूय वा तत्र नाद्य इत्याह। तद्विषयाणामिति॥

---

रघु॰ टी॰। असतो भानासम्भवेन तत्र व्युत्पत्तिविरहं व्युत्पाद्य सत्यपि तज्ज्ञाने तं व्युत्पादयति। न चेति। परबुद्ध्या-दिविषयत्वेनोपस्थिते अलीके शक्तिग्रहः प्रकारान्तरेण वा आद्येपि विशिष्योपस्थिते सामान्यतो वा प्रथमे परेति। असुमर्थमभिसन्धाय वक्तैवंशब्दं प्रयुक्तवान् श्रोता वा अस्माच्छब्दादमुमर्थं प्रतीतवा-

नित्यादिनिश्चये हि सति सङ्केतो ग्राह्यः स च न सम्भवति प
बुद्ध्यादीनामनुल्लेखात् प्रत्यक्षेणाग्रहणात् तद्विषयस्यापि यतोऽ
ल्लेखो विशिष्यानिर्णय इत्यर्थः। अथायमहं गां बध्नामीत्यभिध
परकीयं वा गां बधानेतिवाक्यमाकलय्य गां बध्नतो व्यवहा
विशेषात् तदीयबुद्ध्यादिविषयविशेषं निर्णीय तत्र गोपद
सङ्केतग्रह इव वा शशविषाणादिपदस्यापि स्यात् तत्राह।
चेति। उन्नीय परबुद्ध्यादिविषयतया बुद्ध्वेत्यर्थः। सङ्केतयितुः सङ्
ग्राहयितुः वक्तुः श्रोतुर्वा वचनात् इममर्थमभिसन्धाय मयेदं ।
प्रयुक्तं अस्माच्छब्दादयमर्थो मयावगत इत्याद्याकारात्।

**न च शशविषाणमुच्चारयतः कश्चिदभिप्रायो ह**
**इति तद्विषयोऽस्य वाच्य इति सुग्रहः समय इ**
**वाच्यम् न ह्येवमाकारः समयग्रहः। गां बधानेत्यु**
**अप्रतीतशब्दार्थस्याप्यभिप्रायमात्रप्रतीतौ समयग्र**
**प्रसङ्गात्। न च विशेषान्तरविनाकृतः कल्पनामात्र**
**विषयोऽस्य वाच्य इति साम्प्रतम् घटकूर्मरोमादि**
**नामपि तदर्थत्वप्रसङ्गात्।**

शङ्क० टी०। ननु शशविषाणादिपदमुच्चारयितुर्यत्र तात्प
तदेव तदर्थं इति सङ्केतग्रहः स्यादित्यत आह॥ न च शशविष
णेति। परबुद्धीनामित्यत्र ज्ञानविषयतया शङ्कितमिदं तु तात्प
र्यविषयतयेत्यपौनरुक्त्यं न ह्येवमाकारः समयग्रहःशाब्दव्यवहारोप
योगीति शेषः। अत्र हेतुमाह। गां बधानेत्युक्त इति

ननु शशविषाणादिशब्दानां विशेषविनाकृतो निरुपाख्योऽर्थो वाच्य इति सर्वैरेव प्रतीयते। तथा च कथमत्र सङ्केतग्रहो दुःशक इत्यत आह। न च विशेषेति। घटकूर्मरोमादीनामिति। घटरोमकूर्मरोमादीनामित्यर्थः। यद्वा यन्मते घटस्यापि काल्पनिकत्वं तन्मतमाश्रित्योक्तम्॥

भगो टी। अन्यमाशङ्क्य निराकरोति। न चेति। नहीति। प्रवृत्तिनिवृत्त्यौपयिक इति शेषः। सङ्केतग्रहस्य प्रवृत्तिनिमित्तविशेषोपस्थितिं विना न सम्भवति तादृशाभिप्रायविषयत्वं न च तथा गौरवादनुभवाच्चेत्यर्थः। ननु सङ्केतग्रहस्य न विषयपर्यन्तमवगाहनं किं तु व्यावर्तकधर्मवति तत्कल्पनामात्रविषयोऽलीकस्तद्विषयः। तथा च भ्रमविषयत्वेनैवोपस्थिते तत्र सङ्केतग्रहः स्यादित्यत आह। न च विशेषेत्ति। कल्पनामात्रोपधानेन सर्वेषामलीकानां शशविषाणपदवाच्यता स्यादित्यर्थः॥

---

रघु॰ टी॰। द्वितीयमाशङ्क्य निराकरोति। न चेति। कश्चित्किञ्चिदर्थगोचरोऽभिप्रायो विकल्पो वक्तुः श्रोतुर्वा अनुमोदनादिभाजः अस्माच्छब्दात्किञ्चिदर्थप्रत्ययो वृत्त इति। समयग्रहोऽर्थप्रत्ययोपयोगी अभिप्रायमात्रादिप्रतीतौ अर्थप्रत्ययाद्युपयुक्तसमयग्रहप्रसङ्गात् प्रकारान्तरेण वेत्याशङ्क्य निराकरोति। न चेति। वाच्य इति वाक्यात्सङ्केतग्रह इति साम्प्रतं युक्तमित्यर्थः। परेषामवयविमात्रस्यालीकत्वात् घटेत्युक्तम्। स चेत्यादेः कतरोऽर्थः

किमसतोर्थानिव वासनावशादेव तैः समं तत्तच्छब्दानां सङ्केतं प्रतिपद्यन्ते किं वा वासनोपनीतेषु तेषु स्वकृतं तत्तच्छब्दसङ्केतं प्रतिपद्यन्त इति नाद्यः शशादिप्रत्येकपदार्थाव्युत्पन्नस्य शशविषाणादिशब्दादर्थप्रत्ययप्रसङ्गात् ॥ ——

**न च सर्वे प्रतिपत्तारः स्वस्ववासनयाऽसदर्थशब्दसम्बन्धप्रतिपत्तिभाज इति साम्प्रतम् परस्परवार्तानभिज्ञतया अपरार्थत्वप्रसङ्गात् न हि स्वयं कृतं समय[१]मग्राहयित्वा परो व्यवहारयितुं शक्यते न च व्यवहारोपदेशावन्तरेण ग्राहयितुमपि। न च गां वधानेतिवत् शशविषाणपदार्थे व्यवहारः न चायमसावश्व इतिवदुपदेशः न च यथा गौस्तथा गवय इतिवदुपलक्षणातिदेशः न चेह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीतिवत् प्रसिद्धपदसामानाधिकरण्यम्।**

शङ्क० टी०। ननु वासनयैवोपस्थितेर्थे श्रोतुः सङ्केतग्रहः स्यादित्यत आह। न चेति। वक्तृश्रोत्रोः समानसङ्केताज्ञानात् परार्थं तत्प्रयोगो न स्यादित्यर्थः। अन्यथा घटाभिप्रायेण पटपदमपि प्रयुञ्जीतेति भावः। ननु स्वयमेव क्वचिदर्थे सङ्केतं परिकल्प्य शशविषाणादिपदप्रयोगः स्यादित्यत आह। न हीति। स्वयं सङ्केतकल्पनेपि परस्य तदज्ञानात्। परार्थं प्रयोगानुपपत्ते-

(१) स्वयं कृतं सङ्केतं– पा० १ पु०।

रित्यर्थः । हिशब्दश्चार्थे शङ्कान्तरसमुच्चयार्थः । तर्हि तदर्थं श्रोतापि व्युत्पाद्यताम् । तथा च तदर्थं प्रयोगः स्यादत आह । न चेति व्यवहारेति । तर्हि व्यवहारादेव परो व्युत्पाद्यतामत उक्तं प्रपञ्चयति । न च गामिति । तदर्थं नयनादिव्यवस्थितसमयत्वादित्यर्थः(१) । तदुपदेशादेव व्युत्पाद्यतां परः इत्यत आह । न चायमिति । तद्गोचरशब्दानामप्यगृहीतसमयत्वादित्यर्थः । ननु साक्षादुपदेशासम्भवेऽप्युपमानमनुमानं वा द्वारीकृत्योपदेशः स्यादत आद्यमाशङ्क्य निराकरोति । न च यथेति । प्रवृत्तिनिमित्तस्य गवयत्वस्योपलक्षणं गोसादृश्यं तदतिदेशस्तत्कथनमित्यर्थः । अनुमानमाशङ्क्य निराकरोति । न चेहेति । अयं प्राणी मधुकरशब्दवाच्यः प्रभिन्नकमलोदरे मधुपानकर्तृत्वात् यन्नैवं तन्नैवं यथा घट इत्यर्थः । शशविषाणादिपदार्थस्य मधुपानादिवदसाधारणक्रियाविरहादिति भावः ॥

---

भगी० टी० । ननु स्वकीयमानसप्रत्यक्षविषयेणानावच्छेदकेऽलीके सङ्केतग्रहः स्यादित्यत आह । न च सर्वं इति । परस्परेति । मया योऽर्थोऽवगतः स एवानेनापीति संवादाभाव इत्यर्थः । अपरार्थत्वेति । शशविषाणपदं यद्यन्यसाधारणसङ्केतवत्तया ज्ञानविषयो न स्यात् परार्थप्रयोगविषयो न स्यादित्यर्थः । तादृशस्य सङ्केतग्रहो व्यर्थ इत्याह । न हीति । परव्यवहारे परकीयसङ्केतग्रहस्याहेतुत्वादित्यर्थः । तर्हि परोऽपि सङ्केतं ग्राह्यतामित्या-

(१) व्यवहाराभावादित्यर्थः—पा० २ पु० ।

शङ्कते सङ्केतग्रहोपायाभावमाह। न चेति। उपदेशशब्देनाभ्योपलक्षणातिदेशप्रसिद्धपदसामानाधिकरण्ययोरपि संग्रहः। यद्वोपदेशः साक्षात् परम्परया च परम्परा चोपमानद्वारेत्यर्थः। तर्हि परोऽपि सङ्केतमुररीकृत्यानुमानं वा ततो न पूर्वापरग्रन्थविरोधः। सङ्केतग्राहकोपायान्तरस्यापि व्यवहारोपजीवकत्वात् तदभावमाह। न च गामिति। प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यप्रवृत्तिदर्शनात् तद्धेतुज्ञाने बालेन शक्तिर्गृह्यते। न चालौके प्रवृत्तिर्यद्दर्शनात् तद्धेत्वलौकज्ञाने सङ्केतो गृह्येतेत्यर्थः। साक्षादुपदेशाभावमाह। न चायमिति। नात्र विशेषत्वेन विशेषशङ्केतग्राहकः शब्द इत्यर्थः। उपमानद्वारकस्य तस्याभावमाह। न च यथेति। गवयत्वस्य प्रवृत्तिनिमित्तस्योपलक्षणं गोसादृश्यं तस्यातिदेशः कथनमित्यर्थः। अनुमानद्वारकोपदेशाभावमाह। न चेहेति।

---

रघु० टी०। द्वितीये त्वाह परस्परेति। स्वस्वकृतसङ्केतस्यान्योन्यमज्ञानेन परार्थत्वं परार्थबोधोपयोगित्वं न स्यादित्यर्थः। तर्हि ग्राह्यतां परोपि सङ्केतमत आह। न चेति। उपदेशः प्रवृत्तिनिमित्तविशिष्टे वाच्यताबोधकं वाक्यं यथा पिकः कोकिलः अयमसावश्व इत्यादि परम्परया सङ्केतग्राहकवाक्यस्याप्युपलक्षकमिदं प्रवृत्तिनिमित्तोपलक्षकसामानाधिकरण्येन वाच्यताबोधकमुपलक्षणातिदेशः॥

---

**तदमूः शशविषाणादिकल्पाः नासत्ख्यातिरूपास्तथात्वे कारणाभावात् मूकस्वप्नवदासां व्यावहारि-**

**कत्वप्रसङ्गाच्च तस्मादन्यथाख्यातिरूपा एवेति। नैतदनुरोधेना[1]प्यवस्तुनो निषेधव्यवहारगोचरत्वमिति। भवतु वासत्ख्यातिस्तथापि न ततो व्यतिरेकः प्रामाणिकः॥**

शङ्क० टी०। प्रकृतमुपसंहरति। तदमूरिति। न च सर्वे प्रतिपत्तारः स्वस्ववासनयेत्यादौ दूषणमुक्तं सिंहावलोकितन्यायेन प्रकारान्तरेण स्मारयति। मूकेति। स्वप्नेति। असत्ख्यातिरूपताव्यतिरेकमुपसंहृत्यान्यथाख्यातिरूपतामुपसंहरति। तस्मादिति। तदनुरोधेनापीति शशविषाणादिप्रत्ययानुरोधेनापीत्यर्थः। ननु सत्त्वक्षणिकत्वयोः प्रमितत्वात्तद्व्यतिरेकावपि प्रमितावेव। तथा चाप्रामाणिकेप्याश्रये व्यतिरेकग्रहोस्तु यदाह कीर्त्तिः।

तस्माद्वैधर्म्यदृष्टान्ते नेष्टोवश्यमिहाश्रयः।
तदभावेपि तन्नेति वचनादेव तद्गतेः॥

इत्यतोभ्युपगमस्यापि निरस्यति। भवतु वेति। असत्ख्यातिराश्रयांशे। यद्वा ननु नैयायिकैरपि शुक्तिरजततादात्म्यस्यासत एव भानमङ्गीक्रियते इत्यत आह। भवतु वेति। यद्यपि शुक्तिरजततादात्म्यं च तत्र भासते तच्च सर्वं सदेव। न चासद्विषयत्वं भ्रमत्वे तन्त्रं किं तु प्रकारवैयधिकरण्यमात्रं तथापि सदुपरक्तमसद्विभासत इति पक्षेऽभ्युपगमवादोऽयं न तत इति न तत्रेत्यर्थः।

---

भगी० टी०। सर्वे प्रतिपत्तारः स्वस्ववासनया ऽसदर्थप्रतिपत्तिभाज इत्यत्र दूषणमुपसंहरति। मूकेति। नैतदिति। न

(१) न तदनुरोधेन— पा० २ पु०।

केवलं प्रमाणाभावादपि तु शशविषाणादिविकल्पार्थबोधादपि तस्य शशविषाणारोपरूपत्वमित्यर्थः। भ्रमस्य शुक्तिरजततादात्म्यविषयत्वेऽपि नासत्ख्यातिः शुक्तिरजतयोरिव तादात्म्यस्यापि सत्त्वात्। न च तयोस्तादात्म्येऽसत्ख्यातौ च तादात्म्यं चेत्यतोधिकस्य तस्याभावात् तेषां च सत्त्वात् सद्विषयत्वेऽपि भ्रमत्वं न त्वसद्विषयत्वेन भ्रमत्वमपि तु विशेष्यावृत्तिप्रकारकत्वादिति भावः। ननु साध्यविपरीतधर्मवत्येव धर्मिणि व्यतिरेको न किं तु तदभावेऽपि व्यतिरेको गृह्यते तस्यापि तद्विषयत्वं धर्मत्वाविशेषात् तस्माद् व्यतिरेकयोर्व्याप्तिरलीकरूप एवाश्रये गृह्यतामित्याशयेनाह। भवत्विति। चणिकसत्त्वव्यतिरेकयोरप्यलीकतया व्याप्तिग्रहो न प्रमाणेन शक्य इत्यर्थः॥

---

रघु० टी०। उपसंहरति। तदमूरिति। नैतदित्यादि। अपिर्भिन्नक्रमे शशविषाणादिविकल्पानां विनाऽसत्ख्यातिं दुरुपपादतया तदनुरोधेनोपेततया तथा अवस्तुनि धर्मान्तराभावग्रहात्। तस्यापि निषेधव्यवहारगोचरत्वमिति नेत्यर्थः। शशविषाणे घटत्वादिकं नास्तीति विकल्पानामसत्ख्यातौ कारणाभावेनान्यथाख्यातित्वध्रौव्याद्वस्तुन एव निषेधव्यवहारगोचरत्वं नावस्तुनः अपिः प्रमाणान्तराभावे समुच्चयायेत्यप्याहुः। न ततः तस्मिन्नसति क्रमयौगपद्ययोः सत्त्वस्य च व्यतिरेको विरहः॥

---

**तथाहि कोऽयं व्यतिरेको नाम यद्यतो व्यतिरिच्यते तस्य तत्राभावो वा तदभावस्वभावत्वं वा। तत्र न**

**तावत् क्रमयौगपद्ययोः शशविषाणे अभावः प्रमाण-गोचरः वृक्षरहितभूमृत्कटकवत् क्रमयौगपद्यरहितस्य शशविषाणस्य प्रमाणगोचरत्वात्।**

शङ्क० टी०। यद्यतो व्यतिरिच्यत इति। व्यतिरिच्यते भिद्यते। यथा भूतलाद्भिन्नस्य घटस्याभावो न भूतल इति स्वमते। प्राभाकरमते त्वाह। तदभावेति। तथा च भूतलादे-रधिकरणस्यैव घटाद्यभावस्वरूपत्वमित्यर्थः। अधिकरणभिन्नो वाऽभावोऽधिकरणस्वभावोऽधिकरणस्वरूपं वेति विकल्पार्थः। अपव्याख्यानमन्यत् उक्तिरेतादृशी परनयेन। न तावदिति। पर्वतनितम्बे यथा वृक्षाभावो योग्यानुपलम्भेन गृह्यते न तथा व्यतिरेकग्रहः प्रकृते सम्भवतीत्यर्थः॥

---

भगी० टी०। यद्यत इति। यद्वस्तु यन्निष्ठाभावप्रति-योगित्वेन ज्ञायते तत्र तस्याभाव इति न साध्यावैशिष्ट्यम्। यद्वा यद् यतो व्यतिरिच्यत इत्यनेन क्षणिकसदन्योन्याभावः शशविषाणादावुक्तः स च वैधर्म्यनिरूप्यः तच्च धर्मस्यात्यन्ताभावेन निरूप्यत इत्याशयेनात्यन्ताभावमाह। तस्य तत्राभाव इति। क्रमेति। क्रमयौगपद्याभ्यामर्थक्रियाया इत्यर्थः। वृक्षेति व्यतिरेकदृष्टान्तः॥

---

रघु० टी०। यतोऽधिकरणात् व्यतिरिच्यते व्यावर्त्तते यद्-वृत्तीति यावत् यदधिकरणं यतो यद्धर्मवतो व्यतिरिच्यते

भिद्यते तच्च तस्य धर्मस्येत्यन्ये। केवलमधिकरणमभाव इति मतेनाह। तदभावेति। तस्य अधिकरणस्य। क्रमेति। अर्थ-क्रियानुकूलक्रमयौगपद्ययोः क्रमादिकं सत्त्वस्याप्युपलक्षणम्। एवमग्रेऽपि॥

---

**नापि क्रमयौगपद्याभावरूपत्वं शशविषाणस्य प्रामाणिकं घटाभाववच्छशविषाणस्य प्रमाणेनानुपलम्भात्। घटाभावोऽपि न प्रमाणगोचर इति चेत् न तस्य तद्विविक्तेतरस्वभावस्यापि प्रमाणत एव सिद्धेः असिद्धौ वा तत्राप्यव्यवहार एव।**

शङ्क० टी०। द्वितीयं निरस्यति। नापीति। स्यादेवं यदि शशविषाणे क्रमयौगपद्याभाव इति प्रतीतिः केनापि प्रमाणेन स्यान्न त्वेवमित्यर्थः। घटाभाववदिति व्यतिरेकदृष्टान्तः अधिकरणस्वभावत्वेऽप्यभावस्य प्रतीतिरेतादृश्येवाभ्युपेयेति भावः। ननु यथा प्रमाणाविषयस्यापि घटाभावस्य व्यवहारः सर्वजनीनस्तथा क्रमयौगपद्याभावव्यवहारोपि स्यादित्यभिप्रायेण शङ्कते। घटाभावोपीति। परिहरति। तस्येति। घटविविक्तं घटभिन्नं भूतलादि। तदतिरिक्तस्वभावस्य घटाभावस्येत्यर्थः। यथाधिकरणातिरिक्तो घटाभावः प्रत्यक्षत उपलभ्यते। नैवं क्रमयौगपद्याभाव इति भावः। ननु भूतले घटो नास्तीति प्रतीतिरप्यसत्ख्यातिरेवेत्यत आह। असिद्धाविति। तत्रापि घटाभावेपि। प्रमितस्यैव व्यवहार्यत्वादिति भावः॥

---

भगी० टी०। द्वितीयं कल्पं निरस्यति। नापीति। घटाभाववदित्ययमपि व्यतिरेकदृष्टान्तः। ननु बौद्धानां घटाभावोऽपि न प्रामाणिक इति सर्वथाप्रामाणिको लोकव्यवहार इत्याह। घटाभावोऽपीति। अतिरिक्ताभावस्य साधनीयत्वेन स्वमतमाश्रित्याह। तद्विविक्तेति। तस्मादभावाद्विविक्तो भिन्नः प्रतियोगी घटस्तदितरस्वभावस्येत्यर्थः। तद्विविक्तो घटविविक्तः पटादिस्तदितरस्वभावस्येत्यन्ये। गुरुवचनमाश्रित्योत्तरमित्यपरे। तथा चातिरिक्ताभावस्याप्रामाणिकत्वेऽपि भूतलादिरूपस्तन्मये व्यवहर्तव्यः प्रामाणिक एवेत्यर्थः॥

---

रघु० टी०। घटाभाववदिति व्यतिरेकेण दृष्टान्तः तस्यासिद्धिमाह। घटाभावोपीति। तथा च पक्षः स्थिरो भाव इव सपक्षादिरप्यप्रामाणिक उपयुज्यत इति भावः। तद्विविक्तेतरेति। तद्विविक्तस्तद्भिन्नस्तदितरस्वभावस्य प्रतियोगिवदभावस्याप्यतद्व्यावृत्तस्वभावस्य प्रमाणसिद्धत्वाच्च केवलमधिकरणमन्यो वेत्यन्यदेतदिति भावः। तत्रापि घटाभावेऽपि॥

---

घटस्तावत् स्वाभावविरहस्वभावः प्रमाणसिद्धः तादूप्येण कदाचिदप्यनुपलम्भात्। एतावतैव तदभावोऽपि घटविरहस्वभावः सिद्ध इति चेन्न घटभावस्य तदभावविरहस्वभावत्वानभ्युपगमात्। न चान्यस्य

**स्वभावे प्रमाणगोचरे तदन्योऽपि सिद्धः स्यादिति-प्रसङ्गात् ।**

शङ्क० टी०। प्रमाणाविषयस्यापि घटाभावस्य व्यवहार्यत्व-मुपपादयति। घटस्यावदिति। ताद्रूप्येणेति। स्वाभावरूपतये-त्यर्थः। न हि भवति घटाभाव एव घट इति प्रतीतिरिति भावः। घटविरहस्वभावः सिद्ध इति। न तु स्वातन्त्र्येण प्रमित इति रहस्यम्। गूढाभिसन्धिराह(?)। घटभावस्येति। क्वचिद्घटा-भावस्येति पाठः। स च घटस्याभावभावस्येति कथञ्चिदुपपाद्यः अभावस्याप्रामाणिकत्वे घटस्य स्वाभावविरहस्वाभाव्यस्याविप्रति-पद्यामह इति भावः। दोषान्तरमाह। न चेति तथा च स्तम्भे प्रवर्त्तमानं प्रमाणं कुम्भमपि साधयेदित्यर्थः॥

---

भगी० टी०। ननु चाप्रामाणिकेनापि व्यवहारः न चाति-प्रसङ्गः यः स्वाभावविरहस्वभावः प्रामाणिको भवति तदभावेना-प्रामाणिकेनापि व्यवहार इत्यस्य नियामकत्वादित्याह। घटस्या-वदिति। ताद्रूप्येण प्रतियोग्यात्मत्वेनेत्यर्थः। एतावतैवेति। यदि घटाभावो घटविरहस्वभावो न स्यात् तदा घटस्यापि स्वाभावविरहस्वभावत्वं न स्यात् तथा च तथैवोपलम्भेतेत्यर्थः। घटो न घटाभावविरहरूपो विरहस्य लम्भतेऽलीकतया घटस्य तद्रूपत्वेऽलीकत्वप्रसङ्गादित्याह। घटभावस्येति। घटरूपो भावो घटभावस्तस्येत्यर्थः। क्वचिद् घटाभावस्येति पाठः। तत्र तदभावो घटस्तथा च घटाभावस्य घटविरहस्वभावताभ्युपगमेऽलीकत्वव्याघा-

तत्तस्याखभावत्वादित्यर्थः । दूषणान्तरमाह । न चेति । घटस्य खाभावविरहखभावत्वग्राहकमानेन घटाभावस्याविषयीकरणाद्-विषयसिद्धौ चातिप्रसङ्ग इत्यर्थः ॥

---

रघु० टी० । असिद्धे व्यवहाराभाव इति सत्यम् अभावस्तु प्रतियोगिनः खाभावविरहखभावस्य सिद्धैव सिद्धम् इत्याशङ्कते । घटस्यावदिति । ताद्रूप्येण खाभावरूपत्वेन । तथा च तद्विरुद्धखभाव. प्रतियोग्येव तदभावः । प्रतियोगिसत्त्वग्रहे कदाचिदप्यभावस्याव्यवहारात् घटाभावोपि घटविरहखभावः सिद्ध इत्यत्र तन्मतविरोधमाह । घटभावस्येति । तदभावो घटः तद्विरहः तदभावस्तथा च घटाभावस्य घटविरहखभावता-यास्तथानभ्युपगमात् अभावमात्रस्यैव निःखभावतया त्वया तुच्छत्वा-भ्युपगमात् । घटाभावस्येति पाठे तु घटरूपस्य खभावस्य खाभा-वविरहत्वानभ्युपगमादित्यर्थः । प्रतियोगिनः खाभावविरहात्मत्वे प्रामाणिके अभावप्रामाणिकताया आवश्यकत्वादिति भावः ॥

---

एवम्भूतावेव घटतदभावौ यदेकस्य परिच्छित्तिर-परस्य व्यवच्छित्तिरिति चेत् न घटवद्घटाभावस्यापि प्रामाणिकत्वानभ्युपगमे स्वभाववादानवकाशात् । प्रमा-णसिद्धे हि वस्तुनि स्वभाववादावलम्बनं न तु स्वभाव-

**वादावलम्बनेनैव वस्तुसिद्धिरिति(१) भवतामेव तत्तत्र जयदुन्दुभिः।**

शङ्क० टी०। अतिप्रसङ्गं परो व्युदस्यति। एवंभूतावेवेति। प्रतियोगिनि प्रवृत्तं प्रमाणमनुयोगिनमपि विषयीकरोत्यत्र प्रतियोग्यनुयोगीभाव एव नियामक इति नातिप्रसङ्गो न वाऽभावस्य स्वतन्त्रप्रमाणविषयत्वमिति भावः। घटवदिति। व्यतिरेकदृष्टान्तः। स्वभावो हि स्वरूपं तच्च निःस्वरूपस्य प्रमाणपथानवतीर्णस्य न सम्भवतीत्यर्थः। त्वयापि प्रमाणसिद्ध एव स्वभावावलम्बनमङ्गीकर्तव्यमित्याह। प्रमाणसिद्धे हीति॥

---

भगी० टी०। ननु यद्यप्यन्यस्य प्रतीतिरन्यपरिच्छित्तिर्न भवति तथापि घटतदभावयोरेकस्य प्रतीतिरन्यव्यवच्छित्तिर्न भवति तथापि घटतदभावयोरेकस्य प्रतीतिरन्यव्यवच्छित्तिरेव भवति न हि प्रमाणप्रतीतमेव व्यवच्छेद्यमित्यस्ति नियमः परमतस्याव्यवच्छेद्यत्वापत्तेः अतिप्रसङ्गे च स्वभाव एव शरणमित्याह। एवम्भूताविति। एवंस्वभावावित्यर्थः। घटवदिति व्यतिरेकदृष्टान्तः॥

---

रघु० टी०। अपि च घटस्य घटस्वभावत्वेन सिद्धैव तदभावस्य सिद्धिः स्वाभावविरहस्वभावत्वेन सिद्धा वा आद्ये न चेति स्वभावभेदस्य नियामकत्वान्नातिप्रसङ्ग इत्याशङ्कते एवम्भूताविति। एवंस्वभावोवित्यर्थः। परिच्छित्तिर्निश्चयः। व्यवच्छित्तिरभावावधा-

(१) वस्तुव्यवस्थितिरिति— पा० १ पु०।

रणम् तथा च घटपरिच्छित्तौ स्वाभावतैरश्चिन्येन घटाभावोपि सिद्ध इत्यर्थः। निराकरोति। घटवदिति। व्यतिरेके दृष्टान्तः स्वभावेति। निःस्वभावत्वेनाभ्युपगमात् अभावे सस्वभावत्वाभ्युपगमविरोध इति भावः॥

तत् किमिदानीं स्वाभावविरहस्वभावो घटः प्रमाणान्नैव सिद्धः तव दृष्ट्या एवमेतत् घटो हि यादृक्तादृक्स्वभावस्तावत् प्रमाणपथमवतीर्णस्तस्य तु यदि परमार्थतोऽभावोऽपि कश्चित् स्यात् स्यात् परमार्थतः सोऽपि तद्विरहस्वभाव इति तथैव प्रमाणेनावेदितः स्यात्। न चैतदभ्युपगम्यते भवता तस्माद् घटवत् तदभावस्यापि प्रामाणिकत्वेनैवानयोः परस्परविरहलक्षणव्यतिरेकसिद्धिः अप्रामाणिकत्वे त्वनयोरपि न तथाभाव इति शशविषाणादिष्वपीयमेव गतिः॥

शङ्क॰ टी॰। तत्किमिति। तथा सति स्वाभावाभावो नैव घटः स्यादिति साचेपपराभिप्रायः(१)। तव दृष्ट्येति। दृष्टिर्दर्शनम्। त्वद्दर्शने चेदभावो न प्रामाणिकस्तदा तद्विरहस्वभावो घटोऽपि न प्रामाणिकः स्यादित्यर्थः। यादृक्तादृक्स्वभाव इति। अवयवी परमाणुस्वरूपो वेत्यर्थः। तथैवेति। स्वाभावविरहस्वभावत्वेनेत्यर्थः। उभयोः प्रामाणिकत्वमुपसंहरति। तस्मादिति। अनयोर्घटतद-

(१) सापेक्षाभिधानाभिप्रायः—पा॰ २ पु॰।

भावयोः। न चानयोरन्योन्यापेक्षायामन्योन्याश्रयः घटत्वेन घटे गृह्यमाणे तद्विरहानपेक्षणात् तद्विरहस्यापि प्रमेयत्वादिना ज्ञाने(१) घटानपेक्षणादिति भावः। न तथाभाव इति। नान्योन्यविरहस्वभावत्वमित्यर्थः। शशविषाणादिष्वपीति। शशविषाणादीनां प्रामाणिकत्वे परतन्त्रक्रमयौगपद्यविरहनिरूपणं नान्यथेत्यर्थः। तथा च प्रमाविषयस्यैव व्यवहारविषयत्वादिति यदुपक्रान्तं तत्सिद्धमिति भावः॥

---

भगी० टी०। तत् किमिति। तथा च घटः स्वाभावात्मकः स्यादिति भावः। तव इष्टेति। अभावस्य प्रामाणिकत्वे घटस्तद्विरहात्मकः। न चाभावस्तव मते प्रामाणिक इत्यर्थः। तस्मादिति। ननु घटतदभावयोः प्रामाणिकत्वे यदि परस्परविरहरूपत्वं तदा परस्परापेक्षप्रतीतिकतया नैकस्यापि प्रतीतिरन्योन्याश्रयात्। मैवम् अस्ति हि घटस्य घटत्वं स्वाभावाभावात्मकत्वं च रूपं तत्र यद्यपि स्वाभावाभावत्वेन प्रतीतौ प्रतियोग्यभावनिरूपणापेक्षा तथापि घटत्वेन रूपेण प्रतीतौ न तदपेक्षा अन्यथा भावाभावयोरभेदप्रसङ्गः तथा प्रमेयत्वेनाभावप्रतीतौ न प्रतियोगिज्ञानापेक्षा अभावत्वेन तत्प्रतीतौ तदपेक्षा अभावाभावत्वं तत्र धर्मान्तरं वर्तत इत्यन्ये। शशविषाणादिष्विति। यदि शशविषाणादि प्रामाणिकं स्यात् तदा क्रमयौगपद्यव्यतिरेकस्तद्रूपत्वं च प्रामाणिकं स्यान्न चैवमित्यर्थः।

---

(१) भाने– पा० २ पु०।

रघु० टी०। अथ भाव एवैतादृशस्वभावो यदेतस्य परिच्छित्तिरेव तदभावव्यवच्छित्तिरिति चेत् भावपरिच्छित्तेस्तदभावव्यवच्छित्तिरूपतायाः प्रामाणिकत्वे तदभावस्यापि प्रामाणिकत्वमर्जनीयम्। द्वितीयं शङ्कते। तत्किमिति। तथा च घटशून्य इव घटवत्यपि घटाभावव्यवहारप्रसङ्ग इति भावः। निराकरोति। तदेत्यादि। तदेव व्युत्पादयति। घटो हीति। यादृगिति। परमाणुपुञ्जोऽवयवी चेति। सोऽपि घटोपि तद्विरहस्वभावः स्वाभावविरहस्वभावः तथैव स्वाभावविरहस्वभावत्वेनैव भावस्य स्वाभावविरहात्मकतायाः प्रामाणिकत्वे वाभावप्रामाणिकत्वध्रौव्यात् अनयोर्घटतदभावयोः व्यतिरेको विरोधः तदीयत्वेनैव च निरूपणे तज्ज्ञानमपेक्ष्यते नान्यथेति विनाप्यभावज्ञानं तदभावात्मनो भावस्य निरूपणं नानुपपन्नम्॥

---

ननु काल्पनिकरूपसम्पत्तिरेवास्त्वनुमानाङ्गं तच्च तस्याः सर्वत्र सुलभत्वात्। ननु पक्षसपक्षविपक्षास्तावदस्त्ववस्तुभेदेन द्विरूपाः तत्र ये कल्पनोपनीतास्तत्र काल्पनिका एव पक्षधर्मान्वयव्यतिरेकाः प्रमाणोपनीतेषु तु प्रामाणिका एवेति विभागः। तदिह काल्पनिकान्निरग्नेर्यद्यपि प्रमेयत्वादेर्व्यावृत्तिः काल्पनिकी सिद्धा तथापि प्रामाणिकाज्जलह्रदादेः प्रामाणिक्येवैषितव्या सा च न सिद्धेति कुतस्तस्य हेतुत्वम्। एवं प्रामाणिके

शब्दे पक्षीकृते प्रामाणिक एव हेतुसद्भावो वक्तव्यः । न चासौ चाक्षुषत्वस्यास्तीति सोऽपि कथं हेतुः एवं कृतकत्वस्यापि वस्त्वेकनियतस्य धर्मस्य वास्तव एवान्वयो वक्तव्यः वस्तुनो विपक्षाच्च वास्तव एव व्यतिरेकः ॥

शङ्क० टी० । ननु सत्त्वक्षणिकत्वयोर्व्यतिरेकः कल्पनया तावदुपनीत एतावतैव तदनुमानं प्रवर्त्तताम् किं व्यतिरेकस्य प्रामाणिकत्वपक्षेणेत्याह । नन्विति । पर्वतो वह्निमान् प्रमेयत्वान्महानसवत् । शब्दोऽनित्यश्चाक्षुषत्वात् घटवत् । नित्यः शब्दः कृतकत्वादित्यत्र व्यभिचारासिद्धिविरोधानां यथाक्रमं हेत्वाभासतयाऽसाधकत्वं त्वया यदुच्यते तदपि न स्यादित्याह । तस्या इति । काल्पनिकरूपसम्पत्तेः सर्वत्रोदाहृतेषु सुलभत्वादित्यर्थः । ननु निरग्निकात् कूर्मरोमादेर्विपक्षात् प्रमेयत्वव्यावृत्त्या विपक्षाद्व्यावृत्तिः काल्पनिके शब्दे चाक्षुषत्वसत्त्वेन पक्षसत्त्वं काल्पनिके नित्ये गगनारविन्दे कृतकत्वसत्त्वादन्वयो नित्यत्वकृतकत्वयोरिति काल्पनिकी रूपसम्पत्तिर्यथा त्वयोच्यते । तथा हृदे विपक्षे प्रमेयत्वस्य सत्त्वाद्विपक्षगामित्वं वास्तवे शब्दे चाक्षुषत्वस्यासत्त्वादपक्षवृत्तित्वं नित्ये वस्तुनि कृतकत्वस्यावृत्तेर्विरुद्धत्वमत उक्तानां हेतूनां कथं गमकत्वं स्यादित्याशङ्कते । नन्विति ॥

---

भगी०टी० । ननु यत्र क्षणिकं तत्रार्थक्रियाकारीत्यत्र यद्यपि प्रामाणिकी विपक्षाद् व्यावृत्तिर्नास्ति तथापि काल्पनिक्येव यानुमितिजनिकास्तामित्याह । नन्विति । रूपं पक्षस-

त्त्वादि । तथा सति सव्यभिचारासिद्धविरुद्धानामपि काल्पनिकीं रूपसम्पत्तिमादायानुमितिजनकत्वं स्यादित्याह । तस्या इति । बौद्धानामनैकान्तिकासिद्धविरुद्धास्तयो हेत्वाभासास्तत्र क्रमेण काल्पनिकरूपसम्पत्तेरगमकत्वमाह । तदिहेति ।

---

रघु० टी० । रूपं सपक्षसत्त्वादि । तस्याः काल्पनिकरूपसम्पत्तेः । सर्वत्रानैकान्तिकासिद्धविरुद्धेषु त्वदनुमतेषु हेत्वाभासेषु तत्र तेषु द्विरूपेषु पक्षादिषु मध्ये । तत्र तेषु काल्पनिकपक्षसपक्षविपक्षेष्विति । तथा चासत्त्वे साध्ये काल्पनिकयोः पक्षसपक्षयोः स्थिरभावशशशृङ्गयोः काल्पनिकमेव क्रमयौगपद्यविरहस्य हेतोः सत्त्वं क्षणिकत्वे च साध्ये सत्त्वस्य काल्पनिकशशशृङ्गादौ विपक्षे काल्पनिक एव व्यतिरेको गमकतौपयिकरूपमिति भावः । तदिह वह्नौ साध्ये एवं शब्दस्यानित्यत्वे साध्ये एवं नित्यत्वे साध्ये । वस्त्वेकनियतस्येति ॥

---

न च तस्य तौ स्तः तत् कथमसावपि हेतुरिति प्रलपितमेतत् नहि नियामकमन्तरेण सम्पदं प्रति कल्पना त्वरते विपदं प्रति तु विलम्बत इति शक्यं वक्तुम् तथा च निरग्निकमपि कूर्मरोम सधूममिति कल्पनामात्रेण विपक्षवृत्तित्वात् धूमोऽपि नाग्निं गमयेत् । वास्तव्यां रूपसम्पत्तौ किमनेन काल्पनिकेन दोषेणेति चेत्

**तर्हि वास्तव्यामसम्पत्तौ किं काल्पनिकया तयेति समानं विरोधाविरोधौ विशेष इति चेत् कुत एषः उभयोरेकत्र वस्त्ववस्तुत्वादन्यत्रावस्तुत्वादिति चेत् तत् किं काल्पनिकोऽपि धूमो वस्तुभूतो येन कूर्मरोम्णस्तेन सह विरोधः स्यात् क्वचिद्वस्तुभूत एवेति निर्धूमत्वमपि क्वचिद्वस्तुभूतमिति तेनापि विरोध एव। तस्माद् यथा काल्पनिकी विपत्तिर्न दोषाय तथा काल्पनिकी सम्पत्तिरपि न गुणायेति व्यतिरेकभङ्गः॥**

शङ्क० टी०। परिहरति। प्रलपितमेतदिति। प्रलापोऽनर्थकं वचः तथा च त्वदभिधानमर्थशून्यमित्यर्थः। तदेव दर्शयति। न हीति। क्षणिकत्वसत्त्वयोरलीके व्यतिरेकसिद्धिः काल्पनिकी तव सम्मत्। सद्धेतोरप्यसद्धेतुत्वापत्तिर्विपत्। विपदमेव दर्शयति। तथा चेति। ननु वस्तुनो विपक्षाद्धूमस्य वस्तुनो व्यावृत्तिरस्त्येवेति धूमो वह्निं कथं न गमयेदित्याह। वास्तव्यामिति। सत्त्वक्षणिकत्वयोरपि त्वदुपदर्शिता व्यतिरेकसम्पत्तिरवास्तव्येत्याह। तर्हीति। ननु कूर्मरोम्णि वस्तुसतो धूमस्य वृत्तौ विरोधः क्षणिकत्वस्य क्रमयौगपद्य-विरहस्य चासत एवासति कूर्मरोम्णि वृत्तावविरोध इत्याह। विरो-धेति। उभयोरिति। धूमकूर्मरोम्णोरेकत्र धूमानुमानस्थले वस्तु-वस्तुत्वादन्यत्र त्वदुपदर्शिते व्यतिरेकेऽवस्तुत्वादिति विरोधाविरोधा-दित्यर्थः। तत्किमिति। अवस्तुभूतस्यैव धूमस्यावस्तुनि निरग्निके गतत्वेन व्यभिचारस्य मयोक्तत्वात् क्व विरोध इत्यर्थः। क्वचिदिति।

हेतुत्वेनोपात्तो धूमो वस्तुभूत एव[१] स च नावस्तुनीति न व्यभिचार इत्यर्थः । तर्हि निर्धूमत्वमपि कूर्मरोम्णि कथं वर्तताम् हृदादौ तस्य वस्तुत्वात् तथा च निरग्निकेऽलीके न धूमवत्त्वं नापि निर्धूमत्वमिति महान्विरोध इत्याह । निर्धूमत्वमपीति । व्यतिरेकभङ्ग इति । व्यतिरेकव्याप्तिग्रहभङ्ग इत्यर्थः । तथा च लभ्यते नान्वयव्यतिरेकग्रहोपि सत्त्वक्षणिकत्वयोरिति भावः ॥

---

भगी० टी० । यथा काल्पनिकी रूपसम्पत्तिर्गमिका तथा तादृश्येव लिङ्गरूपविपत्तिरगमिका स्यादित्याह । नहीति । रूपविपत्तिमेवाह । तथा चेति । तथा काल्पनिकरूपसम्पत्त्येत्यर्थः । ननु कल्पनापि न विरुद्धं विषयीकरोति धूमस्य हि वस्तुनः कूर्मरोम्णालीकेन विरोधोऽक्षणिकत्वकूर्मरोम्णोरुभयोरप्यलीकत्वान्न विरोध इति नियामकं स्यादित्याह । विरोधेति । उभयोरिति । निरग्निकमपि कूर्मरोम सधूममिति शङ्किते उभयोर्धूमकूर्मरोम्णोरेकत्र धूमेनाग्न्यनुमाने धूमस्य वस्तुत्वं कूर्मरोम्णस्त्ववस्तुत्वमिति वस्तुनो धूमस्यावस्तुना कूर्मरोम्णा सम्बन्धो विरुद्धः । अन्यत्राक्षणिकमर्थक्रियारहितमित्यत्र व्यतिरेके शशविषाणार्थक्रियारहितत्वयोर्द्वयोरप्यवस्तुत्वान्न विरोध इत्यर्थः । तत् किमिति । वस्तुनो धूमादवस्तुधूमोऽन्य एवेति न तस्यालीकत्वेन सम्बन्धो विरुद्ध इत्यर्थः । निर्धूमत्वमपीति । निर्धूमत्वस्य जलहृदादौ वस्तुनो यथा काल्पनिकेन तेन विरोधस्तथा धूम-

---

(१) वस्तुसत एव– पा० २ पु० ।

स्यापि क्वचिदस्तुत्वेऽपि काल्पनिकेन तेन न विरोध इति विपक्षे कूर्मरोमादौ वृत्तेर्धूमोऽपि नाग्निं गमयेत् यदि चालीको वह्नि-रपि तत्रास्तीति न धूमस्य विपक्षे वृत्तिस्तदा शशविषाणेऽपि काल्पनिकः साध्यसाधनसम्बन्धोऽस्तीति न तयोर्व्यतिरेक इत्यर्थः ॥

---

रघु० टी०। वस्तुमात्रधर्मस्यावस्तुनि नित्ये ऽलीकेऽन्वयो विरोधात् कल्पयितुं न शक्यत इति सूचनाय तर्हीत्यादि। रूपस्यासम्पत्तौ। तथा रूपसम्पत्त्याऽसति विपक्षे सतो धूमस्य सत्त्वं कल्पयितुं न शक्यते विरोधात् शक्यते पुनरसतोः पक्षस-पक्षयोरसतः क्रमादिविरहस्य सत्त्वं सतोपि च सत्त्वस्यासति शश-शृङ्गेऽसत्त्वेव व्यतिरेकोऽविरोधादित्याह। विरोधेति। कुत एष विशेषो विरोधोऽविरोधश्चेत्यर्थः। एकत्र धूमेन वह्नौ साध्ये। उभ-योर्धूमशशशृङ्गयोरन्यत्र क्रमादिविरहेणासत्त्वे सत्त्वेन चणिकत्वे वा। पक्षहेत्वोर्हेतुसपक्षयोर्विपक्षहेत्वभावयोर्यादृशं क्वचिदस्तुभूतं तादृशं यद्यवस्तुभूतमप्यवस्तुनि कल्पयितुं न शक्यते तदा निर्धूमत्वं क्वचिदस्तुभूतमित्यवस्तुभूतमपि तदवस्तुनि न कल्प्येत वास्तवं तु सुतरामशक्यकल्पनमिति काल्पनिकविपक्षव्यतिरेकविरहात् धूमो नाग्निं गमयेदित्याह। निर्धूमत्वमपीति। अथ यद्वास्तवं तस्यैवा-वस्तुनि संसर्गो विरुध्यते न तु तादृशस्यावास्तवस्यापि हेतुश्च वास्तवे वह्नौ वा एव धूमो न चास्य काल्पनिकमपि विपक्षवृत्तित्वं विरोधादिति चेद्वस्तवस्तुनोः संसर्गो विरुद्ध्यते नावस्तुनोरित्यत्र न

किञ्चिदपि प्रमाणं कल्पनामात्रस्य वैपरीत्येनापि सुलभं वस्तुनो धूमस्य वस्तुनि जलह्रदादौ कल्पनं च दुर्वारं वास्तवमेव च पक्षसत्त्वादिकमनुमानोपयोगिरूपत्वादन्यथातिप्रसङ्गात् । ननु क्वचित्किञ्चिद्वास्तवं क्वचिच्चावास्तवमपि नियामकाभावात् कल्पना-गौरवप्रसङ्गश्चेत्यभिसन्धायोपसंहरति । तस्मादिति । व्यतिरेकः क्रमादिविरहेण स्थिरस्य सत्त्वव्यतिरेकसाधनं क्षणिकत्वसाधनस्य च सत्त्वस्य अप्रसङ्गे व्यतिरेकस्तयोर्भङ्गः । प्रतियोग्युतरभाविनो हि कारणस्यापेक्षणीयत्वे सत्यपि प्रतियोगिनि तद्विलम्बाद्विलम्बो नाशस्य स्यात् निरस्ते च तस्मिन् भावस्योत्पत्त्यनन्तरमेव विनाशः स एव च क्षणभङ्गः ॥

**अस्तु तर्हि ध्रुवभावित्वेन विनाशस्याहेतुकत्वे सिद्धे[1] क्षणभङ्गः न विकल्पानुपपत्तेः । तद्धि तादात्म्यं वा निरूपाख्यत्वं वा तत्कार्यत्वं वा तद्व्यापकत्वं वा अभावत्वमेव वेति । न पूर्वः निषेध्यनिषेधयोरेकत्वा-नुपपत्तेः । उपपत्तौ वा विश्वस्य वैश्वरूप्यानुपपत्तेः ।**

शङ्क० टी० । ध्रुवभावित्वे तु वक्ष्यत इति यदुक्तं तत्राह अस्त्विति । ध्रुवमवश्यं भावोऽस्यास्तीति ध्रुवभावी विनाशः । एता-वता सत्त्वक्षणिकत्वयोर्व्याप्तिः सेत्स्यतीति हृदयं विकल्पेति । विकल्पस्य प्रकृतविचारौपयिकसंशयस्यानुपपत्तेरित्यर्थः । यद्वा विकल्पानां विविधकल्पानां त्वदभिमतानाम् अनुपपत्तेरित्यर्थः । यद्वा विकल्पे

(१) ध्रुवभावित्वाद्विनाशस्याहेतुकत्वेन– पा० १ पुं० ।

क्रियमाणे त्वदभिमतपक्षानुपपत्तेरित्यर्थः। तद्धीति। विनाशस्य ध्रुवभावित्वानामित्यर्थः। यद्यपि एते विकल्पा ध्रुवभावित्वस्य न भवितुमर्हन्ति तदर्थासंस्पर्शात्। तथापि तात्पर्यानुसारेण कथंचिद्विनाशस्याहेतुकत्वप्रयोजका द्रष्टव्याः भावानां विनाशोऽहेतुकः ध्रुवभावित्वात् यद्यद्ध्रुवभावि तदहेतुकं तादात्म्यं वेति विनाशस्य प्रतियोगितादात्म्यमित्यर्थः। निरुपाख्यत्वमिति(१) अलीकत्वमित्यर्थः। तत्कार्यत्वमिति। प्रतियोगिकार्यत्वमित्यर्थः। व्यापकत्वं चेति। प्रतियोगिव्यापकत्वमित्यर्थः। निषेधेति। नहि घट एव घटविनाश इति कस्यचिदनुभवो व्यवहारो वेति भावः। ननु परीक्षिताना तावत्तदुभयमस्तीत्यत आह। उपपत्तौ वेति। वैश्वरूप्यं वैचित्र्यं तदनुपपत्तिः। सर्वेषां घटपटादीनामभावैकस्वभावत्वादित्यर्थः॥

---

भगी० टी०। सत्त्वक्षणिकत्वव्याप्तिग्राहकं मानान्तरमाह। अस्तु तर्हीति। मन्मात्रस्योत्पत्तिमत्त्वादुत्पत्तिमतां च विनाशध्रौव्यस्योभयवादिसिद्धत्वेन प्रयोगः। यद्यस्य ध्रुवभावि तत्र न तद्धेत्वन्तरापेक्षं यथा जलपरमाणौ रूपं यद्वा ध्रुवभावित्वेन विनाशस्याहेतुकत्वं साध्यं तत्र प्रतियोगीव्यापकसामग्रीकत्वं वस्तुतो भावोत्पत्त्यव्यवहितोत्तरक्षणः ध्वंसाधारः भावोत्पत्त्यव्यवहितोत्तरक्षणत्वात् उभयसिद्धतदाधारक्षणवत्। यद्वा एतद्घटध्वंस एतदव्यवहितोत्तरक्षणोत्पत्तिकः एतत्कार्यत्वात् एतद्रूपवदित्यत्र तात्पर्यम्। तादात्म्यमिति। ध्वंसस्य घटातिरेके ध्वंसोत्पत्तौ घटतादव-

---

(१) निरूपाख्यमिति क्वचित्– पा०।

| | | |
|---|---|---|
| Ditto Vol. II, Fasc. 1–2 @ 1/4/- each | | |
| Ditto (Appendix) Gobhila Parisista | | |
| Ditto Grihya Sangraha | [illegible] | [illegible] |
| Haralata | 1 | [illegible] |
| Institutes of Vishnu (Text), Fasc. 2 @ -/10/- each | 0 | [illegible] |
| Kāla Viveka, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Karmapradiph, Fasc. 1 | 1 | [illegible] |
| Kātantra, Fasc. 1–6 @ -/12/- each | 4 | 8 |
| Katha Sarit Sagara (English), Fasc. 4–14 @ 1/- each | 1 | 0 |
| Kavi Kalpa Lata, Fasc. 1 | 0 | 0 |
| Kavindravacana Samuccayah | 3 | 8 |
| Kiranavali, Fasc. 1–3 @ -/10/- | 1 | 4 |
| Kurma Purana, Fasc. 1–9 @ -/10/- each | 5 | 0 |
| Lalita Vistara (English), Fasc. 1–3 @ 1/- each | 3 | 0 |
| Madana Pārijāta, Fasc. 1–11 @ -/10/- each | 6 | 4 |
| Mahā-bhāsya-pradīpodyota, Vol. I, Fasc. 1–9; Vol. II, Fasc. 1–12; Vol. III, Fasc. 1–10 @ -/10/- each | 19 | 6 |
| Ditto Vol. IV, Fasc. 1–3 @ 1/4/- each | 3 | 12 |
| Maitra, or Maitrayaniya Upanishad, Fasc. 1–2 | 1 | 4 |
| Manutīkā Sangraha, Fasc. 1–3 @ -/10/- each | 1 | 14 |
| Mārkandeya Purana (English), Fasc. 1–9 @ 1/- each | 9 | 0 |
| Markandeya Purana (Text), Fasc. 4–7 @ -/10/- each | 2 | 8 |
| Mimansa Darcana (Text), Fasc. 9, 11–17 @ -/10/- each | 5 | 0 |
| Mirror of Composition (English), Fasc. 4 | 2 | 0 |
| Mugdhabodha Vyakarana, Vol. I, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Nirukta (2nd edition), Vol. I, Fasc. 1–2 @ 1/4/- | 2 | 8 |
| Nirukta (old edition), Vol. IV, Fasc. 1–8 @ -/10/- each | 5 | 0 |
| Nityācārapaddhati, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Nityācārapradīpa, Vol. I, Fasc. 1–8, Vol. II, Fasc. 1–4 @ -/10/- each | 7 | 8 |
| Nyaya Vartika Tatparya Parisudhi, Fasc. 1–5 @ -/10/- each | 3 | 2 |
| Nyayavartika (Text), Fasc. 2–7 @ -/10/- each | 3 | 12 |
| Nyayasarah | 2 | 0 |
| Padumāwati, Fasc. 1–6 @ 2/- each | 12 | 0 |
| Pārāçara Smrti, Vol. I, Fasc. 2–8; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6 @ -/10/- each | 11 | 14 |
| Parāçara, Institutes of (English) @ 1/- each | 1 | 0 |
| Paricista Pravan (Text), Fasc. 5 @ -/10/- each | 0 | 10 |
| Pariksamukha Sutram | 1 | 0 |
| Prabandhacintāmani (English), Fasc. 1–3 @ 1/4/- each | 3 | 12 |
| Prākrita-Paingalam, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Prthviraja Vijaya, Fasc. 1–2 | 1 | 4 |
| Rasarnavam, Fasc. 1–3 | 3 | 12 |
| Ravisiddhanta Manjari, Fasc. 1 | 0 | 10 |
| Saddarçana-Samuccaya, Fasc. 2–3 @ -/10/- each | 1 | 4 |
| Sadukti-karna-mrita, Fasc. 1 @ -/10/- each | 0 | 10 |
| Samaraicca Kaha, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Samavada Sanhita, Vol. I, Fasc. 1–4, 6–10; Vol. 2, Fasc. 2–6; Vol. 3, Fasc. 1–7; Vol. 4, Fasc. 1–6; Vol. 5, Fasc. 1–8 @ -/10/- each | 21 | 4 |
| Sankara Vijaya (Text), Fasc. 2–3 @ -/10/- each | 1 | 4 |
| Sankhya Aphorisms of Kapila (English), Fasc. 2 | 1 | 0 |
| Sankhya Pravachana Bhashya, Fasc. 2 | 0 | 10 |
| Sānkhya Sūtra Vrtti, Fasc. 1–4 @ -/10/- each | 2 | 8 |
| Ditto (English), Fasc. 1–3 @ 1/- each | 3 | 0 |
| Siva Parinahya, Fasc. 1–2 | 1 | 4 |
| Six Buddhist Nyaya Tracts | 0 | 10 |
| Smriti Prakasha, Fasc. 1 | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1–6 @ -/10/- each | 3 | 12 |
| Srauta Sutra of Latyayana (Text), Fasc. 1–9 @ -/10/- each | 5 | 10 |
| Sri Surisarvasvam, Fasc. 1–3 @ -/10/- each | 1 | 14 |
| Suçruta Samhitā (English), Fasc. 1 @ 1/- each | 1 | 0 |
| Suddhi Kaumudī, Fasc. 1–4 @ -/10/- each | 2 | 8 |
| Sundaranandam Kavyam | 1 | 0 |
| Suryya Siddhanta, Fasc. 2 @ 1/4/- | 1 | 4 |
| Syainika Sastra | 1 | 0 |
| Taittereya Samhita (Text), Fasc. 17–45 @ -/10/- each | 18 | 2 |
| Taittiriya Aranyaka of Black Yajur Veda (Text), Fasc. 5–11 @ -/10/- each | 4 | 6 |
| [illegible] Fasc. 3–24 @ -/10/- each | 13 | 12 |

| | | |
|---|---|---|
| *Tandya Brahmana [illegible] | 3 | 12 |
| Tantra Vārtika (English), Fasc. 1-15 @ -/1/4 .. | 18 | 12 |
| *Tattva Cintāmani, Vol. II, Fasc. 7-10; Vol. III, Fasc. 1-2; Vol. IV, Fasc. 1; Vol. V, Fasc. 1-5; Part IV, Vol. II, Fasc. 1-12 @ -/10/- each .. .. .. .. .. | 14 | 6 |
| Tattva Cintamani Didhiti Prakas, Fasc. 1-6 @ -/10/- each .. | 3 | 12 |
| Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-3, Vol. III, Fasc. 1 @ -/10/- each .. .. .. .. | 7 | 8 |
| *Tattvarthadhigama Sutram, Fasc. 2-3 @ -/10/- each .. .. | 1 | 4 |
| Tirthacintamani, Fasc. 1-4 @ -/10/- each .. .. .. | 2 | 8 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ -/10/- .. .. .. | 1 | 14 |
| Tul'si Satsai, Fasc. 1-5 @ -/10/- .. .. .. .. | 3 | 2 |
| Upamita-bhava-prapañca-kathā, Fasc. 1-14 @ -/10/- each .. .. | 8 | 12 |
| *Uttara Naishadha (Text), Fasc. 6-12 @ -/10/- each .. .. | 4 | 6 |
| Uvāsagadasāo (Text and English), Fasc. 1-6 @ 1/- .. .. | 6 | 0 |
| Vajjalaggam, Fasc. 1 .. .. .. .. .. | 0 | 10 |
| Vallāla Carita, Fasc. 1 @ -/10/- .. .. .. .. | 0 | 10 |
| *Varaha Purana (Text), Fasc. 2-14 @ -/10/- each .. .. | 8 | 2 |
| Varṣa Kriyā Kaumudī, Fasc. 1-6 @ -/10/- .. .. .. | 3 | 12 |
| Vayu Purana (Text), Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-7 @ -/10/- each | 8 | 2 |
| *Vedanta Sutras (Text), Fasc. 7-13 @ -/10/- each .. .. | 4 | 6 |
| Vidhāna Pārijāta, Fasc. 1-8; Vol. II, Fasc. 1 @ -/10/- .. .. | 5 | 10 |
| Ditto Vol. II, Fasc. 2-5 @ 1/4/- .. .. .. | 5 | 0 |
| Ditto Vol. III, Fasc. 1 .. .. .. .. | 0 | 10 |
| Vishahitam, Fasc. 1 .. .. .. .. .. | 0 | 10 |
| Vivādaratnākara, Fasc. 1-7 @ -/10/- each .. .. .. | 4 | 6 |
| Vrhat Svayambhū Purāṇa, Fasc. 1-6 @ -/10/- .. .. .. | 3 | 12 |
| *Vrhannaradiya Purana (Text), Fasc. 3-6 @ -/10/- each .. .. | 2 | 8 |
| Yogaśastra, Fasc. 1-5 .. .. .. .. .. | 5 | 10 |
| *Yoga Sutra of Patanjali (Text and English), Fasc. 3-4 (Fasc. 3, Re. 1/-, Fasc. 4, Rs. 2 -) .. .. .. .. .. | 3 | 0 |

## *Rajasthani Series.*

| | | |
|---|---|---|
| A Descriptive Catalogue of Bardic and Historical Manuscripts. | | |
| Sect. i: Prose Chronicles. Part i: Jodhpur State. Fasc. 1 .. | 1 | 0 |
| Sect. i: Prose Chronicles. Part ii: Bikaner State. Fasc. 1 .. | 1 | 0 |
| Sect. ii: Bardic Poetry. Part i: Bikaner State. Fasc. 1 .. | 1 | 0 |
| Vacanikā Rāṭhòṛa Ratana Singhajī rī Mahesadāsòta rī Khiṛiyā Jagā rī kahī. Part i:—Ḍingaḷa Text with Notes and Glossary .. | 1 | 8 |
| Velī Krisana Rukamaṇī rī Rathòra rāja Prithī Rāja rī kahī. Part i: Ḍingaḷa Text with Notes and Glossary .. .. .. | 1 | 8 |

## *Tibetan Series.*

| | | |
|---|---|---|
| Amarakosah, Fasc. 1-2 .. .. .. .. .. | 4 | 0 |
| Amartika Kamdhenuh .. .. .. .. .. | 1 | 0 |
| Bauddhastotrasangraha, Vol. I .. .. .. .. | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-4 @ 1/- each .. | 4 | 0 |
| Nyayabindu (A Bilingual Index) .. .. .. .. | 1 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1-2 .. .. .. | 2 | 0 |
| Pag-Sam Shi Tin, Fasc. 1-4 @ 1/- each .. .. .. | 4 | 0 |
| Prajna Pradipah .. .. .. .. .. | 1 | 0 |
| Rtogs brjod dpag hkhri Śiṅ (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc. 1-13; Vol. II, Fasc. 1-11 @ 1/- each .. .. .. | 24 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/- each .. .. .. .. .. | 14 | 0 |
| Timed-Kun-Den .. .. .. .. .. | 1 | 0 |
| Minor Tibetan Texts. The Song of the Eastern Snow Mountain .. | 1 | 0 |

---

| | | |
|---|---|---|
| Notice of Sanskrit Manuscripts, Fasc. 1-34 @ 1/- each .. .. | 34 | 0 |
| Ditto ditto (Palm-leaf and selected paper MSS.) @ 3/- each .. | 6 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. | 5 | 0 |
| Report on the Search of Sanskrit MSS., 1895-1900, 1901-1905, and 1906-1911 @ -/8/- each .. .. .. .. | 1 | 8 |
| Catalogue of the Scientific Periodicals in Calcutta Libraries .. | 5 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

17-5-19.

**Books are supplied by V.P.P.**

**BIBLIOTHECA INDICA**

**A COLLECTION OF ORIENTAL WORKS.**

# आत्मतत्त्वविवेकः

**श्रीमदुदयनाचार्यविरचितः ।**

**श्रीशङ्करमिश्र-भगीरथठक्कुर-रघुनाथतार्किकशिरोमणि-**
**मथुरानाथतर्कवागीशादिविरचितटीकासहितः ।**

---

# ĀTMATATTVAVIVEKA,

OR

## BAUDDHĀDHIKĀRA.

**A REFUTATION OF BUDDHISTIC METAPHYSICS.**

BY

UDAYANĀCĀRYA.

WITH THE COMMENTARIES OF ŚAṄKARA MIŚRA, BHAGIRATHA ṬHAKKURA, RAGHUNĀTHA TĀRKIKAŚIROMAṆI, MATHURĀNĀTHA TARKAVĀGĪŚA, ETC.

EDITION BEGUN BY

MAHĀMAHOPĀDHYĀYA VINDHYEŚVARĪPRASĀDA DVIVEDIN,

*Librarian, Govt. Sanskrit College, Benares.*

AND CONTINUED BY

PAṆḌITA LAKSHMAṆA ŚĀSTRĪ DRĀVIḌA.

---

Work Number
170.
Fasc. IV.




Issue Number
1463.
New Series.

---

**CALCUTTA:**

**Printed by the Baptist Mission Press.**

**Published by the Asiatic Society of Bengal, 1, Park Street.**

**1924.**

# NOTICE

# BIBLIOTHECA INDICA

## PUBLISHED BY
## THE ASIATIC SOCIETY OF BENGAL.

The Bibliotheca Indica is a collection of works belonging to or treating of Oriental literatures and contains original text-editions, as well as translations into English, and also bibliographies and studies.

The publication was started in 1849, and consists of an Old and a New Series. The New Series was begun in 1860, and is still running.

As a rule the issues in the series consist of fascicles of 96 or 100 pages print, though occasionally numbers are issued of double, triple or larger bulk, and in a few cases even entire works have been published under a single issue number. Several different works are always simultaneously in progress. Each issue bears a consecutive issue number. The Old Series consists of 265 issues; in the New Series, till May, 1924, inclusive, 1466 issues have been published. These 1731 issues represent 238 different works; these works again represent the following literatures:—

Sanskrit, Prakrit.
Rājasthānī, Kāshmīrī, Hindī.
Tibetan.
Arabic, Persian.

Several works published are partly or wholly sold out, others are still incomplete and in progress. A few works, though incomplete, have been discontinued.

Various price lists and notices concerning the Bibliotheca Indica are available and may be had on application. Other lists are in preparation. Revised lists are published from time to time.

The standard sizes of the Bibliotheca Indica are three:—

Demy (or small) octavo.
Royal (or large) octavo.
Quarto.

The prices of the Bibliotheca Indica as revised in 1923 are based (with some exceptions) on the following scale per unit of 96 or 100 pages in a fascicle as the case may be;—

# NOTE.

The first Editor of this work, Mahāmahopādhyāya Vindhyeśvarīprasāda Dvivedin, has been responsible for the text up to and inclusive of forme 5 in fascicle IV. After his death, Paṇḍit Lakshmaṇa Śāstrī Drāviḍa has taken over the continuation of the edition.

स्यापत्तेः । अनतिरेकसिद्धौ घटोत्पादकसामग्रीत एव तद्ध्वंसोऽपीति सिद्धं क्षणिकत्वव्यापकत्वं सत्त्वस्येति भावः । निरुपाख्यत्वमिति । उपाख्या धर्मस्तच्छून्यत्वमलीकत्वमिति यावत् । अलीकस्य च कारणापेक्षित्वेऽलीकत्वव्याघातात् सिद्धमहेतुकत्वमिति भावः । तत्कार्यत्वमिति । प्रतियोगिजन्यत्वमित्यर्थः । तेन प्रतियोगीतरहेत्वनपेक्षत्वं साध्यमिति भावः । व्यापकत्वमिति । प्रतियोगिव्यापकत्वमित्यर्थः । यद्यस्य व्यापकं तच्च तस्य हेत्वन्तरापेक्षायां व्यापकत्वानुपपत्तेरिति भावः । अभावत्वमिति । प्रागभावदृष्टान्तेन ध्वंसस्याप्यहेतुकत्वादहेतुकत्वमिति भावः । निषेध्येति । विरुद्धयोर्भावाभावयोरैकत्वे भावोत्पत्तिक्षणेऽपि तदभावापत्तेः[1] सर्वशून्यताप्रसङ्गादित्यर्थः । उपपत्तौ वेति । विरोधिरूपवतोरप्यैक्ये गवाश्वादीनामप्यैक्यप्रसङ्गात् ॥

रघु० टी० । यदि चैवमुत्पत्तिमतां क्षणिकत्वे सिद्धेऽपि नित्यत्वेन परैरभ्युपगतानां परमाणूनां तन्न सिद्धमिति विभाव्यते तदा नित्येषु सिद्धव्याप्तिकेन सत्त्वेन तेषां विनाशित्वं क्षणिकत्वं वा साधयिष्यते इत्याशयवानाशङ्कते । अस्तु तर्हीति । अहेतुकत्वं च तदुत्पत्त्युत्तरभाविहेत्वनपेक्षत्वम् । अत्र च यो यस्य ध्रुवभावी स तदुत्पत्त्युत्तरभाविहेत्वनपेक्षो यथा पूर्वस्य बीजक्षणस्योत्तरः यथा वा कर्मणो विभागः, ध्रुवभावी च प्रतियोगिनो विनाश इति वस्तुतस्तेषामभिमतः प्रयोगः । उदाहरमपि परकीयसिद्धान्तभेदानुसारेण

(१) तदभावोत्पत्तेः पु० पा० ।

विकल्पं दूषयति। तद्धौव्यादि। तत् ध्रुवभावित्वम्। तादात्म्य प्रतियोगितादात्म्यम्। न च तदात्मनस्तदुत्तरभाविसापेक्षत्वमसत्त्व इति भावः। निरुपाख्यत्वं निःस्वभावत्वमलीकत्वमिति यावत्। अलीकस्य च न कारणापेक्षित्वं विलक्षणमेव च तदलीकं प्रतिनियतदेशकालमिति नातिप्रसङ्ग इति भावः। निषेध्येति। मिथो-विरुद्धस्वभावत्वादिति भावः। वैश्वरूप्येति। निषेध्यनिषेधयोरैक्ये क्वचिदपि विरोधासिद्ध्या विरुद्धधर्मसंसर्गच्छेदे भेदसिद्धावद्वैतमेव स्यात् स्याच्च जगदेवाभावशेष स्वदेशकालयोरपि तस्यासत्त्वा-दित्यर्थः॥

---

**ननु कालान्तरे ऽर्थक्रियां प्रत्यशक्तिरेवास्य नास्तिता सा च कालान्तरे समर्थेतरस्वभावत्वमेवेति चेत्! नन्वयमेव क्षणभङ्गस्तथा चासिद्धमसिद्धेन साधयतः कस्ते प्रतिमल्लः**[1] ॥

शङ्क० टी०। यद्वा विरोधिनोरपि तादात्म्ये गवाश्वादीना-मपि तादात्म्यापत्तेरित्यर्थः। प्रकारान्तरेण विनाशस्य प्रतियोगि-तादात्म्यं शङ्कते। नन्विति। स्वोत्पत्त्यव्यवहितोत्तरक्षणे भावोऽर्थक्रियां प्रत्यसमर्थ इत्यशक्तिरेव तदातनी नास्तिता। तथा च समर्थेतर-स्वभावो भाव एव नास्तिता सैव च नाश इत्यर्थः। प्रथमक्षणे सामर्थ्यमग्रिमक्षणे चासामर्थ्यमिति विरुद्धधर्माध्यासेन भेद एव विवक्षितः। तथा च क्षणभङ्ग एवानया वचनभङ्ग्या त्वयोच्यते।

(१) प्रतिमल्लः– पा० १। ३ पु०।

स च पूर्वोक्तसामर्थ्यासामर्थ्यप्रयोजकप्रसङ्गतद्विपर्ययाधीनस्तु, तौ च दूषितावेवेत्याह। नन्वयमेवेति। तथा चेति। तथा च प्रकारान्तरेण समर्थेतरस्वभावत्त्वमसिद्धमसिद्धेन क्षणभङ्गेन साधयत इत्यर्थः। यदि च घटनास्तिता घटात्मिका देशान्तरकालान्तरयोरनुवर्त्तते तदा तद्रूपतया घटस्यैवानुवृत्तिः, अथ तत्र नानुवर्त्तते तदा स्वरूपत एव घटानुवृत्तिरिति घटादेः कालान्तरकार्यं प्रत्यशक्तिरेव। नहि स्वकाले बीजादि कालान्तरकार्याणि करोतीति स्वकालेऽपि बीजादेरसत्त्वप्रसङ्ग इति प्रथमविकल्पार्थः॥

भगी० टी०। नन्वलीकेनाभावेन भावस्य तादात्म्याभावेऽपि विधिव्यवहारविषयेणाभावान्तरेण तादात्म्ये नोक्तदोष इत्याह। नन्विति। अर्थक्रियाकारित्व सत्त्वमिति तदभावेऽसत्त्वं पर्यवस्यतीत्यर्थः। तथाप्यशक्तिर्नास्तिता न त्वभावात्मिकेत्यत आह। सा चेति। समर्थेतरस्वभावत्वं भावस्यासत्त्वमिति प्रसङ्गतद्विपर्ययसिद्धौ सिद्धेत् तयोरेवासिद्धिरित्याह। नन्वयमिति।

---

रघु० टी०। ननु कालान्तरे समर्थेतरस्वभावोभाव एव विनाश इति नोक्तदोष इत्याशङ्कते। नन्विति। सा चेति। नास्तितेत्यर्थः। कालान्तरवर्त्ती भावो हि सामर्थ्यविरहेण समर्थात्प्राचोभावाद्भिद्यमानो लाघवात् तस्य विनाशोभ्युपेयते। अथाभिन्न एव? आद्ये नन्वित्यादि। सामर्थ्यविरहो हि भेदं साधयन् क्षणभङ्गे पर्यवस्यति न चासावद्यापि सिद्ध इत्यर्थः। विनाशस्य प्रतियोगितादात्म्याभ्युपगमविरोधस्त्वत्यपि द्रष्टव्यम्।

अपि च देशान्तरकालान्तरानुषङ्गिण्यस्य नास्तिता यद्ययमेव? नूनमनक्षरमिदमुक्तं यदयमेव देशान्तरकालान्तरानुषङ्गीति। यदि वा स्वदेशकालवत् कालान्तरदेशान्तरयोरपि नास्तिताननुषङ्गेऽस्तित्वप्रसङ्गः। अशक्तेः कथमस्तु शक्तेः सत्तालक्षणत्वादिति चेत्? अथ कालान्तरकार्यं प्रति स्वकालेऽशक्तिरसत्त्वं किं वा स्वकार्यमपि प्रति कालान्तरेऽशक्तिरसत्त्वम्॥

शङ्क० टी०। स्वकालेऽपि क्षणिकतां साधयितुमुद्यतस्य नित्यत्वं विभुत्वं च पर्यवसितमित्युभयतःपाशा रज्जुरित्याह। अपि चेति। अयमेव भाव एव। ननु देशान्तरे कालान्तरे वा भावस्याशक्तिं ब्रूमस्तथा च तदभयत्र कथं सत्त्वमापद्यतामिति शङ्कते। अशक्तेरिति। कालान्तरकार्यं प्रत्यशक्तिरसत्त्वमिति चेद्ब्रूषे तदा बीजादेः स्वकालेपि तस्य बीजादेस्तादूप्यात् कालान्तरकार्यं प्रत्यशक्तत्वादित्यर्थः॥

---

भगी० टी०। किं च समर्थस्वभावस्य नास्तिता देशान्तरकालान्तरसम्बन्धिनी न वा। आद्येऽपि सा यदि भावादभिन्ना तत्राह। अपि चेति। भावाद्भेदे भावाभावस्य हेत्वन्तराधीनत्वसिद्धौ स्थैर्य एव पर्यवसानमिति भावः। नन्वर्थक्रियाशक्तत्वं सत्त्वं कालान्तरे च तदभावात् कथं सत्त्वं स्यादित्याह। अशक्तेरिति।

रघु॰ टी॰। द्वितीये अपि चेति। इयस्यापि क्षणिकत्वा-द्देशान्तरेत्युक्तम्। अभावसामान्याभिप्रायेणेत्यन्ये। क्षणसन्तानमभि-प्रेत्येत्यपरे। पूर्वमशक्तिरशक्तस्वभावरूपा शङ्किता, सम्प्रति शक्ति-विरहरूपतामाशङ्कते। अशक्तेः कथमस्त्विति। कालान्तरेऽस्तित्व-मिति शेषः। कालान्तरेति। कालान्तरीयकार्याशक्तेः स्वकालेपि भावात् स्वकाल इत्युक्तम्। न तु विकल्पान्तर्गतं मन्तव्यम्॥

---

**आद्ये स्वकालेऽप्यसत्त्वप्रसङ्गः तदानीमपि तस्य ताद्रूप्यात्। कालान्तरकार्यं प्रत्येवमेतदिति चेत्? किमयं मन्त्रपाठः नहि यो यत्राशक्तः स तदपेक्षया नास्तीति व्यवह्रियते। नहि रासभापेक्षया धूमो जगति नास्ति, तत कस्य हेतोः तद्यशक्तस्य स्वरूपं निवर्तेत इति॥**

शङ्क॰ टी॰। तदानीमिति तदानीमपि स्वकालेऽपि। एवमेतदिति। एतद् बीजादि। एवं स्वकालेपि कालान्तरकार्यं प्रत्यसदेवेत्यर्थः किमयमिति। सदपि किञ्चिदपेक्षया ऽसदिति विरोधपरिहारो मन्त्रपाठं विना नोपपद्यत इति भावः। व्यव-हारविरोधमाह। न हीति। व्यवहारविरोधमेव सोपपत्तिक-माह। न हि रासभेति॥

भगी॰ टी॰। आद्य इति। कालान्तरकार्यं प्रति यद्य-शक्तिरसत्त्वं तदेत्यर्थः। इदानीमपि स्वकालेऽपीत्यर्थः। ताद्रूप्यात्

क्षणान्तरकार्यं प्रत्यशक्तत्वादित्यर्थः। तथा च सत्त्वकालेऽप्यसत्त्वमिति विरोध इति भावः। ननु किञ्चिदपेक्षयाऽसत्त्वेऽपि किञ्चिद-पेक्षया सत्त्वमविरुद्धमित्याह। कालान्तरेति ॥

---

रघु०। टी०।

---

**द्वितीये तु यदि कालान्तराधाराऽशक्तिः कथं तदा-त्मिका। तदाधारा चेत् तदैवासत्त्वप्रसङ्गः कालान्तरे तु विपर्ययः। तस्मात्**

**विधिरात्माऽस्य भावस्य निषेधस्तु ततः परः।**
**सोऽपि चात्मेति कः प्रेक्षः शृण्वन्नपि न लज्जते ॥**

शङ्क० टी०। स्वकार्यमपि प्रति कालान्तरेऽपि अशक्तिरसत्त्व-मिति द्वितीयं पक्षं दूषयति। यदीति। कथं तदात्मिका-कथं प्रतियोग्यात्मिका। प्रतियोगिनः क्षणमात्रवृत्तितया द्वितीये क्षणे ऽसत्त्वादित्यर्थः। तदाधारा चेदिति। प्रतियोगिकालाधारेत्यर्थः। कालान्तर इति। स्वकालाकारेऽन्यदशक्तिरसत्त्वं तदा स्वकाला-तिरिक्ते काले भावस्य सत्त्वप्रसङ्ग इति स्थैर्यमेवावर्त्तत इति भावः। प्रथमविकल्पप्रसङ्गमुपसंहरति। तस्मादिति। स्वभावाभावयो-र्विधायकनिषेधकप्रमाणगोचरयोस्तादात्म्यं सर्वथाऽनुपपन्नमित्यर्थः। प्रकृष्टा ईक्षा प्रेक्षा तया व्यवहरतीति प्रेक्षः ॥

---

भगी० टी०। अशक्तेः कालान्तरं यद्यवधिस्तत्राह। कथमिति। भावस्य भिन्नकालीनाशक्तितादात्म्यस्वीकारे स्थैर्यापत्तिरिति भावः। अथाशक्तिर्भावसत्त्वाधिकरणकालाधारा कालान्तरार्थ[1]निरूपक-मात्रं तत्राह। तदाधारा चेदिति। तर्हि भावस्य सत्त्वकाल एवा-सत्त्वप्रसङ्ग इति विरोध एवेत्यर्थः। विपर्ययः सत्त्वमित्यर्थः॥

---

रघु० टी०। स्वकार्यं प्रति कालान्तरनिरूपिता तस्याशक्तिः कालान्तरनिष्ठा तन्निष्ठा वा? आद्यं दूषयति यदीति। कथ-मिति। तस्य त्वया क्षणिकत्वाङ्गीकारादिति भावः। द्वितीये त्वाह। तदित्यादि। तदाश्रिकाया अशक्तेस्तत्काल एव सत्त्वा-दिति भावः। अभेदे कथमाधाराधेयभाव इत्यपि द्रष्टव्यम्। तदाधारेत्यस्य तत्कालाधारेत्यर्थः इति तु केचित्। विपर्य-योऽसत्त्वव्यतिरेकप्रसङ्गः। उपसंहरति। तस्मादिति। आत्मा स्वरूपमस्य निषेध इत्यन्वयः॥

अस्तु तर्हि भावस्वरूपातिरिक्ता निवृत्तिर्नास्तीति-वाक्यस्य[2] सोपाख्येति शेषः। नन्वयमपि क्षणभङ्गस्यो-द्गारः[3] स च[4] कफोणिगुडायितो वर्त्तते। भवतु वा

(१) न्तरत्वनि- २ पु० पा०। (२) नास्तीत्यस्य-- पा० २ पु०।
(३) स्योद्गारः-- पा० २ पु०। (४) स च -पा० २ पु०।

**निवृत्तिरसमर्था तथाप्यहेतुकत्वे तस्याः किमायातम्। तुच्छस्य कीदृशं जन्मेति चेत्? यादृशः कालदेशनियमः। सोऽपि तस्य कीदृश इति चेदेवं तर्हि न घटनिवृत्तिः क्वापि कदापि सर्वत्रैव सदैव वेति स्यात्॥**

शङ्क० टी० निरुपाख्यत्वं वेति द्वितीयं विकल्पमुत्थाप्य निराकरोति। अस्त्विति। भावस्वरूपातिरिक्ता निवृत्तिर्नास्तीति कीर्तिवाक्यं सोपाख्येति शेषं दत्त्वा प्रज्ञाकरेण व्याख्यातं तेन निरुपाख्या निवृत्तिरित्यर्थः पर्यवस्यतीत्यभिप्रायः। एतद्दूषयति। नन्वयमपीति। निरुपाख्या चेन्निवृत्तिरहेतुका तदोत्पन्नमात्रस्यैव भावस्य सा भवेदिति क्षणभङ्गसिद्धिरिति तत्राभिप्रायः, स च निवृत्तेः सोपाख्यत्वसाधनात् पूर्वमेव निरस्त इति भावः। कफोणिः कूर्परः। तत्पर्यन्तगतस्य गुडस्य यथा लेहनमनुपपन्नं तथा बहुधा निरस्तस्य क्षणभङ्गस्य पुनरारम्भोऽनुपपन्न इत्यर्थः। भवतु वेति। निवृत्तेरलीकत्वं ध्रुवभावित्वं तेन तस्या अहेतुकत्वसाधनमनुपपन्नमिति भावः। तुच्छत्वादेवाहेतुकत्वमिति शङ्कते। तुच्छस्येति। यथा वस्तुनो जन्मकालादि नियमगम्यं तथा तुच्छस्यापीति परिहरति। यादृश इति। सोऽपि नियमः। तस्य तुच्छस्य। एवं तर्हीति। तुच्छाया निवृत्तेरुत्पादाभाव इत्यर्थः। तथा च क्षणिकत्वसिद्ध्यर्थं विनाशस्याहेतुकत्वं ध्रुवभावित्वेनाभिमतं नित्यत्वमेव भावस्य साधयेदिति शङ्का बुद्धिरिति भावः॥

अगौ० टौ०। परकीयग्रन्थे भावस्वरूपातिरिक्ता निवृत्ति-र्नास्तीत्यत्र भावाभावयोस्तादात्म्यानुपपत्त्या सोपाख्येति पूरयित्वा भावातिरिक्ता सोपाख्या निवृत्तिर्नास्तीत्यर्थान्निरुपाख्या निवृत्ति-स्तत्र च न कारणापेक्षेति केनचिद्विवरणकारेणोक्तमुपदर्शयन्नेव द्वितीयपक्षमुत्थापयति। अस्तु तर्हीति। तदपि निवृत्तेर्नानादेशकाल-त्वानुगमादलीकत्वमलीकस्य क्षणिकत्वमिद्धौ स्यात् तदेव त्वसिद्ध-मित्याह। नन्वयमपीति। सिद्धमभ्युपेत्याप्रयोजकत्वमाह। भवत्विति। तुच्छस्येति। निर्धर्मकस्याद्यकालसम्बन्धरूपधर्मासम्भव इत्यर्थः। यादृशा इति। अलीकस्य नियतदेशकालसम्बन्धवत्त्वमप्यस्तीत्यर्थः। सोऽपीति। अलीकत्वादेव देशकालनियमोऽपि तुच्छस्य नास्ती-त्यर्थः। निवृत्तेर्देशकालनियमस्य त्रिशिष्टस्याभावो यदि देशकाल-सम्बन्धस्य विशेषणस्याभावात् तत्राह। न घटनिवृत्तिरिति। अथ तत्सम्बन्धसत्त्वेऽपि विशेष्यनियमाभावात् तत्राह। सर्वत्रेति॥

---

रघु० टौ०। द्वितीयं पक्षं तदीयग्रन्थाविरुद्धं व्युत्पादयन्ना-शङ्कते। अस्तु तर्हीति। शेषः अध्याहरणीयो भागः। तथा च भावस्वरूपातिरिक्ता सोपाख्या निवृत्तिर्नास्तीति पर्यवसितवाक्यस्य निरुपाख्या निवृत्तिरिति तात्पर्यम्। एतद्दूषयति। नन्वयमपीति। निरुपाख्या चेन्निवृत्तिरहेतुका तदोत्पन्नमात्रस्यैव भावस्य सा भवेदिति क्षणभङ्गसिद्धिरिति तत्राभिप्रायः। स चेति। निरु-पाख्यत्वमेवासिद्धमिति भावः। कफोणिः कूर्परः। सोऽपीति। तस्य तुच्छस्य घटनिवृत्तेर्देशकालसम्बन्धनियमो नास्तीत्यर्थः।

घटनिवृत्त्यग्रकालसम्बन्धनियमनिषेधो हि किं विशेषणस्य सम्बन्धांशस्य निषेधः किं वा विशेष्यस्य नियमांशस्य। आद्यं विवृणोति। न घटेत्यादि। द्वितीये त्वाह। सर्वचैवेति। घट निवृत्तिरित्यनुषज्यते।

---

**भवतु[1] प्रथम एवेति चेत्? सोऽयं भावनास्तिता स्वरूपप्रतिषेधो वा भावप्रतिषेधेन निवृत्तिस्वरूप[2]-निरुक्तिर्वेति। आद्ये भावस्यैव सदातनत्वप्रसङ्गः द्वितीये तु निवृत्तेरेवेति॥**

शङ्क० टी०। एतदेव विभावयितुं शङ्कते। भवत्विति। प्रथम इति। न क्वापि भावनिवृत्तिरिति पक्ष इत्यर्थः। सोऽयमिति। घटनिवृत्तिः क्वापि नास्तीति पक्ष इत्यर्थः। नास्तितास्वरूप-निरुक्तिरिति। भावस्य नास्तिता न कादाचित्कीति नास्तितायाः एव स्वरूपं निरुच्यत इत्यर्थः आद्य इति। निवृत्तेरेवाभावपक्ष इत्यर्थः। द्वितीय इति। निवृत्तेः सार्वत्रिकत्वसार्वदिकत्वपक्ष इत्यर्थः। एवं सति कदापि भावो न स्यादिति भावः॥

भगी० टी०। भवत्विति। न क्वापि कदापि निवृत्तिरिति पक्ष इत्यर्थः। सोऽयमनियमः। निवृत्तिस्वरूपेति। निवृत्तेरलीकत्वं

(१) अस्त्विति क्वाचित्कः पाठः।

(२) प्रतिषेधेन 'नास्तिता' स्वरूप– वा० १ पु०।

देशकालसम्बन्धेन निरूप्यत इत्यर्थः । आद्य इति । निवृत्तिस्वरूप-स्यैवाभावादित्यर्थः । द्वितीये त्विति । भावानाधारकालवत् तदा-धारकालेऽपि निवृत्तिस्तस्येति कदापि भावो न स्यादित्यर्थः ॥

रघु० टी० । प्रथमो घटनिवृत्तिदेशकालसम्बन्धनिषेधः । सोऽपि किं देशकालसम्बन्धस्य निषेधः किं वा घटनिवृत्तेः । नाद्यः निवृत्तेर्देशकालासम्बन्धित्वेनाविरोधित्वात् घटस्य सार्व-त्रिकत्वसदातनत्वप्रसङ्ग इति । द्वितीयमपि निवृत्तेर्निषेधो वा घटस्य वेति विकल्प्य दूषयति । सोऽयमिति । भावेति विकल्प-विषयस्य गुणत्वेनाभिधानमितरफलकत्वसूचनाय । निवृत्तिरूपनिरु-क्तिपर्यवसायी भावप्रतिषेधो वेत्यर्थः । निवृत्तिरूपमत्यन्तासत्प्रति-योगिकत्वम् । भावो देशकालयोः सम्बन्धस्तत्प्रतिषेधेन निवृत्ति-रूपमलीकत्वं निरूप्यत इत्यर्थस्तु न युक्तः वक्ष्यमाणसदातनत्वप्रसङ्गा-सङ्गतेः । भावप्रतिषेधेन काचित्कत्वकादाचित्कत्वप्रतिषेधेन निवृत्ति-स्वरूपनिरुक्तिरित्यर्थ इत्यन्ये । तच्चिन्त्यम् । प्रथमपक्षस्य काचित्क-त्वादिप्रतिषेधरूपत्वाभावात् । सदातनत्वेति सार्वत्रिकत्वस्याप्युप-लक्षणम् । निवृत्तेरिति सदातनत्वादिकमनुषज्यते ॥

---

अस्तु तर्हि तत्कार्यत्वमेव ध्रुवभावित्वं ! न, तस्यापि कार्य इति पक्षे विरोधात् तस्यैव कार्य इत्यसिद्धेः । यत्किञ्चिदुत्पन्नमात्रस्य कार्यं स एव तस्य नाश इति चेत् ! तर्हि यस्याः सामग्र्या यत् कार्यं तत् तदरिक्तान-

**पेक्षमिति साधनार्थः तमिमं को नाम नानुमन्यते(१) कार्यमेव विनाश इति तु केनानुरोधेन व्यवहर्तव्यं वि तद्विरहवत्त्वात् कार्यस्य किं वा तद्विरहरूपत्वात् ॥**

शङ्क० टी०। तृतीयं ध्रुवभावित्वं दूषयितुमाह। अस्त्विति एतद्घटध्वंस(२) एतदव्यवहितोत्तरक्षणोत्पत्तिकः एतत्कार्यत्वात् एतद्घटस्वरूपवदिति तावत्तत्र विवक्षितं (तदा) तत्र तत्कार्यत्वा दिति तस्यापि कार्यत्वादित्यर्थेऽपिशब्देन कारणान्तरसमुच्चयश्चेत्तत् विवक्षितस्तदा तद्विलम्बेन ध्वंसविलम्बेन तदुत्पत्त्यव्यवहितोत्तरक्षणो- त्पत्तिकत्वं विरुद्धं तन्मात्रकार्यत्वं च हेतुः स्वरूपासिद्ध इत्यर्थः यद्वा एतद्घटध्वंस एतन्मात्रहेतुकः तत्कार्यत्वादित्यत्र विरोधासिद्धी विकल्पिते द्रष्टव्ये। असिद्धेरिति। मुद्गरादेरपि घटनाशं प्रति कारणत्वदर्शनादित्यर्थः। ननु तस्यापि वा तस्यैव वेति न समुच्चयो नवा नियमो विवक्षितः किन्तूत्पन्नमात्रस्य यत्कार्यं तदेव तस्य विनाश इति मम मतं तदतिरिक्ते ध्वंसे मानाभावादिति शङ्कते। यत्किञ्चिदिति। तर्हि कार्यं कारणातिरिक्तानपेक्षमित्य- हेतुकत्वार्थः तदत्र कारणपदेन यदि सामग्री विवक्षिता तदा सिद्धसाधनं तदेकदेशश्चेत् तदा बाधः 'न किञ्चिदेकमेक- स्मात् सामग्र्याः सर्वसंभव' इति तवाभ्युपगमात्। एवमभ्युपगमो- ऽपसिद्धान्तो माभूदत आह। को नाम नानुमन्यत इति।

(१) अनुमनुते– पा० २ पु०।
(२) एतत्पटध्वंसः– पा० २ पु०।

कार्यमेवेति। कार्यमात्रस्य विनाशित्वाभ्युपगमो मम प्रौढिवादेनेति भावः। कार्यस्य कारणविनाशात्मकत्वव्यवहारबीजं विकल्पयति। किमिति। तद्विरहवत्त्वात्कारणान्योन्याभाववत्त्वात्। तद्विरहरूपत्वात्कारणविरहात्मकत्वात्कार्यस्येत्यर्थः॥

---

भगी० टी०। तृतीयं कल्पमुत्थापयति। अस्त्विति। तच्च यदि तस्यापि कार्यमिति विवक्षितं तदा कारणान्तरस्यापिशब्देन समुच्चयात् प्रतियोगीतरकारणानपेक्षत्वे साध्ये विरोध इत्याह। तस्यापीति। तस्यैव कार्यमिति च विनाशस्य प्रतियोगीतरकारणाजन्यत्वसिद्धौ, तदेव त्वसिद्धमित्याह। तस्यैवेति। ननु समुच्चयनियमो विनैव कार्यत्वमात्रं हेतुः न च सन्दिग्धविपक्षवृत्तित्वमतिरिक्तध्वंसे मानाभावात् परिशेषेण यत् यत्किञ्चिदुत्पत्त्यनन्तरं कार्यं जनयति कारणं तस्यैव तद्विनाशरूपत्वादित्याह। यत्किञ्चिदिति। यत् यस्य कार्यं तत् तदितरकारणानपेक्षमित्यत्र व्यभिचार एव, सामग्रीतः कार्योत्पत्तेरिति यत्सामग्रीजन्यं यत्कार्यं तत् तदितरसामग्र्यपेक्षमिति साध्यपर्यवसाने सिद्धसाधनमित्याह। तर्हीति। तथापि यद्युत्पन्नमात्रस्य कार्यं तदेव तस्य विनाश इत्यत्र किं बाधकमित्याह। कार्यमेवेति। तद्विरहवत्त्वात् तदन्योन्याभाववत्त्वादित्यर्थः॥

रघु० टी०। तस्यापीत्यपिशब्देन यदि तदुत्तरभावि समुच्चयं तत्राह। विरोधादिति। असिद्धेरिति। अप्रसिद्धेरित्यर्थः।

अथापिना हेत्वन्तरमात्रं समुच्चेयमविवक्षितविशेषं तत्कार्यत्वमात्रं वा हेतुरित्याशयेनाशङ्कते। यत्किञ्चिदिति। तच्छक्तिकार्यत्वस्य सन्दिग्ध-व्यतिरेकतया तत्सामग्रीकार्यत्वं हेतूकार्यं, परामर्षणीया च तदा तच्छक्तिसामग्री तत्र व्याप्तिमनुमन्यामहे न तु पक्षधर्मतामित्याह। तच्चैत्यादिना। यस्याः-व्यक्तेः। तदतिरिक्तेति तदुत्तरभाविपरम्। यथा सामग्र्या यज्जन्यत इत्यर्थेणैवमेव। केचित्तु यथाश्रुतस्यैतस्यापि कार्यं इत्यादेश्चानुरोधादितरकारणानपेक्षत्वमेवाहेतुकत्वं वर्णयन्ति, तन्न पुञ्जात्पुञ्जोत्पत्तिं वदतो वैनाशिकस्य क्वचिदपि वस्तुनि न प्रसिद्धं, स्फुटतरविरोधव्यभिचाराणां च तत्तादात्म्यतत्कार्यत्वत-ज्ज्ञापकत्वानां तत्र हेतुत्वाशङ्कनमनुचितमित्युपेक्षितम्। व्यवहर्त्तव्यं स्वीकर्त्तव्यम्। तद्विरहरूपत्वादिति। तत्कार्यस्तद्विरहस्तद्विनाश इत्युभयसम्प्रतिपन्नत्वादिति भावः।

**न तावत् पूर्वः सहकारिष्वपि तथाप्रसङ्गात्(१) विरहस्वरूपानिरुक्तेश्च। न द्वितीयः स हि कार्यकाले कारणस्य योग्यानुपलम्भनियमाद्वा भवेत् व्यवहारा-नुरोधाद्वा अतिरिक्तविनाशे बाधकानुरोधाद्वेति॥**

शङ्क० टी०। तथाप्रसङ्गादिति। वेमादावपि तन्तुविनाश व्यवहारप्रसङ्गात् तदन्योन्याभाववत्त्वस्य सत्त्वादित्यर्थः। विरह-

(१) तथा भाव प्रसङ्गात्- पा० २ पु० तथा व्यवहारप्रसङ्गात् पा० ३ पु०

स्वरूपेति । विरहोऽप्यभावः स चालीक एवेति तद्वत्ता कार्यस्य स्वलक्षणस्य कथं भवेदिति भावः । यद्वा कारणविरहो यदि कार्यमेव तदा कथं तेनैव तद्वत्ता । अतिरिक्तश्चेदभावस्तदा किमपराद्धं कार्यस्यातिरिक्तप्रध्वंसेनेति भावः । न द्वितीय इति । यद्यपि भावस्याभावतादात्म्यनिषेधादेवैतदपि निरस्त, तथापि प्रकारान्तरेणापि निरस्यति । न द्वितीय इति । स इति । द्वितीयः पक्ष इत्यर्थः । कार्यकाले कारणं सर्वथापि नोपलभ्यत इति मूलं कार्यमेव कारणविनाश इत्यर्थः । अतिरिक्तेति । कार्यातिरिक्त इत्यर्थः ॥

---

भगी० टी० । सहकारिष्वपीति । तन्तूनां यथा पटे कार्येऽन्योन्याभावस्तथा वेमादिष्वपीति तेष्वपि तन्त्वभावव्यवहारप्रसङ्ग इत्यर्थः । किं च कार्यस्य तद्विरहवत्त्वादित्यत्र यदि विरहपदार्थः कार्यमेव तदा विरहपदवैयर्थ्यापत्त्या तद्विरहवत्त्वे कार्यविरह उक्तः स्यादिति स्ववचनविरोध इत्याह । विरहस्वरूपेति ॥

---

रघु० टी० । विरहरूपेति । विरहो यद्यभावः स भवतामलीक इति कथं तद्वत्ता वस्तुनः कार्यस्य, सदसतोः संसर्गनिषेधात् । अथाधिकरणस्वरूपः कथं तेनैव तद्वत्ताऽसाधारण्यं वेत्यर्थः ॥ स हीति । स द्वितीयः कार्यस्य तद्विरहरूपस्वरूपः ॥

---

न प्रथमः उपलभ्यन्ते हि पटकाले वेमादयः। न ते त इति चेत्? किमत्र प्रमाणम्। अभेदेऽपि किं प्रमाणमिति चेत्? माभूत् तावत् सन्देहस्थितावपि अनुपलब्धिबलालम्बनविलयात्। न द्वितीयः नहि पटो जात इत्युक्ते तन्तवो नष्टा इति कश्चिद्व्यवहरति। पटस्यानतिरेकात् तन्तुमात्रजन्मनि भेदाग्रहादव्यवहार इति चेत्? न तर्हि व्यवहारबलमपि[1]। विभागसन्ततौ तावद्व्यवहारबलमस्तीति चेत् नैतदेवम्॥

शङ्क० टी०। ननु पटकाले ये वेमादय उपलभ्यन्ते ते तद्भिन्ना एवेति शङ्कते। न ते त इति। क्षणभङ्गे सत्येवं (न) स्यात्। स चाद्यापि न सिद्ध इत्यभिप्रायेणाह। किमत्रेति। यद्यपि प्रत्यभिज्ञानं तत्र मानं तथापि तदनुपदर्शनेऽपि न क्षतिरित्याशयेनाह। माभूदिति। कार्यकाले कारणानुपलम्भः सन्दिग्ध इति तद्बलं तव भग्नमेवेत्यर्थः। अवयवेभ्योऽनन्यत्वमवयविन इति पक्षमादाय शङ्कते। पटस्येति। कारणाभावत्वेन व्यवहर्तुं योग्येऽपि पटे तन्त्वात्मके पूर्वतन्तुभेदाग्रहान्न तथा व्यवहारः येन तु परीक्षकेण भेदो गृह्यते तस्य तथा व्यवहारोऽस्त्येवेति भावः। व्यवहारो हि लौकिकपरीक्षकसाधारणः प्रमाणं स च प्रकृते नास्तीत्याह। न तर्हीति। परीक्षकस्य विपरीत एव व्यवहारो न कथमन्येति

(१) व्यवहारावलम्बनमपि-- पा० २ पु०.

भावः । ननु पटे नष्टे तन्तुमात्रलक्षणं कार्यं यत्र जायते तत्र पटनाशप्रतीतिव्यवहारौ स्त एवेत्याह । विसभागेति । विसभागसन्ततावप्येतद्दृष्टान्तेन तथोन्नेयमिति हृदयम् ॥

भगी० टी० । यद्यपि पटकाले वेमादय उपलभ्यन्ते तथापि पटोत्पत्तिप्राक्कालीनवेमादिभ्योऽन्य एव पटकालीनास्त इत्याह । न ते त इति । क्षणिकत्वासिद्धाविदमप्यसिद्धमित्याह । किमत्रेति । ननु त एवोपलभ्यन्त इत्यमानकत्वादसिद्धमित्याह । अभेदेऽपीति । यद्यप्यभेदे प्रत्यभिज्ञानमेव मानं वक्ष्यते तथाप्यापाततः मन्देहेऽपि न कार्यात्मना विनाशस्य निर्वहणीत्याह । माभूदिति । ननु तन्तुभिन्ने पटावयविनि मानाभावात् तन्तव एव तथोत्पन्नाः पटत्वेन व्यवह्रियन्ते, तथा च पूर्वापरतन्तूनां मिथस्तन्तुत्वसाजात्येन भेदाग्रहात् पूर्वतन्तुविनाशत्वेनोत्तरतन्तवो न व्यवह्रियन्त इत्याह । पटस्येति । ननु यत्तन्तुभिस्तन्तवो जन्यन्ते पटो वा तत्र तन्तुविनाशाद्व्यवहारोऽपि, यत्र पटेन तन्तवो जन्यन्ते तत्रोत्पन्नेषु तन्तुषु पटो नष्ट इति व्यवहारोऽस्त्येवेति तदनुसारात् सभागसन्ततावपि कार्यमेव विनाश इति कल्प्यत इत्याह । विसभागेति विसभागो विसदृशः ॥

रघु० टी० । न ते त इति । उपलभ्यमाना वेमादयः पटपूर्वकालीनेभ्यो भिन्ना इत्यर्थः । पटस्येति । तथोत्पन्नानामेव तन्तूनां पटत्वात् तेषां च मोषादृश्येन भेदाग्रहाज्जन्यत्वाग्रहेण न विनाश-

व्यवहार इत्यर्थः । विसभागेति । समानाः सदृशाः भागाः सान्तानिका यस्याः सा सन्ततिः सभागा, विसदृशसान्तानिका च विसभागा, काष्ठाङ्गारादिसन्तानवङ्गारादिजन्मनि काष्ठादिविनाश-व्यवहारात् कार्यस्य विनाशत्वस्थितौ सभागसन्तानावपि कार्यमेव विनाशत्वेन कल्प्यते बाधकाभावादित्यर्थः ॥

---

यदि हि तन्तुमालैव पटनिवृत्तिः कथं तदाश्रयस्त-दात्मको वा पटः प्राक्। अन्यैवासाविति चेत् ! न तावज्जातिकृतमन्यत्वमुपलभ्यते[1] व्यक्तिकृतं तु नाद्यापि सिद्ध्यति। अत एव[2] तत्सिद्धावितरेतराश्रयत्वम् । तथापि यद्येवं स्यात् कीदृशो दोष इति चेत्! न कश्चित्, केवलं प्रमाणाभावः व्यवहाराननुरोधश्च, तदसिद्धावपि सिद्ध्यतस्तस्य निमित्तान्तरापेक्षणात् ॥

शङ्क० टी० । यदि हीति । तन्तुमालायां पटस्तावद्वर्त्तत इत्यनुभवसिद्धम् । सा चेत्तन्तुमाला पटनिवृत्तिः स्यात् तदा स्वध्वंस एव पटो वर्त्तत इत्यायातमिति स्वमते । परमते त्वाह । तदात्मको वेति । पटोपि तन्तुमाला पटनिवृत्तिरपि तन्तुमाला तथा च प्रतियोग्यात्मिकैव निवृत्तिः स्यादिति विरोध इत्यर्थः । ननु पूर्वतन्तुमालाया उत्तरतन्तुमाला अन्यैव तथा च कथमयं

(१) मन्यदुपलभ्यते- पा० १ पु० ।

(२) इत एव पा० क्वचित् । टीकाप्यसम्मतोऽपि ।

विरोध इति प्रकृते। अन्येवेति। तद्विजातीया वा तद्भिन्ना वा। नाद्यः तथाऽननुभवात्। नान्त्यः क्षणभङ्गासिद्धेरिति परिहरति। न तावदिति। यद्यपि जातिकृतान्यत्वं व्यक्तिकृतान्यत्वे सत्येव, न त्वेकस्यां व्यक्तौ क्रमेण जातिभेदः सम्भवतीति पृथक् विकल्पानुपपत्तिस्तथाप्युपपत्तिस्वीकार्यादेतदुक्तम्। उत्तरतन्तुमाला पूर्वतन्तुमालातो भेद एव सति तन्निवृत्तिरूपा भवति नान्यथेति तत्सिद्धिरित्याह। इत एवेति। पूर्वापरतन्तुमालयोर्भेदे सति निवृत्तिरूपत्वं, निवृत्तिरूपतायां च सत्यां भेद इत्यन्योन्याश्रय इत्यर्थः। एवमिति। उत्तरतन्तुमाला पूर्वतन्तुमालानिवृत्तिः स्यात् को दोषो निवृत्त्यन्तरस्वीकारे गौरवमिति भावः। प्रमाणाभाव इति। उत्तरतन्तुमालायाः पूर्वतन्तुनिवृत्तिरूपत्वे भिन्नत्वे च प्रमाणाभाव इत्यर्थः। न वा ईदृशो[1] व्यवहार इत्याह। व्यवहारेति। तदसिद्धाविति। यथाश्रयनाशादेव पटनाशस्तथ तन्तुमालाया असिद्धावपि पटनाशव्यवहारो निमित्तान्तरात् पटध्वंसरूपादेव वक्तव्य इत्यर्थः। तन्तुमालाया निवृत्तिरूपत्वासिद्धावपीत्यन्ये॥

---

भगी० टी०। स्वमतमाश्रित्याह। कथमिति। विनाशस्य प्रतियोग्यनाश्रयत्वादित्यर्थः। बौद्धनयेनाह। तदात्मकत्वे वेति। विनाशस्य प्रतियोग्यनात्मकत्वादित्यर्थः। अन्येवेति। असौ तन्तुमाला कारणविरोधिनी कार्यसन्ततिरस्येव विनाशात्मिकेत्यर्थः। न तावदिति। तन्तुषु जातिभेदस्य योग्यानुपलब्धिबाधितत्वादि-

(१) तादृश इति २ पु० पा०।

त्यर्थः । व्यक्तिकृतं त्विति । सिद्धौ वा तत्साधनाय हेत्वभिधान-वैयर्थ्यमित्यर्थः । कार्यस्य विनाशत्वे सिद्धे व्यक्तिभेदसिद्धिस्तत्सिद्धौ च कार्यस्य विनाशत्वसिद्धिरित्यर्थः । यद्येवमिति । यदि कार्यमेव विनाशः स्यादित्यर्थः । तदसिद्धाविति । तन्तुमालाया निवृत्ति-रूपत्वासिद्धावपि सिध्यतस्तस्य पटनिवृत्तिव्यवहारस्येत्यर्थः । निमित्तान्तरं कार्यभिन्नं ध्वंसरूपमित्यर्थः ॥

---

रघु० टी० । एकत्र बाधकबलादतिरिक्ते विनाशे सिद्धे विसभागसन्तानेपि तथैव कल्प्यत इत्याशयवान् बाधकमाह' यदि हीति । तन्तुभिन्नत्वाभिन्नत्वविप्रतिपत्तावपि द्वयपक्षवस्तावत्सर्वानु-भवसिद्धः पटो धर्मी, भवितव्यं च तस्यावश्यं कादाचित्कस्य सतो विनाशेन, स चेदतिरिक्तः, सिद्धमीहितम् । अथ तन्तुमालामात्रं किं वा तद्विशेषः । आद्य कथमिति । तदाश्रय इति स्वमतेन । तदात्मक इति परमतेन । द्वितीयं शङ्कते । अन्यैवेति । पटा-कारेभ्यस्तन्तुभ्योऽन्यैव तदुत्तरकालीना तन्तुमालेत्यर्थः । इत एवेति । वर्तमानतन्तुमालायाः पूर्वकालीनतन्तुमालाव्यावृत्तेः पट-नाशात्मकत्वे सिद्धे भेदसिद्धिः सिद्धे च भेदे तत्सिद्धिरित्यर्थः । नन्वेवमपि सन्देहे न बाधकबलमत आह । तदसिद्धावपीत्यादि । उपलक्षणं चैतत् । तत्सिद्धावप्यसिद्ध्यत इत्यपि द्रष्टव्यम् । पटो हि यादृशस्तादृशो भवतु, गृह्यत तावत् तन्तुभ्यो भिन्नत्वेन तज्जन्यत्वेन च, न च तथापि तन्तुविनाशबुद्धिव्यपदेशौ भवतः, भवतश्च तन्तु-मालायाः पूर्वतन्तुविरहाभिन्नत्वेन गृह्यमाणे ऽगृह्यमाणे च पट-

जन्यत्वेनाभावात्मनि च पटजन्यान्तरे पटस्य ताविति सिद्धाति कार्यभावादन्य एव भावस्य विनाश इत्यर्थः ॥

---

अपि च तन्तुविनाशः सामान्यतस्तन्तुविरुद्धस्वभावो वा स्यात् तद्विपरीतो वा। आद्ये कथं तन्त्वन्तरं, न हि सामान्यतो नीलमनीलविरुद्धस्वभावमनीला-न्तरम्। द्वितीये कथं तद्विरोधी, न हि नीलं सामा-न्यतोऽपि नीलान्तरविरोधि। विशेषमात्र एवायं विरोध[1] इति चेत्! तत् किं सामान्यतोऽनुभयस्वभाव एव विनाशः। ओमिति ब्रुवतोऽन्यतरमुपादाय विना-शव्यवहारानुपपत्तिः। सामान्यस्यालीकत्वात् तत्र विरोधोऽपि किं करिष्यतीति चेत्! विलीनमिदानीं विरुद्धधर्माध्यासेन भेदप्रत्याशया, तस्य तदाश्रयत्वात् ॥

शङ्क० टी०। तन्तुविनाश इति। तन्तुरूपो विनाशस्तन्त्वन्तरस्य तन्तुत्वावच्छिन्नस्यैव यदि विरोधी तदा तन्त्वन्तरं कथं भवेत्। न हि सामान्यत एवानीलविरुद्धस्वभाव नीलमनीलं भवतीत्यर्थः। द्वितीय इति। सामान्यतो न तद्विरोधीति यदि तदा तन्तुः सामान्यतः तन्तुविरोधी कथं भवेत्। न हि नीलं नीलत्वेन कदाचिन्नीलविरोधि भवतीत्यर्थः। ननु न तन्तुत्वेनैव तन्तोस्तन्तु-

(१) विशेष एवात्र विरोध- पा० १ पु०।

विरोधित्वं ब्रूमः, किं तु पूर्वतन्तोरुत्तरतन्तुर्विरोधीत्याचक्ष्महे इति न विरोध इति शङ्कते। विशेष एवेति सप्तमी। विशेषाश्रितो विरोधो न सामान्याश्रित इत्यर्थ। अनुभयेति। सामान्यतो न विरोधी नाप्यविरोधीत्यर्थः। सामान्यतो विरोधित्वे तन्तुरेव न स्यात् अविरोधित्वे तन्तुनिवृत्तिरूपो न स्यादिति भावः। ननु भवतु तन्तुः सामान्यतोऽनुभयस्वभावः किं नः छिन्नं विशेषत एव विरोधान्निवृत्तिरूपता भवेदित्यत आह। ओमिति। अन्यतरेति। विरोधमादाय तन्तुव्यवहारानुपपत्तिरित्यविरोधपक्ष आश्रयणीयस्तथा च विनाशव्यवहारानुपपत्तिरित्यर्थः। ननु सामान्यतो विरोध्यविरोधिचिन्ता तदा भवेत् यदि सामान्यं भवेत् तदेव तु नास्तीत्याह। सामान्यस्येति। एवं सति गोत्वाश्वत्वलक्षणविरुद्धधर्माध्यासाभावादेवाश्वादीनामभेद आपद्येतेत्याह। विलीनमिति। तस्य भेदस्य। तदाश्रयत्वात् तदधीनत्वादित्यर्थः॥

---

भगी० टी०। तन्तुमालात्मक एव पटः पूर्वतन्तुमालाया विनाश इत्यत्र दूषणान्तरमाह। अपि चेति। तन्तुविनाशः पूर्वतन्तुविनाशत्वेनाभिमतस्तन्तुविशेष इत्यर्थः। सामान्यत इति। तन्तुत्वेन रूपेण तन्तोर्विनाशस्वरूपत्वमित्यर्थः। तद्विपरीत इति। न सामान्येन रूपेण तन्तोस्तथात्वमित्यर्थः। कथमिति। तन्तोस्तन्तुत्वेनैव रूपेण तन्तुविरुद्धत्वे तन्तुविशेषत्वं न स्यादित्यर्थः। सामान्यतो नीलत्वेनैव रूपेणेत्यर्थः। ननु तन्तुत्वेनाविरुद्धत्वेऽपि

विशेषत एव विरोधः स्यात् तत्कारणस्य तन्तोरेव तत्कार्यतन्तुविरोधः, तथा च तन्तुजातीयोऽपि तन्त्वन्तरविरोधी स्यादित्याह । विशेषेति । एवं सति सामान्यतस्तन्तुविनाशो न तन्तुविरहस्वभावो न वा तद्विपरीत इत्युभयानात्मकत्वं विरुद्धं 'परस्परविरोधे हि न प्रकारान्तरस्थिति'रिति न्यायादित्याह । तत्किमिति । यदि च सामान्यतस्तन्तुविनाशोऽभिहितपक्षद्वयानात्मको विशेषत एव विरोधाङ्गीकारादित्युपेयते तदानुगत[१]विनाशव्यवहारानुपपत्तिः कार्यमेव विनाश इति हानापत्तिश्चेत्याह । ओमिति । ननु तन्तुत्वादिसामान्यमलीकत्वान्न विरुद्धत्वावच्छेदकं न वाऽलीकस्वलक्षणयोः सम्बन्धः सम्भवतीत्याह । सामान्यस्येति । एवं सति विरुद्धधर्माध्यासाद्भेदो न स्याद्विरुद्धधर्मस्यानुगतत्वेनालीकतया स्वलक्षणासम्बन्धादित्याह । विलीनमिति । तस्य भेदस्य । तदाश्रयत्वात् विरुद्धधर्माश्रयत्वादित्यर्थः ।

रघु॰ टी॰ । सभागसन्ताने कार्यस्य विनाशत्वे बाधकान्तरमाह । अपि चेति । सामान्यतस्तन्तुविनाशत्वेन । तन्तोस्तन्तुसामान्यस्य विरहोऽन्योन्याभावः स्वभावो यस्य स तथा । तन्तुविनाशः तन्तुविनाशत्वावच्छेदेन तन्तुसामान्यभिन्नस्तन्तुसामान्याभिन्नो वेति विकल्पार्थः । आद्य इति । तत्सामान्यभिन्नत्वावच्छेदकरूपवतस्तद्विशेषत्वायोगात् न ह्यनीलसामान्यभिन्नत्वावच्छेदकरूपनीलत्ववन्नीलमनीलविशेषो भवितुमर्हतीत्यर्थः । विरोधो भेदः । द्वितीये सभागादिलक्षणविसभाग-

(१) विशेष इति पु॰ पा॰ ।

सन्तानीयतन्तुविनाशः कथं तन्तुसामान्यविरोधी, तत्सामान्याभिन्नत्वावच्छेदकरूपवतस्तत्सामान्याभिन्नत्वायोगात्। न हि नीलसामान्याभिन्नत्वावच्छेदकनीलत्वशालि नीलं नीलसामान्यभिन्नमित्यर्थः। नीलपीतादिवत्तन्तुविनाशयोः सामान्यतो न विरोधोऽपि तु व्यक्तिविशेषयोरेवेति न तन्तुविनाशस्य तन्तुविशेषत्वानुपपत्तिरित्याशङ्कते विशेषमात्र एवेति। यथा भवतां जन्यविनाशिनोरस्माकं वा कलमाङ्कुरकुर्वद्रूपयोः सामान्यतो न विरोधो नाप्यविरोधः क्वचित्समावेशस्य मिथो व्यभिचारस्य च दर्शनात्, तथा तन्तुविनाशयोरपीत्यभ्युपगमे ऽन्यतरतन्तुमादायाऽनुगततन्तुविनाशव्यवहारानुपपत्तिरित्याह। ओमितीति। ननु न तन्तुसामान्यं न तन्तुमात्रं वा तन्तुविनाशव्यवहारनिमित्तम्। आद्ये तन्तुतन्तुसन्तानोर्व्यभिचारात्, परं तु सभागो विसभागो वा तत्कार्यसन्तान एव, एवमन्यत्रापीति चेत्। न। सन्तानत्वस्य दुर्वचत्वात्। ननु तन्तुत्वादिसामान्यस्यालीकत्वादुपाधिमहिम्नैनानुगततन्तुविनाशव्यवहार इत्याशयेन शङ्कते। सामान्यस्येति। अपिकारादविरोधः। तस्येति। तस्य भेदसिद्ध्युपयोगिनो विरोधस्य तदाश्रयत्वात्सामान्याश्रयत्वात्। सामान्यमनुगतो धर्मः। अयमर्थः एकमात्रवृत्तिधर्मयोर्विरोधो नाश्रयभेदमगृहीत्वा शक्यग्रहः गृहीते तु तस्मिन् विरोधानुधावनमनर्थकमतः सामान्ययोः सामान्यावच्छिन्नयोर्वा आश्रयान्तरे विरोधो गृहीतव्यः तच्चेदलीकतया न विरोधोपयोगि, न तर्हि विरुद्धधर्माध्यासेन भेदस्य सिद्धिरिति॥

नन्वतिरिक्ताभावपक्षे यथा पटः पटान्तराभाववांश्च तज्जातीयश्च अभावो वा पटविरोधी पटान्तरसहवृत्तिश्चेति न कश्चिद्विरोधः तथा कार्याभावपक्षेऽपि भविष्यतीति। नैतदेवं, प्रतियोगिना हि तादात्म्यसंसर्गैकजातीय(१)त्वानि नेष्यन्ते अप्रतियोगित्वप्रसङ्गात् भिन्नकालत्वात् सामान्यतो विरुद्धधर्मसंसर्गाच्च, अप्रतियोगिना तु संसर्गे को दोषः न हि भेदविजातीयतैककालताः संसर्गविरोधिन्यः तादात्म्यं हि संसर्गित्वे विरुद्धं विरोधित्वं च ते च नेष्येते एव। नापि बाधकानुरोधस्तदभावात् ॥

शङ्क० टी०। पटान्तराभाववानित्यन्तरपदं स्फुटार्थम। यथा पटः पटाभाववानपि पटजातीयस्तथा तन्तुरपि तन्तुनिवृत्तिर्भवेत्। पटविरोध्यप्यभावः पटान्तरसमानाधिकरणस्तथा यथेष्यते तथा तन्तुविनाशोऽपि तन्तुसंयेष्यत इत्यर्थः। कार्याभावपक्ष इति। कार्यरूपाभावपक्ष इत्यर्थः। प्रतियोगिना हीति। स्वाभावतादात्म्यं स्वसंसर्गाभावसामानाधिकरण्यं स्वाभावसमान(?)जातीयत्वं विरुद्धं तच्च न सयेष्यत इत्यर्थः। अभावस्य प्रतियोगितादात्म्याभावे हेतुमाह। अप्रतियोगित्वेति। प्रतियोग्यनुयोगिभावस्य भेदनियतत्वादिति भावः। विनाशस्य प्रतियोग्यसंसर्गे हेतुमाह। भिन्नकालत्वादिति। अभावस्य प्रतियोग्येकजात्याभावे हेतुमाह। सामान्यत इति।

(१) सम्बन्धैकजातीय–पा० २ पु०।

प्रतियोग्यभावयोः सामान्यतो विरुद्धधर्मसंसर्ग एवानुभूयते । स चैकात्म्ये न स्यादित्यर्थः । अप्रतियोगिना त्विति । न हि नील-घटसंसर्गिणः पीतघटाभावस्य नीलघट एव प्रतियोगी येन तत्संसर्गो न स्यादित्यर्थः । न चेति । भेदवैजात्यैककालत्वे सति संसर्गस्यानुभवसिद्धत्वादित्यर्थः । ननु त्वत्पक्षवन्मत्पक्षेऽपि स्यादभाव-संसर्ग इत्यत आह । तादात्म्ये चेति । तथा प्रतियोगितादात्म्यम-भावस्येष्यते प्रतियोग्यविरुद्धत्वं च । तच्च मया नेष्यत[1] इति न मत्पक्षे दोषावकाश इति भावः । विरोधित्वं चेत्यत्र विरुद्ध-मित्यनुषज्यते । अतिरिक्ताभावे बाधकानुरोधादेति यदुक्तं तत्राह । नापीति ॥

भगी० टी० । अभावो वेति । यथा तस्मिन्नेव तन्तौ भाविनः पटान्तरस्य प्रागभाव उत्पन्नश्च पट इत्यर्थः । तथा कार्येति । कार्यमेवाभाव इति पक्षेऽपि तद्विरोधित्वं तज्जातीयत्वं च स्याद-त्यर्थः । प्रतियोगिनाससमभावस्य तादात्म्यानभ्युपगमहेतुमाह । अप्रतियोगित्वेति । प्रतियोग्यनुयोगिभावस्य भेदाधिष्ठानत्वादि-त्यर्थः । भिन्नेति । प्रागभावप्रध्वंसयोः प्रतियोग्यसमानकालत्वादि-त्यर्थः । सामान्यत इति । प्रतियोगितावच्छेदकानुयोगिताव-च्छेदकयोरभेदे प्रतियोग्यनुयोगिभाव एव न स्यादित्यवश्यं तयोर्विरुद्धधर्मसंसर्गो वाच्यः । न चेति । भेदवैजात्यसमानकालत्वे सति ससर्गदर्शनादित्यर्थः । तादात्म्ये चेति । चिशब्दस्तुशब्दार्थे

(१) ते च मयानेष्येते– पा० २ पु० ।

संसर्गस्य भेदाधिष्ठानत्वादित्यर्थः । विरोधित्वं चेति । संसर्गित्वे विरुद्धमित्यनुषज्यते विरोधस्यैकत्रासंसर्गनियमनिरूपकत्वादित्यर्थः ॥

---

रघु० टी०। यथा भवतामननुगता एव तत्तत्तन्तुविनाशास्तन्तुविनाशत्वेनानुगता अनुगतं तन्तुविनाशव्यवहारमर्जयन्ति तथास्माकमपि सरूपाणि विरूपाणि च तन्तुकार्याणि तन्तुकार्यत्वेन तन्तुविनाशत्वेन वा अनुगतानि, यथा च भवतां विशेषतो विरोधेऽपि सामान्यतो न तथा, तथास्माकमपीत्याशयेन शङ्कते। नन्वित्यादिना। पटान्तराभाववान् पटान्तरभिन्नः पटाभावो वा स्वप्रतियोगिपटविरोधी स्वाप्रतियोगिना पटेन सहैकतन्त्वादिवृत्तिरिति संसर्ग एककालाद्यवच्छेदेनैकदेशवृत्तित्वं ध्वंसप्रतियोगिनोस्तादात्म्याद्यनभ्युपगमे क्रमेण हेतूनाह । अप्रतियोगित्वेति । सामान्यत: आद्ये तन्तौ विसभागस्थलीयतन्तुनाशे च तन्तुत्वतन्तुविनाशत्वयोः विरोधावधारणादित्यर्थः। भावत्वाभावत्वलक्षणविरुद्धधर्मसंसर्गादित्यपरे। तादात्म्यं चेति । हिस्त्वर्थः । तादात्म्यविरोधित्वं तु संसर्गित्वविरुद्धमित्यर्थः । विरोधित्वं सहानवस्थायित्वम् । ननु यथा अन्यत्वेन कादाचित्कत्वादिना अभावत्वेन वा तन्तोस्तत्प्रागभावस्य वा सजातीयोऽपि कश्चित् तद्ध्वंसस्तथा तन्तुजातीयोऽयम् उपदर्शितस्य मिथो व्यभिचारिणोरपि समावेश इति चेदेवमपि तृतीयादितन्तूत्पादे प्राथमिकादितन्तोस्तृतीयविसभागसन्तानोत्पादे च प्राथमिकसन्तानस्य विनाशव्यवहारो न स्यात् तज्जन्यस्य विलयात् । सर्व एतत्सान्तानिकस्तदृतीयस्तस्य विनाश इति चेत् । न। सन्तानस्य

दूरत्वादित्युक्तत्वात् चलमन्तानोत्पन्नशालिनि सुदूरेपि देशे देशान्तरविलीनस्य प्राथमिकस्य विनाशवत्ताव्यवहारप्रसङ्गात् अनन्तमान्तानिकानां विनाशत्वकल्पनामपेक्ष्य एकस्यैव विनाशस्य कल्पनःया: न्याय्यत्वाच्च । अथैवमनन्तघटव्यक्तीनामभावत्वकल्पने गौरवात् घटसामान्याभावस्याप्यभावोऽतिरिच्येतेति चेन्न । घटग्रहे घटाभावस्याग्रहादभावव्यवहाराच्च घटत्वेनानुगता घटव्यक्तय एव तदभावत्वेन स्वीक्रियन्ते एवमन्योन्याभावानां प्रतियोगितावच्छेदका एव धर्मा इति । अबाधिताभावप्रतीत्यनुरोधादभावस्याप्यतिरिक्त एवाभावो न चानवस्था तयो: परस्परविरहरूपत्वाङ्गीकारात् । एवं ध्वंसप्रागभावयोरपि प्रागभावध्वंसे भावित्यप्येके देशिन: । अन्योन्याभावस्याप्यन्योन्याभावत्वनवस्थाभयादन्यत्या तत्तदधिकरणरूप: तत्तद्वृत्तिद्रव्यत्वादिरूपो वा स्वीक्रियत इति ॥

— —

नन्वु घटाभावे घटोऽस्ति न वा ! आद्ये घटवति तदभावः कपाले घटोऽस्तीति तान्यपि तद्वन्ति प्रसज्येरन्, नास्तीतिपक्षेऽनवस्थाप्रसङ्गः, अभावान्तरमन्तरेण तच्च नास्तिताव्यवहारे भावान्तरेऽपि तथा प्रसङ्गः । न, भावान्तरस्य (स)स्वजातीयत्वेनाविरुद्धसजातीयत्वात् विरुद्धजातीयस्य वा समानजातीयत्वानुपपत्तेः, अन्यत्वमात्रेण तथा व्यवहारे तद्वत्यपि प्रसङ्गात् । अभावस्य तु विरुद्धस्वभावतयैवाभावान्तरानुभवतर्कयोरभावादिति ।

शङ्क० टी०। अतिरिक्ताभावे बाधकमाशङ्कते। नन्विति। कपालेषु प्रागभावस्य प्रध्वंसस्य वा सत्त्वेन तदुभयकालेऽपि कपालानि घटवन्ति स्युः एवं घटाभाववति घटे घटोऽपि स्यात्। स्वाभाववति स्वसत्त्वं स्वस्मिन्नपि स्यादेव तत्र तत्रापीति घटपरम्परापत्तिरिति भावः। अनवस्थेति। अभावे अभावान्तरमेवं तत्र तत्रापीत्यर्थः। भावान्तरेऽपीति। भूतलादावपि घटाभावव्यवहारोऽधिकरणस्वरूपेणैव स्यादित्यर्थः। न भावान्तरस्येति। सजातीयत्वेन भावजातीयत्वेनाऽविरुद्धजातीयत्वादभावाधिकरणत्वाविरोधित्वादित्यर्थः। विरुद्धेति। अभावाधिकरणताविरोधिनाभाव जातीयत्वानुपपत्तेरित्यर्थः। ननु प्रतियोगिभिन्नत्वेनैव भूतलादीनां घटाभावव्यवहारप्रवर्त्तकत्वमस्तु किमतिरिक्ताभावस्वीकारेणेत्यत आह। अन्यत्वेति। एवं सति घटवतोऽपि भूतलस्य घटाभावव्यवहारप्रवर्त्तकत्वं स्यादित्यर्थः। नन्वेवमभावेऽपि तर्हि स्वीक्रियतामभावान्तरमित्यत आह। अभावस्य त्विति। अभावेऽभावान्तरं तावन्नानुभूयते यद्बलेनाभावान्तरमङ्गीक्रियेत। यदि घटाभावो घटाभाववान् न स्यादिति तर्कोऽपि नात्र प्रभवति। यतः प्रतियोगिविरुद्धस्वभावतया प्रथमाभावादेव घटाभावे घटो नास्तीति व्यवहारोपपत्तेर्द्वितीयाभावकल्पनाया अनवकाशात् अधिकरणस्याभावरूपस्य द्वैरूप्याभावाच्च। न ह्यभावः कदापि प्रतियोगिमानपि भवति यथा भूतलादिः। द्वितीयाभावाभ्युपगमे ऽनवस्थापत्तिश्चेत्यर्थः। अपव्याख्यानमन्यत्। केचित्तु अभावेऽपि अभावान्तरं, न चानवस्था तृतीयमादाय तदापत्तेरिति वदन्ति॥

---

भगी० टी० । अतिरिक्तविनाशपक्षे बाधकमाह । नन्विति आद्य इति । ध्वंसप्रागभावयोः प्रतियोगिसमानदेशतया घटसमवायिकारणे कपाले वृत्तेस्तयोश्च वृत्तौ घटसहितध्वंसवत्कपाल स्यादित्यर्थः तथा च घटध्वंसादिकालेऽपि घट उपलभ्येतेति भावः भावान्तरस्येति। अत्र सजातीयत्वं भावसजातीयत्वं, विरुद्धजातीयत्वमभावजातीयत्वम् । तथा च भूतलादेर्भावजातीयत्वेन भावप्रतिक्षेपरूपतया भानासम्भवादाधारस्वरूपातिरिक्ताभावस्याभ्युपेय इत्यर्थः । ननु घटवद्भूतलस्वरूपादिलक्षणभूतलस्वरूपेणाभावव्यवहारः स्यादित्यत आह । अन्यत्वमात्रेणेति । तद्वत्यपि प्रतियोगिमत्यपि । घटवद्भूतलान्तरस्यापि भावत्वात् तेनाप्यभावव्यवहारापत्तेरित्यर्थः । एतत्तर्कसहितो भूतले घटो नास्तीत्यबाधितानुभवो यथाऽतिरिक्ताभावे मानं न तद्वद्भावेऽप्यभावान्तरे मा अधिकरणद्वैरूप्याभावात् तेनैवाभावव्यवहारान्यथासिद्धेरित्याह अभावस्य त्विति ।

केचित्तु प्रतीतेस्तौल्येन घटाभावेऽप्यभावो वर्तत एव । न चानवस्था, द्वितीयतदङ्गीकारे तदभावात् । अथ द्वितीयमादायैवानवस्था ? तर्हि प्रथममादायैव सेति तुल्यम् । घटाभावं यदि घटात्यन्ताभाववान्न स्यात् घटवान् स्यादिति तर्कस्यापि सत्त्वात् । अभावान्तरानुभवतर्कयोरिति च विषयसप्तमी । अभावादित्यस्यातिरिक्ताभावस्वीकारादित्यर्थः । तथा चानुभवतर्करूपज्ञानविषयीभूतो ऽभावोऽभ्युपेय इत्यर्थः । यद्वा स एवाभावस्तत्र वर्तते प्रमेयत्ववत् प्रमाणसिद्धत्वादित्याहुः ॥

रघु० टी०। बाधकमाशङ्कते। नन्विति। घटाभावे घटध्वंसे। तद्वतीत्यस्य परंपरयेत्यादि। तथा च घटध्वंसकालेऽपि घटः स्यादुपलभ्येत चेति भावः। भावान्तरस्येति। अत्र सजातीयत्वविरुद्धजातीयत्वे भावत्वाभावत्वाभ्याम्। अन्यत्वमात्रेण प्रतियोग्यन्यत्वमात्रेण। तथा व्यवहारे प्रतियोग्यभावत्वव्यवहारे। तद्वत्यपि प्रतियोगिमत्यपि। तदभावत्वव्यवहारस्य प्रसङ्गात् अतिप्रसङ्गाच्च प्रतियोगिनि। तद्वदन्यत्वेन तथा व्यवहार इति चेत् अन्यत्वस्य स्वरूपभेदत्वेनाननुगमात्। अभावे अभावान्तरं निरस्यति। अभावस्येति। अभावे अभावान्तरं न तावद्विरुद्धस्वभावेन, नाप्यधिकरणस्वरूपेणाभावव्यवहारजनने प्रतियोगिमत्यपि तदापत्त्या स्वीकार्यम् अभावस्य विरुद्धस्वभावत्वेन तदयोगात्, नाप्यनुभवबलात्तत्सिद्धिः नाप्यभावत्वप्रत्ययात् अभावान्तरोपगमे अन्योन्याश्रयचक्रकानवस्थानामन्यतरप्रसङ्गेन लाघवादात्माश्रयस्योपगमात्। एतेन घटाभावो यदि घटभाववान् स्यात् घटवान् स्यादित्यादेस्तर्कस्याप्यापादकासिद्धया अभावादिति॥

---

भिन्नाभावजन्मनि घटताद्यवस्थ्यं दोष इति चेन्न। घटताद्यवस्थ्यं हि यदि घटत्वमेव अभिमतमेव तत्। न ह्यभावजन्मनि घटोऽघटतामुपैतीत्यभ्युपगच्छामः। तत्कालसत्त्वं चेन्न तर्ह्यभावो जातः कालान्तरे घटानवस्थानस्वभाव एव हि तदभावः। अस्तु तर्हि निरु-

**पादानत्वं बाधकं जन्मन उपादानव्याप्तत्वात् इति चेन्न धर्मिग्राहकप्रमाणबाधात् भावावच्छेदाच्च व्याप्तेः। एतेन निरुपादेयत्वं व्याख्यातम्। गुणादिसिद्धौ चानैकान्तिकत्वादिति।**

शङ्क० टी०। ननु यथा पटे जातेऽपि घटस्तदवस्थ एव तथा ध्वंसे जातेऽपि घटस्तदवस्थ एव स्यादन्यत्वाविशेषात् तथा च प्रतियोगितादात्म्यमेव विनाशस्याभ्युपेयमित्याह। भिन्नेति। तादवस्थ्यमिति। घटजातीयत्वं वा घटस्य ध्वंसानन्तरकालस्थायित्वं वा। आद्यमाह। एवमेतदिति। तदेवोपपादयति। नहीति। द्वितीयम् आह। तत्कालेति। ध्वंसकालसत्त्वमित्यर्थः। ध्वंसस्य प्रतियोग्यसमानकालीनत्वस्वाभाव्यादित्यर्थः। अतिरिक्ताभावपक्षे बाधकान्तरमाशङ्कते। अस्तु तर्हीति। ध्वंसो न जायते निरुपादानत्वादाकाशवदित्यर्थः। उपादानं समवायिकारणम्। इदानीं घटो नष्ट इति प्रत्यक्षेण ध्वंसस्योत्पन्नत्वमेव विषयीक्रियते, तथा चानुत्पादे साध्ये धर्मिग्राहकमानबाध इत्यर्थः। निरुपाधिर्बाधस्यानवकाशादुपाधिमाह। भावेति। यद्यप्यभावान्तरे साध्याव्यापकोऽयमुपाधिस्तथापि ध्वंसेतरत्वमिहोपाधित्वेन विवक्षितम्, न च पक्षेतरत्वं, बाधोन्नीतस्य तस्यानुमतत्वात्। ननु ध्वंसो न जायते निरुपादेयत्वात् गोत्वादिवदित्यस्त्वनुमानमित्याह। एतेनेति। निरुपादेयत्वं धर्मिग्राहकप्रमाणबाधेन बाधोन्नीतपक्षेतरोपाधिप्रयासेन च निराकार्यत्वेन व्याख्यातमित्यर्थः। गुणकर्मा-

देश्च गुणिभिन्नत्वेन सिद्धौ तत्रानैकान्तिकं कार्य्यत्वाश्रितत्व[१]-मित्याह। गुणादीति॥

---

भगी० टी०। ननु यदि घटाद्भिन्नस्तदभावस्तदा तदुत्पत्ता-वपि घटस्य न किञ्चिद्धीयत इति घटः स्यादेव, नहि यो यद्भिन्नः स तदभावात्मा पटोत्पादेऽपि घटस्य निवृत्त्यापत्तेः अतोऽभाव स्यैवाभावतादात्म्यमुपलभ्यत इत्याह। भिन्नेति। अस्तु तर्हीति। अतिरिक्ताभाव इति शेषः। जन्मनः समवायिकारणव्याप्तत्वात् ध्वंसस्य चासमवेतत्वेन तदभावात् जन्मैव निवर्तेत तथा च ध्वंसो न जायते निरुपादानत्वात् प्रागभाववदित्यर्थः। तद्धर्म्मिग्राहक-मानबाधितं ध्वंसस्य प्रतियोगिजन्याभावतया तद्ग्राहकमानेन जन्यत्वस्यापि विषयीकरणादित्याह। धर्म्मिग्राहकेति। यद्यपि भावत्वमुपाधिरभावे साध्याव्यापक तथापि बाधोन्नीतपक्षेतरत्व-मुपाधिरनेनोपलक्ष्यत इत्याशयेनाह। भावेति। यद्यपि स्फुटे व्यभिचारे निष्फल उपाधिस्तथापि निरुपाधिर्बाधानवकाश इत्यु-पाधिरुक्तः। बाधकान्तरं निराकार्यत्वेनातिदिशति। एतेनेति। (तद्)उपादेयं समवेतकार्य्यं तन्निर्गतं यस्मात् तत् तथा तस्य भावस्तत्त्वम्। अत्रापि धर्म्मिग्राहकमानबाधोन्नीतपक्षेतरत्वमुपाधि-रित्यर्थः। निराकरणान्तरमाह। गुणादीति। यस्य नोपादेयं तन्न जायत इति गुणादिर्गुण्यादिभ्यो भेदसिद्धावनैकान्तिकं तदसिद्धौ व्याप्यत्वासिद्धमित्यर्थः॥

---

(१) कार्य्यानाश्रयत्वमिति २ पु० पा०।

रघु० टी०। बाधकान्तरमाशङ्कते। भिन्नाभावेति। नष्ट-कार्योत्पादे अकारणं निवर्त्तते घटोत्पादे पटनिवृत्तिप्रसङ्गादतः कार्यमेव विनाश आश्रीयत इति भावः। भिन्नमात्र इव कार्यमात्रेऽपि विनाशबुद्धिव्यवहारयोरभावात् कार्यविशेष एव विनाश आश्रीयत इत्याशयवान् निराकरोति। नेति। बाधका-न्तरमाशङ्कते। अस्तु तर्हीति। जन्मन इति। जन्मव्यापकस्य सोपादानत्वस्य निवृत्तेर्व्याप्यस्य जन्मनो निवृत्तिरिति। धर्मिग्राह-केति। घटादेरिव ध्वंसस्यापि जन्यतायाः प्रत्यक्षसिद्धत्वादिति। भावेति। भावजन्मन एव सोपादानत्वनियमादित्यर्थः॥

---

अस्तु तर्हि व्यापकत्वं ध्रुवभावित्वमिति चेन्न। अता-दात्म्यात् अतत्कारणत्वाच्च अस्मद्दिशापि व्याप्तिग्रहो न साहित्यनियमेन विरोधितया विषमसमयत्वात्। नापि जन्मानन्तर्यनियमेन तदसिद्धेः, सिद्धौ वा तत एव क्षणभङ्गसिद्धेः। किमन्न, भविष्यत्तामात्रेण व्यापकत्वमस्तीति चेदस्तु, न त्वेतावता हेत्वन्तरान-पेक्षत्वसिद्धिः अद्यतनघटस्य श्वस्तनकपालमालयैवानै-कान्तिकत्वादिति(१)।

शङ्क० टी०। चतुर्थं ध्रुवभावित्वं निराकर्त्तुं शङ्कते। अस्त्विति। व्यापकत्वं प्रतियोगिव्यापकत्वं विनाशस्येत्यर्थः। तथा च सिद्ध-

---

(१) अनैकान्तादिति २ पु० पा०।

महेतुकत्वं नाशस्येति भावः । परमते तादात्म्यतदुत्पत्तिभ्यामेव व्याप्तिरित्यभिप्रेत्याह । अतादात्म्यादिति । यदा प्रतियोगी तदा ध्वंस इति कालगर्भापि न व्याप्तिरित्याह । विषमसमयत्वादिति । यः प्रतियोगी स एव विनाश इति तु पूर्वमेव निरस्तम् । यत्र प्रतियोगी तत्र ध्वंस इति देशगर्भापि न व्याप्तिराश्रयनाशजन्यद्रव्यादिध्वंसे व्यभिचारादिति भावः । स्वोत्पत्त्यव्यवहितोत्तरक्षण एव ध्वंस इत्यपि नियमोनास्य सिद्धिरित्याह । नापीति । तत एवेति । एतन्नियमबलादेवेत्यर्थः । तथा च ध्रुवभावित्वादहेतुकत्वमहेतुकत्वाच्च ध्वंसस्याग्रिमक्षण एवोत्पाद इति प्रक्रियागौरवमिति भावः । ननूत्पन्नस्य विनाशो भविष्यत्येवेत्यपि नियम एवेत्याशङ्कते । अस्त्विति । एतादृशध्रुवभावित्वेनाहेतुकत्व वा प्रतियोगिभिन्नहेत्वनपेक्षित्वं वा साधयितुं न शक्यत इत्यर्थः । कुतो न शक्यत इत्यत आह । अद्यतनेति । अद्यतनकपालमालाया अनश्यंभाविन्या अपि मुद्गरप्रहारादिरूपहेत्वन्तरापेक्षित्वनानैकान्त्यादित्यर्थः ॥

- - - - - - -

भगी० टी० । बौद्धानां तादात्म्यतदुत्पत्तिभ्यामेव व्याप्तिग्रहः न च ध्वंसः प्रतियोग्यात्मा न वा तत्कार्यमित्याह । अतादात्म्यादिति । न ध्वंसस्य प्रतियोगिमात्रजन्यतया व्यापकत्वं तस्य सामग्रीजन्यतया तदसिद्धेरिति भावः । अस्मन्मतेनापि यदा यदा प्रतियोगी तदा तदा ध्वंस इति न कालगर्भा व्याप्तिः ध्वंसप्रतियोगिनोर्भिन्नकालत्वनियमादित्याह । असहेति । न च प्रतियोग्यव्यवहितोत्तरक्षणभावितया ध्वंसस्य व्याप्तिग्रहः तस्य

माप्यत्वेनासिद्धिरित्याह । नापीति । व्याप्तिग्रहः इत्यनुषज्यते । सिद्धौ वेति । तद्ग्राहकादेव मानात् क्षणभङ्गसिद्धिरित्यर्थः । बौद्धमतेन व्यभिचारमाह । अद्यतनेति । अन्त्यकपालमालाया घटं प्रति भविष्यत्तामात्रेण व्यापकत्वेऽपि हेत्वन्तरापेक्षत्वादित्यर्थः ।

---

रघु० टी० । परेषां तादात्म्यतदुत्पत्तिभ्यामेव व्याप्यत्वग्रहा- द्व्यापकत्वमपि तदात्मकतत्कारणयोरेव गृह्यते । न च ध्वंसः प्रति- योग्यात्मेति प्रागेवावेदित न वा प्रतियोगिकारणमिति नतद्व्याप- कत्वग्रह इत्याह । अतादात्म्यादित्यादि । साहित्यनियमो हि देशतो वा स्यात्कालतो वा ? देशतोऽपि संयोगतो वा समवायतो वा ? नाद्य. गृहे जातस्यापि प्राङ्गण विनाशोपगमात् । नेतरः आश्रय- नाशेऽपि विनाशोपगमात् । द्वितीयेत्वाह विरोधितयेत्यादि । विरोधः एककालानवस्थायित्वम् ।

---

एतेन सापेक्षत्वे व्यभिचारोऽपि स्यात् विनाश- हेतूनां प्रतिबन्धवैकल्यसम्भवादिति परास्तम् । कपाल- सन्ततितुल्ययोगक्षेमत्वात् विनाशस्येति ।

अस्तु तर्हि चरमः पक्षः तथाहि विनाशो न जायते अभावत्वात् प्रागभाववत् जातोऽपि वा निवर्तते जातत्वात् घटवदिति । नैतदेवम् । प्रागभावो जायते अभावत्वात् विनाशित्वाद्वा ध्वंसवत् घटवद्वा,

**अजातो वा न निवर्तते अजातत्वात् आकाशवत् शशविषाणवद्वेतिवदसाधनत्वात् ।**

शङ्क० टी० । ननु यदि विनाशस्य हेत्वन्तरापेक्षा तदा कदाचिदुत्पन्नोऽपि भावो न नश्येत् हेतुसाकल्ये सत्यपि प्रतिबंध-संभवात् हेतूनां वैकल्यस्यैव (चा) वा संभवादित्याह । एतेनेति । एवं सति कपालमालापि कदाचिन्न भवेदित्यपि संभाव्येत इत्यर्थः । चरमः पक्ष इति । ध्रुवभावित्वविकल्पस्येति शेषः । स चाभावत्वं वेति पक्षः । ध्रुवभावित्वं विनाशस्याभावत्वं तथा च तेनैवाहेतुत्वमहेतुत्वं च प्रयोग स्वमतेन दर्शयति । तथाहीति विपक्षबाधकमाह । जातोऽपि वेति । यदि जायेत विनश्येत तथा च घटान्मज्जनप्रसङ्ग इति भावः । अत्राप्रयोजकत्वं दर्शयति । प्रागभाव इति । यथा प्रागभावस्याऽजातत्वेऽभावत्वमप्रयोजकम्, तथा ध्वंसस्याजातत्वेऽभावत्वमप्रयोजकम् । तथा चानुभवतर्कादि-साचिव्यमिहानुसरणीयमिति भावः । क्रमेण दृष्टान्तमाह । ध्वंसवद्घटवद्वेति । विपक्षे बाधकमाह । अजातो वेति । प्रागभावो यदि न जायेत न निवर्त्तेत, निवर्त्तते च, तस्माज्जायत इत्यर्थः ।

भगी० टी० । ननु यदि विनाशः प्रतियोगीतरजन्यः स्यात् कदाचित् तु नाशोऽपि न स्यात् विनाशहेतूनां कदाचित् प्रतिबन्धेन वैकल्यसम्भवादाह । एतेनेति । कपालमालावद्धे-त्वन्तरानपेक्षत्वावधारणादित्यर्थः । चरमः पक्षः अभावत्वमित्यर्थः ।

विपक्षबाधकमाह। जातो वेति। तथाच भावोऽप्यजनापत्तिरिति भावः। हेतुद्वये क्रमेण दृष्टान्तद्वयमाह। प्रध्वंसवदिति। विपक्षे बाधकमाह। अजातो वेति॥

---

रघु॰ टी॰। उत्पन्नस्यापि प्रतियोगिनोर्यदीतरविरहेणापि विनाशाजनकत्वं तदा यावज्जीवं प्रतिबन्धकादिवशात् तदसमवहितो विनाशं न जनयेदित्युत्पन्नोऽपि भावः कश्चिदविनाशी स्यात्, न चैवम्, अतो नोत्पन्नस्येतरविरहेण विनाशाजनकत्वमिति, तदिदमुत्पत्तिमतां भावानां विनाशनियमासिद्धौ न सिद्ध्यतीति तत्सिद्धिरवश्यमुपेया, तथा चान्वयव्यतिरेकसिद्धकारणभावानां सहकारिणां सर्वत्र समवधानं सैव साधयिष्यतीत्याशयवानाह। एतेनेत्यादि। प्रतिबन्धेति। प्रतिबन्धेन वैकल्यस्येत्येके। प्रतिबन्धवैकल्ययोरित्यपरे। चरमः पक्षोऽभावत्वमेव। ध्रुवभावित्वमिति। जन्मविरहे हेत्वपेक्षाविरहः सुतरां सिध्यतीति तं साधयति। तथाहीति। विपक्षे बाधकमाह, जातोवेति। प्रागभाव इति। अभावत्वे हेतौ ध्वंसो विनाशित्वे च घटो दृष्टान्तः। अजातो वेत्यादिविपक्षे बाधकं भावावच्छिन्नेत्यादि यथायोग्यं दूषणमूहनीयम्। जातत्वेन विनाशित्वे विनाशित्वेन च जातत्वे साध्ये साधनावच्छिन्नसाध्यव्यापकस्य भावत्वस्योपाधित्वात् तत्र तयोरप्रयोजकत्वं विनाशित्वस्य च सोपाधितया जातत्वाव्याप्यत्वेन जातत्वाभावोऽनाविनाशित्वव्याप्य इति तस्याऽप्रयोजकत्वं विपक्षबाधकयोश्चाप्रयोजकत्वेनाजातत्वे जातत्वे चाभावत्वस्याप्रयोजकत्वम्॥

---

किमेतेषां दूषणमिति चेत् ? भावावच्छिन्नव्याप्ति-कत्वादप्रयोजकत्वं प्राक्प्रध्वंसाभावग्राहकप्रत्यक्षबाधः प्राक् पश्चाच्च कार्योन्मज्जनप्रसङ्गलक्षणप्रतिकूलतर्कश्च । अथोन्मज्जने को दोष इति चेत् ? कालविच्छेदप्रत्यय-स्यानुभयात्मकत्वप्रसङ्गः । अयथार्थत्वे तस्य द्विचन्द्र-दर्शनकाले चन्द्रेऽविच्छेदवत् तद्वतः कालाविच्छेदे भावस्य प्राक्प्रध्वंससमवृत्तित्वेनाविरोधप्रसङ्गात् । यथार्थत्वे तु भेदस्थितौ तदुन्मज्जनानुपपत्तेः । एतेन प्रागभावप्रध्वंसोन्मज्जनं तत्काले च प्रागभावोन्मज्ज-नमपास्तम् । भाववदभावयोरपि उभयविरोधिस्व-भावत्वादिति ।

शङ्क० टी० । स्वमतपरमतयोर्दृष्टान्तद्वयमाकाशवदित्यादि । एतेषामिति । अनुमानतर्काणामित्यर्थः । भावत्वेति । जातो वा निवर्तेत जातत्वादित्यत्र अजातो वा न निवर्तेत अजातत्वादित्यत्र च साधनधर्मावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिरतो विपक्षबाधक-द्वयस्य आभासत्वे ध्वंसपक्षकप्रागभावपक्षकयोरनुमानयोरप्रयोजक-त्वमित्यर्थः । तर्कयोर्भावत्वावच्छिन्नव्याप्तिकत्वाद्धेत्वोरप्रयोजकत्व-मिति योजना । अपव्याख्यानमन्यत् । प्रागिति । प्रागित्यत्राभाव इति सम्बध्यते । इहेदानीं नष्ट इति प्रध्वंसग्राहकं प्रत्यक्षं तद्बाधितं ध्वंसस्याजन्यत्वसाधनं इह तन्तुषु भविष्यति पट इति प्रागभाव-ग्राहकं प्रत्यक्षं तद्बाधितं च प्रागभावे जन्यत्वानुमानं, प्रागभावस्य

र्हि जन्यत्वं तस्यापि प्रागभावान्तरमेवं तस्याप्यनवस्थादुःस्थतया प्रत्यक्षमेवैतादृशं नोदियादिति भावः। प्रागिति। प्रागभावस्या जन्यत्वा[1] त्प्राक्कार्योन्मज्जनं प्रध्वंसस्य नाशमत्वे पश्चात्कार्योन्मज्जन-प्रसङ्ग इत्यर्थः। ननु पूर्वमपि घट आसीत् कुतश्चिन्निमित्ता-न्नोपलभ्यत इति स्यादेवं ध्वंसानन्तरमपि घटः स्यात् कुतश्चि-न्निमित्तान्नोपलभ्यत इति स्यादित्याशङ्कते। अथेति। कालेति। घटध्वंसानन्तरमिदानीं घटो नास्तीति यः कालविच्छेदप्रत्ययः स यद्ययथार्थस्तदानीमपि घटसत्त्वे ध्वंससत्त्वे च तयोर्विरोधो न स्यात् द्वयोः समानकालीनत्वात्। यथार्थत्वे तु घटध्वंस एव तदा अनुभूयत इति कुतो घटोन्मज्जनप्रसंग इत्यर्थः। अनुभयात्मक त्वमिति। यथार्थत्वायथार्थत्वोभयानात्मकत्वमित्यर्थः। द्विचन्द्रेति। एक एव चन्द्रोमध्यविच्छिन्नत्वेन योऽनुभूयते स सर्वोपि यथास्त्येव विच्छेदप्रत्ययस्यायथार्थत्वात् एव सर्वोपि घटः स्यादेव नास्तीति प्रत्ययस्यायथार्थत्वादित्यर्थः। एव प्रागभावकालीनेपि घटे नास्ति ताप्रत्ययो विकल्पनीयः। ननु सन्तु प्रागभावाः प्रध्वंसास्तु अनन्ता एवघटविरोधिनस्तथा च जातत्वाद्विनाशित्वाच्चेति हेतू अपि प्रागभावोत्पन्नत्वप्रध्वंसनाशित्वसाधके समाहिते भवत इति चेत्। न। प्रध्वंसानां प्रागभावानां च तावतां भेदाननुभवात्[2]। हेतुद्वये च भावत्वस्योपाधिरुक्तत्वात् कल्पनागौरवप्रसङ्गाच्चेति। ननु घटप्रागभावकाले घटश्चेत् नास्ति तदा तद्विरोधिना ध्वंसेन

(१) जन्यत्वे १ पु० पा०। (२) ननुगमात् २ पु० पा०।

भवितव्यमेवं घटध्वंसकाले घटस्यैवास्ति तदा प्रागभावेन भवितव्यमेकविरोधिविरहस्य[1] विरोध्यन्तरनियतत्वादित्यत आह । एतेनेति । विच्छेदप्रत्ययस्यानभयात्मकत्वप्रसङ्गेनेत्यर्थः । तर्हि विरोधिविगमकाले विरोध्यन्तरं कथं न भवेदित्यत आह । भाववदिति । यथा घटस्य प्रागभावप्रध्वंसौ विरोधिनौ तथा प्रागभावस्य घटतद्ध्वंसौ ध्वंसस्य च घटतत्प्रागभावाविति नासौ विरोधिविगमकाल इत्यर्थः ॥

भगी॰ टी॰ । भावावच्छिन्नेति । अत्र प्रागभावानवच्छिन्नसत्ताप्रतियोगित्वं साध्यमतोऽभावत्वं नाभावान्तरे साध्याव्यापकमिति सम्प्रदायविदः । यद्वा पूर्वापरितोषेणाह । प्रागिति । अभावपदं प्रागित्यनेनापि सम्बध्यते । ध्वंसो न जायत इत्यत्र ध्वंसग्राहकमानबाधः प्रतियोगिजन्याभावस्य ध्वंसत्वात्, तथा प्रागभावो जायत इत्यत्रापि, तथाहि तन्तुषु पटो भविष्यतीति बुद्धिः प्रागभावे प्रमाणं तस्य च जातत्वे तस्याप्यन्यः प्रागभावः इत्यनवस्थया प्रागभावज्ञानमेव न स्यादित्यर्थः । प्राक्पश्चाच्चेति । प्रागभावस्य जातत्वे तदनाधारक्षणस्य प्रागभावध्वंसानाधारक्षणत्वेन प्रतियोग्याधारत्वप्रसङ्गः । एवं ध्वंसस्य ध्वंसप्रतियोगित्वे तदनाधारक्षणस्य प्रागभावध्वंसानाधारक्षणत्वेन प्रतियोग्याधारत्वप्रसङ्गः । ननु यथा प्रागभावस्य प्रतियोगितद्ध्वंसोभयविरोधित्वं तथा प्रागभावप्राग-

(१) एकविरोधिविरहकालस्य २ पु॰ पा॰ ।

भावस्यापि, एवं ध्वंसध्वंसस्यापि प्रतियोगिप्रागभावोभयविरोधित्वं स्यादिति नोक्तदोषः। मैवम्। अत्र व्यवहारस्यान्यथोपपत्तेः। ननु योऽयं पटादिरुत्पद्यमानो दृश्यते स पूर्वमप्युत्पन्नः किं तु ध्वंसेनान्तरित आसीदेवं प्रागभावेऽपि वाच्यमित्याशयेनाह। अथेति। अनुभयात्मकेति। ध्वंसप्रागभावाभ्यां विच्छिन्नस्य घटस्यानुभवे यथार्थत्वायथार्थत्वे उभये अप्यनुपपन्ने स्यातामित्यर्थः। अत्रायथार्थत्वे बाधकमाह। अयथार्थत्व इति। कालविच्छेद-प्रत्ययस्यायथार्थत्वं विषयाभावसत्त्वे स्यादिति प्रत्ययाऽयथार्थ-त्वानुपपत्त्या प्रत्येतव्यान्यथाभावस्यावश्यकत्वे भावाभावयोरेककाल-सत्त्वात् विरोधो न स्यादित्यर्थः। यथार्थत्वे त्विति। पूर्वापर-कालवर्तिनोर्मध्यकालेऽपि सत्त्वेन स्थैर्यापत्त्या तयोर्भेदसिद्धौ सौगतोन्मज्जनाभावापत्तिरित्यर्थः। ननु घटध्वंसकाले प्राग-भावस्य ध्वंससत्त्वे तस्यापि प्रागभावोऽन्य इत्यनवस्था स्यात् तथा च तदसत्त्वं वाच्यम् एवं सति प्रागभावोन्मज्जनापत्तिः एवं घटप्राग-भावकाले घटध्वंसस्य प्रागभावास्तित्वे तस्यापि ध्वंसोऽन्यस्तस्यापि प्रागभावोऽपर इत्यनवस्थापत्त्या घटप्रागभावासत्त्वे तदानीं ध्वंसप्रसङ्ग इत्यत आह। एतेनेति। भाववदिति। यथा घटस्य विरोधिनौ तत्प्रागभावप्रध्वंसाविति तत्काले न घटस्योन्मज्जनं तथा तत्प्राग-भावस्य घटतत्प्रध्वंसौ घटप्रध्वंसस्य च घटतत्प्रागभावाविति न तयोरुन्मज्जनमित्यर्थः। न चैवं प्रतियोगित्वाविशेषेण घटप्राग-भावस्य घटप्रध्वंसनिरूप्यत्वापत्तिः भावत्वस्योपाधित्वात्।

रघु० टी० । प्रागित्यादि । प्रागभावस्य जन्यत्वे साध्ये यद्यपि प्रत्यक्षेण न बाधः तस्याजन्यत्वाग्राहकत्वात् तथापि प्रत्यक्षतः सिद्धस्य प्रागभावस्य प्रागभावान्तरकल्पनायामनवस्थानादजन्यत्वसिद्धा प्रत्यक्षबाधोऽभिहितः ध्वंसस्याजन्यत्वे साध्ये तज्जन्यत्वग्राहकप्रत्यक्षबाधः प्रागभावस्य जन्यत्वे तत्पूर्वं ध्वंसस्य च विनाशित्वे पश्चात्कार्यसत्त्वप्रसङ्गो ध्वंसप्रागभावानाधारकालस्य प्रतियोगिसत्त्वनियमादित्याह । प्रागिति । अनुभयेति । यथार्थोऽयथार्थस्तदुभयम् । भाववदिति । यथा भावस्य प्रतियोगिनो ध्वंसप्रागभावविरोधित्वं तथा ध्वंसस्य प्रतियोगिप्रागभावयोः प्रागभावस्य च ध्वंसप्रतियोगिनोर्विरोधित्वमित्यर्थः । न चैवं ध्वंसप्रागभावपरम्परयोरपि भावविरोधित्वाक्षोभ्मज्जनमिति वाच्यम् । अनन्ततादृशकल्पनामपेक्ष्य लाघवेन तयोरेवानन्तत्वानादित्वयोः कल्पनाया न्याय्यत्वात् ।

---

कुतः पुनः स्थिरसिद्धिः ? प्रत्यभिज्ञानात् क्षणिकत्वानुपपत्तेश्च । लक्षणाभेदेन व्यभिचारिजातीयत्वात् प्रत्यभिज्ञा न प्रमाणमिति चेन्न । अवान्तरलक्षणभेदेनाव्यभिचारनियमात् । किं तदिति चेत् ? विरुद्धधर्मासंसृष्टविषयत्वं सिद्धं च तदत्र । एवम्भूतमपि कदाचिद्व्यभिचरेदिति चेन्न । विरुद्धधर्मसंसर्गात्कस्यचित् तस्यैकत्वप्रत्ययस्य व्यभिचारे सर्वत्रैकत्वोच्छेदप्रसङ्गात् तथा चानेकत्वमपि न स्यादिति भव निष्किञ्चनः ।

**तस्माद्भेदप्रवृत्तावनश्यं विरुद्धधर्मसंसर्गः तदसंसर्गे वा ऽवश्यं भेदव्यावृत्तिरिति भेदाभेदव्यवहारमर्यादा ।**

शङ्क० टी० । एवं स्थैर्ये यथा बाधकं प्रमाणं नास्ति तथा साधकमपि नास्ति तथा च साधकबाधकमानाभावात् संशयः स्यादित्यनुशयेन पृच्छति । कुतः पुनरिति । उत्तरं प्रत्यभिज्ञानादिति । स एवायं घट इति प्रत्यक्षमेव पूर्वापरकालयोरभेदग्राहकमित्यर्थः । मानान्तरमाह । क्षणिकत्वानुपपत्तेः । अपोहवादनिरासेन गोत्वादिसामान्यानां देशकालानुगतानां क्षणिकत्वं सर्वथाप्यनुपपन्नमिति तद्ग्राहकमानादेव स्थैर्यसिद्धिरितिहृदयम् । ननु तत्तेदंतोल्लिखिज्ञानत्वमेव प्रत्यभिज्ञानस्य लक्षणं तच्च ज्ञानादिप्रत्यभिज्ञानेऽप्यस्तीति व्यभिचारिजातीयत्वेन तदप्रमाणमिति शङ्कते। लक्षणेति । प्रत्यभिज्ञानमात्रं न प्रमाणमपि तु प्रत्यभिज्ञानविशेष इति परिहरति । अन्यान्तरेति । किं तदिति । अप्रमाणरूपप्रत्यभिज्ञानव्यावर्त्तकं किं लक्षणमित्यर्थः । ननु सर्वं सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गस्य दर्शितत्वादिशिष्टं प्रत्यभिज्ञानमसिद्धमेवेत्यत आह । सिद्धमिति । तत्साधकप्रसङ्गतद्विपर्ययनिरासेन सिद्धमेव तादृशं प्रत्यभिज्ञानमित्यर्थः । एवम्भूतमिति । विरुद्धधर्मासंसृष्टविषयमित्यर्थः । सर्वत्रेति । क्षणिकमप्येकं न स्यादित्यर्थः । माभूदेकत्वं ततः किमित्यत आह । तथा चेति । एकत्वपर्यवसायात्मकत्वादनेकत्वस्येत्यर्थः । व्यभिचाराभावमेवोपसंहरति । तस्मादिति ।

---

भगी॰ टी॰। कुत इति। एतावतापि साधकबाधकमानाभावात् स्थैर्यं संशयः स्यादित्यर्थः। स्थैर्ये मानं प्रत्यक्षमाह प्रत्यभिज्ञानादिति। पूर्वापरकालीनयोरभेदग्राहकत्वादित्यर्थः। मानान्तरमाह। क्षणिकत्वेति। क्षणिकत्वे भावानां नानादेशकालानुगतविधिरूपसामान्यानुपपत्तेस्तत्साधकमेव मानं स्थैर्यमपि विषयीकरोतीत्यर्थः। ननु यथार्थप्रत्यभिज्ञानमसिद्धमयथार्थं विरुद्धं प्रत्यभिज्ञानमात्रं व्यभिचारीति न मानमित्याह लक्षणेति। लक्षणमभेदव्याप्यतावच्छेदकं प्रत्यभिज्ञानत्वमभिमतं तच्चायथार्थप्रत्यभिज्ञानसाधारणतया न गमकमित्यर्थः। प्रत्यभिज्ञानमात्रं न तथापि तु विरुद्धधर्मासंसृष्टविषयविशेषितमित्याह। अवान्तरेति

---

रघु॰ टी॰। बाधकानवतारेऽपि विना साधकं नार्थसिद्धिरित्याशयेन पृच्छति। कुतः पुनरिति। उत्तरं प्रत्यभिज्ञानादिति। पूर्वापरकालीनाभेदावगाहित्वप्रत्यक्षमेव स्थैर्यप्रमाणमित्यर्थः। अर्थापत्तिं प्रमाणयति क्षणिकत्वेति। क्षणिकत्वे अनुगतगवादिव्यवहारस्यानुपपत्तेरित्यर्थः। निश्चितार्थव्यभिचारज्वालादिप्रत्यभिज्ञासाधारणं प्रत्यभिज्ञात्वं न प्रामाण्यप्रयोजकं न चात्र तत्प्रयोजकान्तरमीक्षामहे इत्याशङ्कते। लक्षणेति। अव्यभिचारो यथार्थत्वम्। विरुद्धधर्मासंसृष्टविषयमपि सन्दिग्धाप्रामाण्यमिति शङ्कते एवम्भूतमपीति॥

---

निष्कम्पप्रदीपकुड्मलेषु निपुणं निभालयन्तोऽपि न विरुद्धधर्मसंसर्गमीक्षामहे, अथ च प्रत्यभिज्ञानमवधूय तत्र भेद एव पदं विधत्त इति चेत्? कस्य प्रमाणस्य बलेन। आश्रयनाशस्य हुताशननाशहेतुत्वेन विज्ञातत्वात् तस्य चात्र प्रतिक्षणमुपलब्धेः, वर्त्तितैलयोरुत्तरोत्तरमपचीयमानत्वात् पूर्वस्य नाश उत्तरोत्पादश्च न्यायसिद्ध इति चेत्? नन्वयं प्रत्यनीकधर्मसंसर्ग एव, नष्टत्व नष्टत्वयोराश्रयनाशानाशयोर्वा एकत्र तेजस्यनुपपत्तेः।

शङ्क० टी०। ननु भेदप्रवृत्तेरवश्यं विरुद्धधर्मसंसर्ग इत्येव नियमो नास्ति निष्कम्पप्रदीपे भेदे सत्यपि विरुद्धधर्मसंसर्गाभावादित्याह। निष्कम्पेति। कस्येति। प्रदीपे केन प्रमाणेन भेदः सिद्ध इत्यर्थः। भेदसाधकं प्रमाणमुपन्यस्यति परः आश्रयनाशस्येति। आश्रयोऽत्र निमित्तकारणमिन्धनादिः। प्रतिक्षणमिति। सूक्ष्मकालोपलक्षणम्। पूर्वस्य दीपस्य। एवमुत्तरस्येति। न्यायसिद्ध इति। दीपो नाशप्रतियोगी नष्टाश्रयत्वादिति न्यायसिद्ध इत्यर्थः। नन्वयमिति। पूर्वस्य नाश उत्तरस्योत्पाद इति वदता त्वयैव नष्टानष्टत्वलक्षणविरुद्धधर्मसंसर्गः स्वीकृत इत्यर्थः। आश्रयनाशानाशयोरिति। नष्टाश्रयत्वानष्टाश्रयत्वयोरित्यर्थः॥

---

भगी० टी०। ननु वास्तवविरुद्धधर्मासंसृष्टविषयत्वमभिन्नमिति दर्शनं हेतूकर्त्तव्यं तच्च व्यभिचारीत्याह। निष्कम्पेति। यद्वा विरुद्धधर्मसंसृष्टत्वं व्यभिचरतीत्याह। निष्कम्पेति। आश्रयेति। इन्धनमित्याश्रयः। न च तैलनाशनाश्यत्वं चरमदीपस्यैवेति दीपान्तरे व्याप्तिग्रहबाधकमैक्यप्रत्यभिज्ञानं स्यादिति वाच्यम्। सामान्यतः कार्यकारणभावे बाधकाभावात् लाघवाच्च दीपत्वेनैव तैलनाशनाश्यत्वात्। नन्विति। तथा च विरुद्धधर्मसंसर्गं विना न भेद इत्यर्थः।

---

रघु० टी०। तादृशमपि निश्चितानामाण्यमित्याशङ्कते। निष्कम्पेति। आश्रयेति। यथालोकानुभवमेतत्। वस्तुतस्तूत्पन्नस्य वह्नेरवयवक्रियादिक्रमेण नाशो वह्न्यन्तरस्य कारणाभावादनुत्पादः। अवयवानां विभागाद्युत्पादनाशाद्विनाशोऽनवरतानुभूयमानपरिमाणभेदसिद्ध इति॥

---

सोऽयं शतं शिरश्छेदेऽपि न ददाति विंशतिपञ्चकं तु प्रयच्छतीति किमयं भ्रमः। भविष्यति तर्हि इहापि विरुद्धसंसर्गो दुरूह इति चेत्? अथ स एवायं स्फटिक इत्यत्र प्रमाणप्रतीतसंसर्गाणां विरोध आशङ्क्यते? तत्प्रतीतविरोधानां संसर्गः? अथाप्रतीतस्वरूपविरोधसंसर्गा एव केचिद्विरुद्धतया? संसृष्टतया? वेति।

शङ्क० टी०। सोयमिति। विरुद्धधर्मसंसर्गं साक्षान्न स्वीकरोति प्रकारान्तरेण च तमेवा इत्यर्थः। इहापीति। सत्यप्रत्यभिज्ञान-विषयेऽपीत्यर्थः। प्रमाणप्रतीतेति। सत्त्वद्रव्यत्वस्फटिकत्वादीना-मित्यर्थः। प्रतीतेति। गोत्वाश्वत्वादीनामित्यर्थः। अप्रतीतेति। कौचिद्धर्माविहापि विरुद्धौ स्यातामिति शङ्कामात्रमित्यर्थः॥

---

भगी० टी०। ननु कुतोऽप्यापततो विरुद्धधर्मादर्शनेऽपि तत्सम्भावना स्यादित्याह। भविष्यतीति। अथेति। न प्रतीतः स्वरूपं विरोधः संसर्गतश्च येषां ते तथा।

---

रघु० टी०। भवतु प्रामाण्यप्रयोजकं विरुद्धधर्मासंसृष्ट-विषयत्वं न तु तत्प्रकृत इत्याशङ्कते। भविष्यतीति। अप्रतीतेति। न प्रतीतं स्वरूपं विरोधो धर्मिसंसर्गः येषां ते तथा॥

---

न प्रथमः प्रागेव निराकृतत्वात्। न द्वितीयः अयोग्यानामनुपलम्भबाधितत्वात्। अयोग्यानामपि कारणादिव्याप्यव्यापकविगमविलोकनव्यावर्तितत्वात्। न तृतीयः तस्यातिप्रसञ्जकतया सर्वत्रैकत्वोच्छेदप्रसङ्गा-दिति।

एतेन प्रत्यभिज्ञानादेव लक्षणभागमाकृष्य अनु-मानेन स्थैर्यसिद्धिः। तथाहि विवादाध्यासितो भावः

**कालभेदेऽपि न भिद्यते तद्भेदेऽपि विरुद्धधर्मासंसृष्टत्वात् यो यद्भेदेऽपि न विरुद्धधर्मसंसृष्टो नासौ तद्भेदेऽपि भिद्यते यथा प्रतिसम्बन्धिपरमाणुभेदेऽपि एकः परमाणुः तथा चायं विवादाध्यासितोभावः तस्मात् कालभेदेऽपि न भिद्यत इति ।**

शङ्क० टी० । प्रागेवेति । सामर्थ्यासामर्थ्यकरणाकरणादीनां पूर्वमेव निराकृतत्वादित्यर्थः । अयोग्यानामिति । मनस्त्वात्मलचक्षुष्ट्वप्रभृतीनामित्यर्थः । कारणादीति । आदिपदेन कार्यग्रहणं व्याप्यव्यापकपदाभ्यां कार्यकारणव्यतिरिक्तव्याप्यव्यापकग्रहणं तथा च द्वन्द्वः । व्याप्यपदेन च समव्याप्यमभिमतम् । व्यापकपदेन तद्भिन्नं व्यापकं यथायोग्यमत्रोहनीयम् । कर्मधारयः समास इत्येके । व्यर्थविशेष्यताभयेनाह । लक्षणभागेति । तदेव दर्शयति । विवादाध्यासित इति । ननु क्षणिकोपि भावः स्वस्मान्नभिद्यत एवेति सिद्धसाधनं स्यादत आह । कालभेदेति । ननु कालभेदसंसर्ग एव विरुद्धधर्मसंसर्गः स्यादित्यसिद्धोविरुद्धधर्मासंसृष्टत्वा(१)दित्ययं हेतुरित्यत आह । तद्भेदेपीति । क्रमिककालभेदस्याविरुद्धत्वादिति भावः । ननु संयोगविभागलक्षणविरुद्धधर्माध्यासो बीजादावपि तथा श्यामपाकरक्तादिविरुद्धधर्माध्यासो घटादावपीति चेत् । न । तेषां कालभेदेनाविरोधात् । न हि यो यदा श्यामः स एव तदा रक्तः । तद्भेदेपीति स्वरूपाख्यानपरमेव । अयं विवादाध्यासितो

(१) धर्माविशिष्टत्वा० २ पु० पा० ।

घटो भाविकपालमालापर्यन्तं न विनश्यति विनाशकारणासमव-हितत्वात् विनष्टत्वेनाप्रतीयमानत्वात्तद्रूपेण प्रत्यभिज्ञायमानत्वात् सभागसंतानत्वेन विवक्षितो घटो न नाना एकत्वेन प्रतीयमानत्वात्। क्षणिकपरमाणुवत्। प्रातःकाले दृष्टोयं घटो मध्यंदिनस्थायी तदन्तरालसमये विनाशकारणासमवहितत्वादित्यादि कथञ्चिद्दृष्ट-व्यम। वस्तुतः प्रत्यक्षमेव स्थैर्ये प्रमाणं स्वोत्पत्त्यव्यवहितोत्तरक्षण-वृत्तिध्वंसप्रतियोगित्वस्य सर्वप्रमाणबाधितत्वादितिभावः। प्रतिसम्ब-न्धीति। षड्भिन युगपद्योगेप्येक एव परमाणुर्यथेत्यर्थः॥

---

भगी० टी०। प्रागवेति। सामर्थ्यासामर्थ्यादिसंसर्गनिरा-सेनेत्यर्थः। कारणादिव्यापकेति कर्मधारयः। आदिपदात् कार्यं। यद्यपि कार्यं व्याप्यं, न च तन्निवृत्त्या व्यापकनिवृत्तिः तथापि व्यापकत्वे सति यद्व्याप्यं समनियतं तदत्र विवक्षितं यथा स्पर्शकम्पादि वायोः। अनुमानभावेनापि प्रत्यभिज्ञानं प्रमाणयति। एतेनेति। यथार्थप्रत्यभिज्ञानलक्षणरूपो भागो विरुद्धधर्मसंसृष्ट-त्वमित्यर्थः। न च तत्सहितमेव प्रत्यभिज्ञानं लिङ्गमस्तु किं लक्षणभागाकर्षणेनेति वाच्यम्। असमर्थविशेष्यत्वप्रसङ्गात्। न भिद्यत इत्येतावन्मात्रे साध्ये क्षणिकोऽपि भावः स्वस्मान्न भिद्यत एवेति सिद्धसाधनं स्यादित्यत उक्तम्। कालभेदेऽपीति। ननु साध्यसाधनयोः सहचारानुपदर्शनाद्व्याप्यत्वासिद्धिः। यत्तद्भ्यां व्याप्तिग्रहस्याननुगमेनाशक्यत्वात्। विरुद्धधर्मासंसृष्टत्वादित्यस्यैव गमकत्वे तद्भेदेऽपीति विशेषणवैयर्थ्यं। न च कालभेद एव विरुद्धो

धर्मः स्यादित्यसिद्धिवारणार्थं तदिति वाच्यम्। असिद्धिवारकविशेषणस्यापि व्यर्थत्वात्। अत्राहुः विवादाध्यासिता बीजकाला एकबीजसम्बन्धिनः विरुद्धधर्मसंसृष्टसम्बन्धित्वात् अङ्कुरसामग्रीमध्यगताङ्कुरकुर्वद्रूपबीजसम्बन्धिसहकारिचक्रवत्। यद्वा एतत्कालीनो भावोऽन्यकालीनाद्भिद्यते तद्विरुद्धधर्मसंसृष्टत्वादित्यत्र तात्पर्यम्।

---

रघु० टी०। कारणादीत्यादिपदेन कार्यस्य संग्रहस्तस्यापि चरमसामग्रीनिवेशिकारणव्यापकत्वात्। व्याप्यं समनियतं। स्नेहादेर्जन्यत्वादि। व्यापकं विषमव्यापकं तस्यैव द्रव्यत्वादि लक्षणभागविरुद्धधर्मसंसृष्टत्वम्। यद्यपि प्रत्यभिज्ञानस्यापि हेतुत्वं न क्षतिर्ध्वंसप्रागभाववदद्वयस्थात् तथापि तन्मात्रस्य व्यभिचारितया विशिष्टस्योपादेयत्वे प्रथमोपस्थितत्वाद्विशेषणस्यैव हेतूकरणमुचितमित्याशयः। तदेव दर्शयति। विवादेति। ननु क्षणिकोऽपि भावो न भिद्यत एव स्वस्मादत आह। भेदेनेति। उत्तरकालीनो भावः पूर्वकालीनात्तस्माद्भिद्यते तद्विरुद्धधर्मसंसृष्टत्वादिति प्रयोगार्थः॥

---

अथ[1] व्याप्तौ न कश्चित् विप्रतिपद्यते पक्षधर्मता तु प्रसाधितैव क्षणिकत्वानुपपत्तिश्चानुगतव्यवहारानन्यथासिद्धेः। शब्दलिङ्गविकल्पा हि साधारणं रूपम-

१) अत्र चेति पाठो रघुनाथशिरोमणि सम्मतः।

नुपस्थापयन्तो न तृणकुलीकरणेऽपि समर्था इत्य-
विवादं बाह्यार्थस्थितौ स्थिरास्थिरविचारात्।

शङ्क० टी०। न कश्चिदिति। अन्यथैकस्मिन्नपि क्षणे भावो भिद्येतेति विपक्षबाधिका त्वया पौर्यं व्याप्तिरभ्युपगन्तव्येत्यर्थः। ननु नानाक्षणस्थायिनां विरुद्धधर्मासंसृष्टत्वं हेतुरेवासिद्ध इत्यत आह। अनुगतेति। देशकालानुगतं धर्मं विनाऽनुगतव्यवहार एव न स्यादित्यर्थः। ननु यदि देशकालानुगतो धर्मः प्रतीति-पथमवतरेत् तदा तस्य स्थैर्यचिन्ता, तदेव तु नास्तीत्यत आह। शब्देति। सङ्केतग्रहार्थं व्याप्तिग्रहार्थमनुगतविकल्पार्थं च साधारण-रूपभानमवश्यमभ्युपगन्तव्यमित्यर्थः। तृणेति। अनुगतरूपावच्छेद-मन्तरेण व्याप्तिसङ्केतयोरग्रहेऽनुमितिशाब्दज्ञानानुदये तदधीने प्रवृत्तिनिवृत्ती न स्यातामिष्टतावच्छेदकधर्मग्रहं विना तोयादि-विकल्पानां प्रवर्त्तकता च न स्यादित्यर्थः। नन्वस्तु ज्ञानात्मकमेव साधारणं रूपं तथापि गोत्वादीनां बाह्यानां कथं स्थैर्यमित्यत आह। बाह्यार्थेति। बाह्यस्यार्थस्य व्यवस्थापनीयत्वादित्यर्थः॥

— —

भगी० टी० अत्र व्याप्यत्वासिद्धिस्वरूपासिद्धी निवारयति। अत्र चेति। स्थैर्यसाधकद्वितीयहेतावसिद्धिं निवारयन्नाह। क्षणिकत्वेति। क्षणिकत्वे वस्तूनां कालान्तरानुगतव्यवहारो न स्यात् तदसिद्धौ च व्याप्यग्रहे अनुमानाच्च क्षणिकत्वसिद्धिरित्यर्थः। तदेवोपपादयति। शब्देति। गृहीतसङ्केता एव शब्दाः स्वार्थ-

संसर्गबोधकाः सङ्केतश्च साधारणरूपपुरस्कारेणैव गृह्यते लिङ्गमपि गृहीतव्याप्तिकं गमकं व्याप्तिश्चानुगतधर्मावच्छेदेन गृह्यते सवि कल्पकमपि प्रवर्त्तकमिष्टसाधनताज्ञानरूपं तच्च तज्जातीयत्वलिङ्ग प्रभवमिति सर्वत्रानुगतमतिरङ्गीकर्तव्यमित्यर्थः। बाह्यार्थेति। विज्ञान-वादे ज्ञानानां स्वस्वमात्रनिमग्नमूर्त्तिकतया स्थिरत्वास्थिरत्वे न विषयाविति कोऽयमसिद्धेर्न विचारः स्यादित्यर्थः। न च विज्ञान-रूपे एव ते तत्रापि सिद्धे इति युक्तं, तन्मतेऽपि ज्ञानरूपस्थिर-त्वस्य ज्ञानान्तराविषयत्वात् ॥

रघु० टी०। सर्वभावानां क्षणिकत्वेऽनन्यथासिद्धानेककालानुगतसत्त्वादिव्यवहारानुपपत्तिरक्षणिकत्वं साधयतीत्याह। क्षणिकत्वेति। अनन्यथासिद्धानुगतव्यवहारबलात् क्षणिकत्वबाधादक्षणिकत्वसिद्धिरित्यपि कश्चित्। शब्देति। अनुगतधर्मावच्छिन्न समयनियमग्रहाधीनप्रवृत्तिकयोरप्रवृत्तिरेव शब्दलिङ्गयोरन्तरेणा नुगतधर्मं तथा गृहीतेष्टजनकजातीयत्वं रजतत्वादिरूप समुल्लिख्य प्रवर्त्तयतो विकल्पस्यापीत्यर्थः। शब्देन लिङ्गेन च विकल्पइत्यर्थ इत्यपि कश्चित्। बाह्यार्थेति। विज्ञानवादे विज्ञानानां स्वमात्रमात्रिकत्वादन्येनान्यस्याग्रहणादनेकक्षणघटितसत्त्विकयोः स्थैर्यास्थैर्ययोः केनाप्यनुल्लेखात् कोऽयमसिद्धा विवादस्यैवासम्भवादित्यर्थ इत्येके। बाह्यार्थमभ्युपेत्य स्थैर्यास्थैर्यविवादस्यारम्भत्वादित्यर्थ इत्यन्ये ॥

---

तत्रालीकं वा आकारो वा बाह्यं वस्तु वेति त्रयः पक्षाः। तत्र न प्रथमः पक्षः तद्धि न तावदनुभवादेव तथा व्यवस्थाप्यं तस्यालीकत्वानुल्लेखात् तथात्वे वा प्रवृत्तिविरोधात् नह्यलीकमेव तत् इत्यनुभूयाप्यर्थक्रियार्थी प्रवर्त्तते। अन्यनिवृत्तिस्फुरणान्नैष दोष इति चेत् एतदेवासत् विधिरूपस्यैव स्फुरणात्। न हि शब्दलिङ्गाभ्यामिह महीधरोद्देशे अनग्निर्न भवतीति स्फुरणमपि त्वग्निरस्तीति।

शङ्क० टी०। तद्धीति। अनुगतस्वरूपमित्यर्थः। तथा व्यवस्थाप्यमिति। अलीकत्वेन व्यवस्थाप्यमित्यर्थः। तथात्वे वेति। अलीकत्वेनोल्लिख्यमानत्वे वा इत्यर्थः। तदेवाह। न हीति। अन्यनिवृत्तिरूपतया स्फुरणमेवालीकस्फुरणं ब्रूमो न त्वलीकत्वेन स्फुरणम्। तथा च नेदमरजतमितिज्ञात्वैव रजतार्थी प्रवर्त्तत इति को दोष इत्याह। अन्येति। विधिरूपस्यैवेति। न ह्यनुभवोपि व्याख्याय कल्प्यत इति भावः। एतदेवाह। न चेति। व्यवसाये हि विषय व्यवस्थाऽनुव्यवसायाधीना। अनुव्यवसायश्च रजतमहं प्रत्येमीत्याकारो न त्वरजतमिदं न भवतीति प्रत्येमीत्याकार इति भावः॥

---

भगी० टी०। तत्रेति। अनुगतरूपमित्यर्थः। आकारो वेति। यद्यप्यलीकत्वनिराकरणेनैव प्रकृतसिद्धिरित्यर्थान्तरं तथापि आकाराकारिणोरभेदादाकारिणश्चाननुगतत्वात् क स्थैर्यमिति

भावः। गवादिपदं व्यावृत्तिवाचकं न वा व्यावृत्तिपदमेव तथा प्रसिद्धम्। अनुगतधर्मे भावत्वं वर्त्तते न वा इत्यपोहे विप्रतिपत्तिः। ननु गौरिति विकल्पेऽतद्व्यावृत्तिरेवालीका स्फुरति न तदलीकत्वं नातो न प्रवृत्तिविरोध इत्याह। अन्यनिवृत्तीति। अत्यन्ताभावरूपा व्यावृत्तिस्तच भासत इत्यनुभवविरुद्धमित्याह। विधिरूपस्येति। तदेव स्पष्टयति। नहीति॥

---

रघु० टी०। तत् अनुगतरूपं। आकारोवेति। यद्यपि विकल्पानामप्यनुगतो नीलत्वादिराकारोऽतद्व्यावृत्तिरूपत्वादलीक एव तथापि बाह्यान्तरभेदेन पृथक् विकल्पः। विकल्पविषयानुगत धर्मस्यालीकत्व किं विकल्पेनैव गृह्यते किं वा मानान्तरसिद्धम्। आद्ये तद्धीत्यादि। द्वितीयं शङ्कते। अन्येति। निवृत्तेरलीकत्वं मानान्तरसिद्धमिति भावः। अन्यनिवृत्तेरत्यन्ताभावस्यान्योन्याभावस्य वा। तस्यापि किं प्राधान्येन निवृत्तिविशेषणतया वा। आद्ये। न हीति। विकल्पस्य निःशेषविषयतायां स एव तदुत्तरभावी वा विकल्पोमानम्। न ह्यनग्निनिवृत्तिं प्रत्येमीति-विकल्पोपि तु अग्निं प्रत्येमीति भावः। एतेन द्वितीयं प्रत्युक्तम्॥

---

यद्यपि निवृत्तिमहं प्रत्येमीति न विकल्पः तथापि निवृत्तिपदार्थोल्लेख एव निवृत्त्युल्लेखः। न ह्यनन्तर्भावितविशेषणा विशिष्टप्रतीतिर्नाम, ततो यथा सामान्य-

**सहं प्रत्येमीत्यनुव्यवसायाभावेऽपि साधारणाकारस्फुरणात् विकल्पधीः सामान्यबुद्धिः परेषां तथा निवृत्तप्रत्ययास्मिता निवृत्तिबुद्धिरस्माकमिति चेत्? हन्त साधारणाकारपरिस्फुरणे विधिरूपतया यदि सामान्यबोधव्यवस्था किमायातमस्फुरदभावाकारे चेतसि निवृत्तिप्रतीतिव्यवस्थायाः।**

शङ्क० टी०। अत्र शङ्कते। यद्यपीति। इतरव्यावृत्तवस्तुभानमेव व्यावृत्तिभानं ब्रूम इत्यर्थः। निवृत्तिमहं प्रत्येमीत्यनुव्यवसायस्तदा स्याद्यदि व्यवसाये निवृत्तिः स्वातंत्र्येण स्फुरेत्तन्न त्वित्यर्थः। न विकल्पोनानुव्यवसायः। तथापीति। रजतव्यावृत्तमिति भाने विशेषणतया व्यावृत्तिभानमावश्यकमित्यर्थः। एतदेवोपपादयति। न हीति। यद्यपि यथादण्डीत्यत्रादण्डिव्यावृत्तिभानमस्ति। न तु विशिष्य व्यावृत्युल्लेखः। तथापि विशेषणभानं व्यावृत्तिभाननान्तरीयकमेव। अतद्व्यावृत्तिर्वैशिष्ट्यमिति तवाभ्युपगमादित्यर्थः। तद्भानेपि तद्वृत्तिप्रकारभानमावश्यकमित्यत्र दृष्टान्तमाह। यथेति। परेषां नैयायिकानां। तथेति[१]। निवृत्तप्रत्ययस्य[२] नूनं निवृत्तिप्रत्ययोप्यस्त्येवेत्यर्थः। वस्तुगत्या यद्व्यावृत्तं तद्भासते न तु व्यावृत्तत्वं नापि भानमङ्गीकुर्मो येन व्यावृत्तिभानं स्यात्। विधि-

(१) तथा चेति २ पु० पा०।

(२) यस्यन्मूलं २ पु० पा०।

रूपं सामान्यं भासते न तु तस्य सामान्यत्वमपि विषय इति नायं दृष्टान्त इत्यर्थः । अस्फुरदनुभवाकारो यस्येत्यर्थः[1] ॥

भगी० टी० । नन्वत्यन्ताभावरूपव्यावृत्त्यस्फुरणेऽपि अन्योन्याभावरूपाऽसौ विकल्पे भासते विशिष्टबुद्धेर्विशेषणविषयत्वनियमात्, तथा व्यावृत्तात्मकविशिष्टबुद्धौ व्यावृत्तिरपि विशेषणत्वेन भासते यथा गौरित्यत्र विशिष्टज्ञाने गोत्वमित्याह । यद्यपीति । परेषां नैयायिकादीनाम् । तथेति । निवृत्तिमनादाय निवृत्तधीरेव न भवतीत्यनुपपत्तिरेवाक्षेप इत्यर्थः । यथा गौरित्यत्र विशिष्टज्ञाने विधिरूपतया विशेषणं गोत्वमनुगतत्वेन भासते न तथा व्यावृत्तिभासते किं तु वस्तुतो यद्व्यावृत्तं तद्भासते । तथा च निवृत्तपदार्थोल्लेखेऽपि न निवृत्तत्वनोल्लेख इत्याह । हन्तेति ॥

रघु० टी० । इतीयं शङ्कते । यद्यपीति । निवृत्तो निवृत्तिविशिष्टः । प्राधान्येन निवृत्तेरस्फुरणेऽपि तद्विशिष्टस्फुरणमेव तल्लिङ्गमित्यर्थः । तथेत्यादि । विशिष्टस्यातिरिक्तस्याभावेन विना विशेषणविषयत्वं विशिष्टविषयत्वानुपपत्तेः आक्षेपः । भवेदेवं, यद्यगोव्यावृत्त इति स्फुरणं स्यात्तत्त्वेवं, किं तु गौरितीत्याह । हन्तेति । चेतसि विज्ञाने ॥

---

(१) कारो यत्र चेतसि ज्ञाने २ पु० पा० ।

**न ह्यगोपोढोयमिति विकल्पः किं तु गौरिति, ततोऽन्यनिवृत्तिमद्दं प्रत्येमीत्येवमाकाराभावेऽपि निवृत्त्याकारस्फुरणं यदि स्यात् को निवृत्तिप्रतीतिमपह्नुवीत, अन्यथा त्वतत्प्रतिभानं तथेति व्यवहृतिरिति गवाकारे चेतसि तुरगबोध इत्यस्तु। न च निवृत्तिमात्रप्रतिभासेऽपि प्रवृत्तिसम्भवः न ह्यघटो नास्तीत्येव घटार्थी प्रवर्त्तते, अपि तु घटोऽस्तीति।**

शङ्क० टी०। एतदेवाह। न हीति। अगोपोढोयमिति। अगोव्यावृत्त इत्यर्थः। तत इति। निवृत्तेर्न प्राधान्येन भानं नाप्युपसर्ज्जनतयेत्यर्थः। अज्ञानविषयस्यापि तज्ज्ञानविषयताकल्पने विपक्षे दण्डमाह। अन्यथेति। तथा च सर्वज्ञानं सर्वविषयं स्यादिति भावः। निवृत्तिस्फुरणे दोषान्तरमाह। न चेति। तन्मते विकल्पेन स्वलक्षणासंस्पर्शान्मात्रेत्युक्तम्। प्रवर्त्तकानुभववैलक्षण्यमाह। न हीति। प्रवर्त्तकज्ञानस्वरूपमाह। अपि त्विति। अनुभव एवाच साचीत्यर्थः॥

---

भगी० टी०। तदेव विशदयति। न हीति। अपोढो व्यावृत्तः। किं त्विति। अगोव्यावृत्तिमजानतोऽपि विध्याकारेण गोस्फुरणमित्यर्थः। यदि तु यद्यत्र ज्ञाने न भासते तदपि चेत् तद्विषयः तदा गोबुद्धौ तुरगोऽपि विषयः स्यादित्याह। अन्यथेति। अत्यन्ताभावरूपव्यावृत्तिभाने दूषणान्तरमाह। न

चेति। अघटस्य पटादेरभावज्ञानेऽपि घटार्थी न प्रवर्त्तते अघटस्या[१]-
प्यभावसम्भवात्, किं तु घटज्ञानादेवेति विशिष्टज्ञानादप्रवृत्ति-
प्रसङ्ग इत्यर्थः ॥

---

रघु० टी०। अत्यन्ताभावरूपनिवृत्तिभाने दोषान्तरमाह। न
चेति। अन्यनिवृत्तित्वेनास्फुरणात्। पटार्थिप्र[२]वृत्तौ पटत्वेन
प्रतीतेरेव हेतुत्वात् विनातिरिक्तं पटत्वमनुगतानतिप्रसक्त-
स्यापटनिवृत्तित्वादेर्दुर्निरूपणत्वाच्च नैवमिति भावः[३] ॥

---

अघटस्यैव निवृत्तिरिति प्रतीतौ नायं दोष
इति चेन्न। घटनिवृत्त्यप्रतिक्षेपे नियमस्यैवाऽसिद्धेः।
तत्प्रतिक्षेपे तु कस्ततोऽन्योविधिर्निषेधप्रतिक्षेपस्यैव
विधित्वात्। निवृत्तेरपरिस्फुरणे गां बधानेति देशितो-
ऽश्वमपि बध्नीयात् इति चेत्। न। भवेदप्येवं, यद्यश्वो-
ऽपि गौः स्यात् किन्तु गौ गौरश्वोऽश्व इति। अन्यथा
निवृत्तावपि कुतस्ते समाश्वास इति। निवृत्त्यन्तराद्वे-
दनवस्था। निवर्त्यनिवृत्तितदधिकरणानां स्वरूपसा-
ङ्कर्ये प्रवृत्तिसङ्करः स्यात्। स्वरूपभेदेनैव नियमे विधि-
मात्रप्रतिभासेऽपि तथा किं न स्यात्।

(१) घटस्यापीति युक्तः पाठः। (२) पटार्थि—पा० १ पु०।
(३) भावः— पा० १। ३ पु० नास्ति।

शङ्क० टी०। ननु चाघटो नास्तीति प्रतीतेः प्रवर्त्तकत्वे तवायमनुशयो यदत्र घटनिवृत्तिरपि स्फुरति घटान्तरापेक्षया घटस्याप्यघटत्वादघटस्यैव निवृत्तिरिति प्रतीतेः प्रवर्त्तकत्वे तु नायं दोष इत्याह। अघटस्यैवेति। नेति। अघटस्यैवेति नियमार्थो घटनिवृत्तिप्रतिक्षेप एवाऽन्यथा पूर्वदोषतादवस्थ्यात्, घटनिवृत्तिप्रतिक्षेपश्च घटोयमितिज्ञानपर्यवसायी, तत्र च घटत्वमेव विधिरूपं स्फुरेत् तन्मते सविकल्पकेन स्वलक्षणासंस्पर्शादित्यर्थः। शाब्दं ज्ञानमन्यनिवृत्तिमुखेनैव जायत इत्यवश्यमभ्युपगन्तव्यमन्यथाऽन्यपराच्छब्दादन्यत्रापि प्रवर्त्तेतेति शङ्कते। निवृत्तेरस्फुरण इति भवेदेवमिति। गोपदार्थे नाश्व इति कथमश्वं बध्नीयादित्यर्थः। गौर्गौरिति। गोपदवाच्योगौरश्वपदवाच्योऽश्व इति कथमन्यपराच्छब्दात् अन्यत्र प्रवृत्तिरित्यर्थः। अन्यथेति। निवृत्तावपि निवृत्तिप्रतियोगिनिवृत्त्यधिकरणादिभ्यो यदि निवृत्तिः स्फुरेत्तदाऽनवस्था। तदस्फुरणेऽश्वव्यावृत्तिग्रहेपि गोपदादश्वे प्रवृत्तिः स्यादेव निवृत्तेः साधारण्येनैव स्फुरणात्। स्वरूपसांकर्य इति। प्रतियोग्यादिसाधारण्येनेव निवृत्तेः स्फुरणादित्यर्थः। प्रवृत्तीति। निषेध्योश्वोनिषेधाधिकरणं गौरिति तवापि मते गोशब्दादतद्व्यावृत्तिपरादप्यतद्गोचरप्रवृत्त्यापत्तेरित्यर्थः। ननु निवृत्तिः स्वत एव विलक्षणा तत्र किं निवृत्त्यन्तरस्फुरणेनेति यदि तदा गोत्वाद्यपि स्वत एव विलक्षणमिति तत्स्फुरणे कथमन्यत्र प्रवृत्तिः स्यादिति समानमित्याह। स्वरूपेति। तथा किं न स्यादिति। प्रवृत्तेर्नियमः किन्न स्यादित्यर्थः॥

---

भगी० टी० । अघटस्यैवेति । न तु घटस्यापीत्येवकारार्थः । अघटःपटादिर्घटाभावश्च । तथा च घटाभावस्यापि निवृत्तिः प्रतीयते न वा । अन्त्ये अघटस्यैवेति नियमासिद्धिः आद्ये विधि-भानमेव पर्यवस्यतीत्याह । घटनिवृत्तीति । न चैवमपि घटो विधिर्न च घटत्वमिति वाच्यम् । परमते घटस्वलक्षणस्य निर्विकल्पकमात्रवेद्यतया घटत्वस्यैव सविकल्पकवेद्यत्वात् । ननु यदि गौरयमिति शाब्दं ज्ञानमश्वव्यावृत्तिविषयकं न स्यादश्वज्ञानमिवाश्वे प्रवर्तकं स्यात् तथा चाश्वे प्रवर्त्तकत्वमनुपपद्यमानमस्याश्वव्यावृत्तिवि-षयतामाक्षिपतीत्याह । निवृत्तेरिति । अश्वविषयप्रवृत्तिजनकत्वे-ऽश्वविषयत्वं प्रयोजकमिति तदभावेनान्यथोपपन्नतां नाक्षिपतीत्याह । भवेदिति । द्वितीयं गौरिति अश्व इति च तच्छब्दवाच्यत्वपरम्, वाचकपदं च वाच्यविषयकज्ञानजनकमित्यर्थः । निवृत्तिवाच्यत्वेऽपि निवृत्तौ यदि प्रतियोग्यादितो व्यावृत्तिः स्फुरति तदाऽनवस्था तदस्फुरणे तु प्रतियोगिन्यपि प्रवृत्तिः स्यात् । अथ न निवृत्तौ निवृत्त्यन्तराद्व्यावृत्तिः स्फुरति किन्तु स्वरूपत एव, तदा विधा-वपि तथात्वमस्तु इत्याह । अन्यथेति । स्वरूपमाद्धर्येऽन्योन्यव्यावृ-त्तिस्फुरण इत्यर्थः ॥

---

रघु० टी० । अन्यनिवृत्तेरस्फुरणे गोपदादश्वसाधारणप्रतीत्या-ऽश्वेऽपि प्रवृत्तिप्रसङ्ग इत्याशङ्कते । निवृत्तेरिति । यद्धर्मविशिष्टे यस्य पदस्य सङ्केतग्रहस्ततः तद्धर्मविशिष्टस्य प्रतीतिर्गोत्वविशिष्टे च गोपदस्य सङ्केतग्रहात् ततो गोत्वविशिष्ट एव प्रतीयते नाश्व इति

निराकुरुते। भवेदिति। गौर्गौरेव गोत्वविशिष्टः। अश्वस्त्वश्वत्व-विशिष्टो न तु गोत्वविशिष्ट इत्यर्थः। गोत्वस्यैवाश्वत्वव्यावृत्त्यस्फुरणे कथं ततोऽपि नियम इति चेत् अत्राह। अन्यथेति। अगोव्यावृत्तेर-प्यनश्वव्यावृत्तितोव्यावृत्तिः स्फुरति न वा। आद्ये निवृत्त्यन्तरा दिति। द्वितीये निवर्त्त्येति। स्वरूपेणैव भिन्ना निवृत्तिर्भासते तेन प्रवृत्तिनियम इति यदि, तदा विधेरपि तादृशस्यैव भानान्नियमो भविष्यतीत्यत आह। स्वरूपेति ॥

---

स्वरूपभेद एवान्यापोहोऽन्यापोढस्वरूपत्वाद्विधे-रिति चेन्न। अलीकपक्षे तदभावात् तस्य स्वरूपविधा-वनलीकत्वप्रसङ्गात्। स्वलक्षणस्य च विकल्पानारो-हात्। अपि च गां बधानेति देशितो गवि प्रवृत्तो नाश्वे, तदप्रतीतेः। यदा त्वश्वमुपलप्स्यते तदा तत्र प्रवृत्त्युन्मु-खोऽपि गोरभावं प्रतीत्यैव निवर्त्स्यतीति किमनुपपन्नम्।

शङ्क० टी०। स्वरूपभेद एवेति। यः स्वरूपभेदो गोत्वं त्वयो-च्यते स एवान्यापोहोऽतद्व्यावृत्तिलक्षणः यस्तु विधिः सोऽन्यापो-होऽन्य एव तज्ज्ञानं शब्दान्निराकुर्म इत्यर्थः। अलीकपक्ष इति। अन्यापोहत्वेनाभिमतं गोत्वादिः[१] स्वरूपभेदस्त्वयोच्यते। तद्यद्य-लीकं तदा कथं स्वरूपभेदः न हि निःस्वरूपमलीकं स्वरूपं भवतीत्यर्थः। तदभावात् स्वरूपभेदाभावात्। तस्येति। अन्यापोह-

(१) अन्यापोहलक्षणो यो गोत्वादिः—पा० २ पु०

नेनाभिमतं गोत्वादि यदि स्वरूपं तदा कथमलीकमित्यर्थः। स्वरूपविधाविति। स्वरूपत एव विधावित्यर्थः। किं च गोत्वमन्यापोहरूपं यदि विधिस्वरूपं भवेत् तदा स्वलक्षणतामापादयेत् तथा च वस्तुतस्तस्य सविकल्पकविषयता न स्यादित्याह। स्वलक्षणस्य चेति। यद्वा स्वलक्षणमन्यापोहत्वेन गृह्यते इति तवाभिमानोऽनुपपन्न इत्याह। स्वलक्षणस्य चेति। अपि चेति। पूर्वमश्वव्यावृत्तेर्गोशब्दादभानेपि नाश्वे प्रवर्त्तेत इत्युक्तमिदानीमश्वाप्रतीत्यैव नाश्वे प्रवर्त्तेत इत्युच्यत इत्यपौनरुक्त्यम्। ननु गोपदादश्वव्यावृत्तिश्चेन्न स्फुरेत्तदा गां बधानेतिदेशितोगवाश्वमेकत्र पश्यन्नश्वं बध्नीयादपि तत्र नाश्वप्रतीतिरित्यत आह। यदात्विति। प्रवृत्त्युन्मुखोपि अश्वज्ञानवानपि नाश्वे प्रवर्त्तते प्रैषविषयाद्गोरयं भिन्न इति ज्ञानाद्वा नायं प्रैषविषय इति, ज्ञानाद्वा प्रैषविषयतावच्छेदकं यद्गोत्वं तदिह नास्तीति ज्ञानाद्वा नायं गौरिति ज्ञानाद्वा न प्रवर्त्तेत इत्यर्थः।

भगी० टी०। ननु व्यावृत्तिर्न व्यावृत्त्यन्तराद्ग्राह्यत्वाऽनवस्थानात् किन्तु स्वरूपत एव, विधिस्तु व्यावृत्तिप्रतियोगीति विशेष इत्याह। स्वरूपभेद एवेति। व्यावृत्तिमुक्त्वा तस्यामस्वरूपायां न स्वरूपभेदो विधित्वापत्तेरित्याह। अलीकेति। न चाविधिरूपायास्तस्या अलीकविषयके सविकल्पके विषयत्वमस्त्वित्याह। स्वलक्षणस्य चेति। नन्वगोज्ञानाद्गवि प्रवृत्तिवदश्वे निवृत्तिरनुभूयते तदन्यथानुपपत्त्या तस्यानुभविकगोविषयकत्ववदश्वव्यावृत्तिविषयकत्वमपि कल्प्यत इत्यत आह। अपि चेति। ज्ञानस्य स्वविषय

प्रवृत्तिजनकस्वभावतया गोज्ञानाद्गवि प्रवृत्तेरश्वे च प्रवृत्त्यभावो-ऽश्वाविषयत्वेनैवोपपन्नो न तस्याश्वव्यावृत्तिविषयकत्वकल्पक इत्यर्थः प्रवृत्त्युन्मुखोऽपि। निवृत्तिप्रयत्नेन रक्षितोपौत्यर्थः। तदर्थमपि न तस्य व्यावृत्तिविषयकत्वं कल्प्यं गोज्ञानानन्तरमश्वे गोत्वाभावादेव तदुपपत्तेरिति भावः॥

---

रघु॰ टी॰। व्यावृत्तेर्निःस्वरूपतया तत्र स्वरूपभेदोन संभवति किन्तु सा स्वत एव व्यावृत्ता विधिस्तु सस्वरूप इति तस्यैव स्वरूपभेदः स चान्यापोह इति स्वरूपभिन्नस्य तस्य भानेऽन्यापोहभानमित्या-शङ्कते। स्वरूपेति। स्वरूपभिन्नोविधिरवास्तवोभासते वास्तवो वा? आद्ये। अलौकेति। अलौकस्य निःस्वरूपतायास्त्वयैवोक्तत्वात सस्वरूपत्वे तु अलौकत्वव्याघात इत्याह। तस्येति। स्वरूपविधौ सस्वरूपताभ्युपगमे। द्वितीये स्वलक्षणस्येति। स्वलक्षणस्य निर्विक-ल्पकमात्रवेद्यतायास्त्वयाऽभ्युपगमादित्यर्थः। अस्माकन्तु विकल्प-विषयस्यान्यापोहशालिनोपि विधेः स्वरूपेण स्फुरणं न विरुद्ध-मिति भावः। अपि च गोशब्दादन्यव्यावृत्तिभानं किं गवि प्रवृत्तये किंवाऽश्व तदभावाय उत अश्वान्निवृत्तये, नैकमपीत्याह। अपि-चेति। गोशब्दात्प्रत्यक्षतश्च प्रतीते गवि प्रवर्त्तते, नाश्वे, तस्यागो-शब्दार्थत्वादिन्द्रियासन्निकर्षाच्चाप्रतीतेः प्रवृत्तौ प्रवृत्तिविषयप्रत्यक्ष-स्यापि हेतुत्वात्, यदात्विन्द्रियसन्निकर्षाद्गोसाधारणाकारमश्व-मुपलभते तदा गवाशंकया प्रवृत्त्युन्मुखोपि तत्र गोरन्योन्याभावं प्रतीत्य निवर्त्तते यदा त्वयंगौरितिभ्राम्यति तदा प्रवर्त्तत एवेत्यर्थः॥

---

स्यादेतत् नह्यनुभवमवधूय भवितुं क्षममिति कोविधिस्फुरणमपन्हुताम्, तदुपसर्जनीभूतस्तन्निषेधोपि स्फुरत्येव, अन्यथा विधेरवच्छेदकत्वानुपपत्तेः, न ह्यन्यतो विशेष्यमव्यावर्तयतो विशेषणत्वं नाम, न चाऽन्यतो व्यावर्तनं व्यवच्छित्तिप्रत्यायनादन्यत्, ततो यथेन्दीवरपुण्डरीकादिशब्देभ्यो गुणीभूतनीलधवलादिविधिशेखरा प्रतीतिस्तदन्यव्यवच्छेदस्तु तद्गर्भीभंकायमाणस्तथा सर्वत्रेति चेत् । अस्तु तावदेवं, विधिस्तु स्फुरतीत्यत्र सम्प्रति नो निर्बन्धः, अन्यथाऽवच्छेद्यावच्छेदकयोरप्रतीतेरवच्छित्तिरपि न स्यात् यथोत्पलादावेव नीलत्वाद्यप्रतीतौ ।

शङ्क० टी० । कीर्त्तिदिङ्नागादिभिर्गौरियमित्यादिविकल्पे विधिस्फुरणं नास्त्येवेत्युक्तं, ज्ञानश्रिया तु विधिस्फुरणमभ्युपगम्य निषेधस्फुरणमपि तत्र भवतीति स्वीकृतं यदाह 'तत्रापोहस्तद्गुणत्वेन गम्यत' इति तद्व्याप्य दूषयति । स्यादेतदिति । न ह्यनुभवमभिभूय भवितुं क्षममित्यपि तद्ग्रन्थ एव । तस्यार्थः अनुभवमभिभूय तिरस्कृत्य शास्त्रं भवितुं न क्षममिति । शास्त्रस्यानुभवानुसारित्वात् । तदुपसर्जनीभूतो विध्युपसर्जनीभूतः । अन्यथेति । व्यवच्छेदो यदि न स्फुरेत्तदा गोत्वादेर्विधेर्व्यवच्छेदकत्वं[1] न भवेदित्यर्थः । तदेवोपपादयति । नहीति । व्यावर्त्तकं हि विशेषणमित्युच्यत इत्यर्थः ।

(१) विशेषणत्त्वं—पा० २ ।

ननु विशेषणं व्यवच्छित्तिप्रत्ययं जनयति, अन्यतोव्यावृत्तिप्रत्यये तु किमायातमत आह । न चेति । स्फुटतरव्यावृत्तिप्रत्यये स्थान-दृष्टांतेन (?) गवादिप्रत्ययानामपि व्यावृत्तिविषयत्वमाह । यथेति । इन्दीवरं नीलोत्पलम् पुण्डरीकं सिताम्भोजम् । नीलधवलादि-विधिशेखरा नीलधवलादिविधिप्रधाना । तद्गर्भाभिकायमाणत्वको-ड्वर्त्ती । तथा सर्वत्र गोमहिषमातङ्गादिप्रतीतावपीत्यर्थः । अत्र सम्प्रतिपत्तिमाह । अस्त्विति । स्फुरितस्य विधेरलीकत्वं यद्यपि तव हृदि वर्त्तते तथापि विधिस्फुरणं स्वीकृतमेव त्वयेति तावत्पदार्थः । प्राथमिकविशिष्टज्ञाने निषेधो न स्फुरतीत्यनुशयस्तावत्पदार्थ इति केचित् । तन्न । प्रथमविशिष्टज्ञानेपि व्यावृत्तिस्फुरणात् । तदुक्तं गुणकिरणावल्यामाचार्यैः । अतद्व्यावृत्तिर्वैशिष्ट्यमिति । वैशिष्ट्यं च प्रथमविशिष्टज्ञानेपि भासत एव । यत्तु विशेषणत्वज्ञाने व्यावृत्ति-प्रत्ययो न विशिष्टज्ञान इति । तन्मन्दं । विशेषणत्वज्ञाने हि व्यावर्तकत्वं स्फुरेन्नतु व्यावृत्तिः । यदप्यन्योन्याभावग्रहे वैधर्म्यज्ञानं तन्त्रमिति । तदपि न । अन्योन्याभावत्वेन तद्ग्रहे तथैव, न तु वैशिष्ट्यरूपतयाऽन्योन्याभावग्रहे तन्त्रमितिलीलावतीकण्ठाभरणे एव विस्तृतम्[१]। अवच्छेद्यावच्छेदकयोरिति । विशेषणविशेष्ययोर्विधि-रूपयोरित्यर्थः । व्यवच्छित्तिर्व्यवच्छित्तिप्रत्ययः । यथेति । नीलं नीलत्वमुत्पलमुत्पलत्वं च यदि न भासते तदाऽनीलादनुत्पलात् व्यावृत्तिर्न भासत एवेत्यर्थः ।

(१) विवृतम् । पा० २ ।

भगी० टी०। ननु यद्यप्यगोपोढोऽर्थमितिनास्तिप्रतीतिः - - - किन्तु गौरित्येव तथापि तस्य विशिष्टज्ञानतया विशेषणविशेष्य सम्बन्धवद्विशेषणत्वमपि विषयः तच्चातद्व्यावृत्तिधीजनकत्वमिति तस्य व्यावृत्तिबुद्धिविषयत्वं सिद्धमित्याह। स्यादेतदिति। तदुपसर्जनी-भूतः तद्गुणीभूत इत्यर्थः। अन्यथेति। विधिरूपस्य गोत्वादिसामान्यस्य विशेषणत्वमपि व्यावृत्त्यविषयकत्वे विशिष्टज्ञानस्य न स्यादित्यर्थः। एतदनुरूपं दृष्टान्तमाह। ततो यथेति। इन्दीवरं नीलोत्पलम्। पुण्डरीकं सितपद्मम्। एवमपि विधिरूपस्फुरणं प्रकृतं सिद्ध मेवेत्याह। अस्त्विति। तावच्छब्देन ह्यनुपगमं सूचयति। तद्वीजन्तु विशिष्टज्ञाने यद्यपि विशेषणं विषयस्तथापि तस्य विशेषणत्व न भासते तस्यातद्व्यावृत्तिधीजनकत्वरूपस्य विशिष्टज्ञानानन्तरं भानात् विशेषणत्वे ज्ञात एव तत्र व्यावृत्तिभानात् अन्योन्याभाव ग्रहस्य वैधर्म्यग्रहाधीनत्वात्। न च दण्डपुरुषसम्बन्धा इति समूहालम्बनाद्दण्डीतिज्ञानस्याविशेषापत्त्या तस्य व्यावृत्तिविषयत्वं वाच्यम्। विशिष्टज्ञानस्य विशेषणज्ञानजन्यतया कारणाधीनस्यैव विशेषणताविशेषस्य सत्त्वात्। अन्यथा व्यावृत्त्याऽपि समूहालम्ब-नादविशेषापत्तेः। अन्यथेति। यदि विशिष्टज्ञाने विधिरूपयो-र्विशेषणविशेष्ययोर्भानं न स्यात्तदा व्यावृत्तिधीरपि न स्यात्॥

रघु० टी०। विशेषणं तावदितरव्यावृत्तिबोधजनकं विशेषण-जन्या च विशिष्टबुद्धिरेवेति तस्यामवश्यमितरव्यावृत्तिर्भासते इत्या-शङ्कते। स्यादेतदिति। व्यवच्छेदकत्वं विशेषणत्वं, विशेषणं हि नागृहीतं नाप्यगृहीतविशेष्यसम्बन्धमन्यव्यावृत्तिबुद्धिमाधत्ते परन्तु

विशेष्ये गृहीतसम्बन्धम्, स एव च गवीविशिष्टबुद्धिस्तदधीना तु पश्चात्तन्नीतरव्यावृत्तिबुद्धिरिति यद्यपि तत्त्वं तथापि विधिस्फुरण-मात्रेणैव सम्प्रति कृतार्था वयमित्याशयवानाह। अस्तु तावदिति। अवच्छेद्यावच्छेदकयोर्विशेष्यविशेषणयोः। अवच्छित्तिरितरव्यावृत्ति-बुद्धिः॥

न च निषेध्यमस्पृशतो प्रतीतिर्निषेधं स्प्रष्टुमर्हति तस्य तन्निरूपणाधीननिरूपणत्वात्। न च निषेधान्तरमेव निषेध्यमितरेतराश्रयप्रसङ्गात्। परानपेक्ष-निरूपणे तु विधौ नायं दोष इति। ततः प्रतीतावितरे-तराश्रयत्वमुक्तं सङ्केते सञ्चार्य यत्परिहृतं ज्ञानश्रिया, तदेतत् ग्राम्यजनधन्धीकरणं गोलकादिवत् स्थानान्तर-सञ्चारात्।

शङ्क० टी०। ननु निषेधमात्रमेव भासतां किं निषेध्यस्यो-त्पलादेरपि भानेनेत्यत आह। न चेति। ननु चागवि महिषादौ या गोव्यावृत्तिः गवि च धवलादौ या गोव्यावृत्तिस्तयोरेव परस्परं विशेषणविशेष्यभावोऽस्तु किं विधेर्निषेध्यत्वेनेत्यत आह। न चेति। एवं सत्यन्योन्याश्रयापत्तिस्तदुक्तं-

सिद्धश्चाऽगौरपोह्येत गोनिषेधात्मकस्तु सः।

तदा गौरेव वक्तव्यो नञा यः प्रतिषिध्यते'॥

इति। ननु भावोपि स्वाभावविरहरूप इति तत्राप्यन्योन्याश्रय

एवेत्यत आह। परानपेक्षेति। यद्यभावविरहात्मतया भावनिरूपण-मवश्यं भवेत्तदाऽयं दोषः स्यात्किन्तु स्वरूपेणापि भावनिरूपणं सम्भवत्येवेति क्वान्योन्याश्रय इत्यर्थः। अन्योन्यज्ञानाधीनमन्योन्य-ज्ञानमिति नैयायिकोक्तमन्योन्याश्रयमन्योन्यसङ्केतग्रहाधीनमन्योन्य-सङ्केतग्रहणमिति कलतः सञ्चार्य ज्ञानश्रिया यत्समाहितं तदेतद्ग्राम्य जनस्य पामरजनस्य व्यामोहनं, न तु परीक्षकस्य, यथेन्द्रजालिको-गुटिकान्तरस्थाने गुटिकान्तरं निवेशयति। पृथग्जनास्तु तद्रू-पेणैव प्रतिपद्यन्त इत्याह। तत इति। सङ्केतेऽन्योन्याश्रयसञ्चारो यथा अगौर्महिषादिर्महिषादिपदसङ्केतग्रहाधीनग्रहः गौश्च गोपद-सङ्केतग्रहाधीनग्रह इति। अस्य च परीहारः गवादिरूपार्थ-ग्रहाधीनोगोपदसङ्केतग्रहो न तु महिषादिपदसङ्केतग्रहस्तत्रोपयुज्यते येनान्योन्याश्रयः स्यादिति। तथा च कल्पितदूष्यदूषणत्वाद-न्योन्याश्रयस्य नापत्तिरितिभावः॥

भगी॰ टी॰। दूषणान्तरमाह। न चेति। यद्यगोव्यावृत्ति-र्गोपदस्यार्थः तर्ह्यगोरूपप्रतियोगिनिरूप्यत्वाद्गोरगोश्च गोनिषेधा-त्मकतया गोनिरूप्यत्वादन्योन्याश्रयः इत्यर्थः। यदाहुः—

'सिद्धश्चाऽगौरपोह्येत गोनिषेधात्मकश्च सः।

गौरेव स तु वक्तव्यो नञा यः प्रतिषिध्यते' इति।

ननु भावोऽप्यभावविरहरूप इति परस्पराश्रयत्वं तथैव स्यादित्यत आह। परानपेक्षेति। अभावविरहरूपतया भाने तथात्वेपि गोत्वादिना विधिरूपेण भाने नोक्तदोष इत्यर्थः। अयं चान्योन्या-

'भिन्नश्चागौरपोह्येत गोनिषेधात्मकश्च सः।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यत' इति।

सङ्केत इति। अगोव्यावृत्तोगोपदवाच्य इति वाक्याद्गोपदशक्तिर्ग्राह्या तद्वाक्यप्रवृत्तिश्च गोपदशक्तिग्रहाधीनेतियद्यन्योन्याश्रयः तदा गौर्गोपदवाच्येत्यत्रापि स स्यात्, यदि च प्रत्यक्षादिनोपस्थिते गोत्वविशिष्टे व्यवहारादयं गोपदवाच्य इत्यादिवाक्याद्वा सङ्केतग्रह इति नान्योन्याश्रयस्तदा तथैवोपस्थिते गवेतरापोढे तत एव स इति समाचारपरीहारौ। ज्ञानश्रिया ज्ञानधनेन ज्ञानातिरिक्तपदार्थानभ्युपगन्त्रा बाह्येनेत्यर्थः॥[१]

---

**स्फुरतु विध्यलीकमिति चेत्। न। व्याघातात्। किञ्चिदिति विध्यर्थो न किञ्चिदिति चाऽलीकार्थः। अतद्रूपपरावृत्तिमात्रेणालीकत्वे स्वलक्षणस्याऽप्यलीकत्वप्रसङ्गात्। रूपमात्रपरावृत्तौ तु कथं विधिर्नाम।**

शङ्क०टी०। तदत्र धर्मोत्तरस्य मतं शङ्कते। स्फुरत्विति। यदाह-'असत्यरूपमादर्शयन् विकल्पः कथं बाह्यसदृशमादर्शयेत् तयोरत्यन्तवैधर्म्या'दिति। विध्यलीकमिति हि कर्मधारयोऽत्र विवक्षितः तथा च विधित्वमलीकत्वं च नैकत्र सम्भवति, किञ्चित्त्वं हि विधित्वमकिञ्चित्त्वं ह्यलीकत्वमिति परिहरति। न व्याघातादिति ननु गोत्वमगोव्यावृत्तिरिति कृत्वाऽलीकमित्युच्यते। व्यवहारबलात्

(१) ज्ञानश्रियेत्याद्यारभ्य बाह्येनेत्यर्थ इत्यन्तः पाठः पुस्तकान्तरे नास्ति।

विधिरेवातोविध्यलीकत्वं न विरुद्धमित्यत आह। अतद्रूपेति। स्वलक्षणस्याप्यतद्रूपपरावृत्तिसम्बन्धादलीकत्वमेव प्रसज्यत इत्यर्थः। ननु स्वलक्षणेऽतद्रूपपरावृत्तित्वं गोत्वादिकं तु रूपमात्रपरावृत्तिरिति कथं स्वलक्षणस्यालीकत्वमित्यत आह। रूपमात्रेति। स्वलक्षणादेतावता भेदेपि पुनः पूर्वोक्त एव व्याघातः न ह्येकं निःस्वरूपं सस्वरूपं चेत्यर्थः॥

भगी॰ टी॰। ननु विधिरूपमलीकं विकल्पगोचरः। तथा च विधित्वेनाऽन्यानपेक्षनिरूपणतया नान्योन्याश्रयः अलीकत्वेन च व्यावृत्तिव्यवहारास्पदत्वमित्यन्यः शङ्कते। स्फुरत्विति। परमार्थतो विधिश्च तदलीकं चेति न सम्भवति विरुद्धरूपद्वयस्यैकत्राभावादिति परिहरति। व्याघातादिति। तदेव स्फुटयति। किञ्चिदिति। ननु स्वरूपविशेषव्यावृत्त्याऽलीकत्वं विधित्वेन व्यवहारविषयतया च विधित्वमिति तयोरविरोधः स्यादित्यत आह। अतद्रूपेति। स्वलक्षणेऽपि स्वरूपविशेषव्यावृत्तिमत्त्वादित्यर्थः। ननु तत्र न स्वरूपमात्रव्यावृत्तिः स्वतोऽपि स्वरूपत्वात्, गोत्वे तु स्वरूपमात्रव्यावृत्तिरिति वैषम्यमित्यत आह। रूपमात्रेति॥

रघु॰ टी॰। विध्यलीकमिति कोऽर्थः, किं विधिस्वरूपमलीकं किं विधित्वेनारोपितं किं वाऽगृहीतव्यक्तिभेदकमिति। आद्य आह। व्याघातादिति। - - रूपव्यावृत्त्या अनुगतस्य

विधेरलीकत्वमिति चेत् । किमतद्रूपव्यावृत्त्या रूपमात्रव्यावृत्त्या वा । आद्ये अतदिति । द्वितीये रूपमात्रेति ॥

---

**विध्वंशस्यारोपितत्वाद्यमेव दोष इति चेत् । न । स्वलक्षणविधेर्विकल्पासंस्पर्शात सामान्यविधेरनुपगमात् परिशेषादलीकविधौ विरोधस्यैव स्थितेः ।**

शङ्क० टी० । नन्वलीके विधित्वमारोपित स्फुरतीति विध्यलीकमिति ब्रूम इति कुतो विरोध इति शङ्कते । विध्वंशस्येति । अलीके स्वलक्षणस्य विधेराशङ्का न सम्भवति । आरोपो हि विकल्पस्तत्र च स्वलक्षणस्फुरणं त्वया नेष्यते । सामान्यं यद्गोत्वादि स एव विधिस्तत्रारोप्यत इत्यपि नास्ति । सामान्यविधेस्त्वयाऽनङ्गीकारात् । तथा चालीकमेव विधिरित्यायातं, तत्र च विरोध उक्त एवेति परिहरति । स्वलक्षणेति ॥

---

भगी० टी० । ननु परमार्थालीके विधित्वमारोपितमित्येव विध्यलीकमित्यस्याऽर्थ इत्याह । विध्वंशस्येति । आरोपितं तत्र तद्विधित्वम् तत्स्वलक्षणरूपं वा सामान्यरूपं वा । आद्ये स्वलक्षणविधेरिति । अन्ये सामान्येति । तथा च विधित्वस्यारोपाभावात् परमार्थतो विधिश्चालीकं चेति विवक्षितमेवं च व्याघात इत्यत आह । परिशेषादिति ॥

---

रघु० टी०। द्वितीयं शङ्कते। विध्यंशस्येति। स्वलक्षणरूपो विधिरारोप्यते सामान्यरूपो वा। आद्ये स्वलक्षणविधेरिति। तत्र मत इति शेषः। द्वितीये सामन्येति। न हि क्वचिदपि कश्चित्सामान्यरूपो विधिरुपेयते भवता य इहारोप्येत इति। तथा चारोपासम्भवादलीके भासमानं तदीयमेव विधित्वं वाच्यम्, तथा च विरोध एवेत्याह। परिशेषादिति॥

---

भेदाग्रहाद्विधिव्यवहारमात्रमिति चेत्। सम्भवेदप्येतत्[(१)] यदि स्वलक्षणमपि विधित्वमपहाय स्फुरेत् यदि चालीकमपि निषेधरूपतां परिहृत्य प्रकाशेत। न चैवम्। उभयोरपि निरंशतया प्रकारान्तरमुपादायाप्रथनात् अप्रथमानरूपासम्भवाच्च। काल्पनिकस्यांशांशिभावस्यात एव मूल एव निहितः कुठारः।

शङ्क० टी०। ननु स्वलक्षणविधेरारोपं न ब्रूमो येन विकल्पे तत्स्फुरणं स्यादपि तु तद्भेदाग्रहमात्रं ब्रूम इति शङ्कते। भेदाग्रहादिति। भेदाग्रहो विध्यलीकयोस्तदा भवेत् यदि विधिर्विधित्वेन न स्फुरेदलीकं वा तत्त्वेन। तथा च न सम्भवति द्वयोरपि तत्त्वेनैव स्फुरणात्। न हि शुक्तित्वेनैव भासमानायाः शुक्तेः

(१) भवेदेवमिति पाठः शङ्करमिश्रसम्मतः। सम्भवेदप्येवमिति पाठो भगीरथठक्कुरसम्मतः।

(२) काल्पनिकस्यापीति भगीरथठक्कुरसम्मतः पाठः।

रजतभेदाग्रहः सम्भवति व्यवहारोपयोगी चेति परिहरति । भवे-देवमिति । निरंशतया निर्धर्मकतया । प्रकारान्तरं स्वरूपातिरिक्तं प्रकारम् । ननु यः प्रकारो न भासते तेन भेदाग्रहः स्यादित्यत आह । अप्रथमानेति । तत्र प्रमाणाभावादिति भावः । एतच्च परमतेनोक्तम् । तेन विधौ रूपान्तरानभ्युपगमात् । अलीक-मात्रपरं वैतत् । ननु अलीकस्वलक्षणयोः पारमार्थिकधर्माभावेऽपि काल्पनिकं धर्ममादायारोप एव स्यात् । तथा च विधेर्विकल्पा-संस्पर्शेऽपि न दोष इत्यत आह । काल्पनिकस्येति । आरोपस्य हि मूलं भेदाग्रहः स तु निरस्तस्तदा काऽऽरोपसम्भावनेत्यर्थः । न च विशेषदर्शने सत्यप्याहार्य एवायमारोपः स्यादिति वाच्यम् । तस्य व्यवहारानङ्गत्वाद्व्यवहारार्थमेव हि स्फुरणं चिन्त्यत इति भावः ।

भगी० टी० । ननु माभूदारोपो विध्यलीकयोर्भेदाग्रहा-द्व्यवहारः स्यादित्यत आह । भेदाग्रहादिति । मात्रपदमारोप-व्यवच्छेदार्थम् । भेदाग्रहो वैधर्म्याग्रहः । तावन्मात्रं च न व्यवहाराङ्गमिति साधारणरूपग्रहोऽपि तद्धेतुर्वाच्यः न च विध्य-लीकयोः किञ्चित्साधारणं रूपमस्ति येन तयोर्भानं स्यात् । तथा च विधित्वालीकत्वाभ्यामेव तयोर्ज्ञाने कुतो भेदाग्रहा---
--भेदयोर्ग्रहादित्याह । सम्भवेदप्येवमिति । निरंशतया निर्धर्म-कतयेत्यर्थः । न च रूपान्तरेणापि भेदाग्रहः सम्भवतीत्याह । अप्रथमानेति । यद्यपि विधावप्रथमानमपि रूपं सम्भवति तथापि स्वलक्षणे यावन्तो धर्मास्तावतां स्वलक्षण-----यम इति

वेवचिन्निदमुक्तम्। यदाऽलौकिकस्याप्रथमानपारमार्थिकरूपाभ्युपगमे-लौकिकत्वव्याघात इत्यलौकिकमात्रपरमेवेदम्। ननु तयोर्निरंशतया पारमार्थिकाप्रथमानरूपासम्भवेपि काल्पनिकमसम्भेदमादाय तत्प्रथनं स्यादित्यत आह। काल्पनिकस्यापीति। अंशांशिकल्पनायामपि भेदाग्रहो मूलं स चोक्तरीत्या निरस्त एवेत्यर्थः। न च विशेष-दर्शने सत्येवाहार्यारोपरूपा कल्पना स्यादिति वाच्यम्। तथा सत्यप्रथमानत्वविरोधात् कल्पनाया एव तत्प्रथनत्वात् – – – – – – – दशायां च निरंशतातादवस्थ्यात्॥

---

रघु॰ टी॰। तृतीयं शङ्कते। भेदाग्रहादिति। अभेद-व्यवहारो हि व्यावर्तकेन रूपेणानुपस्थितयोरुपस्थितयोश्च साधारणेन भेदाग्रहाद्भवेत् न चेह तत्सम्भव इत्याह। सम्भवेदपीत्यादि। निषेधरूपतां विधिविलक्षणरूपताम्। उभयोरपि। भवतामिति शेषः। निरंशतया निर्धर्मकतया। प्रकारान्तरं साधारणं रूपम्। उपस्थितयोर्व्यावर्तकविधित्वनिषेधत्वाग्रहेणाभेदव्यवहार इत्यपि नास्ति स्वतो विलक्षणतदुभयातिरिक्तयोर्विधित्वनिषेधत्वयोर्भवता तत्रानभ्युपगमात् तत्र तयोर्निर्धर्मकत्वादित्याह। अप्रथमानेति। निर्धर्मकयोरपि तयोः काल्पनिकाभ्यामेव विधित्वनिषेधत्वाभ्यां सह काल्पनिको धर्मधर्मिभावो भविष्यतीत्याह। काल्पनिकस्येति। अंशांशिभावो धर्मधर्मिभावः। अत एव नित्यं विशेषदर्शन-ग्रस्तत्वादेव। मूले भेदाग्रहे। तदधीनत्वात् कल्पनायाः। अयथार्थस्यात्युपनीतस्य विधित्वस्य निषेधत्वस्य च विधौ निषेधे च

ग्राहको विकल्प एव विशेषदर्शनम् अतस्तदविरहदशायां भेदाग्रहो न विरुद्ध्यत इति चेन्न । तत्र विधेर्विकल्पासंस्पर्शात् असत्ख्याति-निरासात् गोत्वादौ प्रतीयमानस्य विधित्वस्य वास्तवत्वे बाधका-भावाच्चेति ॥

---

**साधारणं च रूपं विकल्पगोचरः न चालीकं तथा भवितुमर्हति। तस्य हि देशकालानुगमो न स्वाभाविकः[1] तुच्छत्वात्। न काल्पनिकः तस्याः क्षणि-कत्वात्। नारोपितः[2] अन्यत्राप्यप्रसिद्धेः।**

शङ्क० टी०। प्रकारान्तरेण विधिस्फुरणं साधयति। साधारणं चेति। अनुगतप्रत्ययोऽनुगतधर्माधीनो न चालीक-मनुगतमित्यर्थः। भाविकः स्वाभाविकः। तुच्छत्वात्। निःस्वभाव-त्वात्। ननु कल्पना संवृत्तिः सा स्वकीयमनुगमं गोत्वादावलीके ग्रहीष्यतीत्यत आह। न काल्पनिक इति। कल्पनाया अपि संवृत्तेर्देशतः कालतश्चाननुगमात् ज्ञानत्वेन तस्या अपि क्षणिक-त्वादित्यर्थः। ननु गोत्वादि यद्यप्यलीकमननुगतं च तथाप्यन्यत्र दृष्टं देशत्वानुगमं तत्रारोपयिष्यतीत्यत आह। नाप्यारोपित इति। तादृशस्य कस्यापि त्वयाऽनभ्युपगमादित्यर्थः॥

---

(१) भाविक इति शङ्करमिश्रभगीरथठक्कुरसम्मतः पाठः।

(२) नाप्यारोपित इति शङ्करमिश्रसम्मतः पाठः।

भगी० टी०। दूषणान्तरमाह। साधारणं चेति। नाना-देशकालानुगतमित्यर्थः। भाविकः पारमार्थिकः। तुच्छत्वात् निःस्वभावत्वात्। काल्पनिक इति। कल्पनाया नानादेश-कालानुगमः परम्परासम्बन्धेन विषये भासत इति कल्पनैवोपाधि-रिति विवक्षितं कल्पनाविषयीकृत इति वा। आद्ये तस्या इति। कल्पनैव चणिकत्वेनाननुगता कथं तदुपाधिकमनुगतत्व-मित्यर्थः। अन्त्ये नाऽऽरोपित इति। असत्ख्यातेस्तु निरासा-दिति भावः॥

रघु० टी०। प्रकारान्तरेण वास्तवविधिस्फुरणं साधयति। साधारणं चेति। साधारणं बहुतरदेशकालसम्बद्धम्। तस्य अलीकस्य। काल्पनिक इति कोऽर्थः? किं कल्पनोपाधिकः तथा च स्वधर्म एव बहुदेशकालसम्बद्धः कल्पनया गोत्वादौ गृह्यत इति? अथान्यदीय एवायं कल्पनाया विषय इति। आद्येऽपि सम्बन्धो विषयित्वं वृत्तिर्वा। नाद्यः गोत्वादि नानादेशकाल-विषयकमिति प्रतीत्यापत्तेः। अन्त्ये त्वाह। चणिकत्वादिति। बहुकालानवस्थायित्वादित्यर्थः। बहुकालावृत्तित्वाच्चेत्यपि द्रष्ट-व्यम्। द्वितीयं दूषयति। नारोपित इति। असत्ख्यातेस्तु निरासादिति भावः॥

---

**भेदाग्रहादेकत्वमात्रमनुसन्धीयत इति चेत्। न, भाविकस्य भेदस्याभावात्, भावे वा काल्पनिकत्वस्य**

व्याघातात्, परमार्थासतः परमार्थाभेदपर्यवसायित्वात् आरोपितस्याग्रहणानुपपत्तेः, अभेदारोपानवकाशाच्च, आरोपितासत्त्वस्य परमार्थसत्त्वप्रसङ्गात्, चतुःकोटि-निर्मुक्तस्य चातिप्रसञ्जकत्वात्, तदग्रहस्य चैलोक्येपि सुलभत्वात्। अन्यत्र पारमार्थिकभेदप्रतीतौ कथमभेद आरोप्यतामिति चेत्। एवं तर्हि यस्य प्रतिभासे यन्नारोप्यते नियमेन तस्यैवाप्रकाशे तदारोप्यम्, न तु तन्नामकमात्रस्य अतिप्रसञ्जकत्वात्। अत एव न व्यधिकरणस्यापि सतोऽसतो वा भेदस्याग्रहोऽभेदारोपोपयोगीति।

शङ्क॰ टी॰। ननु विकल्पविषयाणामलीकानां परस्परभेदो न गृह्यते एतावताऽनुगतप्रत्ययः स्यादिति शङ्कते। भेदेति। पारमार्थिकस्तावदलीकानां भेदो नास्ति यदग्रहः स्यादित्याह। भाविकस्येति। नन्वस्तु तेषां पारमार्थिको भेद इत्यत आह। भावे वेति। पारमार्थिकधर्माश्रयत्वेन विकल्पे विषयाणां पारमार्थिकत्वप्रसङ्गादित्यर्थः। ननु यथा रजते रजतभेदः परमार्थतोऽसन्नेव न गृह्यते तथा विकल्पविषयाणां पारमार्थिकोऽसन्नेव भेदः स्यादित्यत आह। परमार्थेति। यथा रजतस्य तत्र परमार्थाभेदः पर्यवस्यति तथा कल्पनाविषयाणामपि परमार्थाभेदः स्यात्। तथा च सिद्धं विकल्पविषयाणां देश-कालानुगमोपि विषयत्वं चेत्यर्थः। ननु विकल्पविषयेषु यो भेद

आरोपितः तस्याऽग्रहं ब्रूम इत्यत आह । आरोपितस्येति । आरोपस्याग्रहस्येति विरोध इत्यर्थः । ननु यस्य भेदस्यासत्त्वमारोप्यते तस्याग्रहः स्यादित्यत आह । आरोपितेति । असत्त्वं चेदारोपितं तदापि परमार्थसन्नेव भेदस्तत्र स्यात् तथा च पुनरलीकत्वप्रसङ्ग इत्यर्थः । कोटिः प्रकारः । त्रैलोक्येति । तथा च सर्वत्रैवानुगतप्रत्ययः स्यादिति भावः । ननु घटपटादावत्यन्तविलक्षणे भेदप्रतीतिरेवास्त्यतो न भेदाग्रहो न च तदधीनाऽनुगतप्रत्यय इति आह । अन्यत्रेति । पारमार्थिकभेदग्रहश्चेद्भेदारोपपरिपन्थी तदा पारमार्थिकभेदाग्रह एवाभेदारोपानुगुणः स्यादिति विकल्पविषयाणां पारमार्थिकभेदोऽभ्युपगन्तव्यो यदग्रहेणाभेदारोपः स्यादिति पारमार्थिकधर्मकतया[1] सिद्धं पारमार्थिकत्वं विकल्पविषयाणामित्यर्थः । तन्नामकेति । अव्यपदेश्यभेदस्येत्यर्थः । अत एवेति । अतिप्रसञ्जकत्वादेवेत्यर्थः । न हि यमजयोर्भेदो न गृह्यते एतावतैव शुक्तिरजतयोरभेद आरोप्यते । घटस्य वा स्वात्मप्रतियोगिकोऽसद्भेदो न गृह्यत एतावतैव शुक्तिरजतयोरभेद आरोप्यते इत्यर्थः ।

---

भगी० टी० । ननु विकल्पविषयाणामलीकानां भेदाग्रहादलीकत्वमात्रग्रह एवानुगतत्वभानमित्याह । भेदाग्रहादिति । अलीकानां भेदः पारमार्थिको वा पारमार्थिकासत्ताको वा आरोपितो वा आरोपितासत्ताको वा अलीको वा व्यधिकरणो

(१) धर्मवत्तया इति २ पु० पा० ।

वा। आद्ये भाविकस्येति। द्वितीये परमार्थेति। तृतीये आरोपितस्येति। आरोपितस्यैव तद्ग्रहत्वादित्यर्थः। चतुर्थे आरोपितासत्त्वस्येति। पञ्चमे चतुःकोटीति। उक्तचतुःकोटयतिरिक्ता-व्यपदेश्यभेदाग्रहादभेदारोपे त्रैलोक्येऽप्यभेदारोपः स्यादित्यर्थः। नन्वलीकभेदाग्रहस्य सर्वत्र सम्भवेऽपि यत्र घटपटादौ पारमार्थिक-भेदस्याग्रहस्तत्रैवाभेद आरोप्यतेऽतो यत्र तद्ग्रहस्तत्र नाभेदारोपः स्यादित्याह। अन्यत्रेति। तथा सति पारमार्थिकभेदस्यैवा-ग्रहोऽभेदारोपहेतुरित्यलीकभेदाग्रहेऽप्यभेदारोपो न स्यादित्याह। एवं तर्हीति। यदिति तादात्म्यम्। षष्ठं निराकरोति। अत एवेति। घटपटयोः पारमार्थिको भेदः शशशृङ्गकूर्मरोम्णोस्तु काल्पनिकोऽथोभेदः तदनयोरग्रहोऽपि नाभेदारोपहेतुः अन्य-भेदाग्रहादन्यत्रारोपेऽतिप्रसङ्गादेवेत्यर्थः॥

---

रघु० टी०। अननुगतानामेवालीकानां भेदाग्रहादभेदा-रोपेणानुगतव्यवहार इत्याह। भेदाग्रहादिति। अलीकानां भेदः पारमार्थिको वा परमार्थासत्ताको वा आरोपितो वा आरोपिता-सत्ताको वा अलीको वा व्यधिकरणो वा। आद्ये भाविकस्येति। भावे चेति। तद्गतभेदस्य पारमार्थिकत्वे तस्यापि पारमार्थिकत्वात् असतः सदाश्रयत्वानुपगमात्। द्वितीये परमार्थेति। तद्भेदस्य तत्रासत्त्वं यदि पारमार्थिकं तदा तत्र तदभेदोऽपि पारमार्थिको यथा स्वलक्षणे स्वभेदासत्त्वस्य पारमार्थिकत्वे स्वाभेदः पारमार्थिकः तथा च सिद्धं नः समीहितमिति। तृतीये आरोपितस्येति। आरो-

पितस्यैव तद्ग्रहरूपत्वात् भेदग्रहे चाभेदारोपानवकाशात् आरो-
पितभेदस्य पारमार्थिकाभेदपर्यवसायित्वात् आरोप्यारोपविषय-
पारमार्थिकत्वमन्तरेणारोपानुपपत्तेः । एतेन कालान्तरारोपितस्य
तदानीमग्रह इत्यपि प्रत्युक्तम् । चतुर्थे आरोपितासत्त्वस्येति ।
भेदस्य च पारमार्थिकत्वे प्रतियोग्यनुयोगिनोरपि पारमार्थिक-
त्वात्तयालीकत्वमिति । पञ्चमे चतुःकोटीति । कोटिः प्रकारः ।
अलीकभेदाग्रहस्याभेदारोपहेतुत्वे तस्य सार्वत्रिकतया सर्वत्रैवा-
भेदारोपः स्यादित्यर्थः । अलीकभेदाग्रहस्य सत्त्वेपि पारमार्थिक-
भेदग्रहेण प्रतिबन्धान्नाभेदारोप इत्याशङ्कते । अन्यत्रेति । तर्हि
पारमार्थिकभेदग्रहस्य प्रतिबन्धकताया आवश्यकत्वे अलीकभेदाग्रहस्य
तथात्वे मानाभाव इत्याह । एवमिति । कथं तर्हि रजत एव
रजतभेदग्रहे न रजताभेदप्रत्यय इति चेत रङ्गादौ सतः पार-
मार्थिकस्य रजतभेदस्यारोपेण प्रतिबन्धादिति प्रतीहि । कूर्म-
रोमवाजिविषाणयोः कथं नाभेदप्रत्यय इति चेत् परमार्थसतोरेव
रोमविषाणयोरारोपितकूर्मवाजिसम्बन्धयोः पारमार्थिकभेदग्रहेण
प्रतिबन्धादिति गृहाण । एवं शशशृङ्गवाजिविषाणयोरप्यनुसन्धेयम्
असत्ख्यातौ साधकाभावस्योक्तत्वात् । षष्ठे असत एवेति । असत इति ।
परेषामसद्द्वयभेदस्यासत्त्वात् । व्यधिकरणस्य यस्य कस्यचिद्भेदस्या-
ऽग्रहो यद्यभेदग्रहे हेतुः तदा तस्य सार्वत्रिकत्वात् गृह्यमाणभेदा-
नामप्यभेदप्रत्ययप्रसङ्गः । अथ निखिलानामेव तेषामग्रहस्तथा
तर्हि ययोः कयोश्चिदपि भेदग्रहे काप्यभेदप्रत्ययो न स्यादिति ॥

नापि न्यायादन्यापोहसिद्धिः तदभावात्। यद्-भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठं यथाऽमूर्तत्वम्, यच्चात्यन्तविलक्षणानां सालक्षण्यव्यवहारहेतुस्तदन्य-व्यावृत्तिरूपम् इति न्यायौ स्त इति चेत्। न। कालात्ययापदेशात्। न हि प्रथमानस्य निष्ठा न्याय-साध्या नाम, प्रथनशरीरं तु चिन्तितमेवेति निष्फलः प्रयासः। यदा चानलीक एव ध्रुवं न्यायस्यानुभवाभासः तदा कैव कथाऽलीके। न हि तस्याप्रतीयमानमपि किञ्चिदस्ति यन्न्यायेन साध्यमित्युक्तम्।

शङ्क० टी०। गोत्वादीनामन्यव्यावृत्तिरूपत्वे प्रमाणं शङ्कते। यदिति। भावाभावसाधारण्यमस्तिनास्तिप्रत्ययविषयत्वं आश्रय-नाशानाशयोरप्यनाशित्वं वा। अन्यव्यावृत्तिर्निष्ठा स्वरूपं यस्येत्यर्थः। तथा च गोत्वमन्यव्यावृत्तिस्वरूपं भावाभावसाधारणत्वात् अत्यन्त-विलक्षणानां शबलधवलादीनां सालक्षण्यव्यवहारहेतुत्वाद्वा। सालक्षण्यं समानलक्षणत्वं सादृश्यं वा। अत्रोभयत्र बाधमाह। नेति। प्रत्यक्षतो विधेः स्फुरणस्य व्यवस्थापितत्वादिति भावः। एतदेवाह। न हीति। यदेति। अनीष्ण्यसाधकमपि न्यायमौष्ण्यग्राहि प्रत्यक्षं बाधते चेत्तदा अलीकसाधकं सुतरां तद्विरोधि प्रत्यक्षं बाधिष्यत इत्यर्थः। ननु प्रत्यक्षमपि स्वविषये न्यायं बाधतां, विषयान्तरे न्यायः प्रवर्त्तिष्यत एवालीकेपीत्यत आह। न हीति॥

---

भगी० टी०। भावाभावासाधारण्यमाश्रयनाशानाशयोर-विनाशित्वमित्यर्थः। निष्ठा रूपम्। यत्रेति। मिथो व्यावृत्तानामनुगतव्यवहारहेतुत्वमित्यर्थः। उभयत्राप्यसत्त्वं दृष्टान्तः। बाधं स्पष्टयति। न हीति। यद्धि यद्रूपेण प्रथते तस्य सैव निष्ठा। प्रथनं च विधित्वेनैवेति ताद्रूप्यमेव तस्येति निषेधरूपतासाधनं धर्मिग्राहकमानबाधितमित्यर्थः। यदि च निषेधरूपतयैव प्रथनं तदा तत एव ताद्रूप्यसिद्धौ व्यर्थमनुमानमिति भावः। अनलीक-स्यैकेन रूपेण प्रथनेऽपि रूपान्तरेणाऽप्रथनं सम्भवेत्। अलीके तु तदपि नास्ति तत् किं न्यायेन साध्यमित्याह। यदा चेति॥

रघु० टी०। व्यावृत्तिनिष्ठमिति। निष्ठा स्वरूपम्। इति अनेन प्रकारेण। तेनानुरूपोपनयलाभः। कालात्ययाप-देशात् धर्मिग्राहकप्रत्यक्षेण विधित्वेनैवोल्लेखात्। अनेकरूप-शालिनोऽपि विधेः सम्भवदप्यगृह्यमाणं रूपं यदानुभवबाधान्न सिद्ध्यति तदा कथमसम्भवदप्यगृह्यमाणरूपस्यालीकस्यागृह्यमाण-मनुभवबाधितं रूपं सेत्स्यतीत्याह। यदा चेति॥

किञ्चेदं भावाभावसाधारण्यं न तावदुभयरूपत्वं विरोधात्। न तद्धर्मत्वमनभ्युपगमात्। न हि गोत्वमभावस्यापि धर्म इत्यभ्युपगम्यते। न तद्धर्मित्वम-नैकान्तात्। व्यक्तिरपि भावाभावधर्मशालिनी न निषेधैकरूपेति। न तदुभयसादृश्यमसम्भवात्।

अतन्निवृत्त्यैव तथात्वे साध्याविशेषात्। नाप्यस्ति-नास्तिसामानाधिकरण्यं विरोधात् अन्यथासिद्धेश्च। न हि यदस्ति तदेव नास्तीतिप्रत्ययगोचरः स्यात्। प्रकारान्तरमाश्रित्य स्यादेवेति चेत्। एवं तर्हि तमेव प्रकारभेदमुपादाय विधिव्यवस्थायां को विरोधो येन प्रतिबन्धः सिद्ध्येत्। तस्य विधिरूपतायामस्ति नाम (१)किमधिकमुपनेयमिति चेत्। निषेधरूपत्वेपि नास्ति नाम कि(२)मधिकमुपनेयमिति समानम्। अत एव साधारण्यमिति चेत्। तथापि किं तदुभयात्मकत्व-मुभयपरीहारो वेत्यशक्यमेतत्।

शङ्क॰ टी॰। किं च न्यायोपि विचारं न सहत इत्याह। किं चेति। विरोधादिति। न हि य एव भावः स एवाभाव इति भवतीत्यर्थः। न हि गोत्वादेर्भावाभावोभयधर्मत्वमस्मा-भिरभ्युपगम्यत इत्याह। न तदिति। ननु गोत्वे जातित्वं वर्त्तते वर्त्तते च गुणाद्यत्यन्ताभाव इत्युभयधर्मित्वमेव भावाभावसाधारण्यं स्यादित्यत आह। न तद्धर्मित्वमिति। अनैकान्तिकत्वमाह। व्यभिचारपीति। ननु व्यक्तेरपि स्वाभावनिषेधात्मकत्वमस्त्येवेत्यत आह। निषेधेनेति। विधित्वस्यापि तत्र सत्त्वादित्यर्थः। असम्भवादिति। भावाभावयोर्हि सादृश्यं तदुभयवृत्तितायां

(१) अस्तिना किमिति रघुनाथशिरोमणिसम्मतः पाठः।

(२) नास्तिना किमिति रघुनाथशिरोमणिसम्मतः पाठः।

गोत्वादेर्भवेत् । न चैतत्सम्भवतीत्यर्थः । ननु भावे चाभावे चातद्व्यावृत्तिरस्त्येवेति तत्स्वरूपं गोत्वं कथं तदुभयसादृश्यं न भवेदित्यत आह । अतद्व्यावृत्त्यैवेति । गोत्वादेरतद्व्यावृत्तिरूपतायां सिद्धायां तथा स्यात्तद्रूपता च न सिद्धेत्यर्थः । केचित्तु भावाभावाभ्यां गोत्वादेः सादृश्यमिति शङ्कार्थमाहुः । गोत्वे च न भावत्वं नाप्यभावत्वमिति परिहारार्थं बाधितवन्तः । तच्चिन्त्यम् । अस्तिनास्तिसामानाधिकरण्यमिति । अस्तिनास्तिप्रत्ययविषयत्वमित्यर्थः । तदुभयपदवाच्यत्वं वा । विरोधमेव विवृणोति । न हीति । एकस्य विधिनिषेधप्रत्ययाविषयत्वादित्यर्थः । अन्यथासिद्धिं विवरीतुमाशङ्कते । प्रकारान्तरमिति । आश्रयनाशानाशप्रयुक्तमस्तिनास्तिसामानाधिकरण्यमित्यर्थः । तर्हि तदघटितं विधेरपि गोत्वस्यास्तिनास्तिसामानाधिकरण्यं नान्यव्यावृत्तिरूपतासाधनायामन्यथासिद्धि-(१) रित्याह । तर्हीति । प्रतिबन्ध इति । यद्भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठमिति प्रतिबन्ध इत्यर्थः । तस्येति । सामान्यस्य गोत्वादेः तथा च गौरेतावतैवास्तित्वे लब्धेऽस्तीति पुनरुक्तमित्यर्थः । नास्तीति विरुद्धमित्यपि द्रष्टव्यम् । निषेधेति । नास्तीति पुनरुक्तं अस्तीति विरुद्धमिति समानमित्यर्थः । अत एवेति । अस्मादेव विरोधपौनरुक्त्यभयादित्यर्थः । उभयात्मकत्वं भावाभावात्मकत्वं उभयपरीहारो न भावत्वं नाप्यभावत्वम् । अशक्यमिति । परस्परविरोधे हि न प्रकारान्तरस्थितिरित्यर्थः ॥

---

(१) सिद्धेः—पा० २ पु० ।

भगी० टी०। उभयेति। भावाभावरूपत्वमित्यर्थः। तद्धर्मत्वं भावाभावधर्मत्वम्। तद्धर्मित्वं भावाभावरूपधर्मशालित्वमित्यर्थः। असम्भवादिति। गोत्वस्य भावाभावाभ्यां न सादृश्यमस्ति। न हि भावत्वाभावत्वे सादृश्यं गोत्वे द्वयस्याप्यवृत्तेः। नाप्यतन्निवृत्त्या-श्रयत्वमेव तत् व्यक्तावनैकान्त्यादित्युक्तत्वादित्यर्थः। ननु चातन्नि-वृत्तित्वमात्रेण तदुभयसादृश्यं स्यादित्यत आह। अतन्निवृत्त्येति। गोत्वस्यातन्निवृत्तिरूपत्वस्यैव साध्यत्वादित्यर्थः। सामानाधिकरण्य-मस्तिनास्तिधीविषयत्वं तत्पदवाच्यत्वं वेत्यर्थः। तद्यद्येकरूपेण विवक्षितं तत्राह। विरोधादिति। अथ रूपान्तरेण तत्। तत्राह। अन्ययेति। अन्यथासिद्धिं स्फुटयितुमाह। प्रकारान्तरमिति। अस्तिनास्तिसामानाधिकरण्यानुपपत्त्या तस्य भावाभावरूपत्वमित्येव भावाभावसामानाधिकरण्यमस्त्वित्यर्थः। अशक्यमिति। उभय-त्रापि व्याघातादित्यर्थः॥

---

रघु० टी०। उभयेति। भावाभावावुभयम्। निषेधेकेति। स्वाभावनिषेधरूपत्वेपि स्वतो विधित्वात्। सादृश्यम् सादृश्य-रूपत्वम्। असम्भवात्। अभावावृत्तित्वेन तथात्वासम्भवात् उभयवृत्तेरेव धर्मस्य सादृश्यत्वात्। भवेदेवं यदि गोत्वं भावो भवेत्, न त्वेवम्, किन्तु गवान्यात्मकमहिषादिव्यावृत्तिः, सा च निरात्मके अभावे गवात्मनि वर्त्तत इत्यत आह। अतदिति। निवृत्त्या निवृत्ति-रूपत्वेन। साध्याविशेषात्। निवृत्तिरूपत्वस्यैव साध्यत्वात्। केचित्तु गोत्वस्य भावाभावसादृश्यं न भावत्वाभावत्वम्, असम्भवात्। नाप्यन्य-

व्यावृत्तिमत्त्वं व्यक्तावनेकान्तात्, नाप्यन्यव्यावृत्तिरूपत्वम्, भावे अभावात्। यदि चाभावमात्रमादृश्यमन्यव्यावृत्तिरूपत्वं हेतूकुर्यात्तत्राह। साध्याविशेषादितीत्यादः। अस्तिनास्तिसामानाधिकरण्यम्, तादृशस्य विकल्पस्य व्यपदेशस्य वा विषयत्वम्, स्वलक्षणं तु न विकल्पस्य न वा व्यपदेशस्य विषयः, धर्मधर्मिणोश्चाभेदो नातो व्यभिचार इति भावः। तदेकेन रूपेण विवक्षितं रूपान्तरेण वा। आद्ये विरोधादिति। द्वितीये अन्यथेति। विरोधं विवृणोति। न हीति। न हि यद्येन रूपेणास्तीतिविकल्पव्यपदेशयोर्विषयः तेनैव रूपेण नास्तीति विकल्पव्यपदेशयोरपीत्यर्थः। प्रत्ययः प्रतीतिर्व्यपदेशश्च प्रतीयतेऽनेनेति व्युत्पत्त्या। विधिरूपत्वे बाधकं शङ्कते। तस्येति। अस्तिना विधित्वबोधकेन। उपनेयम् विधेयम्। तथा चास्तीति नरूकम् विधित्वशून्यत्वबोधकं च नास्तीति विरुद्धमित्यपि द्रष्टव्यम्। निषेधत्वम् विधित्व शून्यत्वम्। अपनेयम् निषेध्यम। अत्रास्तीति विरुद्धमित्यपि द्रष्टव्यम्। अत एव पौनरुक्त्यविरोधाभ्यामेव। भावाभावबोधकास्तिनास्तिव्यपदेशयोर्योग्यत्वमेव भावाभावसाधारण्यमभावत्व साधकम्, एकैकव्यपदेशायोग्यत्वेनैकैकान्यात्मकत्वं एकैकात्मकत्व विरहो वा सिद्ध्यत्, अर्थाद्भावाभावात्मकत्वे भावाभावात्मकत्वविरहे वा पर्यवस्येत्, तच्च विरोधान्न सम्भवतीत्याह। तथापीति॥

तस्मादस्तिनास्तिभ्यामुपाध्यन्तरोपसम्प्राप्तिः प्राप्तोपाधिनियमो वेति सार्थकत्वं तयोः। तदेतद्द्विधावपि

तुल्यम् । शान्ताशेषविशेषत्वादलीकपक्षे क्वोपाध्यन्तर-विधिस्तन्नियमो* वेति विशेषदोषः। ततो गोशब्दो गोत्वविशिष्टव्यक्तिमात्राभिधायी पर्यवसितः, तास्तु विप्रकीर्णदेशकालतया नार्थक्रियार्थिप्रार्थनामनुभवितुमीशत इति प्रतिपत्ता विशेषाकाङ्क्षः। सा च तस्याकाङ्क्षाऽस्ति गोष्ठे कालाक्षी धेनुर्घटोध्नी महाघण्टा नन्दिनीत्यादिभिर्नियामकैर्विधायकैर्वा निवार्यत(१) इति विधौ न कश्चिद्दोषः। गोत्वविशिष्टसदसद्व्यक्तिमात्रप्रतीतेस्तद्देवास्त्यादिपदप्रयोगवैफल्यमिति चेत् ताव-न्मात्रप्रतिपत्त्यर्थमेव तत्। अनेकप्रतिपत्त्यर्थन्तु तदुपयोगः तस्य प्रागप्रतीतेरित्युक्तम्।

शङ्क० टी०। निषेधरूपत्वेऽस्तिनास्तिसामानाधिकरण्येन विरोधपौनरुक्त्ये यथा त्वया समाधेये तथा विधिरूपत्वे मयापीत्युपसंहारव्याजेनाह। तस्मादिति। उपाध्यन्तरोपशङ्कान्तिमग्रे स्वयमेव स्फुटयिष्यति। त्वत्पक्षे नैतदपि सम्भवतीत्याह। शान्तेति। अलीकस्य केनाप्युपाधिना वैशिष्ट्यमेव न सम्भवतीति न विधिः(२)। स्वपक्षेऽस्तिनास्तिसामानाधिकरण्यं समर्थयति। तत इति। तास्तु व्यक्तयः। अर्थक्रियार्थी गोकार्यदानदोहनाद्यर्थी। तत्प्रार्थनां तदुपादित्साम्। अनुभवितुं प्राप्तुम्, भू प्राप्ताविति धात्वनुसारात्। तदयमर्थः। गां दद्यात् गां धुक्ष्व गां बधानेति देशितः सर्वासां

* तन्निषेध इति पु० पा०।

(१) निवर्तत इति शङ्करमिश्रसम्मतः पाठः। (२) सम्भवतीत्यर्थः पु० पा०।

गवां दानादेरशक्यतया तावदुपादित्सैव नोत्पद्यते, दूरे तु प्रवृत्तिः, यदा तु विशेषमधिगच्छति विशेषोपादानमहिम्ना तदा प्रवर्त्तते, स च विशेषो यत्राप्राप्त एव बोध्यते तदा विधायकैः सः, यदा तु सामान्यतो देशादीनां प्राप्तानामेव विशेषो बोध्यते तदा नियामकैः वाकारस्तु व्यवस्थितविकल्पार्थः । सा चाकाङ्क्षा निवर्त्तत इत्यग्रेतनेनान्वयः । एवं च गौरस्तीति तत्कालीनध्वंसाप्रतियोगित्वं बोध्यते । नास्तीति तत्कालीनध्वंसप्रतियोगित्वं तदाश्रयस्य बोध्यते । आत्मास्तीत्यात्मनो वर्तमानकालसम्बन्धो बोध्यते, नात्मास्तीत्यनाश्रितत्व[1]मात्मनोबोध्यते, गोष्ठे गौरस्तीति देशो नियम्यत इत्याद्यूह्यम् । ननु गोपदात्सदसद्व्यक्तिमात्रं प्रतीतमेव चेत् तदास्त्यादिपदवैयर्थ्यं तदवश्यमेवेत्याह । गोत्वेति । तावन्मात्रेति । अस्त्यादिपदानामपि यदि गोत्वविशिष्टपिण्डप्रतिपत्तिमात्रं फलं तदा भवत्येव पौनरुक्त्यं एतदेव तु नास्तीत्यर्थः ।

भगी० टी० । ननु गोत्वस्य विधिरूपत्व तत एवास्त्यर्थसिद्धेरस्तिपदपौनरुक्त्यं नास्तीत्यनेन विरोधश्च स्यात्, एवं निषेधरूपत्वेपि नास्तीत्यनेन पुनरुक्तमस्तीत्यनेन विरोधश्च स्यादित्यत आह । उपाध्यन्तरेति । उपाध्यन्तरम् धर्मान्तरम् । गोपदाद्विधिरूपगोत्वविशिष्टज्ञानेपि वर्तमानत्वमस्तिपदेनोपनीयते । न हि भावत्वमेव वर्तमानत्वम्, अतीतादेरपि भावत्वात् । गोत्वमस्तीत्यत्र नित्यत्वादेव तल्लाभ प्रामाणिकत्वं तेनोपनीय । सामान्यतस्तु

(१) नास्त्यात्मेत्यत्रानाश्रितत्वं—पा० २ पु० ।

देशादिसम्बन्धे प्राप्तेऽस्ति गोष्ठे कालाक्षी धेनुरित्यादिना देश-विशेषादिबोधनमन्यदेशादिनिषेधश्च बोध्यत इत्यर्थः। निषेधा-त्मकत्वे बाधकमाह। शान्तेति। विधिपक्षे धर्मान्तरप्राप्ति-नियमौ स्फुटयति। तत इति। सा चाकाङ्क्षा निवार्यत इत्यन्वयः। गोष्ठत्वादिना तद्देशाद्यप्राप्तौ विधायकैः तत्प्राप्तौ तु नियामकैरिति व्यवस्थितविकल्पः। ननु धर्मधर्मिणोरभेदाद्भेदेपि व्यक्त्या तमादाय पौनरुक्त्यमेवाह। गोत्वेति। धर्मधर्मिणोर्भेदा-द्धर्मस्य च निराश्रयस्य बोधयितुमशक्यत्वादसतोपि पौनरुक्त्यं नेत्याह। तस्य प्रागिति॥

रघु॰ टी॰। तत्किमस्तिनास्तिव्यपदेशावनुपपन्नावेवेत्यत आह। तस्मादिति। उपाध्यन्तरम् देशकालविशेषसत्त्वासत्त्वरूपम्। तस्या-प्राप्तौ प्रापणं प्राप्तौ तु नियमनमिति। शान्ताशेषविशेषत्वात् निःस्वरूपत्वात्। प्रतिपत्ता गोपदजन्यगोज्ञानवान्। विशेषाकाङ्क्षः गौरितिवाक्यश्रवणानन्तरं अस्त्यादिविशेषाकाङ्क्षः, गौरितिवाक्य-श्रवणानन्तरं अस्त्यादिविशेषमाकाङ्क्षत इत्यर्थः। अस्तित्वादिकं न धर्म्यतिरिक्तं, धर्मधर्मिणोरभेदादित्याशयवानाशङ्कते। गोत्वेति। धर्मधर्मिणोर्भेद एवेत्याशयेनोत्तरयति। तावन्मात्रेत्यादि। अथ भावाभावसाधारण्यं आश्रयस्य सत्त्व इव विनाश्यविनाशित्वम्, तदन्यथासिद्धं, नित्यत्वात्कार्यस्यैवाश्रयनाशनाश्यत्वात्॥

**यत्तु निपुणम्मन्या विकल्पमेव पश्यति स्म, यज्ज्ञानं यद्भावाभावसाधारणप्रतिभासं न तेन तस्य विषयत्वम्,**

## यथा गोज्ञानस्याश्वेनेत्यादि । तद्यदि गोविकल्पस्याश्व-विषयत्वमेव तद्भावाभावसाधारण्यं गव्यपि बाह्ये तथा, ततः साध्याविशिष्टत्वम् ।

शङ्क० टी०। गोत्वमन्यव्यावृत्तिरूपमच विधिरूपतया प्रतीयमानस्य गोत्वस्य पक्षीकरणे बाध एव, अन्यस्य तु गोत्वस्याप्रतीततयाऽऽश्रयासिद्धिरिति तदुभयदोषं परिजिहीर्षुर्ज्ञानश्रीर्विकल्पमेव पक्षयति स्म, तदेतस्य नैपुण्यं विकल्पोविषयेण निरूपणीयः स च विधिरूपतयैव भासत इति, तत्रापि बाधापरीहार इति निपुणंमन्यता । यज्ज्ञानमिति । (गोज्ञानं गोविषय गोभावाभावसाधारणत्वात्, अश्वज्ञानवदिति सानार्थः । यद्वा अयं गौरिति विकल्पो न गोविषयकः, तद्भावाभावसाधारणत्वात्, गां बधानेति गोविकल्पवदिति सानार्थः । यथा गोज्ञानस्याश्वेन विषयेणाविषयित्वमिति वदता अश्वज्ञानस्यापि गवा विषयेणा विषयित्वमिति ध्वनितम् । तथाचाश्वज्ञानमेव दृष्टान्तः । अन्यथोपसंहाराभावात् । गोभावाभावसाधारणत्वं यदि गवाविषयत्वमेव, तदा साध्याविशिष्टत्वमित्याह । तद्यदीति । गोज्ञानस्याश्वेन विषयेणाविषयित्वमश्वाविषयत्वेनैव त्वया वाच्यमिति भावः । गव्यपीति । गोविकल्पस्य ग त्वलक्षणभावाभावसाधारण्यं तदविषयत्वमेव । तथा च साध्याविशिष्टमित्यर्थः[१] ।) यो विकल्पो यद्भावाभावसाधारणः स तेन विषयेण विषयी, यथा गोविकल्पोऽश्वभावाभावसाधारण-

(१) कुण्डलीस्थः पाठो नास्ति ३ पु० ।

त्वाश्रयेन विषयेण विषयी, तथा च गोत्वलक्षणं न गोविकल्पविषयो न वा गोत्वं विधिरूपं तद्विषय इति । अत्र तद्भावाभावसाधारणत्वं यत्तद्विषयत्वे हेतूक्तं तद्विकल्प्य दूषयति । तदा हीति । गोविकल्पस्याश्वभावाभावसाधारणत्वमश्वाविषयत्वमेवं गोत्वलक्षणभावाभावसाधारणत्वमपि गोत्वलक्षणाविषयत्वमेव वाच्यं । तथा च साध्याविशिष्टत्वं(१) तद्विषयत्वेनैव तद्विषयत्वसाधनादित्यर्थः । एवं गोत्वेपि विधिरूपे वाच्यम् ॥

---

भगी० टी० । यस्त्विति । गोविकल्पो बाह्यस्य गोर्भावेऽभावे च तुल्यप्रतिभास इत्युभयसिद्धम्, अतो यथाऽश्वभावाभावयोस्तुल्यप्रतिभासो गोविकल्पो नाश्वविषयस्तथा बाह्यगोरूपविषयोपि नेत्यर्थः । विकल्पपक्षीकरणे नाश्रयासिद्धिर्नवा विध्यविषयकत्वस्य साध्यस्य बाध इति नैपुणम्, तस्य विषयनिरूप्यतया विषयविधित्वग्रहे कस्मान्न बाध इति तन्मन्यता । यदि तदविषयत्वमेव तद्भावाभावसाधारण्यं तत्राह । तदेति । गत्यपीति । गत्यपि बाह्ये वस्तुभूते गोविकल्पस्य तथात्वमविषयत्वमिति साध्यावैशिष्ट्यम्, गवाविषयत्वमेव गोविकल्पस्य भावाभावसाधारण्यं यत इत्यर्थः ॥

---

रघु० टी० । यस्त्विति । गोत्वं व्यावृत्तिरूपं विधिरूपं वा न पक्षः, आद्ये सिद्धसाधनं, अन्त्ये आश्रयासिद्धिः, सिद्धौ बाध इति दोषं परिजिहीर्षुर्निपुणम्मन्यो न तु निपुणः । गोविकल्प

(१) वैशिष्ट्यं—पा०

इत्यत्रापि गौरनुपाख्यः स्वलक्षणो वा विषयतया पक्षतावच्छेदकः, आद्ये अस्माकमाश्रयासिद्धिरसत्ख्यातिविरहात्, द्वितीये च भवतां स्वलक्षणस्य विकल्पागोचरत्वात्, गोचरत्वे वा बाधः, गौर्गौरित्यनुगतव्यवहारहेतुत्वेन पक्षत्वमिति यदि तदा तादृशव्यवहारविषयत्वादिना तदिति समानत्वात् । इत्यादौत्यादिपदेन गोलक्षणभावाभावसाधारणप्रतिभासस्य गोविकल्प इत्यस्य सङ्ग्रहः । तद्भावाभावसाधारण्यं हि तस्य सत्त्व इवासत्त्वेपि जायमानत्वं, तदस्तित्वनास्तित्वयोर्यादृशत्वं तद्ग्राहकत्वमिति वा तदस्तित्वनास्तित्वाकाङ्क्षोत्थापकत्वं वा तद्विरहो वा तदस्तित्वनास्तित्वाग्राहकत्वं वा नाद्यः । विकल्पस्य विषयाजन्यस्य विनापि विषयमुपपत्तेः, अजनकस्यापि विषयत्वाविरोधात्, कथमन्यथा तवालीकं स्वाकारो वा विकल्पविषयः । द्वितीये त्वाह । तद्यदीति । बाह्ये स्वाकारातिरिक्ते वस्तुनि ॥

अथास्त्यादिविशेषाकाङ्क्षा, तदाऽसाधारण्यम् । न ह्यदाहृतो गोविकल्पोऽस्त्यास्त्यादिविशेषमाकाङ्क्षति । नियमविधौ तु विरोध एव । न ह्यतद्विषयस्य तद्विशेषनियमाकाङ्क्षा नाम, गोज्ञानस्यापि विशेषनियमाकाङ्क्षाप्रसङ्गात् ।

प्रका॰ टी॰ । ननु यो विकल्पो यत्रास्त्यादिविशेषाकाङ्क्षामुत्थापयति स तेन विषयेण विषयी न भवतीति व्याप्तिर्विव-

न्वितेत्यत आह। अथास्यादीति। गोविकल्पस्याश्वगोचराकाङ्क्षो-त्थापकत्वेनाश्वाविषयत्वं यथा तथा गोगोचराकाङ्क्षोत्थापकत्वेन गवाविषयत्वं साध्यं तत्र गोविकल्पस्याश्वगोचराकाङ्क्षोत्थापकत्वमेव नास्ति येनाश्वाविषयत्वं प्रसाध्य तद्दृष्टान्तेन गवाविषयत्वं सेत्स्यतीत्यर्थः। एतदेवाह। न हीति। दृष्टान्त एवायमनुपपन्नः, साधनविकलत्वपर्यवसायित्वात् सामान्यतस्तदाकांक्षोत्थापकत्वस्य साधनस्येन ततो व्यावृत्तेरत एवास्यासाधारण्यमित्यर्थः[१]। ननु तद्धर्मनियामकत्वं तदविषयत्वे हेतूकर्त्तव्यमित्यत आह। नियमेति। गेहे गोष्ठे वा गौरिति तद्धर्मनियामकत्वं तद्विषयतया व्याप्तमतो विरोधात्तदविषयतां न साधयतीत्यर्थः। विरोधमेव स्फुटयति। न हीति। ननु कथमयं विरोध इत्यत आह। गोज्ञानस्येति। अश्वाविषयत्वेनैवोभयसिद्धत्वेनेत्यर्थः[२]॥

---

भगी॰ टी॰। अर्थेति। तत्र भावाभावाकाङ्क्षोत्थापकत्वमेव हेतुरित्यर्थः। असाधारण्यम् सपक्षादपि व्यावृत्तिरित्यर्थः। तदेव स्फोरयति। न हीति। भागासिद्धिरपि मन्तव्या, सर्वस्य गोविकल्पस्यास्त्याद्याकाङ्क्षानुत्थापकत्वात्। ननु स्ववाचकपदोपसन्धाने स्वविशेषनियमविधिगोचरत्वं हेत्वर्थः, यथा ह्यभावस्य विशेषा देशकालकृता नास्तीतिपदोपसन्धाने नियम्यन्ते, तथास्तीतिपदोपसन्धाने सद्भावविशेषा इत्यत आह। नियमेति॥

(१) इति भावः—पा०। (२) सिद्धस्येत्यर्थः—पा०।

# LIST OF WORKS ON BUDDHISM

PUBLISHED IN

# THE BIBLIOTHECA INDICA.

---

### Work No. 110.

[Completed.]

1. AṢṬASAHASRIKA-PRAJÑAPARAMITĀ. Ed. R. L. Mitra. 1887–1888. 6 fascicles. Only fascs II–VI available @ Re. 0-12-0 per fasc.

*Fascicles not all available.*

### Work No. 170.

[In Progress.]

2. ATMA-TATTVA-VIVEKA, or Bauddhādhikāra, by Udayanacārya. Ed. M.M. Vindhyeśvari Prasada Dvivedin. 1907—. 4 fascicles, @ Re. 0-12-0 per fasc. Rs. 3-0-0.

*All fascicles available.*

### Work No. 124.

[Completed.]

3. AVADANA-KALPALATĀ, by Kṣemendra: Sanskrit and Tibetan versions. Ed. Sarat Candra Das, H. M. Vidyābhūṣaṇa and Satis Candra Vidyabhūṣaṇa. 2 vols. 1889–1917. 24 fascicles. Vol. I, fasc. II, out of stock; the rest available @ Re. 1-0-0 per fasc.

*Fascicles not all available.*

### Work No. 166.

[Vol. I completed; series discontinued.]

4. BAUDDHA-STOTRA-SAMGRAHA: Sragdhara-stotra by Bhikṣu Sarvajña Mitra, with Jinarakṣita's Commentary and two Tibetan versions of the text. Ed. M.M. Satis Candra Vidyābhūṣaṇa 1908. Vol I. 1 fascicle, @ Rs. 3-0-0.

*Available.*

### Work No. 150.

[In Progress.]

5. BODHICARYAVATĀRA-PAÑJIKĀ. by Prajñakara-mati. Ed. Louis de la Vallée Poussin. 1901–1914. Sanskrit text completed. 7 fascicles. @ Re. 0-12-0 per fasc. Rs 5-4-0.

*The work has to be completed by Appendices, giving the Tibetan equivalents of the lacunæ in the Sanskrit text, and by an Introduction, etc.*

### Work No. 15.

[Completed.]

6. LALITAVISTARA. Text. Ed. R. L. Mitra. 1853–1877 6 fascicles. Only fasc. VI available @ Rs. 1-8-0.

*Fascicles not all available.*

### Work No. 90.

[Discontinued.]

7. LALITAVISTARA. English translation, by R. L. Mitra. 1881—. 3 fascicles, @ Re 1-0-0 per fasc. Rs. 3-0-0.

### Work No. 226.

[In Progress.]

8. PRAJÑĀ-PRADĪPAḤ, a Commentary in Tibetan on the Madhyamaka Sūtra by Bhavaviveka. Ed M Walleser. 1914– 1 fascicle. Re. 1-0-0.

*Available.*

### Work No. 167.

[Completed.]

9. ṢAD-DARŚANA-SAMUCCAYA, by Haribhadra, with Guṇaratna's Commentary. Ed. L. Suali. 1905–1914. 3 fascicles Only fascs II–III available @ Re 0-12-0 and Rs. 1-8-0 respectively

*Fascicles not all available.*

### Work No. 153.

[Completed.]

10. ŚATASĀHASRIKA-PRAJÑAPARAMITĀ. Ed. Pratāpa Candra Ghosa. 1902–1914 Parts I-II. 19 fascicles, @ Re. 0-12-0 per fasc. Rs. 14-4-0.

*All fascicles available.*

(Progress statement issued, June, 1924.)

| Size. | Contents. | Per unit of 96 or 100 pages. |
|---|---|---|
| Demy octavo .. | Oriental text only .. .. | Rs. 0-12-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. .. | " 1-0-0 |
| Royal octavo .. | Oriental text only .. .. | " 1-0-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | " 1-4-0 |
| Quarto . | Oriental text only .. .. | " 2-0-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | " 2-8-0 |

There are some exceptions to this scale, which in each case will be indicated in the price lists. For the calculation of prices each part of a unit in excess of the 96 or 100 pages counts again as a full unit.

Single issues may be bought separately, but three years after the completion of a work no complete sets are broken for the sale of loose component parts.

Each issue bears, besides its issue number, a fascicle number indicating its place in the work and volume to which it belongs.

**With the issue of this Notice all previous prices and price lists are cancelled.**

CALCUTTA,
*June*, 1924.

The publications or information about them are obtainable from the Asiatic Society of Bengal, No. 1, Park Street, Calcutta, or from the Society's Agents:—

MESSRS. LUZAC & CO., 46, Great Russell Street, London, W.C.

M. PAUL GEUTHNER, 13, Rue Jacob, Paris, VI^e.

BUCHHANDLUNG OTTO HARRASSOWITZ, 14, Querstrasse, Leipzig.

MESSRS. THACKER, SPINK & CO., 3, Esplanade East, Calcutta.

*Residents of Europe should order from the local Agents.*

When ordering direct from the Society the following rules should be observed:—

Orders should be addressed to the Asiatic Society of Bengal and not to any Official by name or title.

All Cheques, Money Orders, etc., should be made payable to the "Treasurer, Asiatic Society of Bengal."

Orders for books should be accompanied by a full name and address, legibly written, and should be sent on a separate sheet of paper containing no other communication.

In India books are supplied by V.-P.P.

BIBLIOTHECA INDICA
A COLLECTION OF ORIENTAL WORKS.

# आत्मतत्त्वविवेकः

श्रीमदुदयनाचार्यविरचितः ।

श्रीशङ्करमिश्र-भगीरथठक्कुर-रघुनाथतार्किकशिरोमणि-
मथुरानाथतर्कवागीशादिविरचितटीकासहितः ।

# ĀTMATATTVAVIVEKA,

OR

## BAUDDHĀDHIKĀRA.

A REFUTATION OF BUDDHISTIC METAPHYSICS.

BY

UDAYANĀCĀRYA.

WITH THE COMMENTARIES OF ŚAṄKARA MIŚRA, BHAGĪRATHA ṬHAKKURA, RAGHUNĀTHA TĀRKIKAŚIROMAṆI, MATHURĀNĀTHA TARKAVĀGĪŚA, ETC.

EDITION BEGUN BY
MAHĀMAHOPĀDHYĀYA VINDHYEŚVARĪPRASĀDA DVIVEDIN,
*Librarian, Govt. Sanskrit College, Benares*

AND CONTINUED BY
PAṆḌITA LAKSHMAṆA ŚĀSTRI DRĀVIḌA.

Work Number
170
Fasc. V.




Issue Number
1480
New Series.

CALCUTTA:
Printed at the Baptist Mission Press.
Published by the Asiatic Society of Bengal, 1, Park Street.
1925.

# NOTICE.

## BIBLIOTHECA INDICA

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL.

THE Bibliotheca Indica is a collection of works belonging to or treating of Oriental literatures and contains original text editions, as well as translations into English, and also bibliographies and studies.

The publication was started in 1849, and consists of an Old and a New Series The New Series was begun in 1860, and is still running.

As a rule the issues in the series consist of fascicles of 96 or 100 pages print, though occasionally numbers are issued of double, triple or larger bulk, and in a few cases even entire works have been published under a single issue number Several different works are always simultaneously in progress. Each issue bears a consecutive issue number. The Old Series consists of 265 issues; in the New Series, till January 1st, 1925, inclusive, 1477 issues have been published. These 1742 issues represent 240 different works; these works again represent the following literatures :—

Sanskrit, Prakrit.
Rājasthānī, Kāshmīrī, Hindī.
Tibetan.
Arabic, Persian.

Several works published are partly or wholly sold out, others are still incomplete and in progress. A few works, though incomplete, have been discontinued.

Various price lists and notices concerning the Bibliotheca Indica are available and may be had on application. Other lists are in preparation Revised lists are published from time to time.

The standard sizes of the Bibliotheca Indica are three :—

Demy (or small) octavo.
Royal (or large) octavo.
Quarto.

The prices of the Bibliotheca Indica as revised in 1923 are based (with some exceptions) on the following scale per unit of 96 or 100 pages in a fascicle as the case may be :—

रघु० टी०। तृतीये अस्तित्वादिसामान्याकाङ्क्षोत्थापकत्वं देशविशेषादिनियततदाकाङ्क्षोत्थापकत्वं वा, आद्ये अथेति। असाधारण्यं दृष्टान्तस्य साधनविकलत्वात्, तदेव विवृणोति। न हीति। विरोधाच्चेत्यपि द्रष्टव्यम्। अतद्विषयविकल्पस्य तत्रास्तित्वाद्याकाङ्क्षाहेतुत्वायोगादिति। अन्त्ये नियमेति। असाधारण्यं चेत्यपि द्रष्टव्यम्। न चतुर्थः असिद्धेः, गोविकल्पस्यास्तित्वाद्याकाङ्क्षाहेतुताया अनुभवसिद्धत्वात् क्वचिदजननस्य कारणान्तरविरहप्रयुक्तत्वात्।

---

**तदीयसदसत्त्वानुपदर्शनं चेत्, तद्यदि स्वरूपमेव ततोऽसिद्धिर्दोषः। न हि गोविकल्पो गोस्वरूपं[1] नोपदर्शयतीति मम कदापि सिद्धम्। तत्र[2] चाद्यापि। उपाध्यन्तरं[3] चेदनैकान्तः। न हि यो यस्योपाध्यन्तरं नोपदर्शयेत् नासौ तदपीति[4] नियमः।**

शङ्क० टी०। ननु गोविकल्पस्य गोस्वलक्षणसदसत्त्वानुपदर्शकत्वाद्गोस्वलक्षणाविषयत्वं सेत्स्यतीत्यत आह। तदीयेति। सदसत्त्वं यदि गोस्वरूपमेव तदा तदनुपदर्शकत्वं हेतुः स्वरूपासिद्ध

---

(१) स्वरूपमेव इति १ पु० पा०।

(२) तत्राप्यद्यापि इति १ पु० पा०।

(३) चेत्तदा इति १ पु० पा०।

(४) तमपीति इति १ पु० पा०।

एवेत्यर्थः। ननु मया तस्य गोस्वरूपानुपदर्शकत्वमभ्युपगम्यत एवेति कथं स्वरूपासिद्धिरित्यत आह। तवेति। अद्यापि त्वया यत्ने क्रियमाणे तत्स्वरूपानुपदर्शनं न साधितमस्तीत्यर्थः। ननु सदसत्वं न वस्तुरूपं येनासिद्धिः स्यादपि तु सत्त्वासत्वयोस्तद्धर्मयोरनुपदर्शकत्वं हेतुः स्यादत आह। उपाध्यन्तरमिति। धर्मिभिन्नमित्यर्थः। अनैकान्त इति। धर्मानुपदर्शकमपि धर्म्युपदर्शकं भवत्येवेत्यनैकान्त इत्यर्थः। सन्दिग्धानैकान्तिक इत्यन्ये। अनियममेव दर्शयति। न हीति॥

---

भगी० टी०। सदसत्त्वं धर्मिस्वरूपं वा तद्भिन्नं धर्मान्तरं वा, आद्ये तद्यदीति। धर्मिस्वरूपत्वेऽदर्शकत्वं स्वरूपासिद्धमित्यर्थः। अन्त्ये उपाध्यन्तरमिति। अनेकान्तः सन्दिग्धानैकान्तिकमित्यर्थः। अन्येषां पक्षसमतया व्यभिचाराभावात्। यद्वा सर्वाविकल्पाव्यापकतया भागासिद्ध इत्यर्थः। तदीयसदसत्त्वोपदर्शके विकल्पे तदभावात्, न च तस्य न पक्षत्वम्, किन्तु विशिष्टज्ञानत्वादेव साध्यमनुमेयम्, विशेष्यासंस्पर्शि विशिष्टज्ञानत्वाभावात्। सन्दिग्धानैकान्तिकमेव स्फुटयति। न हीति। धर्मधर्मिणोर्ज्ञानस्य भिन्नसामग्रीकत्वादित्यर्थः॥

---

रघु० टी०। पक्षे त्वाह। तदीयेति। अनेकान्तो व्याप्यत्वासिद्धः॥

ननु नियम एव। तथाहि यन्न यत्समवेतधर्मबोधनं न तत् तत्स्वरूपबोधनं, यथा गोविकल्पशब्दौ तुरगे। तथा च तौ गव्यपि नोलत्वाद्यपेक्षयेति व्यापकानुपलब्धिः। धर्मिबोधेपि हि धर्माणां कस्यचिद्बोधः कस्यचिदबोधश्चेत्यु[1]पकारभेदान्नियमः स्यात्, उपकारभेदश्च शक्तिभेदाद्भवेत्, न चैवं प्रकृते, अनवस्थाप्रसङ्गात्। ततः[2] शक्तेरभेदादुपकाराभेदे सर्वोपाधिसहितबोधोऽबोधो वेति द्वयी गतिरिति प्रतिबन्धसिद्धिः। दुष्प्रयुक्तमेतत्। उपाधितद्वतां भेदे प्रतिनियतसामग्रीबोध्यत्वादेव तदर्थागपद्ये बोधाबोधोपपत्तेः। प्रतिनियतसामग्रीबोध्यत्वस्यापि स्वभाववैचित्र्यनिबन्धनत्वात्, तस्यापि स्वकारणाधीनत्वात्, तस्याप्यन्वयव्यतिरेकसिद्धत्वात्, तस्यापि कार्योन्नेयत्वादिति।

शङ्क० टी०। ननु यद्यत्समवेतं धर्मं नोपदर्शयतीति नियम एव। तथा चायं गौरिति विकल्पः शब्दो वा गोगतं नीलादि नोपदर्शयत्यतो गामपि नोपदर्शयति। तत्समवेतधर्मविषयतया व्याप्या तद्विषयता च गोविकल्पशब्दाभ्यां निवर्त्तमाना तद्विषयतामादाय निवर्त्तत इत्यर्थः। व्याप्तिमेव द्रढयति। धर्मिबोधेति।

(१) दबोधइत्यु० इति १ पु० पा०।

(२) तत्र इति २ पु० पा०।

धर्माणामिति। धर्माणां मध्य इत्यर्थः। उपकारे ह्युपकारापेक्षायां शक्तावपि शक्त्यन्तरापेक्षायामनवस्थाभयेन धर्मिधर्मयोर्ग्रहे प्राह्काणां समानैव शक्तिरिति धर्मिणि गृह्यमाणे तद्गताः सर्वे एव धर्मा गृह्येरन्नतो धर्म्यपि न गृह्येत इत्यायातम्। अत्र च विकल्पशब्दानां स्वलक्षणाविषयत्वमात्रं परस्योद्देश्यं, न तु व्यावृत्तिविषयत्वमपि, तत्परत्वे मानस्यानुपदर्शनादित्यवधेयम्। उपाधितद्वतामिति। भेदस्य वस्तुशः साधितत्वादिति भावः। तद्यौगपद्य इति। धर्मिग्रहधर्मग्रहसामग्र्योर्यौगपद्य इत्यर्थः। ननूक्तं समानशक्तिकत्वमतः प्रतिनियतसामग्रीवेद्यत्वमेव कथमत आह। स्वभाववैचित्र्येति। ननु विचित्रस्वभाव एवानुपपन्न इत्यत आह। स्वकारणेति।

---

भगी० टी०। पूर्वं सदसत्त्वमात्रानुपदर्शकत्वं हेतूकृतम्, इदानीं धर्मान्तरानुपदर्शकत्वं हेतुमाह। यथेति। दृष्टान्ते शब्दपदं तज्जन्यज्ञानपरम्। यद्वा बोधनपदे भावकरणव्युत्पत्त्या हेतुद्वये क्रमेण गोविकल्पगोशब्दौ दृष्टान्तौ। ननु गोशब्दविकल्पयोर्गोत्वात्मकधर्मोपदर्शकत्वाद्धेतुत्वमसिद्धिरत आह। नीलत्वादीति। तद्बोधनेपि नीलत्वादेरबोधनमस्त्येवेति यावत्तद्गतधर्मानुपदर्शकत्वं हेतुरित्यर्थः। यद्यप्यनेन गोस्वलक्षणाविषयकत्व सिद्धावपि विकल्पस्य व्यावृत्तिविषयकत्वं न सिद्ध्यति, न वा गोत्वस्य व्यावृत्तित्वम्, तथापि विकल्पत्वात् स्वातिरिक्तपारमार्थिकाविषयत्वं विकल्पस्य शशशृङ्गविकल्पवत् साध्यमित्याशुः। व्याप्ति-

ग्राहकमाह । धर्मिबोधेपीति । धर्माणामिति निर्धारणे षष्ठी । धर्मिज्ञानेपि कश्चिद्धर्मो गृह्यते कश्चिन्नेत्युपकारभेदान्नियमः स्यात्, एवमुपकारेपि कर्त्तव्ये उपकारान्तरस्य शक्तावपि शक्त्यन्तरापेक्षाया-मनवस्थेत्युपकारशक्त्योरभेदो वाच्यः, तथा चैकोपाधिविशिष्टधर्मि-ग्रहे सकलोपाधिविशिष्टतद्ग्रहः स्यादित्यर्थः । तदाह ।

एकोपकारके ग्राह्ये नोपकारास्ततोपरे ।
दृष्टे तस्मिन्नदृष्टा ये तद्ग्रहे सकलग्रह इति ।

सामग्रीभेदाद्धर्मिबोधेपि कस्यचिद्धर्मस्य बोधेपि कस्यचिदबोधः स्यादिति सन्दिग्धानैकान्तिकमित्याह । उपाधिनद्वतामिति ॥

---

रघु० टी० । बोधनत्वं बोधरूपत्वं बोधजनकत्वं च, व्युत्पत्तिभेदात् । तथा च विकल्पे धर्माबोधरूपत्वेन धर्मिबोध-रूपत्वाभावः शब्दे च धर्माबोधकत्वे धर्मिबोधकत्वाभावः साध्य इति । अथासिद्धो हेतुर्गोधर्मगोत्वबोधनत्वात् तयोरत आह । नीलेति । तथा च यत्किंचिद्धर्माबोधनत्वं हेतुर्न तु धर्ममात्रा बोधनत्वमिति भावः । नियमं साधयति । धर्मेति । धर्माणां मध्ये । एतदुक्तं भवति, ज्ञायमाने धर्मिणि धर्मस्य ज्ञानं धर्मिणः सत्ता मात्रेण, धर्मिजनितज्ञानानुकूलोपकारशालित्वेन वा, आद्ये युग पत्सर्वधर्मग्रहणाध्रौव्यं, अन्त्ये धर्मिणोपकारस्य जनने स्वरूपेण तदनुकूलशक्तिशालित्वेन वा । आद्ये अविरोधात्सर्वत्रोपकाराधा-नाद्युगपत्सर्वग्रहणम् । द्वितीयेऽपि शक्तिरेका अनेका वा । एका चेत् पूर्वोक्तमनुवर्त्तते । अनेका चेत्तज्जननायानेकशक्त्यन्तराभ्युप-

गमेऽनवस्था । धर्मिस्वरूपमात्राधीनत्वेन धर्मिकारणाधीनत्वेन वा शक्तेर्भेदानुपपत्तिः, शक्तियौगपद्याच्चोपकारस्य ज्ञानस्य च यौगपद्यमावश्यकं, तदुक्तं—

एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे ।

दृष्टे तस्मिन्नदृष्टा ये तद्ग्रहे सकलग्रहः । इति

टीकाकारोपदर्शितस्तु ग्रन्थो विस्तरभयान्नेह प्रस्तूयते इति प्रमाणटीकायामेवानुसंधेय इति । तस्य भाववैचित्र्यस्य । स्वकारणेति, जन्यमुपाधिमधिकृत्य । तस्य कारणस्य । स्यादेतत् । सिद्धं बोधकसामग्रीप्रतिनियमे तन्नियामकस्वभाववैचित्र्यमास्थेयं, तदेव तु कुत इत्यत आह । तस्यापीति । तदा व्यवस्थितस्य गुणीभूतस्यापि सामग्रीप्रतिनियमस्य परामर्शो योग्यताबलात् । कार्य्ये धर्म्मिणि गृह्यमाणे कदाचिदेव कस्यचिदुपाधेर्ग्रहः अन्वयव्यतिरेकाभ्यां कारणत्वग्रहेऽपि अपरिदृश्यमानकारणस्य कथं सिद्धिरित्यत आह । तस्यापीति । इत्यपि केचित् ॥

---

यत्तु शक्तेरभेदादित्यादि, तत्तदा शोभेत यदि धर्मिमात्राधीनस्तद्बोधमात्राधीनो[१] वा तावन्मात्रबोधसामग्र्यधीनो वा यावदुपाधिभेद[२]बोधः स्यात्, न चैवम् ।

(१) धीनस्ताव० इति १ पु० पा० ।

(२) उपाधिबोधः इति १ पु० पा० ।

शङ्क० टी० । शक्तेरभेदादुपकाराभेदे सर्वोपाधिसहित-बोधोऽबोधोवेति दूषयति । यत्त्विति । यद्यपि धर्मिमात्राधीनत्वे तद्बोधाधीनत्वे च यौगपद्यबोधनियमो न भवति, तथापि तदपि नेष्यत इति भावः ॥

रघु० टी० । तद्बोधेति । यद्यपि धर्मबोधस्य धर्मिबोधा-धीनत्वेन धर्मबोधनत्वेन धर्मिबोधनत्वाभावसाधनं सुदूरनिरस्तं, तथापि युगपदशेषधर्मग्रहापादकत्वाभावात्तन्निरस्यत इति भावः । तावन्मात्रं धर्मिमात्रम् ॥

एतेन भेदाद्धर्मिणः प्रतीतावपि शब्दलिङ्गद्वारा धर्माणां चेदप्रतीतिः, इन्द्रियद्वारापि माभूदित्यादिकं तु कर्णस्पर्शे कटिचालनमपास्तम् । तत्तदुपाध्युपलम्भ-सामग्रीविरहकाले प्रसञ्जितस्येष्टत्वात् । विचित्रशक्ति-त्वाच्च प्रमाणानाम्, लिङ्गस्य प्रसिद्धप्रतिबन्धप्रति-सन्धानशक्तिकत्वात्, शब्दस्य समयसीमविक्रमत्वात्, इन्द्रियस्य त्वर्थशक्तेरप्यपेक्षणात् । न तु सम्बद्धोऽर्थ इत्येव प्रमाणैः प्रमाप्यते,[1] अतिप्रसङ्गात् । यस्य तूपाधेरुपलम्भ एव येन प्रमाणेन धर्म्युपलभ्यते तस्या-नुपलम्भे स तेन नोपलभ्यत इति परं युज्यते, सर्वो-पाध्यनुपलम्भे वा, तथा च सिद्धसाधनमिति सङ्क्षेपः ॥

(१) प्रत्याप्यते इति १ पु० पा० ।

शङ्क० टी०। भेदादिति। धर्मधर्मिणोर्भेदादित्यर्थः। शब्दलिङ्गाभ्यां यथा वह्नेः रूपपरिमाणादिकं न गृह्यते, किं तु वह्निस्वरूपमात्रं, तथा प्रत्यक्षमपि धर्मिमात्रविषयमस्तु, प्रमाणानां तुल्यप्रतिभाससामान्या(१)दिति भावः। शब्दलिङ्गखाभाव्यं कर्णस्पर्शः, तदेव प्रत्यक्षस्वाभाव्यापादनं कटिचालनम्। यद्वा यावद्धर्माणामग्रहणं कर्णस्पर्शः, तदेव धर्मिणोप्यग्रहणापादनं कटिचालनम्। यद्वा यावद्धर्मविशिष्टधर्म्यग्रहणं चेदिति कर्णस्पर्शः, तदा विकल्पकानामतद्व्यावृत्तिविषयतापादनं कटिचालनम्। यथा शब्दलिङ्गे उपाधिं न गृह्णीतः, तथा प्रत्यक्षमप्युपाधिं न गृह्णीयादित्यापादने वैय्यधिकरण्यान्मूलशैथिल्यमुक्ता। इष्टापादनमाह। तत्तदिति। तर्कमूलव्याप्तावुपाधिमाह। विचित्रेति। शक्तिवैचित्र्यान्न तुल्याभासनियम इत्यर्थः। विचित्रशक्तिकत्वमेवाह। लिङ्गस्येति। प्रसिद्धो दृढतरप्रमाणावधारितो यः प्रतिबन्धस्तत्प्रतिसन्धानं पक्षधर्म सैव शक्तिर्यस्येत्यर्थः। समयः सङ्केतः। सैव सीमा मर्यादा तदायत्तो विक्रमः प्रवृत्तिर्यस्येत्यर्थः। अर्थशक्तेरिति। तथा चेन्द्रियार्थसन्निकर्षादिजन्यं प्रत्यक्षमतो यावद्भिरुपाधिभिः सन्निकर्षस्तावदुपाधिविशिष्टस्य धर्मिणो ग्रहणं स्यादेवेत्यर्थः। ननु रूपस्पर्शसङ्ख्यापरिमाणादिविशिष्टस्यैव वह्नेर्व्याप्यो धूमः शब्दश्च वस्तुगत्या तावदुपाधिविशिष्ट एव सङ्केतित इति ताभ्यामप्युपाधि(२)विशिष्ट धर्मिग्रहः स्यादित्यत आह। नत्विति। तावदुपाधिवैशिष्ट्येन न

(१) सामर्थ्या—पा० १ पु०।

(२) तावदुपाधि—पा० १ पु०।

व्यापकता न वा बाध्यतेत्यर्थः । यद्वा ननु यावदुपाधीन्द्रियसन्नि-कर्षे चेत्तावतामुपाधीनां ग्रहणं तदा सर्वोपाधिविशिष्टग्रहणं प्रत्यक्षेणापाद्यत इत्यत आह । न त्विति । तथापि दृष्टान्नि-कानुविधानान्नियम इत्यर्थः । व्यापकतावच्छेदकस्य शक्यतावच्छेद-कस्य वा वह्नित्वादेरुपलम्भ एव लिङ्गशब्दाभ्यां वह्निर्भासते इति तदनुपलम्भे वा वह्निर्न ताभ्यां भासतामिति चेत् साध्यते तदा सिद्धसाधनमित्याह । यस्येति । सर्वेति । कस्याप्युपाधेरनुपलम्भ इत्यर्थः ॥

---

भगी टी० । एतेनेति । धर्माणां भिन्नसामग्रीबोध्यत्वव्युत्पाद-नेनेत्यर्थः । एकस्य प्रमाणस्य धर्मविशेषाबोधकत्वेनान्यस्यापि तस्य तद्बोधकत्वमिति भ्रान्तिरुपहासबीजम । न त्विति । चक्षुषा रूपग्रहे, तद्गतगत्यादिग्रहप्रसङ्गादित्यर्थः । नन्वेवं धर्मधर्मिणोर्भेदा द्भिन्नसामग्रीबोध्यत्वेन कदाचिन्निर्द्धर्मकस्यापि धर्मिणो बोधः स्यात्, न चैवम्, अन्ततः सत्त्वस्यापि ग्रहादित्यत आह । यस्य त्विति । येन करणेनेत्यर्थः । सर्वोपाध्यनुपलम्भोपेत्यत्र नोपलभ्यत इत्यनुषञ्जनीयम् ॥

---

रघु० टी० । एतेन धर्माणां भिन्नसामग्रीबोध्यत्वेन । भेदाच्छेदप्रतीतिरित्यन्वयः । प्रमाणानां धर्मिबोधकत्वाविशेषे धर्मबोधकत्वाबोधकत्वलक्षणो विशेषः कुतस्त्य इत्यत आह । विविच्येति । प्रतिसन्धानं पक्षधर्मतानिश्चयः । अर्थस्य शक्तियोग्य-

तादिः । अतिप्रसङ्गात् रूपादिप्रतीतौ रसादेरपि प्रत्ययप्रसङ्गात् । एकस्यैव सर्वेषामपि धर्माणामग्रहे धर्मिग्रहणापत्तिरत आह । यस्य त्विति । येन प्रमाणेन । यथा गृह्यमाणे एव रूपे नयनेन द्रव्यं व्यापकतावच्छेदके च लिङ्गेन व्यापकमिति । स धर्मी । सर्वोपाध्यनुपलम्भे वा स नोपलभ्यत इति युज्यते ॥

----

स्यादेतत् । यदीन्द्रियेण समानविषयावेव लिङ्ग-शब्दौ, ततः प्रतिभासभेदोऽनुपपन्नः । एकविषयत्वं हि प्रतिभासाभेदेन व्याप्तं सव्येतरनयनदृष्टवत् दृष्टम्, न चेह तथा, यथा हि प्रत्यक्षे चेतसि देशकालावस्था-नियतानि परिस्फुटरूपाणि स्वलक्षणानि प्रतिभान्ति, न तथा शब्दे लैङ्गिकविकल्पेऽपि । तत्र हि विजा-तीयव्यावृत्तमिव परस्पराकारसङ्कीर्णमिवास्फुटमिव प्रत्यक्षापरिचितं किञ्चिद्रूपमाभासमानमनुभवविषयः, न चोपायभेदमात्रेण प्रतिभासभेद उपपद्यते, न हि प्रतिपत्त्युपायाः प्रतिपत्त्याकारं परिवर्त्तयितुमीशते, न चैकं वस्तु द्व्याकारमिति प्रतिबन्धसिद्धिः । अस्य प्रयोगः, योऽयं क्वचिद्वस्तुनि प्रत्यक्षप्रतिभासाद्विपरीतः प्रतिभासो नासौ तेनैकविषयो यथा घटग्रहात् पट-प्रतिभासः, तथा च गवि प्रत्यक्षप्रतिभासाद्विपरीतः प्रतिभासो विकल्पकाल इति ।

शङ्क० टी०। यथेन्द्रियं स्वलक्षणविषयं, तथा लिङ्गशब्दावपि यदि तद्विषयौ स्यातां तदा प्रतिभासवैलक्षण्यं न स्यात् अतस्तौ न स्वलक्षणं स्पृशत इत्याह। स्यादेतदिति। यथेत्यादिना प्रतिभासभेदमेव स्फुटयति। परिवर्त्तयितुम् अन्यथाकर्त्तुम्। ननु वस्तुस्वाभाव्यमेव द्विरूपमस्तु भिन्नप्रमाणप्रतिभासं येन स्यादित्यत आह। न चैकमिति। प्रतिबन्धेति। यद्भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठमिति प्रतिबन्धसिद्धिरित्यर्थः। भावाभावसाधारणत्वस्यैव हेतोरनेन प्रकारेण प्रपञ्चनात्। अस्य प्रयोग इति। अय प्रघट्टकार्थः, प्रयोगमारोप्य दश्यत इत्यर्थः। एतत्प्रतिबन्धाधीनः प्रयोगो वेत्यर्थः। वस्तुनीति स्फुटार्थम्, प्रत्यक्षप्रतिभासत्वावच्छिन्नाद्विपरीत्यं न विवक्षितं, तेन न दृष्टान्तासिद्धिः, अन्यथा परप्रतिभासस्यापि प्रत्यक्षप्रतिभासत्वाद्विपरीत्यासिद्धेर्दृष्टान्तासिद्धिः स्यात्। गवीति। स्वलक्षणे यः प्रत्यक्षप्रतिभासो निर्विकल्पकं तद्विपरीतं सविकल्पकमिति न तस्य स्वलक्षणविषयतेत्यर्थः॥

भगी० टी०। ननु यद्येन सहैकविषयं तत्तेन सहान्यूनानतिरिक्तविषयं, यथा वामदक्षिणचक्षुर्जन्ये ज्ञाने, इन्द्रियेण समानविषयौ च शब्दविकल्पाविति तयोरपि तथात्वापत्तिरित्याह। यदीति। प्रतिभासभेदः परस्पराविषयविषयकत्वम्। दृष्टवदित्यत्र भावे क्तः। प्रतिभासभेदमाह। व्यावृत्तमिवेति। सजातीयव्यक्तीनामपि मिथो व्यावृत्तिर्भासत इत्यर्थः। अस्फुटमिवेति। असाधारणो धर्मो न गृह्यत इत्यर्थः। ननु ज्ञानकरणभेदादप-

पश्यत इत्यत आह। न हीति। तावता ज्ञाने परं वैजात्यं स्यात्, न तु विषयभेदनियम इत्यर्थः। भिन्नकरणजज्ञानयोस्तथाप्य- भिन्नप्रतिभासत्वोपगमादिति भावः। यो य इति। विवादपदं विकल्पो न प्रत्यक्षेण समानविषयः, तेनान्यूनानतिरिक्तविषयत्व- विरहित्वादित्यर्थः॥

रघु॰ टी॰। समानविषयत्वं व्यापारानुबन्धितया। प्रति- भासेति। प्रतिभासस्य भेदो न्यूनाधिकविषयत्वं, तद्विरहस्त्वभेदः, तद्व्याप्यमित्यर्थः। दृष्टवदिति सप्तमीसमर्थाद्वतिः। नयनाभ्यां दृष्टे नयनयोरेकविषयत्वं प्रतिभासाभेदश्चेति। चेतसि ज्ञाने। विजा- तीयव्यावृत्तमिवेति। व्यावर्त्तकगोत्वादिस्फूर्त्तावपि व्यावृत्तेरस्फुर- णात्। एतच्च गोत्वादेर्विधिरूपतामते। व्यावृत्तिरूपतानये तु व्यावर्त्तकधर्मास्फुरणात्। परस्परेति। सजातीयान्तराद्व्यावृत्तेर- स्फुरणात्। अस्फुटमिति। असाधारणधर्मास्फुरणात्। वैयधिकरण्यं निरस्यन्नाह। अस्य प्रयोग इति। क्वचिद्वस्तुनीति यत्किञ्चिद्विषया- पेक्षया न्यूनत्वस्य लाभाय। तथा च यो यत्प्रतिभासविषय- यत्किञ्चिद्वस्त्वविषयको नासौ तद्विषयविषयक इति व्याप्तिः॥

---

इदमप्यवद्यम्। चित्राचित्रप्रतिभासाभ्यां मिथो विरुद्धाभ्यामेकनीलविषयाभ्यामनैकान्तात्। न हि चित्राध्यक्षे यन्नीलं चकास्ति तदेव पश्चान्न केवलं तदैव वा पुरुषान्तरस्य। येनाकारेणैकविषयत्वं तयोर्न तेनैव

विरोधो येन च विरोधो न तेनैकविषयत्वम्। धर्मान्तराकारेण विरोधो नीलमात्राकारेण चैकविषयतेति चेत्, नन्विहापि धर्मान्तराकारेण विरोधो गोत्ववत्पिण्डमात्राकारेण चैकविषयतेति तावन्मात्रनिराकरणेऽसिद्धो हेतुः। पूर्वञ्च सिद्धसाधनम्। न हि शाब्दलैङ्गिकविकल्पकाले देशकालनियमादयोऽपि सर्व एव धर्मविशेषा विषयभावमासादयन्तीत्यभ्युपगच्छामः।

शङ्क० टी०। एकमेव नीलं समस्तचित्रपटदर्शिना चित्रत्वेन सन्नतापरभागपटदर्शिना चाचित्रत्वेन प्रतीयते, प्रतिभासभेदेऽपि न विषयभेद इत्यनैकान्त इत्याह। चित्राचित्रेति। यद्यपि तत्र नीलेऽचित्रबुद्धिर्भ्रान्ता तथापि प्रतिभासभेदोऽस्त्येवेत्यर्थः। ननु चित्रत्वाचित्रत्वाभ्यां विरोधो नीलत्वेन चैकविषयतेति न तत्रानैकान्तिकमिति शङ्कते। येनेति। गोत्ववद्व्यक्तिविषयतया समानविषयत्वं साधयामः प्रतिभासभेदस्य देशकालनियतत्वानियतत्वस्फुटास्फुटत्वादिभिः त्वदुपदर्शितैरिति तुल्यमिति परिहरति। नन्विहापीति। तावन्मात्रेति। शब्दलिङ्गविकल्पानां स्वलक्षणविषयतानिराकरणे प्रतिभासभेदो हेतुः स्वरूपासिद्धः, वस्तुनि सर्वेषां समानप्रतिभासत्वादित्यर्थः। पूर्वञ्चेति। देशकालनियमादिषु प्रतिभासभेदेन भिन्नविषयत्वं यदि साध्यते तदा सिद्धसाधनं, न हि ये देशावच्छेदाः प्रत्यक्षेण भासन्ते ते शब्दलिङ्गाभ्यामपीत्यर्थः॥

भगी० टी०। प्रतिभासभेदो यदि विषयभेदकृत एव विवक्षितः स्यात्, तदा साध्याविशेषः स्यादिति स्वरूपत एव स वाच्यः, तत्राह। चित्रेति। न हीति। यदेव चित्राध्यक्षे नीलं भातं तदेव केवलमपि पश्चात् तस्य पुरुषस्य नीलबुद्धौ न भासत इति नास्ति, अपि तु तदेव भासत इत्यर्थः। क्षणभङ्गमूलिकां परस्यासिद्धिं निवारयति। तदेव वेति। यदेकं नीलं यदेकस्य नीलबुद्धौ चकास्ति, तदेवान्यस्य केवलं तन्नीलं न चकास्तीति नेत्यर्थः। येनाकारेण नीलत्वेन। येन विरोधः चित्रत्वेन। धर्मान्तरं चित्रत्वं चित्रविकल्पे, केवलनीलविकल्पे च तद्विषयत्वम्। असिद्ध इति। विरुद्धधर्मान्तरेणैकविषयत्वाविरोधात् सन्दिग्धानैकान्तिकत्वेन व्याप्यत्वासिद्धो हेतुरित्यर्थः। नन्विहेति। येन रूपेण विरोधस्तेनैकविषयत्वस्य नैयायिकैरनभ्युपगमादित्यर्थः। तदेव विशदयति। न हीति। तथा च प्रत्यक्षे ये धर्मा भासन्ते तद्विषयकत्वेपि लैङ्गिकादिविकल्पानां धर्मिविषयत्वमविरुद्धमिति भावः॥

---

रघु० टी०। परेषां भावानां क्षणिकत्वादाह। तदेवेत्यादि। येनाकारेण नीलत्वेन। येन विरोधश्चित्रत्वेन। अथैवं यत्प्रतिभासविषययदर्थाविषयको यः प्रतिभासो नासौ तेनार्थेन तत्समानविषय इति पर्यवसिता व्याप्तिः, तथा च यदि प्रत्यक्षविषयगोत्वव्यक्तिपिण्डाविषयत्वं हेतूक्रियते तदा स्वरूपासिद्धिः, प्रत्यक्षवच्छब्दादिविकल्पस्यापि गोत्वव्यक्तिपिण्डविषयत्वोपगमात्। प्रत्यक्षविषयदेशादिनियमाविषयत्वं, तदा सिद्धसाधनं, देशादिनियमेनार्थेन

प्रत्यक्षसमानविषयताविरहस्य शब्दादिविकल्पेऽस्माभिरभ्युपगमा दित्याह। नन्विच्छापीत्यादिना। धर्मान्तरं देशकालनियमादि। तावन्मात्रं गोत्वव्यक्तिपिण्डाकारेणैकविषयत्वम्। पूर्वञ्च प्रत्यभिज्ञान-धर्म्मान्तराकारेणैकविषयताया निराकरणे॥

---

**ननु धर्मिण्येव स्फुटास्फुटप्रतिभासभेदः कथम्। न कथञ्चित्। यथा यथा हि धर्माः प्रतिभान्ति तथा तथा स्फुटेति प्रतिभानव्यवहारः, यथा यथा च धर्माणामप्रतिपत्तिस्तथा तथा प्रतिभानस्य मान्द्यव्यवहारो दूरान्तिकादौ प्रत्यक्षेपि लोकानाम्, न तु सर्वथैवाप्रतिपत्तौ।**

शङ्क० टी०। ननु यदि शब्दलिङ्गयोरपि धर्म्म्येव विषयस्तदा स एवैकत्र स्फुटोऽन्यत्रास्फुटः कथं भासतामित्याह। नन्विति। प्रकाशः सर्व एव स्फुटः, स्फुटास्फुटव्यवहारश्च बहुतराल्पतरधर्मविषयतानिबन्धन इत्याह। न कथञ्चिदिति। एतदेवाह। यथा यथेति। न त्विति। यदि शब्दलिङ्गयोर्द्धर्मिविषयता न स्यात्तदा तत्रास्फुटतापि न भवेदित्यर्थः॥

---

भगी० टी०। ननु प्रत्यक्षस्य स्फुटप्रतिभासत्वं धर्मिविषयत्वं तदविषयत्वं च लैङ्गिकादिविकल्पानामस्फुटत्वमिति तदन्यथानुपपत्त्या तेषामनेकसामान्यमात्रविषयत्वमध्यक्षस्य धर्मिविषयत्वं च कल्प्यत

इत्याह । नन्विति । उभयोर्धर्मिविषयत्वेपि भूयस्तद्धर्मविषयत्वा-विषयत्वाभ्यामेव तदुपपत्तेर्न तत्कल्पनमित्याह । न कथञ्चिदिति । तदेव स्फुटयति । यथा यथेति । अतएव धर्मिविषयत्वेपि दूरान्तिकप्रत्यक्षे स्फुटास्फुटप्रतिभासत्वं दृष्टमित्याह । दूरेति । न त्विति । अस्फुटत्वमिति शेषः । धर्मिणोऽप्रतीतावेव नास्फु-टत्वमित्यर्थः ॥

---

रघु० टौ० । प्रत्ययानां स्फुटास्फुटप्रतिभासत्वं, न चैकार्थः स्फुटोऽस्फुटश्च सम्भवति, विरोधात्, अतः स्फुटप्रतिभासस्याध्यक्षस्य स्फुटस्वलक्षणविषयत्वं, अस्फुटप्रतिभासस्य लैङ्गिकादिविकल्पस्या-स्फुटालीकविषयत्वमित्याशङ्कते । नन्विति । अध्यक्षाणां नील-पीताद्याकारभेदवदध्यक्षलैङ्गिकयोरपि स्फुटास्फुटप्रतिभासत्वभेदो विषयभेदं विनाऽनुपपन्न इत्याशङ्कते । नन्विति । इत्यपि कश्चित् । धर्मिण्येव एकस्मिन्नेव धर्मिणि । बहुतराल्पतरधर्मवद्धर्मिविषयत्वमेव स्फुटास्फुटप्रतिभासत्वं, नाधिकं, मानाभावात्, तच्च नैकविषयत्व-विरोधीत्याह । न कथञ्चिदिति । प्रत्यक्षे एकविषयेपि । न त्विति । तदग्राहिणस्तत्राम्फुटप्रतिभासत्वानुपपत्तेरिति ॥

---

विदूरादिप्रत्ययोपि पक्ष एवेति चेत् । अस्तु । न तु तावतापि धर्मधर्मिभेदसिद्धौ प्रत्यक्षबाधस्य तत्सन्देहेपि सन्दिग्धानैकान्तिकस्य वा परिहारः, तावतापि प्रति-भासभेदस्योपपत्तेः ।

शङ्क॰ टी॰। पत्त एवेति। तत्रापि स्फुटास्फुटप्रतिभास-प्रभेदेन सद्रव्यपार्थिवादिप्रतिभासभेदेन वा विषयभेदं साधयिष्याम इत्यर्थः। अतद्व्यावृत्तिविषयतां यदि दूरादिप्रत्ययानां साधयसि तदा प्रत्यक्षबाध एव, विधिस्फुरणस्य साधितत्वात्। विषयभेद-प्रतिभासभेदेन धर्मिणोर्भेदे दूरान्तिकप्रत्ययानां धर्म्यविषयत्वे साध्ये बाध इत्यन्ये। तच्चिन्त्यम्। प्रतिभासभेदेन विषयभेदमात्र-साधनं तु सन्दिग्धानैकान्तिकपराहतम्। प्रतिभासभेदोपि स्यान्न तु विषयभेद इति विपक्षबाधकाभावात्। तत्सन्देहे धर्मधर्मिभेद-सन्देहे वा बाधसन्देहे वा॥

---

भगी॰ टी॰। ननु दूरादिसविकल्पकानामपि धर्मिविषय-त्वमसिद्धमित्याह। दूरादीति।(१) यदि धर्मधर्मिणोरभेदः स्यात्तदा किञ्चिद्धर्माभाने धर्म्यभानं स्यात्, न त्वेवम्, किन्तु तयो-र्भेदः, तथा च दूरान्तिकप्रत्ययानां धर्म्यविषयत्वे साध्ये बाधः, अनुव्यवसायेन धर्मिविषयत्वस्य प्रमितेः, बाधसन्देहेपि सन्दिग्धानै-कान्तिकम्, धर्मिविषयकत्वेपि किञ्चिद्धर्माविषयकत्वेनास्फुटत्वोप-पत्तेरुक्तत्वादित्याह। न त्विति॥

---

रघु॰ टी॰। दूरदूरतरादिप्रत्यया अपि नास्माकं स्वलक्षण-साक्षिणो न वा साक्षात्कारिणः परं त्वलीकालम्बना अनादि-विकल्पवासनासमुत्थाः समारोपितसाक्षात्कारा इत्याशङ्कते।

(१) दूरादीति पाठमनुसृत्यव्याख्यातम्।

विदूरादीति । पञ्च: पञ्चतुल्यकच्च: । नन्वित्यादि । यमर्थम्-
भिनवं तमेव पश्यामीति लैङ्गिकप्रत्यक्षयोरेकविषयतायाःको-
ऽनुव्यवसायो धर्म्मधर्मिणोरभेदात् तत्तद्धर्मांशाहिणो लैङ्गिक-
प्रत्ययस्य धर्मिविषयत्वानुपपत्त्या बाधकेनाप्रमाणीकर्त्तव्यः, सिद्धे
धर्म्मधर्मिणोर्भेदे बाधकाभावात् प्रमाणेनानुव्यवसायेन बाधितं
लैङ्गिकाध्यक्षयोरेकविषयत्वाभावसाधकमनुमानं, यदा तु धर्म-
धर्मिणोर्भेदसन्देहस्तदा बाधकसन्देहादापाततोऽनुव्यवसायस्य प्रामा-
ण्यसन्देहेऽपि दूरादिप्रत्ययैः सन्दिग्धानैकान्त्यं तदित्यर्थः । अथ
दूरादिप्रत्यया अपि पञ्चकुक्षौ निक्षिप्यन्ते ? तदाऽप्रयोजकत्वमित्याह ।
तावतापीति । धर्म्मधर्म्मिणोरभेदसाधकं तु न मानमस्तीत्याशयः ॥

---

**यदि च नैवं, दूरतमादिप्रत्ययेषु कः समाश्वास-
विषयः । यस्यार्थो लभ्यत इति चेत् । ननु लाभोऽपि
पूर्वपूर्वोपलब्धानुपमर्दनेनैव । न हि सत्त्वद्रव्यत्वपार्थि-
वत्ववृक्षत्वादिकं परिभूय शिंशपा लभ्यते ।**

शङ्क० टी० । यदि च नैवमिति । न विषयाभेदः, किं
तु दूरदूरतरादिप्रत्यया भिन्नविषया एवेत्यर्थः । धर्मज्ञानविषयस्य
प्राप्तिरेव ज्ञानसमाधीहेतुरित्याह । यस्येति । सद्द्रव्यं पृथिवी
वृक्षः शिंशपेति दूरादिप्रत्यया जायन्ते । तत्र शिंशपालाभेऽपि
सदादीनां लाभोऽस्तीति तावद्धर्मविशिष्टपिण्डगोचरा एव सर्वे
प्रतिभासा न तु विषयभेद इत्यर्थः ॥

---

भगी० टी०। यदि च क्रमिकसद्रूप्यपार्थिवत्वादिप्रत्ययानां प्रामाण्यं, तदा समानविषयत्वमेव, अथैकस्य प्रमात्वम्, तदा कस्य तदिति नाश्वासः स्यादित्याह। यदि चेति। अर्थलाभः विषयलाभः। अर्थलाभोपि सर्वस्यैव क्रमिकतत्तत्प्रत्ययस्याविशेषादित्याह। नन्विति। पूर्वानुपमर्द्दमेवाह। न हीति॥

---

रघु० टी०। दूरतमादौ सद्रूप्यमित्यादयः क्रमिकाः प्रत्ययाः यदि नैकविषया न तर्हि सर्वे प्रमाणं, न खल्वूत्तरोत्तरप्रत्ययोल्लिखितरूपरहितं पूर्वपूर्वप्रत्ययगोचरो वस्त्वन्तरं नाम। अथैक एव प्रमाणं, एकतमस्यैवेति कुतो निर्णय इत्याह। यदि चेति। अनुभूयमानायामनुगताकारस्य विधिरूपतायां विकल्पस्य च धर्मिविषयतायां न किञ्चिदपि बाधकमस्तीति भावः। भावार्थमभ्युपेत्याह। यस्येति। अर्थो विषयः॥

---

यथार्थक्रियासिद्धिरिति चेत्, सर्वेषामनुवृत्तेः कस्यार्थक्रियेति किं निश्चायकम्। न किञ्चित्, किन्तु सङ्कीर्णार्थक्रियाविरहादेकमेव तच्च वस्तु, न चैकस्मिन् प्रतिभासभेद इत्येक एव प्रत्ययस्तच्च सालम्बन इति ब्रूम इति चेत्, तथापि कतम इत्यनिश्चये स एवानाश्वासः। असङ्कीर्णापि चार्थक्रिया न व्यक्तितः, सामग्रीतः सर्वसम्भवात्। अतएव न सन्तानतः। न ह्येकसन्तान-

नियता काचिदर्थक्रिया नाम। काञ्चिदर्थक्रियां प्रति प्रत्यक्षानुपलम्भगोचर एव तथा व्यवस्थाप्यत इति चेत्, तर्हि इन्तमाद्युपलब्धा अपि तथा व्यवस्थाप्याः। सर्वेषामेव तेषां तां तामर्थक्रियां प्रति प्रयोजकताया अन्वयव्यतिरेकगोचरत्वादिति।

शङ्क० टी०। पचकांडादिविशेषलक्षणार्थक्रिया शिंशपाया एवेति तल्लाभ एवातन्मत्प्रतिभास एव समाश्वास इत्याह। यचेति। मत्वादीनां पूर्वपूर्वप्रतिभासविषयाणां चेन्नोपमर्दस्तदा सैवार्थक्रिया कस्येति निश्चायकं नास्तीत्याह। कस्येति। यद्यपि बहवः प्रति· भासा इष्यन्ते तथाप्यर्थक्रिया चेदेकैव तदा तद्विषय एव वस्तुभूतो-ऽन्ये च प्रतिभासा अवस्तुविषया एवेत्याह। न किञ्चिदिति। निश्चायकमित्यनुषज्यते। सालम्बन इति। पारमार्थिकविषय इत्यर्थः। सदादिप्रत्ययानां कतमः प्रत्ययः प्रमेत्यनिश्चये प्रवृत्त्य-नध्यवसाय एवेत्याह। तथापीति। दूषणान्तरमाह। असङ्कीर्णा-पीति। असङ्कीर्णार्थक्रिययापि व्यक्तिविशेषनिश्चयः तदा स्याद्यदि सार्थक्रिया व्यक्तिविशेषमात्राद्भवेन्न त्वेवं, किं तु सामग्रीतः सर्व-सम्भव इत्यर्थः। ननु तयार्थक्रियया एका व्यक्तिर्मा निश्चीयतां, सन्तानो निश्चयत इत्यत आह। अतएवेति। सामग्रीतः सर्वसम्भवो यत इत्यर्थः। तदेव स्फुटयति। न हीति। न ह्यंकुरोऽपि बीजसन्तानादेकस्मात्, किन्तु तत्रापि धरण्यादिसन्ताना-पेक्षाया दर्शितत्वादित्यर्थः। ननु यद्यपि सामग्र्यधीनाऽर्थक्रिया तथा

अन्वयव्यतिरेकाभ्यां प्राधान्येनाङ्कुरं प्रति बीजस्यैव प्रयोजकत्वं गृहीतमिति तया मुक्तिपर्यन्तन्तदेव विधीयत[1] इत्यत आह । काञ्चिदिति । तर्हि द्रव्यं पृथिवी वृक्षश्चायं शिंशपेत्यत्रापि द्रव्यत्वेन संयोगं प्रति पृथिवीत्वेन गन्धं प्रति वृक्षत्वेन पत्रकाण्डादिकं प्रति शिंशपात्वेन तद्विशेषं प्रति अन्वयव्यतिरेकाभ्यां कारणत्वावधारणात् सर्वे प्रत्यया यथार्था इत्यायातमित्याह । तर्हीति ।

---

भगी० टी० । यत्रेति । अर्थक्रियाकारित्वमेव सत्त्वमिति यस्यार्थक्रिया तदेव सदित्यर्थः । सर्वेषामिति । अर्थक्रियापि विशिष्य करोति न निश्चय इत्यनाश्वासस्तदवस्थ एवेत्यर्थः । न किञ्चिदिति । विशिष्यानिश्चयेप्येकमेव तत्र प्रमाणमित्याश्वास एवेत्यर्थः । किञ्चेति । दृश्यमानार्थक्रिया यदि सर्वस्य स्यात्तदा नानारूपा स्यात्, न च तथोपलभ्यत इति यस्यैकस्यार्थक्रियोपलभ्यते तदेव सालम्बनं परमार्थसद्विषयकमित्यर्थः । तथापीति । सर्वेषामेव सदादिप्रत्ययानां तथात्वादर्थक्रियाप्रयोजकत्वमिति प्रामाण्येर्थविषयत्वमेवेत्यर्थः ॥

---

रघु० टी० । अर्थक्रियाकारिण एव सत्वात् यस्यार्थक्रिया दृश्यते तद्विषयक एव प्रत्ययः प्रमेत्याशङ्कते । यत्रेति । सर्वेषां सदादिप्रत्ययगोचराणाम् । न किञ्चित्. नियामकमिति शेषः । पत्रकाण्डविशेषादिलक्षणार्थक्रिया न सदादेः पनसादेरपि तत्प्र-

---

(१) तयार्थक्रियया तदेव निश्चीयत इत्यत आह ।—पा० २ पु० ।

सङ्गात् किन्तु शिंशपाया एवेत्यस्ति विशेषनिश्चायकमत आह । असङ्कीर्णापीति । न व्यक्तितो नैकव्यक्तिमात्रात् । तथा च पूर्वभावित्वस्य नियामकसहकारिसमवधानस्य चाविशेषात् सर्वेषामेव कुतो न साऽर्थक्रियेति । यत्सन्तानवियता यार्थक्रिया सा तस्यैव नेतरस्य, तत्सत्त्वेपि तदनुत्पत्तेरित्याशङ्क्य निराचष्टे । अतएवेति । तत्सान्तानिकसत्त्वेपि तत्तत्सहकारिविरहेण तत्तदर्थक्रियाविरहदर्शनाच्च नियम इति । अन्वयव्यतिरेकाभ्यां विजातीयकार्याणि प्रति विजातीयानां कारणानां हेतुत्त्वे सुदृढे सदादेः कारणतायां मानाभावेनासत्त्वात्तद्विषयाः प्रत्ययाः न प्रमाणानीत्याशङ्कते । काञ्चिदिति । निराकरोति । तन्नेति । तथा च वृक्षः शिंशपेति बीजं धान्यं शालिः कलम इति प्रत्यया उपलभ्यमानसामान्यविशेषभावापन्नपचकाण्डाङ्कुरलक्षणार्थक्रियासद्विषयतया प्रमाणीभवन्तोऽभिन्नविषयतयाऽवतिष्ठन्त इति ॥

---

स्यादेतत् । न धर्मान्तराकारेण प्रतिभासभेदो भेदहेतुः किन्तु परोक्षापरोक्षरूपतया । सा हि न धर्मभेदानप्युपादाय समर्थयितुं शक्या, तेष्वपि परोक्षापरोक्षभानोदयात्, तत्रापि धर्मान्तरानुसरणेऽनवस्थानादिति चेत् ।

शङ्क० टी० । प्रत्यक्षानैङ्गिकादिविकल्पानां प्रतिभासभेदाद्विषयभेदं शङ्कते । स्यादेतदिति । धर्मान्तराकारमेवाह ।

परोक्षापरोक्षरूपतयेति । ननु वस्तुधर्माविव परोक्षापरोक्षत्वे, तद्विषयतया प्रतिभासोऽपि कश्चित् परोक्षः कश्चिदपरोक्ष इत्यत आह। सा हीति। सा परोक्षापरोक्षरूपता। तेष्वपि धर्मभेदेष्वपि धर्मपरोक्षताधीना चेत् परोक्षता तत्रापरोक्षज्ञानं न स्यादेवेत्यर्थः तत्रापीति। परोक्षे धर्मे अपरा परोक्षताऽपरोक्षे चापरा परोक्षत चेत्तदाऽनवस्थेत्यर्थः। तथा च परोक्षापरोक्षत्वलक्षणप्रतिभासभेदा-द्विषयभेदः प्रत्यक्षलैङ्गिकादिज्ञानानामावश्यक इति भावः ॥

---

भगी० टी०। ननु प्रत्यक्षलैङ्गिकविकल्पयोः परोक्षत्वापरोक्षत्व रूपप्रतिभासाद्विषयभेदः स्यादित्याह। न धर्मान्तरेति। ननु परोक्षत्वापरोक्षत्वे विषयस्यैव धर्मौ, तथा चापरोक्षत्वधर्मविशिष्टं प्रत्यक्षस्य विषयो लैङ्गिकादेस्तु परोक्षत्वधर्मविशिष्टमिति न ते ज्ञानधर्मौ वित्याह। सा हीति। लभ्यते तेष्वपि विषयधर्मभेदेषु परोक्षापरोक्षज्ञानोत्पत्तेः, न च परोक्षत्वादावपि परोक्षत्वाद्यन्तरधर्मस्वीकारोऽनवस्थितेरित्यर्थः। तथा च परोक्षत्वापरोक्षत्वयोर्मिथ विरोधात् प्रत्यक्षलैङ्गिकविकल्पयोः प्रतिनियतविषयतेति भावः।

---

रघु० टी०। किं त्विति। पारोक्ष्यापारोक्ष्ये परोक्षापरोक्ष विषयकत्वे। न चैकं वस्तु परोक्षमपरोक्षं च सम्भवति, विरोधा तथात्वे वा तद्विषयकस्यैकस्य विज्ञानस्य परोक्षापरोक्षोभयरूपत पत्तेः। परोक्षत्वापरोक्षत्वे च रूपस्पर्शाविव धर्मिणो धर्मभेदः तद्विशिष्टस्य धर्मौ परोक्षापरोक्षयोर्विज्ञानयोर्विषयो रूपस्य

विशिष्ट इव नायनस्यार्शनयोरित्याशङ्कां निराकरोति । या चौति । तेष्वपीति । तत्र मत इत्यादि । परोक्षेपि योगिनामपरोक्षज्ञानोपगमात् अपरोक्षेषु च शाब्दादिपरोक्षज्ञानोपगमात् ॥

---

न, तयोरविषयाकारत्वात् । द्विविधो हि ज्ञानधर्मो विषयावच्छेदो जातिभेदश्च । तच विषयावच्छेदभेदेन विषयस्य भेदस्थितिरभेदनिराकरणं वा, न तु द्वितीयेन, तस्य कारणभेदेनैवोपपत्तेः श्रुत्यनुमितिस्मृतिवत् । यथा च विषयभेदेपि कारणभेदादेवापरोक्षजातीयमिन्द्रियजं ज्ञानं तथा विषयाभेदेपि कारणभेदादेव परोक्षापरोक्षजातीयमिन्द्रियलिङ्गज्ञानं भवत् केन वार्यते । वारणे वा कार्यभेदं प्रति कारणभेदोऽप्रयोजकः स्यात्, तथा चाकस्मिकः स आपद्येत । जातिभेदोऽयं न तूपाधिभेद इति किमत्र निष्टङ्कं कारणमिति चेत्, अनुभव एव । न हि व्यवसायकाले पारोक्ष्यापारोक्ष्यस्मृतित्वानुभूतित्वानि परिस्फुरन्ति, असावग्निमानयमग्निमान् सोऽग्निमानिति स्फुरणात् । अनुव्यवसायकाले तु तत्प्रतिभासः, अमुमनुमिनोमि इमं पश्यामि तं स्मरामीत्युल्लेखात् । कथं तर्हि परोक्षोऽर्थः प्रत्यक्षश्चेति व्यवहारः । यथानुमितो दृष्टः स्मृत इति ।

शङ्क० टी० । परिहरति । न तयोरिति । परोक्षत्वापरोक्षत्वयोर्विषयाघटितत्वादित्यर्थः । तदेवोपपादयति । द्विविधो हीति । विषयावच्छेदो विषयनिबन्धनो यथा घटज्ञानपटज्ञानयोरुपाधिभेदः । जातिभेदः कारणभेदप्रयोज्यानुमितित्वसाक्षात्त्ववदित्यर्थः । तत्रेति । विषयकृते प्रतिभासभेदे विषयभेद एव तन्त्रम्, नतु जातिकृते, तत्र कारणस्यैव तन्त्रत्वात् । यथा तत्रैव विषये साक्षात्कारिज्ञानमानुमानिकं च ज्ञानं, तथा तत्रैव परोक्षमपरोक्षं चेत्यर्थः। विषयभेदेपि। घटपटादिलक्षणविषयभेदेपीत्यर्थः। विषयाभेदेपीति । वह्निरूपविषयाभेदेपीन्द्रियादपरोक्षं शब्दलिङ्गाभ्यां च परोक्षं ज्ञानं स्यादित्यर्थः । कारणेति । कारणभेदपरतन्त्रो यदि कार्यभेदो न स्यात्तदा कार्य्यवैजात्यमाकस्मिकं स्यादित्यर्थः । जातिभेद इति । परोक्षत्वापरोक्षत्वं च जातिभेदो न तु विषयकृत उपाधिभेद इत्यत्र किं निश्चायकमित्यर्थः । अनुभव एवेति । अनुव्यवसाय एवेत्यर्थः । तदेव विशदयति । न हीति । सोऽग्निमानिति स्मरणाकारं दर्शयित्वा त्रयाणामपि ज्ञानानामनुव्यवसायाकारं दर्शयति ॥

-

भगी० टी० । विषयावच्छेदो विषयघटित उपाधिभेदो यथा घटपटज्ञानयोरित्यर्थः । द्वितीयेन जातिभेदेनेत्यर्थः । अनीति । यथा परोक्षविषयत्वे तुल्येपि शाब्दत्वानुमितित्वस्मृतित्वरूपज्ञानगतज्ञानजातिभेदः कारणभेदादेव बौद्धानां तथायमपीत्यर्थः। यथा चेति। यदीदं वैरूप्यं विषयभेदमात्रप्रयोज्यं स्यात्तदा

भिन्नविषयकं ज्ञानद्वयमपरोक्षजातीयं न स्यादिति यथा तत्र विषयभेदाप्रयोजकत्वे कारणभेद एव प्रयोजकः, तथा विषयाभेदेऽपि वैजात्ये कारणभेदः प्रयोजक इत्यर्थः। आकस्मिक इति। इदं ज्ञानं यदि तद्विजातीयं न स्यात् तद्विरुद्धकारणजन्यं न स्यादित्यर्थः। उपाधिभेदो विषयभेदः। निष्टङ्को निश्चयः। अनुभवः, अनुव्यवसाय इत्यर्थः। न हीति। यदि हि तद्विषयधर्मः स्यात् तर्हि ज्ञानाभावेऽपि तद्विषयज्ञान एव भासेत, न च तथेत्यर्थः॥

---

रघु० टी०। विषयावच्छेदो विषयविषयकत्वं। जातिभेदो विषयास्पर्शी धर्मः, परोक्षत्वस्यानुभवत्वसङ्करापत्त्या साक्षात्कारीतरज्ञानत्वरूपत्वोपगमात् एकस्मिन्नेव विषये शब्दलिङ्गादिरूपकारणवैजात्यात् शाब्दानुमितित्वरूपज्ञानानां वैजात्यं भिन्नेऽपि च घटपटादाविन्द्रियनयनादिरूपकारणसाजात्ये साक्षात्कारित्वचाक्षुषत्वादिरूपं साजात्यमित्युभयतो व्यभिचारात् ज्ञानवैजात्यसाजात्ययोर्विषयभेदाभेदौ न तन्त्रं किन्त्वन्वयव्यतिरेकाभ्यां कारणवैजात्यसाजात्ये एवेत्याह। न तु द्वितीयेनेत्यादिना प्रघट्टकेन। उपाधिभेदो विषयभेदः। असाविति अयमग्निमानिति प्रत्यक्षानुमितिशाब्दीनां सोऽग्निमानिति च स्मृत्यनुमितिशाब्दीनां मितीनामुदयाच्छब्दभेदोऽप्यकिंचित्करः॥

---

यदप्यत्यन्तविलक्षणानामित्यादि, तदपि सन्दिग्धानैकान्तिकम्, विधिनापि तथाभूतेन सालक्षण्यव्यवहारस्य निर्वाहात्। तथा ह्ययं व्यवहारो न निर्निमित्तो नाप्यनेकनिमित्तो नाप्यनेकासंसर्गैकनिमित्तः, अतिप्रसङ्गात्। ततोऽनेकसंसर्गैकनिमित्तोऽयं परिशिष्यते, तथा च तादृशस्य विधिरूपत्वे को विरोधः, येन व्याप्तिः स्यात्, प्रत्युत निषेधरूपतायामेव विरोधो दर्शितः प्रागिति कृतं पल्लवसमुल्लासैः।

शङ्क० टी०। अनुमित्यादिद्वितीयं परानुमानं दूषयति। यदपीति। सन्दिग्धेति। सालक्षण्यव्यवहारहेतुत्वे हेतुत्वेऽप्यतद्व्यावृत्ति[1]रूपं मास्त्वित्यत्र विपक्षे बाधकाभावादित्यर्थः। अन्यथासिद्धिमुखेन सन्दिग्धानैकान्तिकत्वमेव स्फुटयति। विधिनापीति। विधिरत्र जातिरिति व्यवस्थापयति। तथा हीति। निर्निमित्तत्वे नित्यत्वप्रसङ्गः, अनेकनिमित्तत्वे चाननुगताकारत्वप्रसङ्गः, अनेकसंसर्गैकनिमित्तत्वेऽपि तथेत्यर्थः। तादृश इति[2] षष्ठी। व्याप्तिः स्यादिति। यदत्यन्तविलक्षणानां सालक्षण्यव्यवहारहेतुस्तदन्यव्यावृत्तिनिष्ठमिति तदुपदर्शिता व्याप्तिः सिद्ध्येदित्यर्थः। पूर्वोक्तं बाधं स्मारयति। प्रत्युतेति॥

---

(१) हेतुरप्यतद्व्यावृत्ति—पा० १ पु०।

(२) तादृश इति पाठमालम्ब्य व्याख्यातम्।

भगी० टी० । सन्दिग्धेति । विपक्षे बाधकाभावादित्यर्थः । तदेवाह । विधिनापीति । बाधकमाह । प्रत्युतेति ॥

रघु० टी० ।

**नापि प्रवृत्त्यादिव्यवहारनिर्वाहकत्वमपोहकल्पनायाः, अन्यावभासादन्यत्र प्रवृत्तावतिप्रसङ्गात् । अध्यवसायादयमदोष इति चेत् । अथ कोऽयमध्यवसायः । किमलीकस्य वस्तुधर्मतयावभासः, किं वा वस्त्वात्मकतया, ततो भेदाग्रहो वस्तुवासनासमुत्थं वेति ।**

शङ्क० टी० । अपोहे बाधकान्तरमाह । प्रवृत्त्यादीति[1] । वस्तु यदि विकल्पे न भासेत तदा तत्र प्रवृत्तिरेव ततो न स्यादेवेत्यर्थः । अन्यावभासादिति । व्यावृत्त्यवभासनाद्वस्तुनि वृत्तिर्न स्यादित्यर्थः । ज्ञानस्य स्वविषय एव प्रवर्त्तकत्वमन्यथा घटज्ञानात् पटेऽपि प्रवृत्तिः स्यादित्यर्थः ॥

भगी० टी० । सविकल्पकज्ञानस्य प्रवर्त्तकत्वमपि न स्यादित्यपोहे बाधकान्तरमाह । नापीति । ज्ञानस्य स्वविषय एव प्रवर्त्त-

(१) व्यावृत्त्यादीति क्वचित्पाठः ।

कत्वात्, अन्यथा गोज्ञानस्याश्वे प्रवृत्त्यापत्तेर्घटाद्यविषयकाद्विकल्पा त्तत्र प्रवृत्तिर्न स्यादित्याह। अन्येति॥

रघु० टी०। अपोहमात्रावलम्बी विकल्पो न स्वलक्षणं स्पृशतीति पक्षं निरस्यति। नाप्नोति। अपोहविशिष्टं स्वलक्षणमालम्बते विकल्प इति मतं पुनरग्रे निरसनीयम्॥

**न प्रथमः, विकल्पे तदनवभासनात्। न द्वितीयः, असाधारणविषयतया शब्दविकल्पयोरप्रवृत्तिप्रसङ्गात् तस्यासामयिकत्वात् तस्माद्विकल्पवस्तुनोश्चक्षूरसवत् सर्वथा विरोध एव, साधारणविषयत्वे तु वस्तुत्वाप्रतिभासनम्, तस्यासाधारणत्वात्।**

शङ्क० टी०। विकल्प इति। सविकल्पकत्वेन लक्ष्यते वस्तुधर्माग्रहादित्यर्थः। ग्रहे वा सिद्धं नः समीहितमिति भावः। अप्रवृत्तिप्रसङ्गात् अनुत्पत्तिप्रसङ्गात्। तस्येति। स्वलक्षणस्येत्यर्थः। आनन्त्यव्यभिचाराभ्यां स्वलक्षणे समयग्रहानुपपत्तेः विकल्पोऽप्यनुगतधर्मपुरस्कारेण स्यात्, न च स्वलक्षणं तथेति भावः। तस्मादिति। विकल्पस्यानुगतधर्मविषयत्वाद्वस्तुनश्चाननुगतत्वाद्विरोध एवेत्यर्थः। विरोधमेव दर्शयति। साधारणेति। तस्येति। वस्तुन इत्यर्थः। तथा च वस्त्वात्मतया भानमध्यवसाय इति यदुक्तं तदनुपपन्नमिति भावः॥

भगी० टी०। विकल्प इति। निर्विकल्पकमात्रवेद्यस्य वस्तुधर्मस्य सविकल्पकेऽनवभासादित्यर्थः। असाधारणेति। स्वलक्षणविषयतयेत्यर्थः। तस्येति। स्वलक्षणस्यासामयिकत्वात् सङ्केताविषयत्वात्, तत्र देशकालाननुगमे आनन्त्यव्यभिचाराभ्यां सङ्केतग्रहस्याशक्यत्वादित्यर्थः। तस्मादिति। तव मते देशकालाननुगतवस्तुभाने नाननुगतिभानं तद्भाने च नासाधारणवस्तुभानमित्यर्थः। अविरोधे वा पर्यवसितं विवादेनेति भावः। साधारणेति। नानादेशकालानुगतालीकविषयत्व इत्यर्थः। तस्य वस्तुत्वस्य स्वलक्षणात्मकस्येत्यर्थः॥

---

रघु० टी०। विकल्प इति। वस्तुधर्मस्य वस्त्वनतिरिक्तत्वाद्वस्त्वभाने वस्तुधर्मत्वभानासम्भवाच्च वस्त्वनवगाहिनो विकल्पस्य न वस्तुधर्मत्वावगाहित्वमिति। असाधारणेति। वस्तुनः स्वलक्षणस्यासाधारणत्वात्तदनतिरिक्तं तत्तादात्म्यमप्यसाधारणं तद्विषयत्वे चाऽसाधारणविषयत्वं स्यात्तथा च शब्दविकल्पयोरप्रवृत्तिः सङ्केतग्रहाधीनप्रवृत्तिको हि शब्दः सङ्केतश्चानुगतरूपमपुरस्कृत्य स्वलक्षणेष्वशक्यो ग्रहीतुमानन्त्यादिदिशिश्यानुपस्थितत्वाच्च। न चानुगतस्यासतो रूपस्य सता स्वलक्षणेन सम्बन्धोस्ति, विकल्पोपि चानुगतमसन्तं बाह्यमाकारमालम्ब्यैव प्रवर्त्तत इति। तस्य स्वलक्षणस्य। तस्य वस्तुत्वस्य वस्त्वनतिरेकिणः॥

---

न तृतीयः, प्रवृत्तिसामानाधिकरण्यनियमानुपपत्तेः, भेदाग्रहस्य सर्वत्र सुलभत्वात्। अतेभ्यो भेदो गृहीत इति चेत्, किमतेषु गृह्यमाणेष्वगृह्यमाणेषु वा। नाद्यः, अतेषामपि स्वलक्षणानां विकल्पागोचरत्वात्। न द्वितीयः, अविज्ञाता(१)वधेर्भेदस्याप्रथनात्, प्रथने वाऽध्यवसेयाभिमतस्वलक्षणादपि भेदो गृह्येत, अविशेषात्। गृहीतादग्रहो भेदस्यागृहीतेभ्यस्तु तद्ग्रह इति चेत्, यदि धर्मलक्षणो भेदः, तदा विपर्ययः। स्वरूपलक्षणश्चेत्, अविशेषात् सर्वतस्तद्ग्रहोऽन्यत्र तादात्म्यग्रहात्। निःस्वरूपत्वात्तस्य क्व स्वरूपलक्षणो भेद इति चेत्, अगृहीतादपि तथा स्यात्, अविशेषात्। निःस्वरूपमपि सस्वरूपमिव भिन्नमिव प्रथितमिति चेत्, तत् किमध्यवसेयापेक्षया सस्वरूपमिव न प्रथितम्, अध्यवसेयस्वरूपमिव वा स्फुरितम्। आद्ये अप्रतिपत्तिर्वा स्यात्, अविशेषात्, निःस्वरूपप्रतिपत्तिर्वा स्यात्, उभयथापि सामानाधिकरण्यप्रवृत्ती न स्याताम्। द्वितीयस्तु प्रागेव दूषितः।

शङ्क० टी०। प्रवृत्तीति। प्रवृत्तिनियमस्य शाब्दसामानाधिकरण्यनियमस्य चानुपपत्तेः भेदाग्रहात् कुत्र प्रवृत्तिः स्यात् कुत्र

(१) अनिर्णीता इति १ पु० पा०।

त्वायं गौरिति सामानाधिकरण्यं प्रतीयेत । अनियमे हेतुमाह । भेदेति । प्रवृत्तिसामानाधिकरण्यनियमो ज्ञानविषय एव प्रवृत्ति-रितिनियमो न स्यादित्येके । प्रवृत्त्या सह ज्ञानस्य सामानाधिकरण्य-नियमः समानविषयतानियमः स न स्यादित्यर्थ इत्यन्ये । ननु सामानाधिकरण्यनियमभङ्गस्तदा भवेद्यदि गोविकल्पादश्वे प्रवर्त्तेत, न चैवं, गोविकल्पो ह्यगोव्यावृत्तोयमित्याकारेण जायमानोश्वादि-व्यवच्छेदं कुर्वन् कथमश्वादिषु प्रवर्त्तयेदित्याशङ्कते । अतेभ्य इति । अतेभ्यः अश्वादिभ्यः । अतेषामिति । विकल्पागोचरत्वात्तेभ्यो भेदग्रहोऽनुपपन्न इत्यर्थः । अविज्ञातेति । प्रतियोग्यस्फुरणे भेदस्या-स्फुरणादित्यर्थः । ननु प्रतियोग्यस्फुरणेपि भेदस्फुरणमस्तु को दोष इत्यत आह । प्रथन इति । एवं सति गोस्वलक्षणादपि गोवि-कल्पो भेदं गृह्णीयादित्यप्रवृत्तिरेव स्यादित्यर्थः । अध्यवसेयेति । (सन्) स्वलक्षणो गोस्वलक्षणः । गृहीतादिति । ग्रहणं निर्विकल्पकं तदनन्तरं यत्सविकल्पकमुत्पद्यते, तद्ग्रहणसमानप्रतिभाससतः सारू-प्याद्गोलक्षणाद्भेदो न गृह्यते महिषादिभ्यस्तु भेदो गृह्यत एवेति गोविकल्पो गवि प्रवर्त्तयति । न तु महिषमातंगादावित्यर्थः । स्वलक्षणान्यव्यावृत्तिभ्यो ग्रहणविषयत्वसारूप्याद्भेदो न गृह्यत इति तत्र प्रवृत्तिरित्यन्ये । तन्न । उभयोर्ग्रहणविषयत्वस्य परेणानङ्गी-कारात् । विपर्यय इति । अपोहे तात्त्विकधर्माभावादित्यर्थः । यदा ग्रहणविषयीकृते धर्मिणि भेद एव गृह्यते न तु भेदाग्रह इत्यर्थः । स्वरूपेति । यथा महिषादिभ्यो भेदग्रहस्तथा गोस्व-लक्षणादपि स्यादेवापोहस्येवेत्यर्थः । अन्यत्रेति । तादात्म्यग्रह एव

भेदग्रहे प्रतिबन्धकः, स चापोहस्य केनापि वस्तुना नास्तीति सर्वत्र प्रवृत्तिरप्रवृत्तिर्वा स्यादित्यर्थः। तस्येति। अपोहस्येत्यर्थः। अगृहीतादपीति। तथा स्यादिति। भेदाग्रह एव स्यादित्यश्वादावपि स एव प्रवृत्तिप्रसङ्गः, न हि तदपेक्षयाऽपोहो न निःस्वरूप इत्यर्थः। निःस्वरूपमपीति। तथा चाश्वादितो भेदग्रह एवेति तत्र न प्रवर्त्तत इत्यर्थः। तत् किमिति। यथाऽश्वादेर्भिन्नमिव प्रथितं तथाध्यवसेयाद्गोस्वलक्षणादपि कथं न तथा प्रथेतेति तद्भेदग्रहात्तत्रापि न प्रवृत्तिः स्यादित्यर्थः। अध्यवसेयेति। स्वलक्षणस्वरूपमिव वेत्यर्थः। आद्य इति। सस्वरूपाप्रथा चाप्रतिपत्तौ निःस्वरूपप्रतिपत्तौ च स्यादित्यर्थः। उभयथापीति। तदप्रतिपत्तौ गौरयमिति सामानाधिकरण्यं प्रवृत्तिर्वा तत्र भवत्येवं निःस्वरूपप्रतिपत्तावपीत्यर्थः। प्रागेवेति। स्वलक्षणस्य विकल्पासंस्पर्शादित्युक्तत्वादित्यर्थः॥

---

भगी० टी०। प्रवृत्तीति। प्रवृत्तेः सामानाधिकरण्यं स्वविषयत्वमित्यर्थः। यद्वा उभयथेत्याद्यग्रिमग्रन्थोपरोधात् प्रवृत्तेः सामानाधिकरण्यस्य च शाब्दस्य गौरयमित्यादिरूपस्य नियमो न स्यादित्यर्थः। न च भेदाग्रहात्तदुपपत्तिरित्याह। भेदाग्रहस्येति। एतेभ्यो गोविषयकज्ञानजन्यप्रवृत्त्यविषयेभ्योऽश्वादिभ्यो गोविषयव्यावृत्तेर्भेदो गृहीत एवेत्यर्थः। अविज्ञातेति। यद्यपि प्रवृत्त्यविषयस्वलक्षणानां निर्विकल्पकान्तरवेद्यत्वमस्त्येव, तथापि भेदविषयज्ञानं प्रतियोग्यविषयं न भवतीत्यर्थः। विकल्पे स्वलक्षणानामनभ्युपगमात्। गृहीतादिति। गृहीतयोः स्वलक्षणान्य-

व्यावृत्त्योर्गृह्यमाणत्वरूपसारूप्याद्ग्रहो भेदस्याग्रहीतेभ्यश्च गृह्यमाणत्वागृह्यमाणत्वरूपवैधर्म्याद्भेदग्रह इत्यर्थः। यद्वीति। तात्त्विकभेदरूपधर्मवत्त्वं व्यावृत्तावलीकायां न सम्भवतीति कस्याग्रह इत्यर्थः। अविशेषादिति। व्यावृत्तिविषयाविषयस्वलक्षणयोर्द्वयोरप्यलीकाया व्यावृत्तेर्भेदो गृह्यत एवेत्यर्थः। अन्यचेति। तादात्म्यग्रहस्य प्रतिबन्धकत्वात्तत एव तद्भेदग्रह इत्यर्थः। अगृहीतादिति। गोत्वविकल्पाविषयादश्वादितोपि न तर्हि भेदग्रहः स्यादित्यर्थः। निःस्वरूपमपि। अलीकमपीत्यर्थः। भिन्नमिवेति। अश्वाद्यपेक्षयेत्यर्थः। तत् किमिति। अध्यवसेयं गोत्वस्वलक्षणं तदपेक्षया सत्स्वरूपमिव न प्रथितम्, तत्तदप्रथनात्तत्प्रथनेपि निःस्वरूपतया प्रथनादित्यर्थः। उभयथापीति। यद्यपि निःस्वरूपतया अलीके प्रवृत्तिर्नास्त्येव, स्वलक्षणे तु प्रवृत्तिस्तदपेक्षया निःस्वरूपतयालीकस्य भाने स्वरूपलक्षणभेदाग्रहादेव स्यात्तथाप्यश्वापेक्षया सत्स्वरूपतया भानमध्यवसेयापेक्षया तु निःस्वरूपतयेत्यत्रैव नियामकाभावादेकरूपतया भाने प्रवृत्तिनियमो न स्यादिति भावः। द्वितीयस्मिन्निति। स्वलक्षणस्य विकल्पाविषयत्वादेवेत्यर्थः॥

---

रघु० टी। प्रवृत्तीति। प्रवृत्तेः शाब्दस्य चेदं रजतमित्यादेः सामानाधिकरण्यस्य नियमानुपपत्तेरित्यर्थः। अतेभ्यः अध्यवसेयस्वलक्षणभिन्नस्वलक्षणेभ्यः। अतेषामपीति। न च निर्विकल्पकेनोपस्थितान्यतामि स्वलक्षणानीतिवाच्यम्, स्वलक्षणास्पर्शिना विकल्पेनापोहग्राहिणा च विकल्पेन तदुभयभेदस्य ग्रहीतुमशक्यत्वात् अनुप-

श्चितस्वलक्षणान्तरे प्रवृत्तेर्दुर्वारत्वात् इहोपवने सुरभाणि सहकार-फलानीत्यादिवाक्यान्नियतविषयेच्छानुत्पादाच्च । गृह्यमाणसा-धर्म्याद्गृह्यमाणवैधर्म्याच्च ज्ञायमानत्वादपोह्य गृह्यमाणेभ्यो भेदस्या-ग्रहो ग्रहश्चागृह्यमाणेभ्य इत्याशंकते । गृहीतादिति । निराकरोति । यदीति । धर्मोऽन्योन्याभावः । विपर्यय इति । ज्ञायमानस्यैव प्रति-योगिनोऽन्योन्याभावोगृह्यते नाज्ञायमानस्येत्यर्थः । ज्ञायमानत्वाच्च भेदाग्रहेऽनध्यवसेयस्वलक्षणानामपि तदानीं ज्ञायमानत्वात्तद्भेदा-ग्रहात्तत्रापि प्रवृत्तिः स्यादित्यपि द्रष्टव्यम् । स्वरूपमधिकरणस्वरूपम् । अविशेषादिति । स्वरूपस्य प्रतियोगिविशेषानियंत्रितत्वादनियम इत्यर्थः । तदात्मतयाप्रतीयमानमधिकरणं न तद्भेदव्यवहारहेतुरत आह । अन्यच्च तादात्म्यग्रहादिति । निर्द्धर्मके चालीके न वैधर्म्यस्य संभावना वैधर्म्यत्वेन च तस्य भानं प्रतियोग्यालंबनं स्वरूपभानं च साधारणमिति भावः । निःस्वरूपमपीति । अनध्यवसेयापेक्षया सस्वरूपमिव, स्वरूपं च भेदोऽतोभिन्नमिवेत्यर्थः । उभयथापि अज्ञाने निःस्वरूपताज्ञाने च । शाब्दसामानाधिकरण्यप्रवृत्ती नियते न स्यातां नह्यज्ञायमानभेदाग्रहः प्रवृत्त्यादिहेतुः इदं रजतमित्या-दिविकल्पस्य सत्त्व इवासत्वेपि स्वलक्षणेषु निर्विकल्पकात् प्रवृत्त्याद्या-पत्तेः निःस्वरूपतया ज्ञायमानभेदाग्रहेपि न तथा, इदमलीक-मितिज्ञानादपि तदापत्तेः । सस्वरूपभानमितिकोर्थः किं स्वरूप-वत्तामात्रभानं अतत्स्वरूपवत्तामात्रभानं वा । नाद्यः किंचिदि-तरापेक्षमिति कुतोनियमः । द्वितीये चातत्स्वरूपतया भासमाने कथमतेभ्यो भेदग्रहः शब्दादितस्त्वज्ञायमाने विकल्पः कुतोनियमा-

दृष्ध्यवसेयापेचया निःस्वरूपमनध्यवसेयापेचया च स्वरूपमवगाहते अपोहम्। द्वितीयस्त्विति। स्वलक्षणस्य विकल्पविषयत्वायोगात्॥

---

नापि चतुर्थः नीलानुभववासनासमुत्थस्य पीतानुभवस्य नीले प्रवर्त्तकत्वप्रसङ्गात्। नानुभवः प्रवर्त्तकः अपि तु विकल्पः स च यस्मात् तस्यैव विषय इति चेत्। यस्मादिति साक्षात् परम्परया वा। प्रथमे शाब्दलैङ्गिकज्ञानानामप्रवर्त्तकत्वप्रसङ्गः। द्वितीये तु स एवातिप्रसङ्गः।

प्रङ्क० टी०। वस्तुवासनासमुत्पन्नत्वं वेति पचं दूषयति। नापीति। स्ववासनापरिपाकवशादुपजायमानैव सा बुद्धिरपश्यन्त्यपि बाह्यं बाह्ये प्रवृत्तिमातनोतीति ज्ञानश्रिया यत्समाहितं तदपि न सम्भवतीत्यर्थः। अनुभवरूपा वासना अनुभववासना तन्मते तदतिरिक्तस्थायिसंस्काराभावात्। तथा च पीतानुभवोपि नीले प्रवर्त्तयेदित्याह। नीलानुभवेति। पीतानुभवस्यापि नीलानुभवसमुत्थत्वादित्यर्थः। नीलानुभवो नीलनिर्विकल्पकं, तच्च न प्रवर्त्तकमपि तु नीलसविकल्पकं, तच्च नीलानुभवेनैव जनितमतस्तद्विषये नीलस्वलचण एव प्रवर्त्तयतीत्याह। नानुभव इति। शाब्देति। शाब्दलैङ्गिकविकल्पानां साचान्निर्विकल्पकाजन्यत्वेनाप्रवर्त्तकत्वप्रसङ्ग इत्यर्थः। स एवेति। नीलानुभवोपि

परम्परया पीतसविकल्पकं जनयतीति तथापि नीले प्रवर्त्तकत्व-प्रसङ्ग इत्यर्थः ॥

---

भगी० टी० । वासना संस्कारः स्थायी तन्मते नास्तीति तज्जन्यज्ञानान्तरमेव वासना । ततो नीलज्ञानानन्तरपीतज्ञानात् सर्वसिद्धात् नीले प्रवृत्तिप्रसङ्ग इत्यर्थः । ननु निर्विकल्पकं न प्रवर्त्तकम् अपि तु विकल्पः । स च यस्मादनुभवादुत्पन्नस्तद्विषये प्रवर्त्तयतीति नियम इत्याह । नानुभव इति । शाब्देति । परोक्षविकल्पानां व्याप्तिसङ्केतविकल्पजन्यत्वात् तस्य च स्वलक्षणा-विषयत्वात्तत्र प्रवर्त्तकत्वं न स्यात् साक्षादनुभवाजन्यत्वादित्यर्थः ॥

---

रघु० टी० । वस्तुवासना वस्तुग्रहजन्यः संस्कारः स चातीन्द्रियो वा तदुत्तरभाविज्ञानसन्तानो वा । नाद्यो भवद्भिस्तदनभ्युपगमात् । न द्वितीयः नीलग्रहजन्यपीतानुभवजनितपीतविकल्पात् नीले प्रवृत्तिप्रसङ्गात् । अथ वस्तुनो ग्रहणमेव वास्यते अनेनेति व्युत्पत्त्या वासनेति चेत्तज्जन्यो वस्तुग्रहणसमुत्थत्वेन तादृशविकल्पत्वेन वा । आद्ये नीलेति । द्वितीयं शङ्कते । नानुभव इति । यस्मात् अनुभवात् । तस्यैव विषये तद्विषयसान्तानिके । विकल्पजनकानुभवविषयस्य चिरातीतत्वात् । प्रवर्त्तक इत्यनुपपद्यते । निर्विकल्पकपृष्ठभाविनः सविकल्पकस्य साक्षात्कारोपसाक्षस्य साक्षादनुभवजन्यत्वात् तमुपेक्ष्याह । शाब्देति । तेषां चिरमतीतेऽनुभवे सपरिकरशब्दलिङ्गज्ञानजन्यत्वात् ॥

---

**अनुभवव्यापारपुरस्कारान्नियम इति चेत्। कः पुरस्कारार्थः। न तावदनुभवैकविषयत्वं विकल्पेन तदसंस्पर्शात्। नाप्यनुभवत्वारोपः स्वात्मनि कल्पनापोढाभ्रान्तत्वात् विषये चाभिलापसंसर्गयोग्यप्रतिभासत्वात् तथानवभासे वा विकल्पत्वव्याघातात् विशेषोपलब्धौ चारोपासम्भवात्।**

शङ्क० टी०। ननु नीलानुभवस्य व्यापारं नीलविकल्प एव पुरस्करोति, न तु पीतविकल्पक इति न तस्य नीले प्रवर्त्तकत्वं, किन्तु नीलविकल्पस्यैव तत्र प्रवर्त्तकत्वमित्याह। अनुभवेति। व्यापारपुरस्कारस्य जन्यजनकभावव्यवस्थितये त्वयापि वाच्य एवेति भावः। तदसंस्पर्शादिति। अनुभवविषयस्य स्वलक्षणस्यासंस्पर्शादित्यर्थः। नन्वारोपितनीलानुभवात्मा नीलविकल्पो नीले प्रवर्त्तयति, पीतविकल्पे तु वैधर्म्यान्नीलानुभवत्वानारोपादित्यत आह। नापीति। अनुभवत्वं विकल्पस्वरूपे वा समारोप्यते तद्विषये वा। नाद्य इत्याह। स्वात्मनीति। कल्पनापोढत्वेन कल्पनाव्यावृत्तत्वेनाभ्रान्तत्वात्। न हि विकल्पः स्वात्मनि वस्तुभूते कल्पना, किं तु विषयेऽलीके, तथा च कथमारोप इत्यर्थः। अन्त्य आह। विषये चेति। अभिलापसंसर्गयोग्यो विकल्प[१]-विषयोऽलीकं तत्र त्वारोपो न सम्भवति, विशेषदर्शनप्रतिहतत्वादित्यर्थः। ननु मास्तु विकल्पोऽभिलापसंसर्गयोग्यप्रतिभास इत्यत

(१) संसर्गयोग्यप्रतिभासत्वाद्विकल्प—पा० २ पु०।

आह । तथेति । ननु भवत्वभिलापसंसर्गयोग्यप्रतिभासस्याप्यारोप उपपद्यतामत आह । विशेषेति ॥

---

भगी० टी० । ननु साक्षात् परम्परयेति वा न विवक्षितम् किन्तु यो विकल्पो यस्यानुभवस्य व्यापारं पुरस्करोति स तस्यैव विषये प्रवर्त्तयति, पुरस्कारश्च उपाधिरूपं धर्मान्तरमेव प्रवृत्त्यन्यथानुपपत्त्या कल्प्यत इत्याह । अनुभवेति । तदसंस्पर्शादिति । अनुभवविषयस्वलक्षणाविषयीकरणादित्यर्थः । आरोपः किं विकल्पात्मनि तद्विषये वा । आद्ये आत्मनीति । विकल्पस्य स्वप्रकाशतया विशेषदर्शनान्नारोप इत्यर्थः । अन्ये विषयेति । तथाविधस्यालीकमेवेत्यलीकत्वेन गृह्यमाणे विशेषदर्शनान्नारोप इत्यर्थः । न चैतदसिद्धमित्यत आह । तथेति ॥

---

रघु० टी० । यो विकल्पो यस्यानुभवस्य व्यापारं पुरस्कुरुते स तस्य विषये प्रवर्त्तयतीति नातिप्रसङ्ग इत्याशङ्कते । अनुभवेति । व्यापारो धर्मः । स च स्वलक्षणविषयत्वमनुभवत्वं प्रामाण्यं भेदानवगाहित्वं, तच्च स्वरूपतो विषयतश्च, आद्यमात्मनो अनुभवभेदानवगाहित्वं, द्वितीयं स्वविषयस्यानुभवविषयभेदानवगाहित्वं अपारोक्ष्यं स्वरूपविषयत्वं सादृश्यं च स्वलक्षणालीकयोरेकरूपशालित्वं पुरस्कारश्चानुभवत्वप्रामाण्ययोरारोपोऽपरेषामाश्रयत्वम् । सर्वाणि दूषयितुं पृच्छति । क इति । पुरस्कारार्थः पुरस्कारान्तार्थः । तदसंस्पर्शात् अनुभवविषयासंस्पर्शात् । अनुभवत्वारोपः

स्वात्मनि स्वविषये वा। आद्यस्यासम्भवमाह। स्वात्मनीति। कल्पनापोढः कल्पनाव्यावृत्तः प्रमेति यावत्। अतोऽभ्रान्तत्वात् अनारोपत्वात् ग्राह्यामिव भवतामपि सर्वज्ञानानां[१] स्वात्मन्यनुभवरूपत्वात्। यद्वा कल्पनापोढत्वात् असत्ख्यातिव्यावर्त्तकत्वादिति परमतेन। अभ्रान्तत्वादिति स्वमतेन। अस्वप्रकाशेपि तदुच्यते। द्वितीयस्यापि तमाह। विषयेति। अभिलापसंसर्गयोग्यं वाह्यमलीकं। मा भवतु वा विकल्पः आत्मन्यप्यनुभवरूपः सम्भवतु वा अनुभवत्वारोपस्तत्र तद्विषये वा, तथापि नियतप्रवृत्त्यनुपपत्तिः अनुभवत्वस्य सर्वनिर्विकल्पकसाधारणत्वात्, तच्च नीलाद्यनुभवत्वं तु नीलाद्यग्राहिणा विकल्पेन ग्रहीतुमशक्यमिति॥

---

**नापि तद्धर्मप्रामाण्यारोपः तस्यानियतविषयत्वे प्रवृत्तिनियमानुपपत्तेः। परमार्थसद्विषयत्वे च तस्य विकल्पसंसर्गप्रसङ्गात्। अलीकविषयत्वे चाप्रवृत्तेः। अलीकस्यानलीकतया स्फुरणं तु निषिद्धम्।**

शङ्क० टी०। नन्वनुभवस्य प्रामाण्यं विकल्पे समारोप्यते, तेनानुभवविषये विकल्पः प्रवर्त्तयतीति नातिप्रसङ्ग इत्यत आह। नापीति। प्रामाण्यसामान्यमारोप्यते विषयविशेषोपहितं वा प्रामाण्यम्। आद्ये तस्येति। विषयनियमाभावात् प्रवृत्तिनियमानुपपत्तेरित्यर्थः। द्वितीये परमार्थेति। प्रामाण्ये ह्युपधायकं

---

(१) सर्वजनानामिति २ पु० पा०।

वस्तु वाच्यं तच्च न विकल्पे भासत इत्यर्थः । नन्वलीकमेवोपधायकमस्तु । तथा च तत्प्रामाण्यमेव तत्रारोप्यतामित्यत आह । अलीकेति । ननु विकल्पविषयस्यालीकस्यानलीकतया भानं प्रवर्त्तकं स्यादित्यत आह । अलीकस्येति । अनलीकतया पारमार्थिकतयाऽलीकस्य भानं तदा भवेद्यदि परमार्थसद्विषयो विकल्पः स्यात्, तच्च त्वया निषिद्धमित्यर्थः । यदाऽलीकस्य तादृप्येणैव प्रतीतेः कथमनलीकतया भानं स्याद्विशेषदर्शनप्रतिहतत्वादित्यर्थः ॥

---

भगी० टी० । तद्धर्म्मः तस्यानुभवस्य धर्मः प्रामाण्यम् तत्रारोपो विकल्प आरोप इत्यर्थः । तदपि यत्र क्वचिदारोप्यते नियते वा विषये । आद्ये तस्येति । तस्य प्रामाण्यस्य । द्वितीये परमार्थसति विषये आरोपोऽलीके वा । आद्ये परमार्थेति । अन्त्ये अलीकेति । अलीके विषये तत्प्रामाण्यमेवेति प्रवृत्तिर्न्न स्यादित्यर्थः । न चालीकस्यानलीकतया भानं सम्भवतीत्याह । अलीकस्येति ॥

---

रघु० टी० । तद्धर्म्मः तस्यानुभवस्य धर्म्मः प्रामाण्यं प्रामाण्यापोहो वा तत्तत्त्वलक्षणात्मकविषयगर्भं वा तदन्यापोहरूपविषयघटितं वा । आद्ये तस्येति । तस्य प्रामाण्यस्य । अनियतविषयत्वे विषयानियमितत्वे विषयाघटितत्व इति यावत् । प्रवृत्तिनियमानुपपत्तेः गवान्यापोहस्य सकलगोसाधारण्यवत् प्रामाण्यापोहस्य सकलानुभवसाधारण्यात् । तदन्यापोहस्य तद्धर्म्मत्वानभ्युपगमे तु न तथा तद्धर्म्मवत्त्वारोपत्वसम्भवः । तदन्यापोहस्तत्स्वरूपमेवेति चेत् । न ।

अनुभवाग्राहिणो विकल्पस्य तत्स्वरूपतदन्यापोहग्राहित्वायोगात् । द्वितीये परमार्थेति । परमार्थसद्विषयत्वे परमार्थसत्स्वलक्षणात्मक-विषयघटितत्वे । तस्य स्वलक्षणस्य । विकल्पेति । तदग्राहिणस्तद्-घटितप्रामाण्यग्राहित्वायोगादिति भावः । तृतीये अलीकेति । अलीकविषयत्वे अलीकरूपविषयघटितत्वे । असत्त्वादलीकस्यानु-भवागोचरत्वाच्च तद्घटितप्रामाण्यस्यानुभवाधर्म्मत्वादसद्भूततया विरो-धेन दर्शयत्वाच्च न तदारोपात्प्रवृत्त्युपपत्तिरित्यर्थः । असतः सत्त्वा-रोपात्खण्डशः प्रसिद्धाऽऽरोप इत्यपि नास्तीत्याह । अलीकस्येति ॥

---

नाप्यनुभवात् स्वात्मनो भेदाग्रह एव तद्व्यापार-पुरस्कारः स्वरूपस्य स्वतोऽवगतेः विषयभेदस्य च प्रागेव निरूपणात् । नाप्यपारोक्ष्यम् तस्यापि स्वात्मनि सर्वज्ञानसाधारणत्वात् । विषये च विकल्पस्य तद-भावात् । तथाभावेऽप्यन्यत्र नियतप्रवृत्त्यनुपपत्तेः ।

शङ्क० टी० । ननु नीलानुभवनीलविकल्पयोर्भेदो न गृह्यत एव तावतैव नीलविकल्पो नीलानुभवविषये नीले प्रवर्त्तयतीत्यत आह । नाप्यनुभवादिति । अत्र ज्ञानयोर्भेदाग्रहस्तद्विषययोर्वा । आद्य आह । स्वरूपस्येति । विकल्पस्य स्वप्रकाशतयाऽनुभवभेदेनैव ग्रहादित्यर्थः । अन्त्य आह । विषयेति । अलीके ग्राह्यविषये पारमार्थिकभेदासम्भवादित्यादिना दूषितत्वादित्यर्थः । ननु यथा-नुभवेऽपारोक्ष्यं तथा विकल्पेपीत्येव कृत्वा विकल्पोनुभवविषये

प्रवर्त्तयतीत्यत आह। नापीति। अनुभवव्यापारपुरस्कार इत्यनुषज्यते। अपारोक्ष्यमात्रस्य[१] प्रयोजकत्वे स्वात्मनि सर्वविकल्पानामपरोक्षतया सर्वं ज्ञानं सर्वत्र प्रवर्तयेदित्याह। तस्येति। ननु यथाऽनुभवस्य विषयोऽपरोक्षस्तथा विकल्पस्यापीति प्रवृत्तिनियमः स्यादित्यत आह। विषये चेति। न ह्यलीकमपरोक्षं नामेत्यर्थः। अभ्युपेत्याह। तथेति। नैतत् प्रवृत्तिनियामकमित्यर्थः॥

---

भगी० टी०। स्वात्मनो विकल्पात्मन इत्यर्थः। यस्य यदनुभवात् स्वरूपभेदो न गृह्यते तत्राह। स्वरूपस्येति। बौद्धानां स्वप्रकाशमर्य्यादया स्वरूपभेदस्य स्वतएव ग्रहादित्यर्थः। अथ विषयतः स न गृह्यते तत्राह। विषयेति। अलीकस्य विषयस्य पारमार्थिकभेदासम्भवादित्यादिना तन्निरासादित्यर्थः। ननु विकल्पोऽपरोक्षरूप आत्मांशेऽपरोक्षरूपानुभवविषये प्रवर्त्तयतीति नियमः स्यादित्यत आह। नापीति। अनुभवव्यापारपुरस्कार इत्यनुषज्यते। आत्मनि सर्वमेव ज्ञानमपरोक्षमतस्तेन भेदाग्रहोऽप्यन्यत्रास्तीति प्रवृत्त्यनियमस्तदवस्थ एवेत्यर्थः। ननु येनानुभवेन विकल्पस्य विषये साक्षात्त्वमाधीयते तद्विषयेऽनुभवः प्रवर्त्तयतीत्यत आह। विषये चेति। साक्षात्त्वस्य विषयधर्म्मत्वाभावादनुभवेन तन्निष्ठस्यानाधानादित्यर्थः। तथाभावेपीति। साक्षात्त्वस्य विषयधर्म्मत्वेपि नान्यज्ञानादन्यत्र प्रवृत्तिः प्रवृत्तौ वा न स्वलक्षण एव प्रवर्त्तेत प्रवृत्तौ वा कदाचिदलीकेपि प्रवृत्तिप्रसङ्ग इत्यर्थः॥

---

(१) अपरोक्ष—पा० २ पु०।

रघु॰ टी॰। भेदाग्रहो भेदग्राहित्वाभाववत्त्वम्। स्वरूपस्येति। अनुभवात्मनो भेदस्य स्वप्रकाशतया स्वतएवावगमादित्यर्थः। अनुभवाग्राहकत्वादिकल्पेन तद्भेदाग्रहणं तु स्वलक्षणान्तरानुभवसाधारणम्। अपारोक्ष्यं अपारोक्ष्यवत्त्वम्॥

---

नापि विषयसारूप्यं। तदभावात्। का हि परमार्थसदलीकयोः समानरूपता नाम। यदि रूपशब्दो धर्म्मिवाचकः समानशब्दश्चैकपर्य्यायः क्वार्थसङ्गतिः प्रकृते। यदि वा रूपं धर्म्मः समानश्चैको वैकजातीयो वेति तथापि क्वार्थसङ्गतिः प्रकृते। अतद्व्यावृत्तिरिति चेत्। न। तस्य चालीकानलीकनिष्ठतया एकत्वैकजातीयत्वयोरभावात्। आभिमानिकोयं सारूप्यव्यवहारो न पारमार्थिक इति चेत्। न। अभिमानस्यैव चिन्त्यमानत्वात्। न हि चिन्तितप्रकारान् परिभूयापरोऽभिमानो नाम।

शङ्क॰ टी॰। विषयेति। अनुभवविषयविकल्पविषययोः सारूप्यमपि नानुभवव्यापारपुरस्कार इत्यर्थः। सारूप्याभावमेव दर्शयति। का हीति। प्रमेयत्वादिनापि सा दुर्लभेत्यर्थः। न हि वस्त्ववस्तुनोरेको धर्मो नापि वस्त्ववस्तुनोरेक एकजातीयो वा धर्म इत्याह। यदीति। उभयत्रानभ्युपगमादेवासंगतेरिति

भावः। नन्वतद्व्यावृत्तिरेको धर्म उभयसाधारण इति कथं सार्थ-सङ्गतिरित्याह। अतद्व्यावृत्तिरिति। अतद्व्यावृत्तिरेको वा एक-जातीयो वा धर्म इत्यनुषज्यते। अत्राप्यनभ्युपगममाह तस्येति। अतद्व्यावृत्तिरूपसारूप्यस्येत्यर्थः। तस्या इति पाठे व्यावृत्तेरित्यर्थः। अलीकनिष्ठतया नैकत्वमनलीकनिष्ठतया च नैकजातीयत्वमिति साध्यद्वये हेतुद्वयमेतत्। अलीकानलीकनिष्ठतयेत्येक एव वा हेतुरुभयत्र। अभिमानस्यैवेति। अभिमान एव नानाप्रकारेण विकल्पितो, न तु तेन प्रवृत्तिनियम उपपादित इत्यर्थः॥

---

भगी॰ टी॰। ननु सविकल्पकविषयालीकेन निर्विकल्पक-विषयस्वलक्षणस्य सारूप्यं तद्व्यापारपुरस्कारः स्वलक्षणे प्रवर्त्तक-मित्यत आह। नापीति। केति। न हि स्वलक्षणालीके कस्यचिदेकस्य धर्माविव्यर्थः। तथापीति। न हि तयोरेक एकजातीयो वा धर्मः समस्तीत्यर्थः। ननु चातद्व्यावृत्तिस्तयोः सारूप्यं स्यात् व्यावृत्तेरलीकतयाऽलीकधर्मतायां विरोधाभावा-दित्याह। अतदिति। अतद्व्यावृत्तिर्यदि वस्तुधर्मस्तदा नालीका तथात्वे वाऽलीकधर्मत्वमित्याह। तस्या इति। अतद्व्यावृत्तेरित्यर्थः। तस्येति पाठे सारूप्यस्येत्यर्थः। अलीकानलीकतयेति हेतुद्वयम्। न हीति। तत्रानुपपत्तिरुक्तैवेति भावः॥

---

रघु॰ टी॰। विषयसारूप्यं सरूपविषयकत्वशालित्वं। न हि सदसतोः कश्चिदेको धर्मी धर्मो वा एकः एकजातीयो वा

अभ्युपेयते इत्याह। यदीत्यादिना। असति विधेर्विरोधाद्विधिरेव सदसत्साधारणो नेष्यते निषेधः पुनरिष्यते एवेत्याशङ्कते। अतद्व्यावृत्तिरिति। यद्यपि यत्किञ्चिदतद्व्यावृत्तिरतस्मिन्नपि, यावदतद्व्यावृत्तिस्तु नालीकेपि। तथापि परमार्थसद्यावदतद्व्यावृत्तिर्ग्राह्येत्य-दोषः। निराकरोति। तस्या इति। तस्येति पाठे तदा धर्म्म-परामर्षः। अलीकनिष्ठतयाऽनलीकनिष्ठतया च अलीकानलीक-निष्ठयोरसत्सद्रूपयोरेकत्वैकजातीयत्वयोरभावात्। सदसतोः संसर्गान-भ्युपगमादित्यर्थः। नीलविकल्पविषयस्यापि व्यावृत्तेरपीतयाव-द्वस्तुव्यावृत्तत्वान्नीलविकल्पस्यापि पीते प्रवर्त्तकत्वप्रसङ्गः। उक्तं च अनुगततत्त्वपदार्थानभ्युपगमे न शक्यमतद्व्यावृत्तिस्वरूपनिरू-पणमिति।

---

स्वभावादेव कश्चिद्विकल्पः कस्मिंश्चिदेवास्फुरितेपि प्रवर्त्तयति। किमत्र क्रियताम्। स चास्य स्वभावभेदः स्वकारणादेवायातः। तत्र कः पर्य्यनुयोज्यतामिति चेत्। तत् किमप्रत्यासन्न एव विकल्पस्तत्र प्रवर्त्तयति प्रत्यासत्त्यन्तराभावात् स्वभावप्रत्यासन्नो वा व्यवहृति-रेव वा प्रत्यासत्तिः। न प्रथमः अतिप्रसङ्गात्। द्वितीये तु स्वभावेनोत्तरं स्यात् किन्तु तदेव स्फुरणम्। न हि व्यवहारे प्रवर्त्तयितव्ये स्वभावप्रत्यासत्तिमवधूय ज्ञान-ज्ञेययोरपरः कश्चिद्विषयविषयिभावः। सदसदनिर्वच-

नीयार्थस्यातिवादिभिरपि स्वभावप्रत्यासत्तेरवर्ज्जनीयत्वादिति वक्ष्यमाणत्वात् । तृतीये तु व्यक्तमात्माश्रयः (१)स्वव्यवहारनियमं प्रत्येव निमित्ता(२)नुसरणात् ।

शङ्क० टी० । प्रवृत्तिनियामकं ज्ञानश्रियो बौद्धसर्वस्वमुत्थापयति । स्वभावादिति । तदुक्तं ज्ञानश्रिया नियतशक्तयो हि भावाः प्रमाणपरिनिश्चितस्वभावा न शक्तिसाङ्कर्य्यपर्य्यनुयोगभाजः कारणशक्तेरसदुत्पत्तिनियमादिति । ननु स्वभावभेद एव कथ(मिदृश)मित्यत आह । स चेति । स्वभावप्रत्यासत्तेरभावा?दित्यपि सम्बद्धम् । स्वभावप्रत्यासत्तिरेव ज्ञानविषययोर्विषयविषयिभावः । सत्त्वञ्च ? इति सिद्धा विकल्पस्य वस्तुविषयतेति सिद्धं नः समीहितमित्याह । द्वितीये त्विति । न हीति । ननु तद्गोचरव्यवहारजनकत्वमेव ज्ञानस्य विषयप्रत्यासत्तिरित्यत आह । तृतीये त्विति ॥

---

भगी० टी० । अस्फुरितेपीति । अविषयेपीत्यर्थः । किन्त्विति । स्वभावप्रत्यासत्तिवादेऽस्मत्पक्षप्रवेश एवेत्यर्थः ॥

---

रघु० टी० । शङ्कते । स्वभावादिति । निराकरोति । तत्किमित्यादिना । एकस्मिन्नेव विषये बुद्धीनामिच्छानां कृतीनां चोत्पादात्तत्तद्विकल्पस्य चाननुगतत्वादननुगतकार्यस्य चानुगतकारण

---

(१) अव्यवहार इति २ पु० पा० ।

(२) निबन्धानुस० इति २ पु० पा० ।

प्रयोज्यत्वादतिरिक्तस्वभावभेदे प्रमाणाभावान्न तस्याप्यनुगतस्यानुगत-कारणमन्तरेणासम्भवादनुभूयमानस्य चासम्भवद्बाधकस्य विकल्पाना-मिच्छादिविषयविषयकत्वस्यापलपितुमशक्यत्वात्समानविषयत्वेनैव प्रवृत्तिविकल्पयोः कार्यकारणभाव इति सिद्धान्ततात्पर्यसङ्क्षेपः ॥

---

**कारणशक्तेरसदुत्पत्तिवन्नियम इति चेत्। सत्यम्। एतच्चिन्तनीयं कारणशक्त्यापि नियतजातिनियतया भवितव्यम्। अन्यथा ज्वलनविकल्पाज्जलेपि प्रवृत्ति-प्रसङ्गात्।**

शङ्क० टी०। ननु यथा पूर्वमसत्त्वाविशेषेपि दण्डाद् घट एव जायते न तु पटस्तथा गोविकल्पाद् गव्येव प्रवृत्तिर्नाश्व इत्याह। कारणेति। यथा दण्डत्वावच्छिन्नस्यान्वयव्यतिरेकौ घटत्वावच्छिन्नं कार्यमनुविधत्ते तथा गवि प्रवृत्तिं प्रति विकल्पस्य जातिप्रति-नियमस्त्वन्मते दुरुपपाद इत्याह। कारणशक्त्यापीति। नियामक-मन्तरेण स एवातिप्रसङ्ग इत्याह। अन्यथेति।

---

भगी० टी०। ननु यथा कारणं दण्डादि कार्येण घटादिना ऽसम्बद्धत्वाविशेषेऽपि नियतमेव कार्यं जनयति स्वभावात् तथा ज्ञानमपि नियतविषये प्रवृत्तिहेतुरित्याह। कारणेति। स्वभाव-नियमोऽन्वयव्यतिरेकावच्छेदके नियतरूपावच्छेदे सत्येव स्यादिति तद्विषयज्ञानत्वेनैव प्रवर्त्तकत्वं वाच्यमित्याह। कारणशक्तेति।

जातिपदमनुगतधर्म्मपरम्। अन्यथेति। अन्वयव्यतिरेकावच्छेदक-रूपापुरस्कार इत्यर्थः॥

---

रघु॰ टी॰। नियतजातिनियतयेति। अनुगतरूपावच्छिन्न-येत्यर्थः। अनुगतकार्यस्यानुगतकारणनियम्यत्वात्॥

---

दाहादिसमर्थाकारविकल्पजातीयं तात्त्विके वह्नौ प्रवर्त्तयतीति जातिर्वोपाधिर्वा नियामक इति चेत्। न तर्हि रत्नमरीचिनिचये ततः प्रवर्त्तेत। तज्जातीयस्य दहन एव प्रवर्त्तनसामर्थ्यात्। ताद्रूप्येण तस्यैव प्रथना-दिति चेत्। प्रथताम्। न तु तस्य प्रवर्त्तनयोग्यता तत्र प्रथननियता वह्निस्वलक्षणे वह्निविकल्पादप्रवृत्ति-प्रसङ्गात्। स्वीकुरु वा तस्यापि तत्र स्फुरणं परिहर वा वह्निविकल्पाद्वह्नौ प्रवृत्तिमिति।

शङ्क॰ टी॰। ननु वह्निरर्थक्रियाकारविकल्पत्वावच्छिन्नमेव वह्नौ प्रवर्त्तकम्। तादृशविकल्पत्वं च जातिरुपाधिर्वेत्यन्यदेतत्। न हि तत्रापि जात्यैव कारणताऽवच्छिद्यते कालाकाशादीनां प्रतिनियतकार्ये प्रत्यकारणतापत्तेरित्याशङ्कते। दाहेति। तत इति। वह्निविकल्पादित्यर्थः। न हि बीजादङ्कुरसम्बन्धात् कुञ्जरोत्पत्तिरिति भावः। एवं रत्ननिचयविकल्पात् वह्नि-स्वलक्षणेपि प्रवृत्तिर्न स्यादित्यपि द्रष्टव्यम्। ताद्रूप्येणेति।

वह्नित्वेन तस्यैव रत्ननिचयस्यैव । प्रथतामिति । लभ्यते प्रवृत्ति-विषयप्रथनमतन्त्रमित्यर्थः । वह्निविकल्पादिति । वह्निस्वलक्षण-प्रथनस्य त्वया तत्रानङ्गीकारादङ्गीकारे वा सिद्धं नः समीहित-मित्यर्थः । स्वीकुरु वेति । सेयमुभयतःपाशा रज्जुरित्यर्थः ॥

---

भगी० टी० । ननु दाहादिसमर्थत्वेन ज्ञाते प्रवृत्तिर्नान्यथेति नियमः स्यात् परमेवं मरीचिनिचयोपि तथात्वेन ज्ञात एवेत्याह । तादूप्येणेति । यद्येवं तदा लभ्यते स्वलक्षणाविषयकाद्विकल्पात्तत्र न प्रवर्त्ततेत्याह । न त्विति । तस्यापि वह्निस्वलक्षणस्यापि । तत्र वह्निविकल्पे । अवह्नौ रत्नमरीचिनिचय इत्यर्थः ॥

---

रघु० टी० । विनापि स्वलक्षणविषयत्वमाकारविशेषादेव विकल्पानां स्वलक्षणविशेषे प्रवर्त्तकत्वान्नातिप्रसङ्ग इत्याशङ्कते । दाहादीति । आदिपदात् पाकादिपरिग्रहः । दाहादिसामर्थ्यं दाहाद्यसमर्थव्यावृत्तिर्वह्नित्वम् । तत्समर्थेति च तत्तत्फलार्थिन-मपेक्ष्य । सत्यपि वह्निरयमिति विकल्पे दाहादिसमर्थोयमिति विकल्पं विना दाहार्थिनोऽप्रवृत्तेरावश्यकत्वात्स एव प्रवर्त्तक इति वाद्यभिप्रायः। तदाकारता च बौद्धानां मते ज्ञानगत आकारभेदो जातिरूपोऽन्येषां तद्विषयत्वम् । निराकरोति । न तर्हीति । ततो वह्निविकल्पात् । तत्रापि तस्येव प्रवर्त्तकत्वे मरीचिविकल्पात्तदर्थी तत्र प्रवर्त्तेत । तस्यापीतिपक्षेऽनियमो मिथो व्यभिचारश्च । एवं मरीचिनिषयविकल्पात्तदर्थी वह्निस्वलक्षणे न प्रवर्त्ततेति। प्रथता-

मिति। तदिति विपरिणतेनान्वयः। यदृच्छया चेदम्। मरीचि-स्वलक्षणानां विकल्पविषयतायाः परैरनभ्युपगमात्। तस्यापि वह्निस्वलक्षणस्यापि। तत्र वह्निविकल्पे॥

---

एतेनाकारसारूप्यं नियमहेतुरपास्तः। अर्थनीय-सारूप्याभावेपि प्रवृत्तिदर्शनात् अनर्थनीयसारूप्य-मात्रस्य चातिप्रसञ्जकत्वात्।

शङ्क० टी०। यदुक्तं ज्ञानश्रिया प्रत्यासत्तिचिन्तायां तद्वि-कल्पोपि वह्निजननाकारत्वविकल्पोऽस्वस्यापि तावता तत्र प्रवर्त्तन-शक्तिजननविकल्पस्य न तु जलादाविति तदतिदेशेन दूषयति एतेनेति। मरीचिनिचये ततः प्रवृत्त्यभावप्रसङ्गेनेत्यर्थः। एत-देवाह। अर्थनीयेति। अर्थनीयः प्रवृत्तिविषयतया दृष्टो रत्न-निचयस्तस्य च वह्निविकल्पेन सारूप्याभावादित्यर्थः। तथापि वह्निना वह्निविकल्पस्य सारूप्यमस्त्येवेत्यत आह। अनर्थनीयेति न हि तत्र वह्निरवलम्बनीयः किन्तु वह्निनिचय एवेत्यर्थः यद्वा ज्वलनविकल्पाज्जलेपि प्रवृत्तिप्रसङ्गादित्यर्थः॥

---

भगी० टी०। ननु स्वविषयेपि ज्ञानस्य प्रवर्त्तकत्वे नाति-प्रसङ्गः यद्धर्मविशिष्टोऽर्थस्तथैव तद्धर्मविशिष्टज्ञानस्य प्रवर्त्तकत्वा-दित्यत आह। एतेनेति। वह्न्याकारज्ञानात्तत्स्वरूपे वह्नौ

प्रवृत्तिसम्भवेपि मरीचिनिचये प्रवृत्तिर्न स्यात् तत्र वक्तिलस्य प्रवर्त्तकज्ञानमारूप्यस्याभावादित्यर्थः ॥

---

रघु॰ टी॰। आकारसारूप्यं विकल्पप्रवृत्तिविषययोरेकाकारत्वम्। अर्थनीयसारूप्यं द्वयोरिष्टतावच्छेदकैकाकारशालित्वं। तदभावेपि रजताकारेण विकल्पेन रजतार्थिनो रङ्गेपि प्रवर्त्तनात्। अनर्थनीयसारूप्यं इष्टतानवच्छेदकैकाकारशालित्वम्। अतिप्रसङ्गकत्वात् सद्द्रव्यं रजतमिति विकल्पाद्रजतार्थिनो लौहेपि प्रवृत्तिप्रसङ्गात् ॥

---

न च बाह्यवादे ज्ञानज्ञेययोर्विवक्षितसारूप्यसम्भवः सामग्रीवैषम्यात्। साम्ये वा जाड्यचैतन्ययोरेकशेषप्रसङ्गात्। न च साम्येप्यवान्तरविशेषात् कार्य्यविशेषव्यवस्था मिथः सामग्र्यननुविधानेन जायमानत्वात्। न च कार्य्यानियं सामग्रीसाम्यं, बाह्ये धूमाद्यनुविधीयमानस्य कारणस्य दृश्यत्वात् धूमज्ञानस्य च तद्व्यभिचारोपलम्भात्। न च तदेव कारणमेकत्र दृश्यमदृश्यं चान्यत्रेति युक्तम्।

शङ्क॰ टी॰। एतच्च सारूप्यमङ्गीकृत्योक्तं वस्तुतः सारूप्यमेव नास्तीत्याह। न चेति। विवक्षित इति। प्रवृत्तिनियामकत्वेनेष्ट इत्यर्थः। साम्ये वेति। अभिन्नसामग्रीकत्वेन सर्वमज्ञानं स्यात्

ज्ञानमेव वा स्याद्वैजात्यं तु न भवेदित्यर्थः । ननु ज्ञानसुखयोर्यथा सामग्रीसाम्येपि किञ्चित्कारणभेदाद्वैजात्यं तथा जड़चैतन्ययोरपि स्यादित्यत आह । न चेति । उभयोरपि प्रकाशतमसोर्विलक्षण-सामग्रीजन्यत्वादित्यर्थः । धूमाद्यनुविधीयमानस्येति । धूमादिनानु-विधीयमानस्य वह्न्यादेः कारणस्य दृश्यत्वात् धूमज्ञानस्य च वह्निं विनापि जायमानत्वात् धूमधूमज्ञानयोः क्व सामग्रीसाम्यमित्यर्थः । ननु धूमज्ञानेप्यदृश्यो वह्निः कारणं स्यादिति कथं न सामग्री-साम्यमत आह । न चेति ॥

भगी० टी० । दूषणान्तरमाह । न चेति । प्रवृत्तिनियाम-कत्वेनाभिमतं ज्ञानज्ञेययोर्यत् साम्यं तद्विज्ञानवाद एव सम्भवति, तयोः सामग्रीसाजात्यात्, बाह्यवादे तन्न सम्भवतीत्यर्थः । साम्ये वेति । सामग्रीसाम्ये बाह्यज्ञानयोर्वैजात्यं न स्यादित्यर्थः । ननु तयोरेकजात्यप्रयोजकादेकजात्येपि विशेषसामग्रीतो-वान्तरवैजात्यमपि स्यादित्यत आह । न चेति । ऐकजात्यप्रयोजक-सामग्रीसाम्यासिद्धेरित्यर्थः । ननु बाह्यतज्ज्ञानयोरेकजात्यान्त-त्प्रयोजकत्वमिष्यत इत्यत आह । न चेति । बाह्ये तज्जातीयता-प्रयोजकदृश्यकारणव्यभिचारेण ज्ञानस्य न तज्जातीयत्वमित्यर्थः ॥

रघु० टी० । विज्ञानवादे ज्ञेयस्य ज्ञानाभिन्नत्वात्सामग्री-साजात्यात् बाधकाभावाच्च ज्ञानज्ञेययोराकारसाम्यं सम्भवति न तु बाह्यवाद इत्याह । न चेति । न च ज्ञानज्ञेययोरेकाकारता-

प्रयोजिका काचनानुगतानतिप्रसक्ता सामग्री येन तत्साम्येपि विशेषसामग्रीभेदात्कार्यभेद इत्याह । न चेति । कार्यसाजात्येनेयं सामग्रीसाजात्यं दूषयति । न चेति । वस्तुतो बाह्यवादे विज्ञानस्य तद्विषयत्वातिरिक्ते तदाकारत्वे न किञ्चित्प्रमाणमस्ति येन तद्बलादतीन्द्रियमेव किञ्चित्प्रयोजकं कल्पनीयमिति भावः ॥

---

**यदि च नीलिमादिर्विज्ञानस्य जातिविशेषः कथं तदतिपत्य ज्ञेयं स्पृशेत्, ज्ञेयस्य चेत् कथं ज्ञानं तद्विशिंष्यादिति जातिसङ्करापादनप्रस्तावे चिन्तितप्रायम् । तस्मात् स्फुरित एव ज्ञानं प्रवर्त्तयतीति गले पादुकयाप्यङ्गीकारयितव्यो गत्यन्तराभावात् ।**

शङ्क० टी० । आकारसारूप्यादिकल्पः स्वलक्षणं प्रवर्त्तयतीत्यत्र दूषणान्तरमाह । यदि चेति । आकारो हि नीलत्वं, तद्यदि ज्ञानगता जातिस्तदा सा ज्ञेये नीले न वर्त्तते, ज्ञेयगता चेत्तदा ज्ञाने कथं वर्त्ततामिति नाकारसाम्यमित्यर्थः । ननूभयत्र वर्त्ततां को दोष इत्यत आह । जातिसङ्करेति । एवं सति ज्ञानत्वानुभवत्वसाक्षात्त्वादिभिः साङ्कर्यं स्यादित्यर्थः । प्रकृतमुपसंहरति । तस्मादिति ॥

---

भगी० टी० । आकारसारूप्ये दूषणान्तरमाह । यदि चेति ॥

---

रघु॰ टी॰। जातिसङ्करं साजात्ये बाधकमाह। यदि चेति॥

तर्हि स्फुरिते स्वाकारे एव प्रवर्त्तयतु, तत्र प्रवृत्त एव चार्थी तत्सदृशमर्थमासादयति प्रभायां प्रवृत्तौ मणिवदिति चेत्। न। अभिमतार्थक्रियासामर्थ्यविरहिण्यप्रवृत्तेः। न च बाह्ये विकल्पाकारारोपसम्भवः तस्य तेनासंस्पर्शात्। न चाकारे बाह्यत्वारोपः स्वरूपे स्फुरत्यस्वरूपारोपानवकाशात्। प्रभायां तु मणिबुद्धैव मण्यर्थी प्रवर्त्तते न तु तद्बुद्धेति दृष्टान्तोप्याभासः।

शङ्क॰ टी॰। तदनेन प्रघट्टकेन शब्दलिङ्गविकल्पानामलौकिकविषयत्वं निराकृत्य आकारो वेति सौत्रान्तिकमतं दूषयितुमाशङ्कते। तर्हीति। विकल्पानां प्रामाण्याभिमानमुपपादयति। तत्रेति। संवादात्प्रमाणत्वेनाभिमान इति भावः। परिहरति। नेति। अर्थक्रियासमर्थेप्यर्थेऽर्थक्रियार्थी प्रवर्त्तते न तु ज्ञानाकारस्तथेत्यर्थः। ननु बाह्येऽर्थक्रियासमर्थे ज्ञानाकारारोपात्प्रवृत्तिः स्यादत आह। न च बाह्य इति। बाह्यस्य तस्मते विकल्पेनासंस्पर्शात्। ननु ज्ञानाकार एव बाह्यत्वमारोप्य प्रवृत्तिः स्यात्तदर्थक्रियासमर्थमेव यत इत्यत आह। न चेति। स्वरूप इति। स्वप्रकाशेन ज्ञानाकारे स्फुरति तत्र विशेषदर्शनादारोपानुपपत्ति-

रित्यर्थः । अन्यविषयज्ञानादन्यत्र प्रवृत्तिरित्यत्र दृष्टान्तोपि साध्यविकल इत्याह । प्रभायां त्विति[१] ॥

---

भगी० टी० । तदेवमलीकं वेति पक्षं निराकृत्याकारो वेति पक्षमुत्थापयति । तदीति । प्रवृत्तिसम्वादमुपपादयति । तत्रेति । आकारे यदि ज्ञानवृत्तितया ज्ञाते प्रवृत्तिस्तत्राह । अभिमतेति । ज्ञानाकारस्य न दाहादिसामर्थ्यमिति प्रमापयतस्तदसमर्थे तत्र प्रवृत्तिर्न स्यादित्यर्थः । ननु बाह्यनिष्ठतया स्वाकारे ज्ञाते प्रवृत्तिरिति नोक्तदोष इत्यत आह । न चेति । बाह्यस्वलक्षणस्य विकल्पेनाविषयीकरणात्, न चारोपविषयाज्ञाने तत्सम्भव इत्यर्थः । न च ज्ञानाकारस्य ज्ञानाभिन्नतया स्वप्रकाशत्वे तत्रार्थक्रियासामर्थ्यमारोप्यमित्यपि सम्भवतीत्याह । न चेति । स्वप्रकाशतया स्वरूपे निश्चिते ज्ञानत्वेन स्फुरतस्स्वरूपस्य बाह्यत्वस्यारोपासम्भव इत्यर्थः ॥

रघु० टी० । इयता प्रबन्धेनालीकं वेति पक्षं निराकृत्याकारो वेति पक्षं निराकर्त्तुमुत्थापयति । तदीति । अन्यत्र प्रवृत्तौ कथमन्यलाभ इत्यत आह । तत्रेति । मणिवदिति द्वितीयासमर्थाद्वतिः । निराकरोति । नेत्यादि । सामर्थ्यविरहिणि समर्थत्वेनाज्ञाते । न खलु लोकेन वह्निविकल्पः पाकादिसमर्थत्वेन ज्ञातोऽपि तु वह्निः । न चाकारगृहीतार्थक्रियासामर्थ्य-

(१) प्रभायान्त्विति— पाठः ।

बाह्ययोरभेदारोपात्प्रवृत्तिः । आरोपो हि बाह्ये स्वाकारस्य आकारे वा बाह्यस्य । आद्ये न चेति । तस्य बाह्यस्य । तेन विकल्पेन । द्वितीये न चेति । आकाराकारिणोरभेदात्स्वप्रकाशेन ज्ञानरूपत्वे गृह्यमाणे बाह्याभेदारोपासम्भवात् । वस्तुतो बाह्यानुभवस्य विकल्पाकाराग्राहित्वात् विकल्पस्य च बाह्यास्पर्शित्वादारोप्यारोपविषयोभयाग्राहिणश्चारोपरूपत्वायोगाद्वाह्यानुभवो वा आकारवान् विकल्पो वा विकल्पान्तरं वा न विकल्पाकारे बाह्याभेदारोपो भवितुमर्हतीति । मणिबुद्ध्या मणित्वेन प्रभाया बुद्ध्या । तस्याः प्रभाया अबुद्ध्या । आभास इति । मणिप्रभाप्रवृत्तमण्यर्थिसमासाद्यत्वेनोपन्यस्तो मणिदृष्टान्तोऽभिमतादाकारावभासस्यैव प्रवर्त्तकत्वात् विपरीते बाह्यावभासप्रवर्त्तकत्वे पर्यवस्यन्नाभास इत्यर्थः । ज्ञानस्य स्वविषय एव प्रवर्त्तकतया भवताप्यभ्युपगमात् । अथ यथा भवता प्रभायां प्रवृत्तस्य मणिप्राप्तिः तथास्माकमप्याकारे प्रवृत्तस्य बाह्यप्राप्तिरित्यभिप्रायः, सोऽपि न युक्तः, प्रवृत्तो हि मणिप्रभायां तत्सन्निधानाविनाभावान्मणिमासादयति, न चाकारस्य तथा सम्भव इति भावः ॥

---

**न चाकारवादेऽस्फुरतोऽर्थस्य सत्तायां प्रमाणमप्यस्ति । आकारकादाचित्कत्वस्य तैमिरिककेशाद्याकारेणानैकान्तिकत्वात् ।**

शङ्क० टी० । सौत्रान्तिकमते दोषान्तरमाह । न चेति । अस्फुरतोऽर्थस्य नीलादेः । नन्वाकारकादाचित्कत्वादेव विषय-

सिद्धिः स्यात्, न हि नीलसन्निधानमन्तरेण नीलाकारं ज्ञानं कादाचित्कं भवेत्, सर्वदैव तदाकारज्ञानप्रसङ्गादित्यत आह। आकारेति। कादाचित्कत्वस्याप्याकारस्यार्थव्यभिचारदर्शनादित्यर्थः॥

भगी० टी०। ज्ञानाकारकादाचित्कत्वान्यथानुपपत्त्याऽविषयोप्यर्थः कल्प्यत इत्यत्र व्यभिचारमाह। आकारेति॥

रघु० टी०। ज्ञानस्य साकारत्वं निराकरोति। न चेति ज्ञानं हि बाह्यमवगाहते न वा। आद्ये तत एव रजतज्ञानमित्यादिव्यवहाराद्युपपत्तावतिरिक्ते आकारे प्रमाणाभावः। न हि ज्ञानं रजतमिति कश्चिद्व्यवहरति प्रत्येति वा, परन्तु रजतस्य ज्ञानमिति। द्वितीये तु न बाह्यसिद्धिः। रजतमिदमित्यादिकं च ज्ञानं रजतादिकमवगाहमानं रजतादिसिद्धिरभिधीयते। तच्चेन्न तदवगाहि कुतो रजतादिसिद्धिः। आकारात्कार्यात्कारणस्य विषयस्य सिद्धिं निराकरोति। आकारेति। कार्याद्धि सामान्यतः कारणमात्रं विशेषतश्च गृहीतहेतुभावं सिद्ध्यति। आद्ये न तेन दहनादिनैव भवितव्यं। द्वितीये तु विनापि दहनादिकं दहनाद्याकारविकल्पोपगमेन व्यभिचारात् दहनाद्यप्रसिद्धा च न कारणताग्रहसम्भवः॥

**अर्थक्रियासम्वादस्यापि स्फुरितस्याकारमात्रशरीरत्वात् बाह्यस्य चासिद्धेः। निरालम्बनार्थाकारवद्व**

**क्वचिद्वासनावशादर्थक्रियाकारोऽपि निरालम्बन एव भविष्यतीति विपक्षे बाधकाभावात् प्रतिबन्धस्याप्यसिद्धेः। तस्माद्बाह्यसिद्धिः साकारं च ज्ञानमिति बाललोलुपत्वमिति।**

शङ्क० टी०। ननु बाह्यार्थक्रियैव बाह्ये प्रमाणं स्यादित्यत आह। अर्थक्रियेति। अर्थक्रियाया अप्याकारशरीरत्वादित्यर्थः। किं च यदि बाह्यं सिध्येत्तदार्थक्रियापि प्रतिनियता सिध्येत्तदेव तु नास्तीत्याह। बाह्यस्य चेति। न चार्थक्रिया बाह्ये प्रमाणं भवितुमर्हति, तेन तैमिरिककेशज्ञानवदर्थक्रियाज्ञानस्यापि वासनासमुत्थत्वेनोपपादयितुं शक्यत्वादित्याह। निरालम्बनेति। निरालम्बनार्थाकारस्तैमिरिककेशज्ञानाकारः। प्रतिबन्धस्यापीति। अर्थक्रियाकारबाह्ययोः प्रतिबन्धस्यासिद्धेः कथमर्थक्रियासम्वादेन बाह्यार्थसिद्धिः स्यादित्यर्थः। बाह्यस्यार्थक्रियैव नास्तीत्यपिना समुच्चिनोति॥

भगी० टी०। नन्वर्थक्रियाविशेषादर्थविशेषः कल्प्यत इत्याह। अर्थक्रियेति। तज्ज्ञानस्य स्वाकारमात्रसंस्पर्शितया तत्रापि मानाभाव इत्यर्थः। अनाकारा चार्थक्रिया त्वया नाभ्युपेयत इत्याह। बाह्यस्य चेति। निरालम्बनो बाह्याधानाहितः तैमिरिककेशाद्याकार इत्यर्थः। कल्पनापि स्वाकारमात्रविषया नार्थं स्पृशतीति न ततोऽप्यर्थसिद्धिरित्याह। तस्मादिति। न चाकारस्य

साचाज्ज्ञानविषयत्वं तज्ज्ञानजनकतया बाह्यार्थेनापि परम्परासम्बन्ध दतीयमेव विषयसिद्धिरिति वाच्यम् । अत्रापि मानाभावात् वैपरीत्यापत्तेश्च ॥

रघु टी० । माभूत् ज्ञानगताद्दहनाद्याकारात् कार्याद्दहनादिसिद्धिर्दाहादेस्तु स्यादत आह । अर्थेति । स्फुरितस्य स्वप्रकाशेनोल्लिखितस्य । बाह्यस्य दाहादेः असिद्धेर्दाहाद्याकारेण विज्ञानेनाग्रहणात् । न चागृहीतं लिङ्गं लैङ्गिकमनुमापयति । माभूद्बाह्यो दाहादिर्दहनादेरनुमापको ज्ञानाकारस्तु स्यात् न हि विना दाहादिकं दाहाद्याकारं ज्ञानं, न च विना दहनादि दाहादिकमत आह । निरालम्बनेति । निरालम्बनो बाह्याप्रयुक्तः । अर्थाकारो दहनाद्याकारः । अर्थक्रियाकारो दाहाद्याकारः । सन्दिग्धानैकान्तिकत्वं स्थलविशेषाभिप्रायेण । प्रायेण तु निश्चितव्यभिचारत्वमेव । बालत्वोल्लपत्वमिति । बाह्यविलोपे हि रङ्गज्ञानं रजतज्ञानमिति विशेषो न विनाकारं सम्भवतीति सिद्धोऽकारः, बाह्योपगमे तु तत्तद्विषयत्वेनैव तदुपपत्तावाकारे प्रमाणाभावात्[१] ॥

अस्तु तर्हि बाह्यमेव स्वलक्षणं विकल्पस्य विषयः । यद्यपि स्वरूपेणासामयिकतया तन्नाभिलापसंसर्गयोग्यम् तथाप्यतद्रूपपरावृत्तिप्रत्यासत्त्या साधारणरूप-

(१) प्रमाणाभावः— पाठः ।

तामापन्नं सत् तथा भवत्येव। यथा ह्येको गौरगोव्यावृत्तस्तथाऽपरेऽपि गाव इति चेत्। अथ कोऽयमगौर्नाम। किमेकस्य गोस्वलक्षणस्यानात्मा आहोस्वित्तद्गतधर्म्मविरही।

शङ्क० टी०। सम्प्रति बाह्यं वस्तु वेति वैभाषिकमतमुत्थापयन् तृतीयं विकल्पं दूषयति। अस्तु तर्हीति। ननूक्तं स्वलक्षणं नाभिलापसंसर्गयोग्यप्रतिभासमत आह। यद्यपीति। अतद्रूपेति। अगोव्यावृत्तिलक्षणया प्रत्यासत्त्या स्वलक्षणाभिलापसंसर्गयोग्यतासम्भवादित्यर्थः। तथा भवत्येव अभिलापसंसर्गयोग्यं भवत्येवेत्यर्थः। तामेव प्रत्यासत्तिमाह। यथा हीति॥ गोपिण्डभिन्नो वा गोत्वजातिशून्यो वा अगौरिति विकल्पार्थः॥

भगी० टी०। तृतीयं कल्पमुत्थापयति। अस्तु तर्हीति। स्वरूपेणेति। आनन्त्यव्यभिचाराभ्यां तत्र शक्तिग्रहाभावादित्यर्थः। तथापीति। यद्यपि व्यावृत्तिरलीका न वस्तुधर्म्मस्तथापि वस्तुभूतैव सा तद्धर्म्मो भविष्यतीति नानुगतधीर्भावरूपे सामान्ये मानमिति भावः। तद्गतेति। गोत्वसामान्यशून्य इत्यर्थः॥

रघु० टी०। बाह्यं वस्तु वेति तृतीयं पक्षमुत्थापयति। अस्त्विति। तथापीति। भवतां विधिरूपस्येव निषेधरूपस्यापि गोत्वस्य योगात् सङ्केतादिविषयत्वमित्यर्थः। तथा अभिलाप-

संसर्गयोग्यं। यद्यपि तेषाममत्याः व्यावृत्तेः सता सम्बन्धस्य सत्त्वस्य वाऽभ्युपगमेऽपसिद्धान्तस्तथापि तस्य तैर्दोषत्वानभ्युपगमात् दोषान्तरमाह। अथेति॥

---

प्रथमे न गवान्तरेपि गोशब्दविकल्पौ प्रवर्त्तेयाताम्, अश्वादिवदनात्मत्वाविशेषात्। अतिप्रसङ्गश्च, महिष-मातङ्गाद्यगोव्यावृत्त्याऽश्वेपि गोव्यवहारप्रसङ्गात्। स गोरपि व्यावर्त्तत इति चेत्। तत् किमभिमतो गोर्गो-रपि न व्यावर्त्तते। व्यावर्त्तते किन्तु स्वयमप्यसौ गौरिति चेत्। यद्यगोव्यावृत्तिरेवास्य गोत्वं तदश्वेपि समानम्। अन्यच्चेत्तदुच्यताम्।

शङ्क० टी०। गवान्तर इति। तस्यापि अगोत्वादित्यर्थः। महिषादगोर्मातङ्गाच्चाश्वस्यापि व्यावृत्तत्वे गोव्यवहारः। अश्वादि गोरपि व्यावर्त्तत इति न तत्र गोव्यवहार इत्याह। स गोरपीति। एकस्माद् गोपिण्डादपरोपि गोपिण्डो व्यावर्त्तत इति तत्रापि गोव्यवहाराभावप्रसङ्ग इत्याह। तत्किमिति। गोपिण्डादेकस्मा-द्भिन्नोपि गोपिण्डो गौर्भवत्येवेति तत्र गोव्यवहारः स्यादेवेत्याह। व्यावर्त्तत इति। तदश्वेऽपीति। महिषादगोर्व्यावृत्तोऽश्वोपि गौरेव स्यादित्यर्थः। अन्यदिति। गोत्वावच्छिन्नप्रतियोगिका-न्योन्याभाववानगौस्तदन्यस्तु गौरित्यर्थः। तथा च सिद्धं गोत्व-मिति भावः॥

---

भगी० टी० । यद्यगौरेकगोस्वलक्षणानात्मा तदाश्वादिवद्ग-वान्तरमप्यगौरिति न तत्र गोव्यवहारः स्यादित्याह । प्रथम इति । अतिप्रसङ्गमेवाह । सहिष इति । स गोरपीति । अगो-व्यावृत्तोपि यो गोतो न व्यावर्त्तते स गोव्यवहारहेतुरश्वश्च गोतोपि व्यावर्त्तत इति न तथेत्यर्थः । तत् किमिति । एवं गौरपि गोव्यवहारविषयो न स्यात् यत्किञ्चिद्गोतस्यापि व्यावृत्तत्वादित्यर्थः । ननु सकलगोव्यावृत्तिमानश्वादिर्गौश्च न तथा स्वतस्तस्याव्यावृत्ते-रित्याह । किन्त्विति । स्वयमप्ययं गोगात्वयोगात् । गोत्वं च यदि यत्किञ्चिद्गोव्यावृत्तत्वम् तदाऽश्वेऽप्यगोरूपसहिषादिव्यावृत्त-त्वाद्गोत्वप्रसङ्ग इत्याह । यदीति । अन्यदिति । यदि च गोत्व जातिमान् गौस्तदा वस्तुभूतं सामान्यं सिद्धमेवेत्यर्थः ॥

रघु० टी० । एकगोस्वलक्षणभिन्नेभ्यो यावद्भ्यो व्यावृत्तिर्यतः कुतश्चिद्वा । आद्ये गवान्तरेपीति । द्वितीये अतिप्रसङ्गश्चेति । अतिप्रसङ्गस्तदयोग्ये तत्प्रसङ्गः । तदुपपादयति । सहिषेति । कथञ्चित्प्रकारभेदात् । प्रसङ्गादिति पञ्चमी समर्थनीया । गोत्वा-वच्छिन्नव्यावृत्तयावद्व्यावृत्तिर्गोव्यवहारे निमित्तमित्याशङ्कते । स इति । गोत्वमननुगतमनुगतं वा । आद्ये तत् किमिति । द्वितीयं शङ्कते । व्यावर्त्तत इति । अनुगतं गोत्व विधिरूपं चेत्सिद्धं नः समीहितम् । निषेधरूपं चेत्तत्राह । यदीति । अगोव्यावृत्तिरेक-गोस्वलक्षणानात्मकेभ्यो यावद्भ्यो व्यावृत्तिरुत तादृशाद्यतः कुतश्चित् । आद्ये न तस्य गोत्वं तस्याप्येकगोस्वलक्षणभिन्नत्वात् । द्वितीये

त्वाह । तदाऽस्येपीति । अस्यस्याप्येकगोत्वलक्षणानात्मकयत्किञ्चिन्महिषादिव्यावृत्तत्वात् । तथा च गोत्वावच्छिन्नव्यावृत्त्यवच्छिन्नमहिषादिव्यावृत्तिमत्त्वात्तत्रापि गोव्यवहारापत्तिः । विधेरन्यत्रानुगतानतिप्रसक्तं दुर्वचमित्याह । अन्यत्रेदिति । एतेन यावद्गोव्यक्तिव्यावृत्तयावद्व्यावृत्तिर्गोव्यवहारनिमित्तमित्यपि निरस्तम् । विशिष्य यावद्गोव्यक्तीनामसंज्ञावेद्यत्वात् एकधर्मोपग्रहं विना यावद्गोव्यक्तिव्यावृत्तेर्दुर्ज्ञेयत्वात् ॥

**द्वितीये तु तद्गतधर्म्मविरहिव्यावृत्तस्तदानेव स्यात् । तत्र च न विवादः ।**

शङ्क० टी० । तद्गतेति । गोत्वात्यन्ताभाववदन्यो गोत्ववानेवेत्यर्थः ॥

भगी० टी० । धर्मान्तरस्य सकलगोव्यक्तिवृत्तेरन्यस्याभावाद्गोत्वस्यैव तथात्वमिति वाच्यम् तथा च सिद्धसौहितमित्याह । द्वितीये त्विति ।

रघु० टी० । यत्किञ्चित्तद्गतधर्म्मशून्यत्वमतिप्रसक्तं यावत्तद्गतधर्म्मशून्यत्वं चाप्रसिद्धमतस्तद्गतगोत्वशून्यत्वं वक्तव्य । तथा च सिद्धसौहितमित्याह । तद्गतेति ॥

---

**मिथः सम्भिन्नाकाराः पिण्डा एव साधारणं रूपमस्तु ज्ञानमतद्रूपपरावृत्त्येति चेत् । न । सम्भेदाभावात् । स**

## हि न वास्तवः पिण्डानां विरुद्धधर्म्माध्यस्तत्वात् । नाभिमानिकः शावलेयादेर्भेदेनैव प्रथनात् । तद्धर्म्माणां सम्भेदाभिमान इति चेत् । न । धर्म्म्यतिरिक्तधर्म्मानभ्युपगमात् । अभ्युपगमे वा पर्य्यवसितं विवादेन ।

शङ्क० टी० । कीर्त्तिमतेनानुगतप्रत्ययस्यान्यथासिद्धिं शङ्कते । सिध इति । यदाह कीर्त्तिः ।

> पररूपं स्वरूपेण यया[1] संव्रियते धिया ।
> एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः ॥
> तया संवृतनानार्थाः संवृत्या भेदिनः स्वयम् ।
> अभेदिन इवाभान्ति भावा[2] रूपेण केनचित् ॥

इति । स हीति । सम्भेद इत्यर्थः । पिण्डानां वास्तवमेकत्वं आभिमानिकं वा । आद्य आह । पिण्डानामिति । भेदेनैवेति । तथा च कैकत्वाभिमान इत्यर्थः । तद्धर्माणां शावलेयादि-धर्माणाम् । सम्भेद ऐक्यम् । शावलेयादिभिन्नास्त्वन्मते धर्मा एव न सन्ति येषां सम्भेदः स्यादित्याह । नेति । तेभ्यो भिन्नास्तेषां धर्माश्चेत्तदा पर्यवसित विवादेनेत्याह । अभ्युपगमे वेति ॥

---

भगी० टी० । सिध इति । अनुगतबुद्धेर्गोपिण्डानामैक्यं विषय इति न ततः सामान्यसिद्धिरित्यर्थः । भेदेनैवेति । सथा भेदे भासमान एवाभेदबुद्धेर्जातिनिमित्तकत्वोपगमादित्यर्थः ।

(१) यथा—पाठः ।          (२) भाव—पाठः ।

पर्य्यवसितमिति । मिथोभिन्नगोस्वलक्षणवृत्तिधर्म्मस्य वस्तुनः सिद्धेरित्यर्थः ॥

रघु० टी० । आकाराभेद एवानुगतमतेरालम्बनमित्याशङ्कते । मिथ इति । सम्भेदोऽभेदः । आकारो धर्मी तद्धर्मो वा । आद्ये स हीति । अत्र हेतुमाह । पिण्डानामित्यादि । द्वितीयं शङ्कते । तद्धर्माणामिति । अननुगतानां धर्माणां भेदावभासादनुगतो धर्मोऽभ्युपगन्तव्यस्तथा च सिद्धमीहितमित्याह । अभ्युपगमे वेति ॥

स्यादेतत् । भिन्नानामेव स्वलक्षणानां समानाकारविकल्पजननसामर्थ्यमस्तु । तदपेक्षया च केचिन्नाव इति व्यपदिश्यन्ते केचिद्गाव इति । तच्च सामर्थ्यं स्वकारणनियतत्वादपर्य्यनुयोज्यम् । अन्यथा सामान्येष्वपि सामान्यान्तरं कल्प्येत अनुगतव्यवहारानुरोधात्, तथा गोपिण्डेष्वपि गोत्वस्य तेष्वेव व्यवस्थित्यनुरोधात्, उभयमुखी चैवमनवस्था स्यादिति चेत् ।

शङ्क० टी० । कीर्त्तिमतमाशङ्कते । स्यादेतदिति । यथाह[१] कीर्त्तिः ।

एकप्रत्यवमर्षस्य हेतुत्वाद्धीरभेदिनी ।
एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता ॥

(१) यदाह—पा० २ पु० ।

इति। तदपेक्षयेति। येषां गवाकारानुगतधीजनकत्वाभाव्यं पिण्डानां ते गावः येषां तु न तथा सामर्थ्यं ते पिण्डा अगाव इत्यर्थः। ननु तादृशं सामर्थ्यमेव कुत इत्यत आह। तच्चेति। एतच्च त्वयापि स्वीकर्त्तव्यमित्याह। अन्यथेति। गोत्वाश्वत्वमहिषत्वादिष्विदं सामान्यमिदं सामान्यमित्यनुगतप्रत्ययात्तेष्वपि सामान्यान्तरमङ्गीक्रियेतेत्यर्थः। किं च गोत्वं गोपिण्डेष्वेव वर्त्तते नान्यत्रेति तद्वृत्तिनियामिका अपरा काचिदेवं तद्वृत्तिनियामिका चापरेत्यधोधावन्ती अनवस्था स्यात्। सामान्ये च सामान्यान्तराभ्युपगमे चोर्द्ध्वं धावन्तीत्युभयमुख्यनवस्थेत्यर्थः॥

भगी० टी०। नन्वनुगतमतिः सामान्यसिद्धौ मानम्। सा चान्यथासिद्धेव। एकजातीयविकल्पजनकत्वादुपाधिभिन्नानां व्यक्तीनां तद्विषयत्वादित्याशयवानाह। भिन्नानामेवेति। तदपेक्षयेति। तत्तद्गवाश्वादिविकल्पजननसामर्थ्याद्गवाश्वादिव्यवहार इत्यर्थः। नन्वननुगतात् कथमनुगतधीरित्यत आह। अन्यथेति। तत्रापीदं सामान्यमिदं सामान्यमित्यनुगतमतेः सत्त्वात् सामान्यत्वं सामान्यान्तरं स्यादित्यर्थः। तथा गोपिण्डेष्वपीति। सामान्यान्तर कल्प्येतेत्यनुषज्यते। गोत्वं यदि गोत्वानाश्रये वर्त्तते तदाऽश्वेऽपि वर्त्तेतेति तदीयकाचित्कत्वनियमार्थं नियामकापेक्षायामनवस्थानादित्यर्थः। उभयमुखीति। ऊर्द्ध्वं धावन्त्यधोधावन्ती चेत्यर्थः॥

---

रघु० टी० । अनुगतं सामान्यमनुगतविकल्पजननार्थं वा कल्प्यते अनुगतव्यवहारालम्बनतया वा । नाद्यो भिन्नानामपि स्वकारणाधीनात् सामर्थ्यविशेषादनुगतविकल्पजननोपपत्तेः । न द्वितीयः तादृशविकल्पजनकत्वस्यैव व्यवहारालम्बनत्वात् । यदि चानुगतविकल्पजनकत्वादतिरिक्तमप्यनुगतव्यवहारालम्बनं कल्पनीयं तदा सामान्येष्वनुगतसामान्यव्यवहारालम्बनं सामान्यान्तरं कल्प्यं तत्रापि च सामान्यव्यवहारात् तस्य च स्वात्मनि वृत्तिविरोधात् तत्साधारणमपरं, एवं तत्र तत्रापीत्यनवस्था । एवं यदि स्वभावनियतवृत्तेरपि सामर्थ्यस्य वृत्तिनियमार्थं सामान्यं कल्प्यं तदा तस्यापि वृत्तिनियमार्थमन्यदेवं तस्य तस्यापीत्यनवस्थेत्याशङ्कते । स्यादेतदित्यादिना । विकल्पानां समानत्वमाकारविशेषः ।

यद्येवं निमित्तान्तरमनपेक्ष्यैकव्यवहारोऽत्यन्तभिन्नैः, एवं भिन्नव्यवहार एवाभिन्नेनैकेन केनचित् किं न साध्यते, शक्तिस्वभावावलम्बनस्योभयत्रापि तुल्यत्वात् । अथैवं सत्येकव्यवहारः क्वचिदपि न स्यात् निर्निमित्तो वा भवेत्, उभयमप्यनिष्टम् । तदेतत्तुल्यम् । अनेकव्यवहारोऽप्येवं सति न स्यात् निर्निमित्तो वा भवेत्, उभयमप्यनिष्टम् । तस्मादेकेनैकव्यवहारवदनेकेनाप्यनेकव्यवहार एवेति सामर्थ्यनियमः ।

प्रकृ० टी०। यथात्यन्तभिन्नानामभेदव्यवहारहेतुत्वं तथा अभिन्नानां भेदव्यवहारहेतुत्वमेव किं न स्यादित्येकैकोपि गोपिण्डो भेदेनैव व्यवह्रियेतेत्याह। यद्येवमिति। एकेनानेकव्यवहारवद्-नुपपन्नस्तदा[1] अनेकैरेकव्यवहारोप्यनुपपन्न एवेत्याह। अथैवमिति। तुल्यतामेव दर्शयति। अनेकेति। एकेनैव सामान्येन गोत्वादिना गवादिपिण्डानामनुगतव्यवहार इत्युपसंहरति। तस्मादिति।

---

भगी० टी०। अनेकेनानेकव्यवहार एवेति नियमानभ्युपगमे एकेनैकव्यवहार एवेत्यपि नियमो न स्यादिति स्वलक्षणमपि त्यज्यतामिति बाह्यवादव्याघात इति समाधत्त। यद्येवमिति। अभिन्नेनेति। यथा सर्व्वत्रादतवादिभिर्ब्रह्मणैकेनानेकव्यवहारो भ्युपगम्यत इत्यर्थः। अथैवमिति। इतरानिमित्तकोऽयं व्यवहारो यदि तन्निमित्तको न स्यात् अनिमित्तको वा स्यादित्यर्थः।

---

रघु० टी०। सामर्थ्य यदि तादृशनिखिलव्यक्तिनिष्ठमेकं तर्हि किमपराद्धं प्रत्यक्षसिद्धेन गोत्वादिना. अथ प्रतिव्यक्ति भिन्नं न तर्हि तस्यानुगतविकल्पोत्पादनियामकत्वं मिथो व्यभिचारादि-त्याशयेन निराकरोति। यद्येवमिति।

---

**का गतिस्तर्हि सामान्येष्वनेकेष्वेकव्यवहारस्य। या चन्द्रमस्येकस्मिन्ननेकव्यवहारस्य। भ्रान्तोऽसाविति चेत्।**

(१) तथा—पाठः।

अयमपि भ्रान्त एव। बाधकस्योभयत्रापि तुल्यत्वात्। सर्वंत्र भ्रान्तोऽस्त्विति चेत्। भेदव्यवहारोपि तथा किं न स्यात्। अर्थक्रियास्थितेरिति चेत्। व्यक्ति-भेदाभेदव्यवस्थापकार्थक्रियाभेदाभेदवत् सजातीया-सजातीयत्वव्यवस्थापकार्थक्रियासाजात्यवैजात्ये अपि किं न पश्यसि। ते अपि भ्रान्ते इति चेत्। अर्थक्रिया-भेदोपि भ्रान्त इति तुल्यम्। अस्त्वेवमिति चेत्। त्यज तर्हि बाह्यव्यसनम्। अयमेवाशय इति चेत्। तच्च वक्ष्यामः।

शङ्क० टी०। परापादितामनवस्थामुद्धर्त्तुमाह। का गति-रिति। यथा कदाचिदेकेनाप्यनेकव्यवहारस्तथा क्वचिदनेकेनाप्येक-व्यवहार इति प्रतिबंदिमुखेनोत्तरमाह। येति। वस्तुतः सामान्येष्वपि तदितरावृत्तित्वे सति सकलतद्वृत्तित्वं नित्यत्वे सत्यनेकवृत्तित्वमुपाधिसामान्यमेकमस्तीति भावः। सर्वत्रेति। गोपिण्डादिष्वनुगतव्यवहारो भ्रान्तोस्त्वित्यर्थः। वेदान्तिमत-मालम्ब्याह। भेदव्यवहारोपीति[१]। अर्थक्रियाभेदात् व्यक्तीना-मपि भेद इत्याह। अर्थेति। अर्थक्रियासाजात्यवैजात्यनिबन्धनं तर्हि व्यक्तीनामपि साजात्यवैजात्ये स्वीकार्ये एव अन्यथा तदाकस्मि-कत्वप्रसङ्गादित्याह। व्यक्तीति। ते अपीति। अर्थक्रियासाजात्य-वैजात्ये इत्यर्थः। तर्हि व्यक्तिभेदकोऽर्थक्रियाभेदोपि भ्रान्त एवेति

(१) व्यवहारोपीति—पाठः

व्यक्तिभेदोपि न स्यादिति जितं वेदान्तिभिरित्याह। अर्थ-क्रियेति। व्यक्तिभेदोपि मास्तु किं नश्छिन्नमित्याह। अस्त्विति। तर्हि चिद्रूपं ब्रह्मैवैकमस्तु किं बाह्येनेत्याह। त्यजेति। तस्यावकाशो वेदान्त्याह। अयमेवेति। बौद्धाभिमानं निराकृत्य तवाप्यभिमानमग्रे निराकरिष्याम इत्याह। तत्रेति।

---

भगी० टी०। का गतिरिति। यद्येकत्वैकव्यवहार इति शेषः। चन्द्रद्वयव्यवहारवत् सामान्येऽप्येकव्यवहारो भ्रान्त एवेत्यर्थः। यद्यपि सामान्ये जातेरभावेपि तदितरावृत्तित्वे सति सकल-तद्वृत्तित्वरूपमुपाधिसामान्यमस्त्येवानुगतमतेः सत्त्वात्, तथापि यदि साक्षात्समवेत एव जातिरूपो धर्मस्तया विषयीक्रियते तदा तद्व्यवहारस्य भ्रमत्वमुक्तम्। सर्व्वत्रेति। गोपिण्डेष्वपीत्यर्थः। बाधकं विना व्यवहारस्य भ्रान्तत्वे भेदधीरप्यभेदनिबन्धना न स्यात् भ्रमत्वादित्याह। भेदेति। व्यक्तीति। व्यक्त्येकत्वनानात्वसिद्धौ यथाऽर्थ-क्रियैकत्वनानात्वे मानम् तथा व्यक्त्याश्रितसजातीयत्वविजातीयत्वयो-रप्यर्थक्रियासाजात्यवैजात्ये मानमित्यर्थः। तस्माद्बाधकं विना यद्यर्थक्रियासाजात्यधीर्भ्रमः स्यात् तदाऽर्थक्रियाभेदज्ञानस्यापि भ्रमत्वे व्यक्तिभेदासिद्धौ बाह्यविलोप इत्याह। त्यजेति॥

---

रघु० टी०। अभ्युपेत्याह। या चन्द्रमसीति। वस्तुतो नित्यानेक-समवेतत्वलक्षणौपाधिकसामान्यनिबन्धनो गोत्वादावनुगतसामान्य-व्यवहार इति भावः। सर्वत्र गवादिपिण्डेष्वपि। प्रतिबन्दि-

माह । भेदेति । ते अर्थक्रियासाजात्यवैजात्ये । भ्रान्ते भ्रान्त्युल्लिखिते । यदि विनैव बाधकं बुद्धीनां भ्रमत्वं तदा बाह्यविलोपप्रसङ्ग इत्याह । त्यजेति ॥

---

माभूद्वाऽर्थक्रियासाजात्यवैजात्यावगमः । भ्रान्त्यनुगमोऽप्येकं निमित्तमनाहत्य कथम्, तदपि हि कार्य्यसाजात्यं सामग्रीसाजात्यमन्तरेणाकस्मिकमापद्येत । अन्यथा तत्परम्परालम्बनमपि विडम्बनमेव। भिन्नैस्तैस्तैरभेदव्यवहारसिद्धौ व्यक्तिभिरेव तथाभूताभिरभिमतसिद्धेस्तदनुसरणप्रयासवैफल्यात् । तस्मादारोपव्यवहारस्याप्यनारोपितजात्यनादरे असम्भव एवेति ।

शङ्क० टी० । माभूदेति । अर्थक्रियासाजात्यं कारणसाजात्योन्नायकं मास्तु, किञ्चिज्ज्ञानं भ्रान्तं किञ्चिदभ्रान्तमित्यपि व्यवस्था कारणसाजात्यनिबन्धनैव स्यादन्यथा सर्वं भ्रान्तमभ्रान्तमेव वा भवेदित्यर्थः । भ्रान्तित्वेनानुगतमतिरपि भ्रमः स्यादित्यर्थ इत्यन्ये । तदपि भ्रान्तत्वमपि । ननु भ्रमत्वे सामग्रीसाजात्याप्रयोजकत्वेऽप्यनाकस्मिकत्वं स्यादित्यत आह । अन्यथेति। तत्परम्परालम्बनमपीति । भ्रमपरम्परालम्बनमपीत्यर्थः । तदनुसरणप्रयासो भ्रमपरम्परानुसरणप्रयासः । तदयमर्थः ।

एकप्रत्यवमर्षस्य हेतुत्वाद्धीरभेदिनी ।
एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता ॥

इत्यत्र प्रत्यवमर्षस्य प्रतिसन्धानस्यैकत्वभ्रमादनुगतप्रत्ययानामेकत्वभ्रमात्त्र व्यक्तीनामेकत्वभ्रम इति या भ्रमपरम्परा त्वयोक्ता, सापि तव विडम्बनमेव धिक्कार एव, भ्रमकारणस्याप्यनुगतस्य त्वयानङ्गीकारादिति । यद्वा एकप्रत्यवमर्षस्येत्येकजातीयप्रत्यवमर्षस्येति त्वया वाच्यम् तथा च सिद्धो जातिकृतानुगम[१] इत्यर्थः । तथा च त्वत्कारिकायां तत्परम्परानुसरणं तज्जातीयत्वपरम्परानुसरणमित्यर्थः । यद्वा व्यक्तीनां भिन्नानामेव सामर्थ्यात् सर्वत्राभेदव्यवहारोऽस्तु किं प्रत्यवमर्षानुगतधीपरम्परानुसरणेन कारिकास्थेनेत्यर्थः । एकजातीयं वास्तवमनुसरणीयमेवेत्युपसंहरति । तस्मादिति । यद्वा प्रत्यवमर्षो व्यवहारः । धीर्विकल्पकरूपानुगतधीः तत्परम्परानुसरणमफलं व्यक्तिस्वाभाव्यादेव तदुपपत्तेरित्यर्थः ॥

भगी० टी० । भ्रान्त्यनुगम इति । सर्वधीभ्रमत्ववादिनो भ्रान्तित्वमप्येकं वस्तु न सिद्ध्येत् तत्राप्यनुगतमतेर्भ्रमत्वात् यदि सामग्रीसाजात्यं नाद्रियेतेत्यर्थः । अन्यथेति । अनुगतधर्मानभ्युपगमे परम्परया सामान्येऽपि सामान्यान्तरं व्यक्तिरूपमनुगतव्यवहारहेतुरालम्बनमिति यदुच्यते तद्विडम्बनमेव निमित्तान्यथोपपत्तेः स्वयमभ्युपगमात् । यद्वाऽनुगतधर्मानभ्युपगमे कारणत्वग्रह एव न स्यात् आनन्त्यव्यभिचाराभ्यां व्यक्तौ तदसम्भवात् । यद्वाऽनुगतधर्मानभ्युपगमे व्याप्तस्य पक्षधर्मत्वमित्यनुमानमपि विडम्बनमित्यर्थः । अन्यथाख्यातिपक्षमाश्रित्याह । तस्मादिति ॥

---

(१) नुगतप्रत्ययः—पा० २ पु० ।

रघु० टी० । यदि च विनैव कारणसाजात्यं कार्यसाजात्यं तदा यथा भिन्नभिन्नैरेव पिण्डैरभेदव्यवहारः तथा भिन्नभिन्नैरेव बीजादिव्यक्तिविशेषैरनुगताङ्कुरादिकार्यजननोपपत्तावङ्कुरादिसाजात्यानुरोधेन बीजादिव्यक्तिविशेषतत्कारणपरम्परासु कुर्वद्रूपत्वपरम्पराकल्पनं विफलमेव भवतामित्याह । अन्यथेति । तत्परम्परेत्यस्य बीजधान्यशालिकलमादिष्वङ्कुरादिसामान्यविशेषकार्य्यप्रयोजककुर्वद्रूपत्वसमुदायो वाऽर्थः । विना बाधकं तद्वुद्धीनां भ्रमत्वायोगात्तद्वलात्साजात्यवैजात्ये साधयित्वा सम्प्रति भ्रमस्यारोप्यप्रसिद्धिमन्तरेणासम्भवाद्सत्ख्यातेर्निरासाद्भ्रमबलादेव ते साधयन्नुपसंहरति । तस्मादिति ॥

---

**अस्तु तर्हि जात्यादौ बाधकादपोहसिद्धिरिति चेत् । व्यवहारस्यानन्यथासिद्धौ क्व बाधकम् । अन्यथा विपक्षे बलवद्बाधकमुपनीयानन्यथासिद्धिविश्रान्तोपि स्वभावहेतुर्बाधकशङ्कयाप्युपहन्येत । ततो बाधकव्यसनमपहायानुगमव्यवहृतिरन्यथाप्युपपाद्यताम् । न चैतच्छक्यं गत्यन्तराभावात् ।**

शङ्क० टी० । बाधकात् अग्रे वक्ष्यमाणात् । व्यवहारस्य अनुगतव्यवहारस्य । अन्यथा सुदृढनिरूपितोनिरूपणीयोर्थो(१) बाध्यः स्यादित्याह । अन्यथेति । स्वभावहेतुः प्रसङ्गभिन्नो हेतुः । उपहन्येत आभासः स्यात् । नैतदिति । अनुगतव्यवहारस्यान्यथोप-

(१) निरूपितोऽप्यर्थो—पाठः ।

पादनं न शक्यमित्यर्थः । गत्यन्तराभावादिति । अन्यापोहादेर्निरस्तत्वादित्यर्थः ॥

---

भगी० टी० । जात्यादावित्यादिपदादनेकवृत्त्येकसंयोगावयव्यादिपरिग्रहः । व्यवहारस्येति । व्यवहारानन्यथासिद्धेरेव न बाधकमित्यर्थः । नापि बाधशङ्का तस्या एव विपक्षबाधकत्वात् अन्यथा तव स्वदर्शनव्याघात इत्याह । अन्यथेति । यदि विपक्षबाधकसद्भावेपि शङ्केत्यर्थः ॥

---

रघु० टी० । जात्यादावित्यादिपदादनेकवृत्तिसंयोगादिपरिग्रहः । बाधकं हि शङ्कितं निश्चितं वा । आद्ये व्यवहारस्येति । बाधकं शङ्कितम् । स्वभावहेतुरनुमापको हेतुः । गत्यन्तरेति । अथ कोयमगौरित्यादिपूर्वोक्ताव्यवहितग्रन्थेन अपोहादेरनुगतव्यवहारानुपपत्तेरुपदर्शितत्वादित्यर्थः ॥

---

**न च बाधकमप्यस्ति । तद्धि स्वरूपतो वा स्यात् ज्ञानतो वा स्यात् । स्वरूपतोऽप्यनुपलम्भो वा विरुद्धधर्म्माध्यासो वा ।**

शङ्क० टी० । ननु बलवद्बाधकं चेदस्ति तदा प्रकारान्तरेणाप्यनुगतव्यवहारः परं चिन्तयितुमर्हतीत्यत आह । न चेति । स्वरूपत इति । जात्यादिकमेवाश्रित्य बाध्यते जात्यादिज्ञानं वा बाध्यत इत्यर्थः ॥

---

भगी० टी० । स्वरूपतो वस्तुगत्येत्यर्थः । ज्ञानत आरोपत इत्यर्थः । यद्वा तज्ज्ञानसामान्यनिरासेनेत्यर्थः ॥

---

रघु० टी० । बलवति बाधके जाग्रति नान्यथानुपपत्तेरपि साधकत्वसम्भव इति द्वितीयं निराकरोति । न चेति । स्वरूपतो जातिस्वरूपे साचात् । ज्ञानतो जातिविषयकज्ञानस्वरूपतदेक-त्वादिनिरासद्वारा ॥

---

न प्रथमः असिद्धेः । स्फुरत एव हि साधारणाकारस्य शरीरं चिन्तयितुमारब्धम् नास्फुरतः । अथास्ते साधा-रणस्फुरणं व्यासेधामो न तु विकल्पे, तस्य समानसङ्केत-ग्रहतिमिरनिकुरम्बकाम्बितदृष्टिभिरेवोपपादनात् न त्वस्माभिः, कल्पनाकोपस्यानन्तप्रसरतया तत्त्वाव्यवस्था-पकत्वादिति चेत् । शब्दानुसन्धानविरहेऽपि जाय-मानत्वात् ।

शङ्क० टी० । असिद्धेरिति । उपलम्भस्य साधितत्वादित्यर्थः । एतदेवाह । स्फुरत एवेति । अध्यक्ष इति । निर्विकल्पक इत्यर्थः । तन्मात्रमेव प्रमाणं यत इत्यर्थ । ननु निर्विकल्पकाभावेपि विकल्परूप एव जात्याद्युपलम्भोऽस्तीत्यत आह । न त्विति । समानशब्दसङ्केतग्रह एव तिमिरनिकुरम्बस्तेन करम्बिता कलुषिता दृष्टिर्येषां तैरेवोपपादनात् । न त्वस्माभिरिति । तत्त्वमात्रदृष्टिभि-

रित्यर्थः। तथा च विकल्पे गवादिपदसङ्केतग्रहाधीना नाम-जात्यादियोजना न तु वास्तवीत्यर्थः। तदेवाह। कल्पनेति। अगृहीतसङ्केतानामपि नामजात्यादिस्फुरणादित्याह। नेति॥

---

भगी॰ टी॰। ननु विकल्पे साधारणाकारेणास्फुरणेपि नार्थसिद्धिस्तस्यावस्तुविषयत्वात् किन्तु निर्विकल्पादेव सेत्याह। अध्यच इति। भ्रमबीजमाह। तस्येति। समानशब्दो गोशब्दादिः। एवम्भूतदृष्टिभिरन्यैरित्यर्थः। न त्वस्माभिः उपपादनादित्यनुषञ्ज-नीयम्। अत्र हेतुमाह। कल्पनाकोषस्येति। विकल्पे काल्प-निकस्यैव भानात्र ततोऽर्थसिद्धिरित्यर्थः। शब्देति। (एवं) सति गोपदवाच्यानाकलनेऽनुगतिर्न भासेतेत्यर्थः॥

---

रघु॰ टी॰। अनुपलम्भः किं सर्वथैवान्तराले वा विविच्य वा। आद्ये नेति। अध्यच इति। अध्यक्षमेव दोषाजन्यतया प्रमाण न तु दोषसमुत्थो विकल्प इति भावः। प्रकृते दोषमाह। तस्येति। निकुरम्बः स्तोमः। करम्बितं कल्पितम्। अस्तु विकल्पादपि वस्तुसिद्धिस्तत्राह। कल्पनेति॥

---

**तथापि तद्वासनात एवेति चेत्। किमेकसङ्केत-विषयाभावेपि समानशब्दसङ्केतग्रहवासनावशादेका-कारपरामर्शस्तत्सद्भावे वा। न तावदाद्यः सास्ना-मात्रादिमद्व्यक्तिवत् खर्गलोचनबाणाम्बुकुलिशादिष्वपि**

**गोशब्दसङ्केतग्रहवासनावशात्तथाविधप्रत्ययानुगमप्रसङ्गात्। इष्ट एवासावर्थ[(१)] इति चेत्। सोऽयं सास्नादिमतीषु व्यक्तिषु साधारणं रूपं न पश्यति पश्यति तु गोशब्दवाच्येषु दशस्विति किमत्र वक्तव्यं ननं रुचिरेवास्य[(२)] लोचनमिति।**

शङ्क० टी०। प्राक्तनी सङ्केतग्रहवासना तत्रास्तीत्याह। वासनेति। सोपि सङ्केतग्रह एव जात्यादिनिमित्तं तिरस्कृत्य पुरस्कृत्य वेति विकल्पार्थः। भिन्नप्रवृत्तिनिमित्तेषु गोपदवाच्येषु गवादिषु तथा सत्यनुगतप्रत्ययः स्यादित्याह। नानेति। असात्विति। अनुगतप्रत्यय इत्यर्थः। एकजातीयासु व्यक्तिष्वनुगतधीनिमित्तं किञ्चिन्न पश्यति विजातीयासु पश्यतीतीच्छामात्र न तु प्रमाणानुरोधः कश्चिदित्यर्थः॥

---

भगी० टी०। सोयमिति। तथा सति लोकविरोध इति भावः॥

---

रघु० टी०। तद्वासनातः शब्दवासनात एव दोषात्। दशसु स्वर्गेषुपशुविशेषवाग्वज्रदिङ्नयनमयूखपृथिवीपाथःसु॥

---

(१) इष्ट एवायम—पाठः।
(२) रुचिरमेवास्य—पाठः।

शक्यमिदमितरेणापि वक्तुमिति चेत् । शक्यम्, न तु व्यवहारस्तन्मूलो विपर्यासयितुम् ।

शङ्क० टी० । शक्यमिदमिति । गोशब्दवाच्येषु साधारणरूपं न पश्यति पश्यति तु सास्नादिमतीति सौगतेनापि शक्यं वक्तुमित्यर्थः । शक्यमिति । वाङ्मात्रं शक्यं, तात्त्विको व्यवहारोन्यथाकर्तुं न शक्य इत्यर्थः ॥

---

भगी० टी० । शक्यमिदमिति । गोशब्दवाच्येषु साधारणं रूपं न पश्यति पश्यति तु सास्नादिमद्व्यक्तिष्विति सौगतेनापि वक्तुं शक्यत इत्यर्थः । न त्विति । शाब्दो व्यवहारः सङ्केतग्रहमूलकः, स च न व्यक्तिषु शक्यः, व्याप्त्यनुगतापि निरस्तैवेति सास्नादिमद्व्यक्तिषु शब्दानुसन्धानविरहिणामप्यनुगतमतेरनुगतं सामान्यमभ्युपेयम्, स्वर्गादिषु समानपदवाच्यतां प्रतिसन्धानस्यैवानुगतधीरिति न तदन्यथासिद्धौ न ततस्तत्सिद्धिरित्यर्थः ॥

---

रघु० टी० । इदं इदमाकारं । स्वर्गादिषु न पश्यति पश्यति सास्नादिमतीषु व्यक्तिष्विति । व्यवहारोऽनुगतव्यवहारः । तन्मूलोऽनुगतधर्ममूलः । विपर्यासयितुमन्यथाकर्तुं । कथं तर्हि स्वर्गादावनुगतधर्मोपग्रहमन्तरेणानुगतव्यवहारः, अनुगतप्रत्ययात् । सोपि कथमन्तरेणानुगतधर्मं, क एवमाह । कस्तर्ह्यसौ, गोशब्दवाच्यत्वं । प्रकृतेपि तथैव किं न स्यात्, अव्युत्पन्नानामपि सास्नादिमतीषु व्यक्तीष्वनुगतगोप्रत्ययात् । न च स्वर्गादौ तथास्ति । न

वानुगतधर्मोपग्रहमन्तरेणानन्तासु व्यक्तिषु व्युत्पत्तिः सम्भवति । न च तामन्तरेणापूर्वव्यक्तौ पदविशेषवाच्यतानिबन्धनो व्यवहारः । स्वर्गादिषु चानुगतस्वर्गत्वादिनिबन्धना व्युत्पत्तिरिति ॥

---

**नन्वेतावतापि विकल्पः सिद्ध्यतु, अनुभवस्तु कथम् । सवस्तुकविकल्पसिद्धेरेव । कथं तस्य सवस्तुकतेति चेत् । शब्दवासनादिकारणान्तरविध्वंसादिति तूष्णीम्भव ।**

शङ्क० टी० । भासतां सविकल्पकेऽपि जातिरनुभवस्तु जातिं न विषयीकरोति तदा न सा प्रामाणिकीत्यर्थः । कथमिति । जातिगोचरः चेत्यतीत्यर्थः । सवस्तुकेति । विकल्पविषयस्य बाधकमन्तरेणानुभवविषयत्वध्रौव्यादित्यर्थः । अद्ययावद्विकल्प एव सवस्तुको न सिद्धोऽस्तीत्याह । कथमिति । शब्देति । शब्दवासनादिकारणनिषेधे गौरयमित्यादिविकल्पानामर्थसामर्थ्यसमुत्थत्वमावश्यकम् । तथा च गोत्वादिकमपि वस्तुभूतमेवेत्यर्थः ॥

---

भगी० टी० । एतदेव स्पष्टयति । नन्विति । निर्विकल्पकादेव वस्तुसिद्धिरित्यनुगतधर्मविषयकसविकल्पकसिद्धावपि तस्यालीकविषयतया न ततोऽर्थसिद्धिरित्यर्थः । सवस्तुकेति । सविकल्पकस्यालीकविषयकत्वानुपपत्तौ पारिशेष्येण वस्तुविषयत्वसिद्धेरित्यर्थः । एतदेव स्पष्टयति । शब्देति ॥

---

रघु॰ टी॰ । निर्विकल्पकादेव वस्तुसिद्धिर्न सविकल्पकादतिप्रसङ्गादित्याशयेन पृच्छति । नन्विति । विकल्पोऽतिरिक्तानुगतधर्मावलम्बी सिद्ध्यतु । असति बाधके सविकल्पकादेव वस्तुसिद्धिरित्याशयेनोत्तरयति । सवस्तुक इति ॥

अन्तराले किमिति नोपलभ्यत इति चेत् । उपलब्धिकारणाभावात् ।

शङ्क॰ टी॰ । अनुपलम्भान्तरं जातौ बाधकमाशङ्कते । अन्तराल इति । पिण्डयोरन्तराल इत्यर्थः । जातेर्व्यक्तिरभिव्यक्तिकारणम् सा चान्तराले नास्तीति कथमुपलभ्यतामिति परिहरति । उपलब्धीति ॥

भगी॰ टी॰ । ननु गोपिण्डयोरन्तराले यदि न गोत्वं तदा तत्रोत्पद्यमानव्यक्तौ गोत्वं न स्यादिति तथापि तत्सत्त्वे तदुपलभ्येतेत्याह । अन्तराल इति । सतोपि तत्र तस्य सास्नादिमद्व्यक्तेर्व्यञ्जिकाया अभावान्नोपलब्धिरित्याह । उपलब्धीति । न च तत्र तत्सत्त्वसाधकमानाभावः अप्रतिसङ्क्रमादितर्कसहायस्य सामान्यसाधकस्य प्रत्यक्षस्यैव तद्व्यापकत्वसाधकत्वात् ॥

रघु॰ टी॰ । जातिरव्यापिका चेत्प्राचीनवर्त्तिनि पिण्डे परिदृष्टा प्रतीचीवर्त्तिनि नोपलभ्येत प्रतिसङ्क्रमणासम्भवादतो व्यापिकैव वाच्या, तत्र द्वितीयमनुपलम्भबाधकमाशङ्कते । अन्तराल

इति । मध्यदेश इत्यर्थः । यद्वा जातिरनित्या चेत्पूर्वपिण्डनाशे उत्तरपिण्डे नोपलभ्येत तेन नित्या वाच्या, तत्राशङ्कते । अन्तराल इति । एकपिण्डनाशानन्तरं पिण्डान्तरानुत्पादककाल इत्यर्थः । उपलम्भः कारणस्य व्यक्तेरभावादिति ॥

---

**पिण्ड एव कुण्डे बदरवत् कुतो नोपलभ्यत इति चेत् । न । अनन्यदेशत्वात् । भेदेन तूपलभ्यत एव, पिण्डान्तरासंसर्गिणि पिण्डेऽनुभूयमाने तत्संसर्गितया-ऽनुभवात् ।**

शङ्क० टी० । तर्हि पिण्डेऽपि विवेकेनोपलभ्यताम्, नोपलभ्यते चेन्नूनं नास्तीत्याह । पिण्ड एवेति । विवेकेनोपलम्भो यदि पिण्डभिन्नदेश उपलम्भस्तत्राह । अनन्यदेशेति । यदि च भेदमात्रोपलम्भो विवेकेनोपलम्भस्तत्राह । भेदेनेति । विशेषणस्य गोत्वस्य विशेष्यस्य गोपिण्डस्य भेदेनोपलम्भस्य सत्त्वादित्यर्थः । नन्वयं गौरिति विशिष्टबुद्धौ गोपिण्डान्तरमेव विशेषणत्वेन भासतां किं गोत्वेनेत्यत आह । पिण्डान्तरेति । पिण्डान्तरं सम्बद्धं विशेषणं भवेन्न त्वसम्बद्धमपीत्यर्थः ॥

---

भगी० टी० । ननु यदि पिण्डसंसर्गि गोत्वं तदा कुण्डसंसर्गिबदरवत्तथात्वेनोपलभ्येतेत्याह । पिण्ड एवेति । तथात्वेनेत्यस्य विभिन्नदेशतयेत्यर्थः स्वरूपभेदेनेति वा पिण्डसंसर्गितयेति वा । आद्ये अनन्येति । द्वितीये भेदेनेति । पिण्डाद्भेदेनोप-

लभ्यत एवेति दृष्टापत्तिरित्यर्थः । तृतीये पिण्डान्तरेति । अत्रापि सम्प्रतिपत्तिरेवेत्यर्थः । पिण्डान्तरासंसर्गिणीति पिण्डतादात्म्य-निरासार्थम् । यदि पिण्डगोत्वयोरभेदस्तदा पिण्डासम्बद्ध-पिण्डान्तरसंसर्गितया नानुभूयेतेत्यर्थः । तत्सद्भावे वेति पक्षस्त्विष्यत एवेति न दूषितः ॥

---

रघु० टी० । तृतीयमनुपलम्भमाशङ्कते । पिण्ड एवेति । त्रिविधोपलम्भो हि विभिन्नदेशत्वेनोपलम्भो भेदेन वा । आद्ये ऽनन्येति । 'बदरस्य कुण्डेतरस्यावयवदेशत्वतञ्जातेः पिण्डेतरादेश-त्वात् । द्वितीये भेदेनेति । पिण्डान्तरासंसर्गिणि पिण्डान्तरा-नात्मके । एकस्यानेकतादात्म्यानुपपत्तिप्रदर्शनाय चेदम् ॥

---

नापि द्वितीयं बाधकम् अवयविसमानयोगक्षेम-त्वात् । जायमानपिण्डसम्बन्धानुपपत्तिरप्रतिसङ्क्रमात्त-त्रासत्त्वादनुत्पादाच्चेति चेत् । कथं पुनस्तत्रासत्त्वं त्वया व्यवसायि । तत्र सत्त्वे तद्वत्याकाशादेरपि गोत्वप्रसङ्गा-दिति चेत् । न चैतत् पश्चादपि तद्वत्याकाशादिना सम्बध्यते । येन च पिण्डेन सम्बध्यते न तत्र कदापि तन्नास्ति । तत् कुतो विरोधः ।

शङ्क० टी० । विरुद्धधर्माध्यासो वेति विकल्पितविकल्पं दूषयति । नापीति । अवयविनि कार्त्स्न्यैकदेशविकल्पनिरासव-

दिशापि तन्निरसनीयं न कार्त्स्न्येन वर्त्तते नैकदेशेन किन्तु स्वरूपेणेत्यर्थः। ननु जायमानपिण्डसम्बन्धः प्रकारत्रयेण सम्भवति। पिण्डान्तराद्गोत्वस्य गमनाद्वा पूर्वमेव तत्सत्त्वाद्वा पिण्डेन सह जायमानत्वाद्वा। तदेतत् त्रयमप्यनुपपन्नमित्याह। जायमानेति। अप्रतिसङ्क्रमात् अगमनात्। गोत्वप्रसङ्गादिति। तथा च तदनुभवव्यवहारयोः प्रसङ्गादित्यर्थः। समवायवृत्त्या तत्सत्त्वं व्यवहारे तन्त्रं न तु स्वरूपतोऽपीति भावः। यदि समवायेनाकाशादौ गोत्वं स्यात्तदा पश्चादपि स्यान्न चैवमित्याह। न चैतदिति। सम्बध्यते समवैतीत्यर्थः। जातेपि तत्र पिण्डे गोत्वमाकाशासम्बन्ध्येवेत्यर्थः। तर्हि पिण्डेनापि तत्र न सम्बध्येतेत्याह। येन चेति। तत्र जातः सम्बन्धस्येत्येक एव काल इति पिण्डेन कदाचिदपि न तस्यासम्बन्ध इत्यर्थः। कुतो विरोध इति। पिण्डोत्पत्तेः पूर्वमाकाशादौ गोत्वं नासीदुत्पन्ने च पिण्डे तत्र गोत्वमिति विरोधो न सम्भवतीत्यर्थः॥

---

भगी० टी०। द्वितीयं बाधकं कार्त्स्न्यैकदेशविकल्पेन विरुद्ध-धर्माध्यासरूपम्। अवयविस्थापनानन्तर एव दूष्यत्वादित्यर्थः। ननु जायमानपिण्डे गोत्वं न गत्वा सम्बध्यते तस्य निष्क्रियत्वात्। नापि तद्देशे जातिः स्थिता तत्रापि गोत्वापत्तेः। नापि पिण्डेन सम्भूयैवोत्पद्यते नित्यत्वादिति सम्बन्धव्यापकत्रयव्यावृत्तौ सम्बन्धोऽनुपपन्न इत्याह। जायमानेति। आकाशादिदेशेनासम्बद्धमेव स्वरूपवत् सामान्यं यत्ता स्वसमवेतं व्यक्त इत्यभिप्रेत्याह।

कथमिति । तच्चेत्यनेनाकाशादिर्विवक्षितः पिण्डो वा । आद्ये आपाद्यापादकयोर्वैयधिकरण्यम्, न ह्याकाशादिना सहासम्बन्धे पिण्डसम्बन्धो विरुद्ध इति भावः । पिण्डेनासम्बन्धस्तत्सम्बन्ध-विरोधौ, स च जातिपिण्डसम्बन्धस्य नित्यत्वादेव नास्तीत्याह । येन चेति ॥

---

रघु० टी० । विरुद्धधर्मसंसर्गोविषयविवदिषापि निरसनीय इत्याह । नापीत्यादि । ननु गोत्वादौ जायमाने गवि गोत्वस्य सम्बन्धो न रज्ज्वादिवद्देशान्तरादागमनात् निःक्रियत्वात् । न करीषादिवत्तत्रैव सत्त्वात् प्रागप्युपलम्भप्रसङ्गात् । न पिण्डरूप-वत्तदोत्पादात् प्राचीनपिण्डानामगोत्वप्रसङ्गात् । न च प्रकारान्तरं सम्बन्धोपपादकमस्तीत्याशङ्कते । जायमानेति । तत्रासतोपि स्वभावनियमादेव सम्बन्धो नानुपपन्नः सतोपि च व्यञ्जकव्यक्ति-विरहादेवानुपलम्भ इत्याशयवानाह । कथं पुनरिति । तत्र प्रत्र गोत्वसत्त्वे तत्रत्यत्वाविशेषाद्द्रव्यान्तरेपि गोत्वसम्बन्धे तत्रापि गौरिति प्रत्ययापत्तिरित्युत्तरतात्पर्याभ्यामाशङ्कते । तत्र सत्त्व इति । गोत्वस्य यथाकथञ्चित्सम्बन्धो न गौरितिप्रत्ययनियामकः किं तु समवायः स चेदुत्तरकालं द्रव्यान्तरे गोत्वस्य स्यात्कल्प्यतापि प्रत्र तच्च तदभावोपपत्तये गोत्वस्यासत्त्वमित्याशयवानाह । न चैतदिति । अथ तत्रत्यत्वाविशेषेपि क्वचिदेव गोत्वसमवायो नान्यत्रेति कुतो नियम इति चेत् स्वभावनियमादिति गृहाण । अथ पिण्ड एवोत्पत्तिकाले सतो गोत्वस्योत्तरकाले सम्बन्धो विशेषदर्शनादिकं

विरुध्येत इति चेदत्राह । येन चेत्यादि । आत: सम्बद्धस्तेत्येक: काल इत्यभ्युपगमादित्यर्थ: ॥

---

**अथ पिण्डमन्तर्गडुमुपादायोपलक्षणतया तत्रेति व्यवहार:, तदा तदुपसर्पणापसर्पणोत्पत्तिविनाशैरेव तदुपपत्तौ न यातीत्यादिरपराद्धेषोरिव धानुष्कस्य कण्ठडम्बर: ।**

शङ्क० टी० । ननु पिण्डो निरूपकमात्रं न तु तत्र गोत्वं समवैति तथा च तेन रूपेण निरूप्यमाण गोत्वमाकाशादौ प्रागासीच्चेत्तदा गोव्यवहार: स्यादिति ब्रूम इत्याह । अथेति । अन्तर्गडुत्वं निरूपकमात्रम् । एवं सति यथा पिण्डसत्त्वासत्त्वाधीने गोत्वसत्त्वासत्त्वे तथा गौरस्ति गौर्नास्ति गौर्जातो गौर्नष्टो गौर्गच्छतीत्यादिव्यवहारा अपि पिण्डोपाधिका एव, तथा चोत्पादविनाशप्रत्ययो गोत्वबाधकत्वेनाशङ्कितो न मनागपि पदमादधाति, तेषां पिण्डोत्पादविनाशविषयत्वात् ।

न याति न च तत्रासीन्न चोत्पन्नं न चांशवत् ।
जहाति पूर्वमाधारमहो व्यसनसन्ततिः ॥

इति कीर्त्तिः विरोधकीर्त्तनस्य लक्ष्यं गोत्वं, तच्च तत: प्रच्युतं व्यक्तौ पतितमित्यपराद्धेषुता ॥

---

भगी० टी० । नन्विह देशे गौरिति प्रतीतेः परम्परया आकाशादिनापि गोत्वसम्बन्धो नेह गौरितिधीविषयगोत्वासम्बन्धेन

विरुद्धः स्यादित्याह। अथेति। अन्तर्गडुम् निरूपकमात्रम् न तु गोत्वस्याधारमित्यर्थः। तथा च पिण्डे गोत्वमिति व्यवहारो न मुख्यः किन्तु लाक्षणिक इत्यर्थः। आकाशादिदेशे नेह गौर्नेह गोत्वमस्त्यासीदिति व्यवहाराः पिण्डोपसर्पणादिनैवोपपन्ना इति न तत्र सम्बन्धासम्बन्धौ परम्परयापि यत्र पिण्डे समवैति गोत्वं तत्रैव परं गोव्यवहारं करोतीति

न याति न च तत्रासीत्र चोत्पन्नं न चांशवत्।

जहाति पूर्वं नाधारमहो व्यसनसन्ततिः॥

इति कीर्त्त्युक्तव्याघातो लक्ष्यच्युतशरस्य धन्विनः कण्ठडम्बर इव गोव्यक्तिनिष्ठकर्म्मादीनां परम्परासम्बन्धेनैवसमाहितत्वात् गोपिण्डेऽर्थ-सम्बन्धस्याभावादसम्बन्धकाले गोपिण्डस्यैवासत्वादित्याह। तदेति।

---

रघु॰ टी॰। अन्तर्गडुम् सम्बन्धघटकम्। उपलक्षणतया परम्परया। तत्रेति व्यवहारः. कदाचित्तत्रेति कदाचिच्च न तत्रेति व्यवहारः। तदिति। उपसर्पणोत्पत्तिभ्यामपसर्पणविनाशाभ्यां च तयोः सत्त्वासत्त्वव्यवहारयोरुपपत्तौ

न याति न च तत्रासीत्र चोत्पन्नं न चांशवत्।

जहाति पूर्वमाधारमहो व्यसनसन्ततिः॥

इति कीर्त्तिकण्ठडम्बरः। पूर्वमित्यनेन भजते परमित्यपि सूचितम्। स्वस्वावयवक्रियानिमित्तके पूर्वापरदेशत्यागागावाप्तौ न याति नांशवदित्यनेन प्रतिषिद्धे॥

---

तथा हि पिण्डमधिकृत्योपसर्पणापसर्पणाभावस्तदुपलक्षितं देशमधिकृत्य च सत्त्वासत्त्वे सामान्यस्येति किं केन सङ्गतम्। यथाप्यनुत्पन्ने पिण्डे तस्यासत्त्वं सुलभमेव तदसत्त्वादिति हृदयम्, तन्न। स्वरूपसत्त्वासत्त्वयोर्द्वितीयानपेक्षत्वात् सम्बद्धत्वासम्बद्धत्वे तु द्वितीयापेक्षे। ततस्तत्रासति नास्तीति कोऽर्थः।

शङ्क० टी०। ननु सामान्यं पिण्डं नोपसर्पति न वापसर्पति चेत् तदा तदुपलक्षिते देशे सामान्यसत्त्वासत्त्वे स्यातामिति सहदेशमिति सोपहासमाह। तथा हीति। उपसर्पणापसर्पणाभाव इत्यत्र सामान्यस्येत्यग्रेतनेन सम्बन्धः। यद्वा ननु व्यक्तेरुपसर्पणापसर्पणात्तदुपलक्षिते देशे सत्त्वासत्त्वे न सामान्यस्येति यथाश्रुतं सोपहासमाह। तथा हीति। पिण्डे चेन्नोपसर्पणापसर्पणे तर्हि तदुपलक्षिताकाशदेशे सामान्यस्य सत्त्वासत्त्वे स्यातामित्यत्यन्तमसङ्गतमित्यर्थः। ननु सामान्यं स्वरूपतः तद्देशादावस्ति चेदस्तु तथापि यः पिण्ड उत्पन्न एव नास्ति तेन तत्सम्बन्धः कथं स्यात्। न हि सम्बन्ध्यभावेपि सम्बन्ध इति पूर्वपक्षिणो हृदयमाह। यथापीति। सामान्यं स्वरूपतः सर्वत्र देशे कालेऽस्तीत्युक्ते तत्कथमनुत्पन्नेन पिण्डेन सम्बध्यतामित्यपि किं केन सङ्गतमित्यर्थः। ननु पिण्डानुत्पत्तिदशायामसता पिण्डेन कथं सम्बध्यतामित्येतदेव प्रश्नविषय इत्यत आह। तत इति॥

भगी० टी०। तथा च पिण्डमधिकृत्य सामान्यस्योपसर्पणाद्य-भावः तदुपलक्षितं देशमधिकृत्य तथैव सम्बन्धासम्बन्धे वैयधिकरण्यमित्याह। तथा सामान्यस्येति शेषः। ननु पिण्डानुत्पत्तिदशायां तत्रावर्त्तमानं तस्मिन्नुत्पन्ने कथं तद्वर्त्ततेत्याह। अथेति। तस्य सामान्यस्य। तदसत्त्वात् पिण्डासत्त्वादित्यर्थः। नात्र विरोधो न हि पिण्डोत्पत्तेः पूर्वं तत्र तस्यासत्त्वे स्वरूपसत्त्वं निवर्त्तते, न हि तदपि तस्य सम्बन्धापेक्षं, सम्बन्धिनः पिण्डस्याभावात् सम्बन्धः परं न स्यादित्याह। स्वरूपेति। ननु पिण्डानुत्पत्तिकालेपि गोत्वं स्वरूपसदेव नास्तीति बुद्धेः को विषय इत्याह। तत इति॥

---

रघु० टी०। पिण्डे उपसर्पणस्य पिण्डाद्यापसर्पणस्य चाभावात्सामान्यस्य किं पिण्डोपलक्षितदेशे सत्त्वासत्त्वे नोपपद्येते किं वा पिण्ड एव। आद्ये पिण्डमधिकृत्येति। पिण्डस्योपसर्पणादिभिरेव तदुपपत्तेरिति भावः। द्वितीये तु सत्येव पिण्डे तत्रासत्त्वं प्रागेव निरस्तं। तेन शिष्यमाणमसति पिण्डे तत्रासत्त्वमाशङ्क्य निराकरोति। अथापीति। तस्य सामान्यस्य। तदसत्त्वात् पिण्डासत्वात्। सत्त्वासत्त्वे यदि वर्त्तमानत्वावर्त्तमानत्वे तत्राह। स्वरूपेति। द्वितीयानपेक्षत्वात् पिण्डाद्याधारानपेक्षत्वात्। न त्वा सामान्यस्य कदाचिदप्यसत्त्वं नित्यत्वात्। सम्बद्धत्वेति। यद्यपि सम्बन्धोऽत्र समवायः स च नित्य एव, तथापि तद्विशेषितः समवायो नास्तीत्यसम्बन्धित्वमङ्गीकृतम्॥

---

तेनासता न सम्बध्यत इति चेत्। तच्चैवमेतत्। पश्चात् कथं सम्बध्यतामिति चेत्। तस्य सत्त्वात् असम्बद्धत्वस्य तदसत्त्वप्रयुक्तत्वात्। ततः प्रागसन् पिण्डः पश्चात् कथमुपपद्यतामिति चोद्यनिष्ठा, सा च सत्कार्य्यवादमनुपततीत्यभुक्तवान्तिः।

शङ्क० टी०। असता सम्बन्धो न भवत्येवेत्याह। तच्चेति। तस्येति। पिण्डस्येत्यर्थः। तदसत्त्वप्रयुक्तत्वात् पिण्डासत्त्वप्रयुक्तत्वात्। सम्बन्धिनि सति सम्बन्धो भवतीति सर्वजनसिद्धेपि तत्र कथं तवाभिप्राय एवमुन्नीयते। यः पिण्डः पूर्व्वं नासीत् स पश्चात्कथमुत्पद्यत इत्याह। तत इति। चोद्यनिष्ठा देश्यपर्यवसानम्। अभुक्तवान्तिरिति। साङ्ख्यमतं त्वया न भुक्तं न पाचितमिदानीं तदेव वमसीत्यर्थः। देशे काले च सामान्यस्वरूपमस्ति, पिण्डोपगमापगमादिना गौरस्ति गौर्नास्तीति व्यवहारः, यथाऽविचलति चैत्रे दण्डोपगमापगमाभ्यां दण्डी चैत्रो नायं दण्डीति व्यवहार इति प्रघट्टकार्थः॥

भगी० टी०। यद्यपि तयोः सम्बन्धः समवायः स चास्त्येव तथाप्यसता पिण्डेन तन्निरूपणं नास्तीत्याह। तेनेति। तस्य पिण्डस्येत्यर्थः। निष्ठा पर्य्यवसानम्॥

---

रघु० टी०। तस्य पिण्डस्य। तत्र च पिण्डे सतः सामान्यस्य तन्निष्ठाभावप्रतियोगित्वरूपं न तत्रासत्त्वं, यावत्सत्त्वं तत्र

सामान्यस्य सत्त्वात् असतस्तदभावाधिकरणत्वायोगात्। शेषमिह पूर्वपक्षमर्यादा॥

---

तथापि सामान्यतद्वतोरत्यन्तभेदे कथं सामानाधिकरण्यमिति चेत्। किमिदम्। समानेनाधिकरणेन हि सम्बन्धः सामानाधिकरण्यम् तस्य च भेदेन को विरोध इति नाधिगच्छामः। गवाश्वयोरपि तथाभावप्रसङ्ग इति चेत्। ननु व्यतिरेकदृष्टान्तस्थानं तत् न तु विरोधस्थानम्। तच्च मैत्रतनयोपि यदि कश्चिदश्यामः स्यात् परिदृश्यमानानामपि तथाभावप्रसङ्ग इति क्व नाम दुर्लभम्।

शङ्क० टी०। धर्मधर्मिणोर्भेदाभेदवाद्याह। तथापीति। अत्यन्तभिन्नयोर्गवाश्वयोः सामानाधिकरण्याभावादित्यर्थः। अत्यन्तभेदेपि सामानाधिकरण्यं नानुपपन्नमित्याह। किमिदमिति। ननु भिन्नयोः सामानाधिकरण्ये गवाश्वयोरपि सामानाधिकरण्यं स्यादिति शङ्कते। गवाश्वयोरिति। न ब्रूमो ययोर्भेदस्तयोः सामानाधिकरण्यमावश्यकमिति, अपि तु क्वचिद्भेदे सति सामानाधिकरण्यं तदभावश्च गवाश्वयोरिति व्यतिरेकदृष्टान्तस्थानं गवाश्वमित्याह। नन्विति। तच्चेति। तच्च व्यतिरेकदृष्टान्तस्थानं क्व नाम दुर्लभमिति सम्बन्धः, किन्तु सुलभमेवेत्यर्थः। सौलभ्यमेव दर्शयति। मैत्रतनयोपीति। यथा मित्रातनयः श्याम स्तद्वर्गो

न च तावता श्यामत्वेन निर्णीतो भिन्नातनयः क्वचिदश्यामस्यापि दर्शनात्, श्यामत्वेन निर्णीतोऽपि भिन्नातनयः स्यादश्यामस्तथा भेदे सति सामानाधिकरण्यमित्युक्ते असामानाधिकरण्येन निर्णीतयोरपि गवाश्वयोः सामानाधिकरण्यं न प्रसज्यत इत्यर्थः ॥

---

भगी० टी० । धर्मधर्मिणोर्भेदाभेदवाद्याह । तथापीति । अत्यन्तभिन्नयोर्गवाश्वयोस्तदभावादित्यर्थः । समानेनेति । अभेद एव तद्विरुद्धमिति भावः । न चान्योन्याभावस्य नित्याभाववृत्ति-धर्म्मत्वेनाव्यावृत्तिधर्म्मत्वमनुमेयम्(१) । एकस्यैव भावाभावयोरवच्छेद-भेदनियतत्वात् तस्य चात्राभावेन बाधा ॥

---

रघु० टी० । धर्मधर्मिणोरात्यन्तिकमभेदं निरस्य पाक्षिकं तं निरसितुं भेदाभेदवादिनमुत्थापयति । तथापीति । किमिद-मित्याश्चर्य्यं । तदेव दर्शयति । समानेनेति । तुल्येनेत्यर्थः । तथा च समानानि तुल्यानि अधिकरणानि यस्य, तत्तथा, तस्य भावः सामानाधिकरण्यं । यद्यपि समानमेकमधिकरणं ययोरित्यादिक-मर्थान्तरमप्यस्ति तथापि तस्य प्रकृते असम्भवात् न्यायकुसुमाञ्जलौ विस्तृतत्वाच्च नेह प्रस्तुतं । न त्विति । व्यतिरेकयोः सहचार-मात्रेण विरोधासिद्धेरिति भावः ॥

---

तथापि विशेषो वाच्य इति चेत् । अस्ति स्वाभाविको विशेषो यत् किञ्चिदेव केनचित् सम्बद्धं न सर्व्वं सर्व्वेणेति ।

**तथाऽनुगमनियमोपि स्वभावादेव किं न स्यादिति चेत् । एकस्यानेकसम्बन्धेऽनेकस्य चैकसम्बन्धेऽविरोधात् एकानेकयोरनेकैकव्यवहारविरोधादिति ।**

शङ्क० टी० । विशेष इति । भिन्नयोः क्वचित्सामानाधिकरण्यं क्वचिन्न नेत्यत्र विशेषो वाच्य इत्यर्थः । स्वभाव एवात्र नियामक इत्याह । अस्तीति । ततः स्वभावः प्रतीतिसाक्षिक इति भावः । तर्हि व्यक्तिविशेषानुगतमतिनियमोऽपि स्वभावादेवास्तु किं जात्येत्याह । तथेति । एकस्येति । यद्येको धर्मोऽनेकसम्बन्धी न भवति तदा तेनानुगतप्रत्ययो न भवेत्, न चैवम्, यदि वाऽनेकेषां धर्मिणामेकधर्म्मसम्बन्धविरोधः स्यात्तदा तथा कल्प्येत, न चात्र विरोध इत्यर्थः । एकानेकयोरिति । एकेन यथा नानेकव्यवहारः तथा पिण्डैरेकव्यवहारोपि न सम्भवतीत्यर्थः ॥

भगी० टी० । विशेषः सत्यपि भेदे सामानाधिकरण्यप्रतीतिनियामक इत्यर्थः । अस्तीति । अनेन भेदाभेदसाधके सामानाधिकरण्यव्यतिरेकानुमाने साध्याभावप्रयुक्तो न साधनाभावः किन्तु स्वभावभेदाभावप्रयुक्त इत्युपाधिरप्युक्तः । तथेति । तथा च सामान्यं तन्नियामकं न सिद्ध्यतीति भावः । अतिरिक्तसामान्ये बाधके सत्येव स्वभाववादालम्बनमित्यभिप्रेत्य बाधकमुद्धरति । एकस्येति । तत्र य एकः सोऽनेकवृत्तिर्न भवतीति व्याप्तिर्बाधिका स्यात्, सा च नास्ति, स्वलक्षणस्याप्येकस्य हानापत्तेः, एकस्य परमाणोः षट्केन युगपद्योगात् । तस्माद्यथैकदानेकसम्बन्धो न

विरुद्धस्तथाऽनेकत्वैकसम्बन्धोपीत्यर्थः। तथापि साधकाभाव एव बाधकः स्यादित्यत आह। एकानेकयोरिति। एकव्यवहारोऽनुगतव्यवहारः। यथासङ्ख्यमन्वयः। तथा चानन्यथासिद्धानुगतप्रत्यक्षमेव तत्साधकमित्यर्थः॥

---

रघु॰ टी॰। एकस्य विज्ञानस्य यथानेकविषयसम्बन्धित्वं यथा चानेकस्य विषयस्यैकविज्ञानसम्बन्धित्वं तथैकस्य सामान्यस्यानेकपिण्डसम्बन्धित्वं अनेकस्य पिण्डस्यैकसामान्यसम्बन्धित्वं न विरुध्यते, मानाभावात्, अन्तरेण चैकधर्ममनेकेष्वेकव्यवहारो न सम्भवति कारणाभावादन्यथाऽतिप्रसङ्गाच्चेत्याह। एकस्येत्यादि। एकेति। यथा एकस्मादनेकव्यवहारो नोपपद्यते तथानेकेभ्योप्येकव्यवहारो नोपपद्यत इत्यर्थः॥

---

नापि ज्ञानतो बाधकम्। तत्स्वरूपप्रतिक्षेपस्यानुभवबाधितत्वात्। कारणप्रतिक्षेपस्य च जन्मनैवापास्तत्वात्। एकत्वप्रतिक्षेपस्य च विरुद्धधर्म्माध्यासविरहप्रतिहतत्वात्। पारोक्ष्यापारोक्ष्यादेरसिद्धेः। विषयमप्रतिक्षिप्य तत्प्रामाण्यस्य प्रतिक्षेप्तुमशक्यत्वात् तदप्रतिक्षेपस्य च दर्शितत्वात्। इन्द्रियजत्वप्रतिक्षेपस्य चेन्द्रियान्वयव्यतिरेकानुविधानबाधितत्वात्। साक्षात्कारित्वविश्रान्ते च तदनुविधानस्याव्यभिचारात्।

शङ्क० टी०। मूलविकल्पद्वये द्वितीयं विकल्पं दूषयति। नापीति। ज्ञानतो बाधकमिति कोऽर्थः। किं सामान्यविषयं ज्ञानमेव नास्ति अकारणकं वा नानाविषयकं वा परोक्षाकारं वा निर्विषयत्वेनाप्रमारूपं वा अनिन्द्रियजं वा असाक्षात्कारि वा। तत्र नाद्य इत्याह। तत्स्वरूपेति। द्वितीयं दूषयति। कारणेति। तृतीये त्वाह। एकत्वेति। चतुर्थं दूषयति। पारोक्ष्येति। विषये तावन्न पारोक्ष्यं नाप्यपारोक्ष्यं तदुभयस्य ज्ञानधर्मत्वात्। तथा च जातिगोचरज्ञानमिन्द्रियजमपरोक्षमेवानिन्द्रियजं तु परोक्षमिति नैतत् जातौ बाधकमित्यर्थः। पञ्चमं दूषयति। विषयमिति। विषयप्रतिक्षेपाधीनो हि प्रामाण्यप्रतिक्षेपः स च प्रकृते नास्तीत्यर्थः। षष्ठं दूषयति। इन्द्रियजेति। सप्तमं दूषयति। साक्षादिति। अयं गौरित्यादिविकल्पानां साक्षात्त्वमनुभवसिद्धमतोऽपीन्द्रियजत्वमित्यर्थः॥

---

भगी० टी०। नन्वनुगतधर्मज्ञानस्यानुपलम्भो बाधकः स्यादित्यत आह। नापीति। पूर्वं ज्ञानविषयस्यैवानुपलब्धिर्निरस्तेत्यपौनरुक्त्यम्। कारणेति। अनुगतधर्मज्ञानरूपकार्यस्य तत्कारणं विनानुपपत्तेरित्यर्थः। ननु विरुद्धधर्माध्यासादेकत्वं तत्र बाधितमित्याह। एकत्वेति। ननु सामान्यं नैकं व्यक्तिभेदेन प्रत्यक्षानुमानविषयतया तत्र पारोक्ष्यापारोक्ष्यविरुद्धधर्माध्यासादित्यत आह। पारोक्ष्येति। पारोक्ष्यापारोक्ष्ये विषयिणो धर्मौ न विषयस्य, तथाविधज्ञानविषयत्वादेवार्थे तद्व्यवहारादित्यर्थः।

ननु ज्ञानप्रामाण्यप्रतिक्षेपोऽस्तु बाधक इत्यत आह । विषय इति । अग्राह्यत्वादिति । न चार्थजन्यज्ञानत्वमभिलापासंसर्गित्वेन व्याप्तमिति वाच्यम् । निर्व्विकल्पकत्वस्योपाधित्वात् अप्रयोजकत्वाच्च । ननु सामान्यविषयकविकल्पस्यानिन्द्रियजत्वात् प्रामाण्यप्रतिक्षेपोऽस्त्वित्यत आह । इन्द्रियजत्वेति । व्यक्तिज्ञानस्याथैवानन्यथासिद्धान्वयव्यतिरेकानुविधायित्वात् कारणताग्रहे तदसम्भव इत्यर्थः । न च निर्व्विकल्पकोत्पत्तावेव तदुपक्षयः तद्धि यदीन्द्रियसन्निकर्षाव्यभिचारि तदा तत्करणत्वमवर्ज्जनीयम् । अथ काकतालीयसन्निधिस्तदा कदाचिदिन्द्रियार्थसन्निकर्षं विनापि साक्षात्कारी विकल्प उत्पद्येत । न च साक्षात्कारित्वं तस्यासिद्धमित्याह । साक्षात्कारित्वेति । तद्गतत्वेनानुव्यवसीयमानस्य बाधकं विना तद्धर्म्मत्वात् । तथा चेन्द्रियजन्यत्वे साक्षात्वमात्रं प्रयोजकं न तु तद्विशेष इत्यर्थः ॥

---

रघु० टी० । ज्ञानतो वेति द्वितीयं विकल्पं निरस्यति । नापीति । बाधकं हि ज्ञानस्वरूपे । तदेकत्वे वा । तदेवेदमिति विज्ञानं तदिदन्त्वास्पदयोरेकधर्म्मवत्त्वमवगाहमानं सामान्ये प्रमाणं भवेत् यदि च तदिदङ्ग्राहिणी विज्ञाने मिथो भिन्ने क तदा सामान्यसिद्धिवार्त्तेति भवति ज्ञानैकत्वबाधात्सामान्यबाधः । तत्प्रामाण्ये वा । आद्यमपि ज्ञानस्यानुपलम्भो वा कारणाभावो वा । आद्ये तत्स्वरूपमिति । चरमे कारणेति । द्वितीये एकत्वेति । पारोक्ष्यापारोक्ष्यलक्षणविरुद्धधर्माध्यासोस्तीत्यत आह ।

पारोक्ष्यति। संस्कारेण स्मृत्या चोपनीते विशेषणेपि विशिष्ट-ज्ञानस्यापरोक्षताया व्युत्पादितत्वात्। तृतीयमपि विषयबाधो वा व्यापकानुपलम्भो वा। आद्ये विषयमिति। स्यादेतत्। अर्थ-सम्बद्धं हि ज्ञानं प्रमा, अर्थनिरपेक्षाणां वासनामात्रसमुत्थानां शशविषाणादिविकल्पानामप्रमाणत्वात्, अर्थश्चेन्द्रियसापेक्ष एव प्रमा साधनं, न च विकल्पा इन्द्रियजन्मान इति द्वितीय निरस्यति। इन्द्रियजत्वेति अथ विनापीन्द्रियव्यापारं शशविषाणादिविकल्पो-त्पादाद्व्यभिचारेण विकल्पाकारणमिन्द्रिय तज्जनकनिर्विकल्पक एवोपक्षीणं वह्न्यनुमितिजनकधूमज्ञान इवेत्यत आह। साक्षा-त्कारित्वेति। साक्षात्कारित्वावच्छिन्नं प्रत्यव्यभिचारेणेन्द्रियस्य कारणत्वात्॥

---

अन्यथा निर्व्विकल्पकस्याप्यनिन्द्रियजत्वप्रसङ्गात। कामातुरकामिनीज्ञानस्य तदन्तरेणाप्युपपत्तेः। बाधकाभावाच्च दर्शनव्यापारौपाधिकत्वकल्पनानव-काशात्। अवकाशे वा विपर्य्ययकल्पनाया अपि प्रसङ्गात्। इन्द्रियमनपेक्ष्य साक्षात्कारिसमनन्तर-प्रत्ययमहिममात्रेण साक्षात्कारिविकल्पोपपत्तौ तद्वि-परीतानुत्पत्तिप्रसङ्गात्। प्रथममनुत्पत्तेः पूर्व्वस्मरणादि-सहकारिवैधुर्य्यनिबन्धनत्वादित्येषा दिक्।

शङ्क० टी०। अन्यथेति। साक्षात्त्वे सत्यप्यनिन्द्रियजत्वं चेदित्यर्थः। ननु निर्विकल्पकानन्तरभावित्वाधीनं तस्य साक्षात्त्वं

न तु इन्द्रियजत्वाधीनमित्यत आह। कामातुरेति। यत्र सत्त्वादौ कामिनीसमारोपस्तत्र निर्विकल्पकं विनापि इन्द्रियजत्वमात्रादेव तस्य साक्षात्त्वमित्यर्थः। तदन्तरेणापि—निर्विकल्पकमन्तरेणापि। ननु गौरयमिति विकल्पः साक्षात्कारो न भवत्येव येनेन्द्रियजः स्यात्। साक्षात्त्वं तु तस्य निर्विकल्पसाक्षात्त्वौपाधिकमित्यत आह। बाधकाभावादिति। दर्शनव्यापारः साक्षात्त्वम्। यद्वा दर्शनं साक्षात्कारिज्ञानं तद्व्यापारस्तत्कार्यो विकल्प इत्ययमेवोपाधिः सविकल्पकसाक्षात्त्व इत्यर्थः। स्वाभाविकबाधके सत्येवोपाधिकल्पना, तच्चेह नास्तीत्यर्थः। विपक्षदण्डमाह। अवकाशो वेति। सविकल्पकसाक्षात्त्वमेव निर्विकल्पकेऽप्युपाधिः स्यादित्यर्थः। नन्वस्तु विकल्पेऽपि स्वाभाविकं साक्षात्त्वं न त्विन्द्रियजत्वाधीनं, किन्तु साक्षात्कारिज्ञानजनितत्वमात्रेणेत्यत आह। इन्द्रियमिति। एवं तर्हि साक्षात्कारिणः समनन्तरप्रत्ययात् साक्षात्कारिज्ञानं न स्यादेव, तच्च तवानभिमतमित्यर्थः। नन्विन्द्रियमेव यदि साक्षात्कारिसविकल्पकजनकं तदेन्द्रियापातमात्रेणैव जायेत समर्थस्य क्षेपायोगादित्यत आह। प्रथममिति। सहकारिविलम्बेन विलम्बस्य स्थिरपक्षोपाधित्वादित्यर्थः। नन्वभिलापसंसर्गयोग्यप्रतिभासत्वान्न तदिन्द्रियजमित्यत आह। इत्येषा दिगिति। इन्द्रियजत्वेऽप्यभिलापसंसर्गयोग्यप्रतिभासत्वमविरुद्धमित्यादि तात्पर्यपरिशुद्धौ विस्तर इत्यर्थः॥

भगी० टी० । ननु व्यभिचारान्नेन्द्रियं तत्र हेतुः कामातुरकामिनीसविकल्पकस्येन्द्रियार्थसन्निकर्षं विनाप्युत्पत्तेरित्यत आह। अन्ययेति । एवं निर्व्विकल्पकमात्रं तादृशं नेन्द्रियजं स्यादित्यर्थः । वस्तुतो यत्र पुरोवर्त्तिनि कामिनीत्वमारोप्यते तेनार्थेनेन्द्रियसन्निकर्षोऽस्त्येवेति भावः । ननु सविकल्पके साक्षात्त्वं निर्व्विकल्पकोपाधिकमनुभूयत इति न तत्रेन्द्रियजत्वसिद्धिरित्यत आह । बाधकेति । दर्शनव्यापारः साक्षात्कारित्वम । अन्यथा सविकल्पकमेव साक्षात्कारि तदुपाधिकमेव निर्व्विकल्पकेन साक्षात्त्वमनुभूयत इत्याह । अवकाशे वेति । ननु निर्व्विकल्पकादेव समनन्तरप्रत्ययात् सविकल्पकं साक्षात्कार्य्युपेयते न त्विन्द्रियजमित्यत आह । इन्द्रियमिति । तथा सति तद्विपरीतमसाक्षात्कारि सविकल्पकं निर्व्विकल्पकान्नोत्पद्येतेत्यर्थः । नन्विन्द्रिय यदि सविकल्पकजनकं तदा निर्व्विकल्पकोत्पत्तिकाल एव तज्जनयेदित्यत आह । प्रथममिति । इन्द्रिय विशिष्टज्ञाने जनयितव्ये विशिष्टज्ञानतया निर्व्विकल्पकमपेक्षते प्रत्यभिज्ञाने तत्ताम्भृत्यपेक्षमित्यर्थः। दिगिति । अविसंवादादपि तत्प्रमाणत्वमित्यर्थः ॥

रघु० टी० । यदि च यथाकथञ्चित्तत्तद्धर्म्मणो विकल्पस्येन्द्रियव्यभिचारात्साक्षात्कारिणोऽपि तस्येन्द्रियाजन्यत्वं तदा निर्विकल्पकसधर्मणोऽस्फुटावभासस्य कामातुरकामिनीज्ञानस्येन्द्रियाजन्यत्वान्निर्विकल्पकमपीन्द्रियजन्यं न स्यादित्याह । अन्ययेति । इदं

च भावनावशात् स्मृत्युपनीतकामिन्यां पुरोवर्त्तित्वारोपस्तच्च च दर्शनत्वारोप इति मतेन ।

भावनापरिपाकवशाद्योगिनामात्मनैव कामातुरस्य कामिन्या निर्विकल्पकमिति मतेनेदम् तथा च यथाश्रुत एव साधीय इत्यपि कश्चित् ।

यदा च भावनावशात्पुरोवर्त्तिलतादावेव कामिनीत्वारोप इति मतं तदापि निर्विकल्पकत्वापेक्षया लाघवेन साक्षात्कारित्वमेवेन्द्रियजन्यतावच्छेदकमिति [१]मन्तव्यम् ।

केचित्तु अन्यथेति । साक्षात्कारित्वे सत्यपीन्द्रियजन्यत्व इत्यर्थः । अथेन्द्रियजन्यत्वाधीनं न सविकल्पकस्य साक्षात्कारित्वमपि तु निर्विकल्पकजन्यत्वाधीनमत आह । कामातुरेति । लतादौ कामिन्यारोपस्य विनापि निर्विकल्पकमिन्द्रियजन्यतामात्रेण साक्षात्कारित्वादित्यर्थ इत्याहुः । तच्चिन्त्यम् ।

भवेदेवं यदि सविकल्पकस्य साक्षात्कारित्वं स्वाभाविकं भवेत् न त्वेतदस्ति निर्विकल्पकसाक्षात्त्वस्य तत्रारोपादित्यत आह । बाधकाभावाच्चेति । दर्शनं निर्विकल्पकम् । व्यापारो धर्मः । उपाधीयत इत्युपाधिरारोपः । विपर्ययो विकल्पधर्मस्य साक्षात्त्वस्य निर्विकल्पके समारोपः । अथ समनन्तरप्रत्यय एव विकल्पजनको नेन्द्रियम्, स च साक्षात्कारीति करणसाकल्यादिकल्पोपि साक्षात्कारीत्यत आह । इन्द्रियमिति । विपरीतस्यासाक्षात्कारिविकल्पस्यानुत्पत्तिप्रसङ्गात्स-

(१) नित्येश्वरप्रमाभ्युपगमेत्वज्ञातमनुत्पत्वादेः प्रामाण्यव्यापकत्वसम्भवेनेति इत्यधिकः पाठः ३ ।

विकल्पकमात्र एवालयविज्ञानहेतुतायास्तथोपगमात् । यदैन्द्रियं विकल्पजनकं तदापातमात्रेण तदिदमित्यादिविकल्पापत्तिरत्राह । प्रथममिति । पूर्वस्मरणं पूर्वानुभूतव्यक्तिस्मरणम् । बाधितं चार्थामनुत्थानामनिन्द्रियजानामनुमित्यादिविकल्पानां विषयाबाधेन प्रामाण्यं अप्रामाण्ये चाप्रयोजकं नामजात्यादियोजनात्रगाहित्वादिकमित्यनुमन्धायाह । एषा दिगिति ॥

---

## अस्तु तर्हि प्रयोजनानुरोधादपोहस्वीकारः सर्व्वधर्म्मावाच्यत्वसिद्धिर्हि परमं प्रयोजनम्, कल्पनाजालविधूननेन गम्भीरोदारसमाधिसमधिगमादिति चेत्। निष्प्रमाणकमिदं कः श्रद्दध्यात्। प्रमाणं चात्र न प्रत्यक्षानुमाने। आगमश्च न किञ्चिद्वदतीति त्वयैव ग्राहितः शिष्यः।

शङ्क० टी० । प्रयोजनमाह । कल्पनाजालेति । जात्यादिकं पारमार्थिकं न भवति (यदा) तदा शाब्दलैङ्गिकविकल्पाधीने प्रवृत्तिनिवृत्ती न भवतस्ततो बहिर्व्यापारादुपरत मनो नैरात्म्यमात्र भावनपरं समाहितं भवति अननुगतप्रत्ययस्वपोहेनैव तृप्तेन भवति व्याप्तिशक्तिग्रहावप्यपोहानुगमसाध्याविति भावः । गम्भीरत्वं सवासनमिथ्याज्ञानोन्मूलनक्षमत्वम् । उदारत्वं नैरात्म्यसाक्षात्कारप्रापकत्वम् । समाधेः समधिगमः प्राप्तिः । इदमिति । अपोहस्वीकारस्य कल्पनाजालविलक्षणसमाधिसमधिगमकारणत्वमित्यर्थः । तात्र प्रत्यक्षानुपलम्भौ प्रवृत्तौ येन प्रत्यक्षमनुमानं वा प्रमाणमिह स्यादित्याह । प्रमाणञ्चेति । ननु सुगतागमप्रतिपाद्यमेवैतद्यथा तत्र

श्रवणमननादीनामात्मसाचात्कारकारणत्वमागमैकसमधिगम्यमित्यत आह । आगमस्येति । सर्व्वधर्म्मावाच्यत्वे स्वलक्षणं किंधर्मोपग्रहेण शब्दः प्रतिपादयेदिति शिष्यास्त्वयैव बोधिता इत्यर्थः ॥

---

भगी० टी० । अस्त्विति । प्रयोजनान्यथानुपपत्तिरपोह्य मानमित्यर्थः । तमेवाह । सर्व्वधर्म्मेति । गम्भीरत्वं मिथ्याज्ञान-वासनोन्मूलकत्वम् । उदारत्वं - - - - - - - - सर्व्वधर्म्मावाच्यत्वस्य समाधिहेतुत्वमित्यर्थः । आगमस्येति । सर्व्वधर्म्मावाच्यत्वे किंधर्म्म-पुरस्कारेण स्वलक्षणं शब्दवाच्यमिति ग्राहिताः शिष्यास्त्वयेत्यर्थः ।

---

रघु० टी० । सर्वधर्मेति । शब्दा हिताहितं तत्साधनानि तत्तद्धर्म्मविशिष्टानि बोधयन्तस्तत्र तदर्थिनः प्रवर्त्तयन्ति निवर्त्तयन्ति च, न चैतत्प्रतिपाद्यानि वस्तूनि भवितुमर्हन्ति सर्वधर्माणामवस्तुत्वात् वस्त्ववस्तुनोश्च सम्बन्धनिषेधात् अवस्तुनैवान्यापोहेन व्यवहारनिर्वाहात् । निर्णीते चैवं वाच्यानामवस्तुत्वे तदर्थनाविरहेण ततो विरतव्यापारं मनो नैरात्म्यभावनानियतं समाहितं भवतीति । परमं उत्कटम् । गम्भीरो मिथ्याज्ञानवासनासमूलोन्मूलनसमर्थः । उदारः फलाव्यभिचारी । इदं वस्तूनां सर्वशब्दावाच्यत्वस्य समाधि-हेतुत्वम् । यथा च वास्तवत्वेपि धर्माणां निर्विद्यते चेतस्तथोप-पादितमाकरे । अथ मदीया एवागमाः प्रमाणमस्त्वित्यर्थ, तत्राह । आगमस्येति ॥

---

न चैवं चेतनो ग्राहयितुमपि शक्यते स्ववाग्विरोधस्योद्भटत्वात् । तथा हि

शब्दस्य कस्यचिदपि[1] वस्तुनि मानसिद्धा
बाधावि[2]धिव्यवहृतिः क्वचिदस्ति नो वा ।
अस्त्येव चेत् कथमियन्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः ॥

इति तवैव विषयसञ्चारमात्रेण श्लोकः ।

शङ्क० टी० । त्वमिव तव शिष्योऽप्यचेतन एव येनैतादृशाद्दुपदेशात् स प्रतीतो विरोधं स्फुटतरमवधीर्य्येत्यत (?) आह । न चैवमिति । आगमो न किञ्चिद्वक्तीत्ययमप्यागम एव, तथा च स्ववाग्विरोध इत्यर्थः । विरोधान्तरमाह । शब्दस्येति । शब्देन वस्तुनि विधिनिषेधौ क्रियेते न वा, यदि क्रियेते तदा स्वलक्षणं न सङ्केतविषयोऽननुगमात्, स्वलक्षणं न शाब्दज्ञानविषयः अभिलापसंसर्गायोग्यप्रतिभासत्वात्, अतद्व्यावृत्तिधर्म्मवत्तयापि स्वलक्षणं न वाच्यमनलीकस्यालीकधर्म्मानाश्रयत्वादित्यादीनि दूषणानि त्वयोक्तानि त्वय्येव पर्य्यवसन्नानीत्यर्थः । नास्त्येवेति । वस्तु विधिनिषेधव्यवहारभाजनं न भवतीति वदता त्वयैव तादृरूप्येण वस्तु व्यवहृतमिति स्ववचनविरोध एव सिद्ध इत्यर्थः । विषयेति । शब्दस्य कस्यचिदवस्तुनि मानसिद्धेत्यादिगाथाऽस्माभिश्चौकृत्य

(१) कांचिदपि इति पु० पा० ।
(२) निषेधविधीत्यर्थः ।

विरोधदानार्थं त्वया पठिता सा चावस्तुपदस्थाने वस्तुपदसञ्चारेण मया पठनीयेत्यर्थः ॥

भगी० टी०। स्ववाग्विरोधस्येति। स्वलक्षणं न शाब्दव्यवहारविषय इत्यस्यैव व्यवहारस्य तद्विषयतया व्याघात इत्यर्थः। विरोधमेवाह। तथा हीति। शब्दस्य सङ्केताधीनप्रवृत्तिकतया सङ्केतस्य चानुगतधर्मपुरस्कारेण सम्भवात् स्वलक्षणस्य चासाधारणतया सङ्केताविषयत्वान्न तच्छब्दविषयः विकल्पस्याभिलापसंसर्गयोग्यत्वात्स्वलक्षणे तदभावाच्छाब्दवृत्तिविषयतया स्वलक्षणं न विषय इति विचारे यदि शब्दस्य वस्तुनि विधिनिषेधगोचरत्वं स्वीकृतं तदा इयन्ति स्वलक्षणसङ्केतग्रहस्याशक्यतया न व्यवहार इत्यादीनि दूषणानि स्युः कथं न स्युः। अथ तत्र तन्न स्वीकृतम् तदा स्ववचनप्रतिरोधः न कस्यापि व्यवहारस्य विषय इत्यस्यैव व्यवहारस्य तत्र स्वीकारादित्यर्थः। विषयेति। धर्मस्य कस्यचिदवस्तुनीत्यवस्तुनि विषये तेनोक्तं वस्तुविषये चास्माभिरित्यर्थः ॥

---

रघु० टी०। अयमर्थो वस्तुभूतो न वा। न चेत्कथमत्र प्रमाणसम्भावना। वस्तुभूतश्चेत् तर्हि शब्दप्रतिपाद्यः। इयन्ति स्वलक्षणानामननुगमात् कथं तत्र सङ्केतग्रहः अनुगतं धर्मं पुरस्कृत्य तद्ग्रहे तस्य वास्तवत्वे न कथं भवन्मतव्याघातः अलीकत्वे वस्त्वलीकयोर्न कथं सम्बन्धविरोधः स्वलक्षणस्य विषयत्वे कथं कल्पनापोढत्वमित्यादीनि। धर्मस्य कस्यचिदवस्तुनीति परगाथा ॥

---

न चास्माकमिव तवाप्यत्र मूकतैव शरणम्, सर्व्वथा वचनविरोधे ह्युदासीनस्य सा शोभते। न चात्र विधौ विरोधः कश्चित्। न च[1] त्वमुदासीनः प्रयोजने प्रवृत्तत्वात्। तस्मादलमङ्गुलीदीपिकया ध्वान्तध्वंसविधिमनुष्ठायेति।

शङ्क॰ टी॰। ननु मद्गाथायां त्वया मूकता यथा अवलम्बिता तथा विषयमस्वारेण पञ्चमगाथामस्माकमपि मूकतैव शरणमन्यथा विरोध एव स्यादित्यत आह। न चेति। मत्क्षणिकत्वव्यतिरेकदृष्टान्ते कूर्म्मरोमादौ त्वयोदाहृतेऽस्माभिर्न्निषेधश्चेत्क्रियते तदा मम स्ववचनविरोधः स्यात् तेन तत्र यथा मम मूकता तथा तव न तवोचिता, कल्पनाजालविधूननस्य समाधिसमधिगमहेतुभावस्य त्वयावश्यनिर्व्वाह्यत्वात्, तन्निर्व्वाहकश्च न प्रत्यक्षं नानुमानमतश्च शब्द एव वाच्यस्तत्र मत्पठितगाथायां त्वया स्थापनावादिनावश्यं किञ्चिद्वाच्यं, तथा च स्ववचनविरोधस्तव स्यादेवेत्यर्थः। न वा त्वमुदासीन इति। अङ्गुलीदीपिकयेति। अस्यन्निरोधमङ्गीकृत्य कल्पनाजालविधूननेन प्रयोजनेनापोहाभ्युपगमस्तवावश्यमित्यर्थः॥

---

भगी॰ टी॰। नचावस्तुनि विषये चास्माकमिव तवापि मूकता युक्ता, अस्माकं हि मूकता तत्र व्याघातपरा, सा चास्मासु

(१) न वा-इति शङ्करमिश्रसम्मतः पाठः।

नास्ति, विरोधाभावादित्याह। न चेति। अङ्गीकृतेति। व्याघातेन स्वपराजयाङ्गीकारादित्यर्थः ॥

---

रघु० टी०। प्रयोजनेनेति। वस्तुनः शब्दाप्रतिपाद्यत्वप्रतिपादनं तत्र प्रयोजनमौदासीन्ये न सिध्यतीति वस्तु न शब्दप्रतिपाद्यमित्यवश्यमभिधानीयम् तथा च यद्यनेन शब्देन वस्तु न प्रतिपाद्यते क्व ते प्रयोजनसिद्धिः अथ प्रतिपाद्यते स्ववचनविरोधो दुर्वारः ॥

---

**आगमस्य तत्त्वार्थपरिस्पर्शित्वविरोधे न स्वर्गापवर्गार्थिनां प्रवृत्तिः सिद्ध्यतीति प्रयोजनमस्मद्विचारस्यैव परं सुन्दरम्।**

शङ्क० टी०। नन्वागमस्य वस्तुविषयतया प्रामाण्याभ्युपगमे तव कथं निर्बन्ध इत्यत आह। आगमस्येति ॥

---

भगी० टी०। स्वपक्षे प्रयोजनमाह। आगमस्येति ॥

---

**तस्माच्छब्दैः किं वाच्यमित्यनुयोगे किं प्रतिभासात् अथाध्यवसायात् यद्वा तत्त्वत इति विकल्पे विकल्पस्योऽन्यापोढाकारः अन्यापोढस्वलक्षणं न किञ्चिदिति यत् क्रमेण प्रत्युक्तम्। तत्र प्रथमे समयविपर्य्यासः विकल्पाकारस्य समयाविषयत्वात्। द्वितीये तु प्रवृत्तिविपर्य्यासः अदृष्टे नियामकाभावात्। तृतीये स्ववाङ्निरोधः।**

**अस्यैवार्थस्यानेन तत्त्वतावचनात् अवचने वा तत्त्वतो-ऽनुत्तरत्वादित्युपसंहारः। तत् सिद्धमेतत् न क्षणिकत्वमात्मनिबाधकमिति ॥**

शङ्क० टी०। तस्मादिति। शब्दैः किं वाच्यमिति नैयायिकैः प्रश्ने कृते ज्ञानश्रिया विकल्प्य यदुत्तरं दत्तं तदपि न सम्यगित्यर्थः। प्रतिभासादिति। शब्दैः किं वाच्यमिति कुत्र प्रतिभासो जन्यत इति यदि प्रश्नार्थस्तदाऽन्यापोढाकारप्रतिभासो जन्यत इत्युत्तरम्, कुत्राध्यवसायो जन्यत इति यदि प्रश्नस्तदा अतद्व्यावृत्तस्वलक्षणमित्युत्तरम्, किं वस्तु शब्दवाच्यमिति यदि प्रश्नस्तदा न किञ्चिदित्युत्तरमित्यर्थः। तदेतदुत्तरत्रयं दूषयति। प्रथम इति। समयविपयासः सङ्केतग्रहोऽन्यत्र सङ्केतग्रहो वा, न ह्यन्यापोढाकारे सङ्केतग्रहो येन तत्र प्रतिभासः स्यादित्यर्थः। द्वितीय इति। अन्यापोढस्वरूपे व्यवसायेन प्रवृत्तिः स्वलक्षणे कथं स्यादध्यवसायस्य भेदाग्रहरूपत्वादिना विकल्पस्य पूर्वमेव कदर्थितत्वात्। अस्यैवेति। तत्त्वतो न वाच्यमित्यनेनैव शब्देन तत्त्वतः कस्यचिदर्थस्याभिधानादित्यर्थः। अवचन इति। तत्त्वतः किं वाच्यमित्यत्र यद्युत्तरं न देयं तदाऽप्रतिभा उत्तरदाने तु स्ववाग्विरोध इत्यर्थः। उपसंहार इति। क्षणिकतावादापोहवादयोरित्यर्थः। प्रधानार्थमुपसंहरति। तदिति ॥

---

भगी० टी०। बौद्धैरत्र विकल्प्य यदुक्तं तत्र दूषणमाह तस्मादिति। यदि प्रतिभासाच्छब्दवाच्ये प्रश्नस्तदान्यापोढा-

कारोऽन्यव्यावृत्ताकारो विकल्पनिष्ठ इत्युक्तम् । अथाध्यवसायाच्छब्दैः किं वाच्यमिति प्रश्नस्तदाऽन्यापोढस्य यत् स्वलक्षणं व्यावृत्तिस्तदुच्यत इत्युत्तरम् । प्रतिभासाध्यवसायौ तु प्रागुक्तौ । तत्त्वतः किं वाच्यमिति प्रश्ने न किञ्चिदस्तु वाच्यमित्युत्तरमित्यर्थः । अत्र दूषणमाह । तच्चेति । विकल्पस्याकारे न शक्तिः किन्तु बाह्य इत्यशक्यस्यैवाकारस्य सङ्केतविषयत्वमस्थार इत्यर्थः । प्रवृत्तीति । स्वलक्षणे प्रवृत्त्यभावप्रसङ्गः व्यावृत्तौ च शब्दस्य सङ्केतात्तस्य ज्ञानाभावादज्ञाते च प्रवृत्तावतिप्रसङ्गादित्यर्थः । विरोधमेवाह । अस्यैवेति । अपोहवादो नार्थान्तरमिति परिभावयन् प्रकृतमुपसंहरति । तस्मादिति ॥

---

रघु० टी० । प्रतिभासो ज्ञानजननम्, शब्दजन्यज्ञानविषयः क इति प्रश्ने अतद्व्यावृत्तो विकल्पनिष्ठ आकार इत्युत्तरम् । अध्यवसायः प्रवृत्तिजननम् । शब्दजन्यप्रवृत्तिविषयः क इति प्रश्ने च अतद्व्यावृत्तं स्वलक्षणमिति । तत्त्वतो वस्तुतः किं वस्तु शब्दवाच्यमिति प्रश्ने च न किञ्चिदिति । विपर्यासो बाह्यविषयिण्याः शक्तेर्विकल्पाकारे सञ्चारः । प्रवृत्तिविपर्ययः नियतविषयकप्रवृत्त्यनुपपत्तिर्नियामकाभावात्, भेदाग्रहादेर्नियामकत्वस्य निरस्तत्वात् । अस्यैवेति । किमपि वस्तु न शब्दवाच्यमित्यस्यार्थस्य वस्तुघटितमर्त्तिकत्वादिति ॥

**॥ इति क्षणभङ्गवादः ॥**

---

# बाह्यार्थभङ्गवादप्रारम्भः ॥

विज्ञानवादिनि जागरूके बाह्यमेव नास्ति कुत आत्मेति चेत्। स तावदिदं पृष्टो व्याचष्टां किं ते ग्राह्यग्राहकभागयोः परमार्थसतोरेवाभेदो विवक्षित उताहो अभिन्नजातीयत्वम् अथ ग्राह्यांशस्यालीकत्वमिति।

शङ्क० टी०। द्वितीयमात्मनि बाधकं निराकर्त्तुमुत्थापयति। विज्ञानेति। जागरूक इति। बाह्यनीलादिस्थैर्य्यसिद्धावपि न तेषां वस्तुत्वम्, वस्तुत्वेऽपि न ज्ञानभिन्नत्वम्। ज्ञानं च क्षणमात्रस्थायि नीलपीताद्याकारमिति योगाचारः। सिद्धान्तु स्थैर्य्यं तथा च सिद्धं नः समीहितं तस्य स्थिरचिदानन्दस्वरूपब्रह्मत्वं, बाह्यं तु नीलादिप्रपञ्चमात्रमलीकमनाद्यविद्याकारनिकरप्रतिभासमात्रमित्येकदण्डिनः। एकमेव विज्ञानं परमार्थसत् तु नीलाद्यपि वस्त्वसत्, परं त्वनादिवासनापरीपाकमात्रासादितनीलाद्याकारनिकरकरम्बितमत एव तच्चित्रमित्युच्यत इति तदेकदेशिनः। तदेतेषां जागरूकतया क्व बाह्यस्यात्मनः सिद्धिशङ्का। भेदे सति ग्राह्यग्राहकभाव एव नास्ति न वा धर्म्मधर्म्मिभाव इति भावः। बाह्यमेवेति। सामान्याभावे विशेषाभावस्य सुलभत्वात्। ज्ञानात्मकस्य सर्व्वस्यैव बाह्यत्वादिति भावः। स विज्ञानवादी।

इदमग्रे वक्ष्यमाणम । पक्षतयाऽभिप्रायं विकल्पयति । परमार्थेति । नीलादि स्वग्राहकज्ञानजातीयमलीकमेव वेति विकल्पार्थः । अत्र प्रमेयत्वं ज्ञानत्वव्याप्यं न वा, विवादपदं नीलादि ज्ञानत्वाश्रयो न वा, ज्ञानत्वं प्रमेयत्वव्यापकं न वा, ज्ञानविषयता ज्ञानत्वानाश्रये वर्त्तते न वेति विप्रतिपत्तयः ॥

---

भगी॰ टी॰ । द्वितीयमात्मनि बाधकं शङ्कते । विज्ञानवादिनीति । आगन्तुक इत्यनेन क्षणभङ्गनिरासेपि न तन्निराम इति दर्शितम । बाह्यं ज्ञानविभिन्नमेव वस्तु नास्ति तद्विशेषस्यात्मनः कुतः सिद्धिरित्यर्थः । स विज्ञानवादी । इदं वक्ष्यमाणं पक्षत्रयम् । किं त इति । ग्राह्य पारमार्थिकमलीकं वा । आद्येपि ग्राहकज्ञानव्यक्त्यभिन्नं तयोर्भेदे सत्येव ज्ञानजातीयं वेति विकल्पार्थः । प्रमेयत्वं ज्ञानत्वव्याप्यं न वा । कोटिः परस्यालीके प्रसिद्धा । विवादपदं ज्ञानत्वाश्रयो न वेति विप्रतिपत्तिः ॥

---

रघु॰ टी॰ । बाह्यार्थभङ्गं द्वितीयं बाधकमाशङ्कते । विज्ञानवादिनीत्यादि । बाह्यं ज्ञानभिन्नं आत्मापि च बाह्यभेद एवेति भावः । अत्र ज्ञानत्वं प्रमेयत्वस्य सत्त्वस्य वा व्यापकं न वेति विप्रतिपत्तिः । अलीकस्य ग्राह्यत्वेपि न प्रमेयत्वं तदंशे ज्ञानस्याप्रमात्वादिति सम्प्रदायः । एतज्ज्ञानविषयो नीलादिरेतज्ज्ञानाभिन्नो न वेति सध्याः ।

---

तत्र प्रथमे साध्ये यः कश्चिद्धेतुरुपादीयते सहोपलम्भनियमो वा ग्राह्यत्वं वा प्रकाशमानत्वं वा स व्यक्तमाभासः ।

शङ्क० टी० । सहेति । यद्यप्यभेदे सहेत्येव विरुद्धं तथापि तदविषयकज्ञानाविषयत्वं हेत्वर्थः । आभास इति । कालात्ययापदेशादनैकान्तिकत्वाद्वा अङ्गुलीनिर्देश्यग्राह्यात्मकताया ज्ञानस्य बाधितत्वात् विरुद्धधर्मसंसर्गप्रतिहतत्वादित्यर्थः ।

---

भगी० टी० । सहोपलम्भेति । यद्यपि सहार्थस्य भेदगर्भत्वेनाभेदे साध्ये विरोधस्तथापि तदविषयकज्ञानाविषयत्वं हेत्वर्थः । ननु यदि ग्राह्यं पक्षीकृत्य ज्ञानाभेदे साध्ये ज्ञानाविषयकप्रतीत्यविषयत्वं हेतुस्तदा नैयायिकानामसिद्धिः तैर्ज्ञानस्य स्वप्रकाशत्वाऽस्वीकारात् घटोऽयमिति ज्ञाने ज्ञानस्याप्रकाशात् । अथ ज्ञानं पक्षीकृत्यार्थाभेदः साध्यते तथाप्यर्थाविषयकप्रतीत्यविषयत्वं हेतुरसिद्धः अर्थप्रतीतिं विनापि ज्ञानपदात्तत्प्रतीतेः ।

अत्राहुः । अर्थस्य ज्ञानाभेदे साध्ये स्वप्रकाशपक्षाश्रयणात्रासिद्धिः । ज्ञानपक्षत्वेऽपि न हेत्वसिद्धिः । तथा हि यदि विषयित्वं ज्ञानत्वम्, तदा ज्ञानपदादपि विषयो भासते । अथ जातिभेदः तथापि विषयघटितसत्तावत्र ज्ञाने ज्ञानपदशक्तिग्रहात्ततो विषयोऽपि भासते । नियमतो यद्रूपविशिष्टे यत्पदशक्तिग्रहस्तत्पदात्तस्याप्युपस्थितिरिति व्युत्पत्तेः । ग्राह्यत्वं वेति । घटज्ञानं घटाभिन्नं घटो वा घटज्ञानाभिन्नः एतज्ज्ञान-

विषयत्वात् घटवत् तज्ज्ञानवच्च। ज्ञानस्वप्रकाशत्वासिद्धि-रित्यर्थः। प्रकाशमानत्वमिति। पूर्व्वं ग्रहणविषयत्वमात्रं हेत्वर्थो-ऽत्र तु प्रकाशसम्बन्धित्वमात्रमित्यपौनरुक्त्यम्। यद्वा ज्ञानविषयत्व-मात्रं पूर्व्वहेत्वर्थः तद्विशेषसाक्षात्कारविषयत्वमुत्तरहेत्वर्थः। अत्रा-भेदे साध्ये प्रथमो हेतुरनैकान्तिकः प्रतियोगिसहोपलम्भेप्यभाव-प्रतियोगिभेदात् स्वप्रकाशतानिषेधेन ज्ञानानुपलम्भेपि नीलाद्युप-लम्भात् स्वरूपासिद्धिः ज्ञानेऽर्थसहोपलम्भप्रयोजकत्वं विरुद्ध-धर्म्माध्यासाभावश्चोपाधिरिति दूषणे सत्येव दूषणान्तरमाह। स व्यक्तमिति॥

---

रघु॰ टी॰। अत्र ग्राह्यग्राहकयोरभेदे सर्व्व एव हेतु-राभासः। तथा हि हेतुर्हि पक्षधर्म्मतया ज्ञायमानोऽनुमिति-निमित्तम्, अनुमितिरपि च पक्षे साध्यविषयिणी। तथा च परा-मर्षहेतुपक्षसाध्यानुमितीनामभेदे कुतो हेतुहेतुमद्भावः। किं च भिन्नस्य ग्राह्यत्वे सर्व्वज्ञानानां सर्व्वविषयतापत्तिरित्यादिरति-प्रसंगो यदि न गृहीतो न तर्हि व्याप्तिसिद्धिर्विपक्षे बाधका-भावात्, गृहीतश्चेत् कथमन्येनान्यग्रहणमस्यैवार्थस्यानेकपदार्थ-घटितस्यैकेन ग्रहणादिति, सहोपलम्भनियमो नियमेनैकवित्ति-वेद्यत्वं तद्विषयकज्ञानाविषयत्वं वा तेषां ज्ञानस्य (स्व)प्रकाशत्वात् ज्ञानज्ञेययोरभेदेन ज्ञानज्ञेयग्राहकाभ्यां ज्ञेयज्ञानयोरपि ग्रहणा-त्वासिद्धिः। ज्ञेयस्य ज्ञानाभिन्नत्वे साध्ये ग्राह्यत्वं हेतुः ज्ञानस्य ज्ञेयाभेदे च विजयधर्म्माभावात् प्रकाशमानत्वं स्वप्रकाशकत्वमिति।

ग्राह्यस्य ज्ञानस्य ग्राहकज्ञानाभिन्नत्वे साध्ये तद्ग्राह्यत्वं हेतुः ग्राहकज्ञानस्य च तद्ग्राह्याभिन्नत्वे साध्ये प्रकाशमानत्वं तस्य ग्राहकत्वमिति यावत्। तेषां ग्राह्यग्राहकयोः स्वप्रकाशत्वाच्च दृष्टान्तासिद्धिरित्येके।

एकत्र साक्षात्कारोऽन्यत्र ज्ञानसामान्यमतो भेद इत्यन्ये।

---

तथाहि नीलधवलादिपरस्परविरुद्धाकारनिकरावगाहि विज्ञानमनुभूयते तदिदं तस्य स्ववधाय कृत्योत्थापनम्।

शङ्क० टी०। तदेव स्पष्टयति। तथाहीति। योगाचारमते वेदान्तिमते च समानं दोषमाह। नीलधवलादीति। समूहालम्बने योगाचारस्य नीलधवलाद्यात्मकत्वं वेदान्तिनां तु तत्रान्यत्रापि [1] क्रमवन्नीलादिज्ञाने विरोधापादनमेव। एकस्यैव ज्ञानस्य तन्मते क्रमिकनीलधवलाद्यात्मकत्वात्। तदिदमिति। आकारनिकरावगाहित्वमित्यर्थः। स्ववधाय स्वभेदाय॥

---

भगी० टी०। तदिदमिति। इदं विरुद्धधर्मावगाहित्वम्। तस्य ज्ञानस्य विज्ञानवादिनो वा कृत्यारूपमित्यर्थः॥

---

(१) क्रमान्नीलादिज्ञाने इति ३ पु० पा०।

रघु० टी० । इदं विकल्पानेकावगाहित्वम् । तस्य ज्ञानस्य । स्ववधाय स्वभेदाय । कृत्याकृपं जातम् ॥

---

**यदि हि मिथः प्रत्यनीकधर्म्मानुल्लिखेत् कथमेकं सत्तदात्मकं भवेत्। न चेदुल्लिखेत् कथं तदाकारं नाम। स्वसम्वेदनस्यानुल्लिखितरूपाभावात्।**

शङ्क० टी० । प्रत्यनीकधर्म्मान् विरोधिनो नीलधवलादि-धर्म्मान् । कथं तदात्मकमिति । एकस्यानेकात्मकत्वानुपपत्तेः । कथं तदाकारमिति । तदुल्लिखितस्यैवाकारत्वादित्यर्थः । नन्वेवं बुद्धिस्वरूपमेव नास्ति, तथा च विचारोयं निराश्रय इति चेत् तदुक्तम्—

"बाह्यं न पश्यति भिदात्मतयाऽथ सत्त्वा-
दर्थक्रियाविरहसङ्करता लभेदे ।
बुद्धिस्तु नश्यति भिदेव सत्त्वा-
च्चिन्तयन्तो न भिदमेति किमत्र कुर्म्मः"

इति । नैवम् । बुद्धेरनुभूयमानत्वात् । तस्यास्तु विषयभेदा-भेदाभ्यां विवादात् ॥

---

भगी० टी० । तदेव स्पष्टयति । यदि हीति । ननु विकल्पस्य विषयत्वेपि नोक्तस्य इत्यत आह । स्वसम्वेदनेति । स्वप्रकाशपक्षे प्रकाशस्यैव यावद्विषयोल्लेखित्वादित्यर्थः ॥

---

रघु॰ टी॰। तदेव स्पष्टयति। यदि हीति। अर्थैकत्वान्यथानुपपत्त्याऽनुभूयमानमपि नानात्वावगाहित्वमपलपनीयं, तत्राह। न चेदिति। अथानुल्लिखितोऽप्याकारो भविष्यति तत्राह। स्वसम्वेदनेनेति। तत्राकाराकारिणोरभेदादिति भावः। भेदेऽपि विरोधोऽग्रे व्यक्तीभविष्यति। वस्तुतो नानाविषयत्वमेकत्वं च स्वसम्वेदनेनानुव्यवसायेन वा सिद्धं न बाध्यबाधकभावमासादयति अविरोधादिविनिगमकाभावाच्च, ग्राह्यग्राहकभावस्तु विनाऽप्यभेदमुपपद्यमानो न तं बाधयितुमीष्ट इति॥

---

बाह्यस्यैवम्विधविरुद्धधर्म्माध्यासाद्भयम्, तथात्वेप्यभेदेऽर्थक्रियाचेतनप्रवृत्तीनां सङ्करप्रसङ्गात् विवेचनानुपपत्तिप्रसङ्गाच्च, न तु विज्ञानस्य, न हि तस्यार्थक्रियाधीनं सत्त्वम्, अपि तु प्रतिभासमात्राधीनम्, नापि तत्रार्थक्रियार्थिनः काचित् प्रवृत्तिः स्वरसवाहिविज्ञानप्रवाहातिरिक्ताया अर्थक्रियायास्तदर्थिनश्चाभावात्, विवेचनाभावश्च परमो निर्व्वाहः, स्वसम्विदितरू(द्रू)पत्वादिति चेत्।

रघु॰ टी॰। रत्नकीर्त्तिः समाधिमच्च दूषयितुमुपन्यस्यति। बाह्यस्यैवमिति। बाह्ये विरुद्धधर्माध्यासभयं दर्शयति। तथात्व इति। विरुद्धधर्माध्यासेऽप्यभेदे नीलधवलादीनां प्रतिनियतार्थक्रियाकारित्वं दृष्टमेव विघटेत, न च प्रतिनियता प्रवृत्तिः स्यात्। भयान्तरमाह। विवेचनेति। विविच्यते हि नीलं

धवलभिन्नत्वेन तदेतन्न स्यादित्यर्थः। न तु विज्ञानस्येत्यत्र विरुद्धधर्म्माध्यासाद्भ्यमित्यनुषज्यते। प्रतिभासमात्राधीनं स्वप्रकाशमात्राधीनम्। नापीति। न हि घटपटार्थिनो ज्ञाने प्रवर्त्तन्ते अपि तु तन्तुकपालादावेव। नन्वत्रापि भयं तदवस्थमेवेत्यत आह। स्वरसेति। अर्थक्रिया प्रवृत्तिः तदर्थिनामपि ज्ञानात्मकत्वादित्यर्थः। नन्विदं नीलज्ञानमिदं पीतज्ञानमिति विवेचनं ज्ञानेष्वस्ति, तथा च विरुद्धधर्म्माध्यासेऽप्यभेदे तन्न स्यादित्यत आह। विवेचनेति। परमो निर्व्वाह इति। अत्यन्तसाधकः सिद्धिर्व्वेत्यर्थः। स्वसम्विदितेति। ज्ञानयोर्हि भेदग्रहो न ताभ्यामेव तयोः स्वमात्रग्राह्यत्वात्, भेदस्य च स्वभिन्नत्वेनाग्राह्यत्वात् अत एव (न) ज्ञानान्तरेणापीत्यर्थः। तदुक्तं ज्ञानश्रिया—

"भावं कञ्चित्पुरस्कृत्य भेदाभेदावुदीरयेत्।
देशकालादिभेदेन चिन्मात्रे तत्र कः क्रम" ॥

इति। कीर्त्तिरप्याह—

"स्वरूपबुद्धिरपरैर्न याति न भिनत्ति च।
स्वपरप्रविभागो हि धियो याचितमण्डनम्" ॥

इति।

---

भगी॰ टी॰। ननु बाह्ये विरुद्धधर्म्माध्यासो भेदको न ज्ञानेपीत्याह। बाह्यस्येति। तदुपपादयति। तथात्वेपीति। यदि विरुद्धधर्म्माध्यासादपि बाह्ये न भेदस्तदार्थक्रियातदर्थिप्रवृत्त्योः सङ्करः स्यात्। तथाहि पटो यदि घटाभिन्नः स्यात्

तदा तदसाधारणार्थक्रियाजनकः स्यात् घटार्थिप्रवृत्तिविषयः स्यादित्यर्थः । भेदज्ञानं च बाह्ये न स्यात् तन्निमित्तस्य विरुद्ध-धर्म्माध्यासस्याभेदेऽप्युपगमादित्याह । विवेचनेति । विवेचनं भेदज्ञानम् । यद्वा प्रतिज्ञाहेत्वादिविभागरूपविवेचनं न स्यादित्याह । विवेचनेति । न तु विज्ञानस्य भयमित्यनुषज्यते । बाह्ये यद्भेदोपपादकं तच्च विज्ञान इत्याह । न चेति । तर्हि ज्ञानस्य सत्त्वमेव न स्यात् त्वन्मतेऽर्थक्रियायाः सत्त्वरूपत्वादित्यत आह । अपि त्विति । तस्य स्वप्रकाशतया स्वमात्रप्रमाणकत्वमित्यर्थः । मात्रपदमर्थक्रियाधीनसत्त्वनिराकरणार्थम् । नाप्यर्थ-क्रियार्थिप्रवृत्तिभङ्गः, तत्राप्रवृत्तेरित्याह । नापीति । स्वरसेति । स्वप्रकाशावच्छिन्नज्ञानपरम्पराभिप्राया इत्यर्थः । तथापि विवेचनानुपपत्त्या विरुद्धधर्म्माध्यासो भेदकोऽस्त्वित्यत आह । विवेचनेति । नीलतद्धियोरभेदाद्विवेचनानुपपत्तिरिष्टैवेति न दूषणम्, भेदे विषयविषयिभावातिप्रसङ्गः । न च ज्ञानग्राहकमानस्य तद्भिन्नस्याभावात्तदसिद्धिः, स्वप्रकाशतया स्वमानकत्वात्तस्येत्यर्थः ॥

---

रघु॰ टी॰ । तथात्वेपि विरुद्धधर्माध्यासेपि यद्यभेदस्तदा दहनाद्दन्योपशमनमुदकाच्च दाहः स्यादित्यर्थक्रियाभङ्गः एवं दाहार्थमुदके उदन्योपशमार्थं च दहने प्रवृत्तिः स्यादिति प्रवृत्तिभङ्गः । विवेचनं एकाग्रहेऽन्यस्य ग्रहणं भेदज्ञानमित्यन्ये । परम इति । भेदे हि कदाचिदेकाग्रहेपीतरद्गृह्यते, न चेह तदस्ति,

नीलधवलाकारत्वेनैव स्वप्रकाशेन ग्रहणात् भिन्नत्वादेव च ज्ञानान्तरेणाग्रहणात्तथा च विवेचनाभावादेवाभेदसिद्धिरित्यर्थः ॥

---

तत् किमङ्ग? परिणतशान्तेराश्रमपदमिव विज्ञानमासाद्य व्यालनकुलादेरिव नीलधवलादेः शाश्वतिकविरोधत्यागो निभृतवैराणां तत्फलत्यागो वा ।

शङ्क० टी० । अङ्गेति सम्बोधने । ज्ञानाकाराणां नीलधवलादीनां विरोध एव नास्ति । विरोधे सत्यपि वा भेदकत्वं नास्तीति विकल्पार्थः ॥

---

भगी० टी० । ज्ञाने विरुद्धधर्माध्यासाद्यत्र भयं तत् किं तन्निष्ठधर्मयोर्विरोध एव नास्ति यद्वा भवन्नपि स न भेदायेत्याह । तत् किमिति । अङ्गेति साक्षेपसम्बोधनम् ॥

---

रघु० टी० । तत्किमित्यादि । नीलधवलादीनां ज्ञाने न विरोधः सत्यपि वा तस्मिन्न ज्ञानभेदकत्वमिति विकल्पार्थः ॥

---

न तावत् प्रथमः, परस्परनिषेधविधिनान्तरीयकविधिनिषेधयोरविरोधे जगति विरोधोच्छेदप्रसङ्गात् । न चैवमस्त्वित्युक्तेरपि निर्वृतिः, कथमप्युक्तरूपताया अनिवृत्तेः, तावन्मात्रशरीरत्वाच्च विरोधस्य । तत्सिद्धिरेव च भेदसिद्धिरतो न द्वितीयोपि ।

ग्रङ्क० टी० । परस्परेति । परस्परविधिव्याप्यनिषेधयोः परस्परनिषेधव्याप्यविध्योर्व्वेत्यर्थः । आद्यो नीलपीतादीनामन्यो भावाभावयोर्विरोधः न चाविरोधे विरोधोच्छेदप्रसङ्ग इत्यापाद्यापादकाभेदः । एवम्भूतयोरविरोधे क्वापि विरोधो न स्यादिति सामान्यविशेषभावमाश्रित्यापाद्यापादकयोर्भेदात् । यद्वा नीलत्वं यदि पीतत्वाभावव्याप्यं न स्यात् पीतवृत्ति स्यादिति विशिष्यैवापाद्यम् । ननु विरोधोपि ज्ञानाभिन्न एवातः सोपि मास्तु, किमच्छिन्नमित्यत आह । न चेति । उक्तरूपताया इति । नीलादीनां परस्परविरहव्याप्यरूपताया इत्यर्थः । ननु भवत्वेवं किन्नात इत्यत आह । तावन्माचेति । परस्परविरहव्याप्यतामाचशरीरत्वादित्यर्थः । विरोधाभावे विप्रतिपत्तेरनुदयात् कथाप्रवृत्तिरेव न स्यात् न स्याच्च ज्ञानानामपि मिथो भेद इति भावः । तत्सिद्धिरिति । विरोधसिद्धिरित्यर्थः । न हितौयोपौति । निभृतवैराणां तत्फलपरित्यागो वेत्यपि पक्षो नास्ति । अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदो वेति त्वयैवाभिधानादित्यर्थः ॥

---

भगी० टी० । परस्परेति । परस्पराभावव्याप्ययोरित्यर्थः । अविरोध इति । अच यद्यप्यापाद्यापादकयोरभेदस्तथापि विरुद्धत्वप्रकारकप्रमाविषयत्वाभाव आपाद्यः । यद्वा नीलत्वं यदि पीतत्वाभावव्याप्यं न स्यात् पीतवृत्ति स्यादिति विशिष्यैवापादनम् । ननु नीलपीतौ ज्ञानात्मकावनन्यत्वे सहोपलम्भाच्च तयोर्विरोध

इष्टापत्तिरित्याह । न चेवमिति । उक्तरूपताया विरुद्धरूपताया इत्यर्थः । एवं सर्वेषामविरोधे विप्रतिपत्त्यभावात् कथायां प्रवृत्तिर्न स्यात्, अन्ततो विरोधोऽस्ति विरोधो नास्तीत्यनयोरप्युक्तरीत्या विरोधो न स्यादिति व्याघातात्तयोर्विरुद्धरूपता मन्तव्येत्यर्थः । तावन्मात्रेति । नीलपीतयोर्विरोधे भासमान एव ज्ञायमानत्वाद्विरोधस्तद्भयाकारप्रतिभासनादेव सिद्ध्यति, अन्यथा ज्ञानानामपि न मिथो भेद इत्येकज्ञानमात्रपर्यवसानादद्वैतमतप्रवेश इत्यर्थः । केचित्त्विदमग्रिमग्रन्थेन योजयन्ति, तावन्मात्रशरीरत्वात् विरुद्धधर्म्ममात्रात्मकत्वात्, तथा च विरुद्धधर्म्मसिद्धिरेव भेदसिद्धिरिति द्वितीयपक्षोपि नास्तीत्यर्थः ॥

---

रघु० टी० । परस्परेति । यद्यपि नीलधवलादीनामेकविधावितरनिषेधध्रौव्येपि नैकनिषेधे इतरविधिध्रौव्यम्, तृतीयप्रकारस्यापि सम्भवात्, तथापि परस्पराभावव्याप्यत्वमात्रे तात्पर्यम् । समुदित भावाभावाभिप्रायेण, नीलधवलाद्यभिप्रायेण चाद्यमात्र[१]मित्यपि वदन्ति । परस्पराभावव्याप्ययोरपि नीलधवलयोरविरोधेऽविशेषात्तथाविधानामितरेषामप्यविरोधापत्तिः, तथा च बाह्यानामपि नीलधवलादीनां गवाश्वादीनां च भेदो न सिद्ध्येत्, तन्मूलस्य विरुद्धधर्म्माध्यासस्य निरासादिति भावः । विज्ञानवादिनां भेदमनिष्टमित्यभिप्रायिकामाशङ्कां निरस्यति । न चैवमिति । उक्तरूपतायाः परस्पराभावव्याप्यतायाः । ताव-

(१) नान्तरीयकान्तम् इति इ पु० टिप्पनी वर्त्तते ।

न्याचशरीरत्वात् परस्पराभावव्याप्यत्वमाचरूपत्वात्। अन्यथा बाह्यानां बाह्यविज्ञानयोर्विज्ञानानां च भेदविरहेऽद्वैतमतावलम्बनम्, न च विना भेदाभ्युपगमं विचारारम्भसम्भव इत्यपि व्यक्तीभविष्यति। तत्सिद्धिरेव विरोधसिद्धिरेव भेदसिद्धिस्तात्पर्यवसायिनी वा॥

---

यस्तु बाह्ये विरोधपरिपालनाय विशेषो दर्शितः स तेषामेवास्तु। यदि हि विरुद्धधर्म्माध्यासस्य भेदसाधकत्वं प्रति समाश्वासः, किमर्थक्रियाप्रतिनियमोपन्यासेन। न चेत्, तथापि किं तेन, सोपि ह्यर्थक्रिययोर्विरुद्धधर्म्माध्यासेन भेदे सति स्यात्।

शङ्क॰ टी॰। नन्वर्थक्रियाप्रतिनियमः प्रवृत्तिनियमश्च बाह्ये भेदक उक्तः, स च ज्ञाने नास्तीति ज्ञानं कथं भिद्यतामत आह। यस्त्विति। बाह्येपि तयोर्भेदकत्वं विरोधाधीनं, स चेद्विरोधो ज्ञानेष्वस्ति तदा तदपि भिद्यतेव. अन्यथा अर्थक्रियाणां प्रवृत्तीनाञ्च भेदो न स्याद्यतो बाह्यं भिद्यतेत्यर्थः। विशेष इति। अर्थक्रियाप्रतिनियमरूप इत्यर्थः। स तेषामिति। अर्थक्रियाप्रतिनियमेन बाह्यानामेव भेदोऽस्त्विति। यदि हीति। तदयं समुदायार्थः. विरुद्धधर्म्माध्यासो भेदको न वा, प्रथमे ज्ञानमपि नीलधवलाकारं ततो भिद्येत। अन्त्येऽर्थक्रियाभेदोपि न स्यान्न स्याच्च तदधीनो बाह्यभेदः। किमर्थेति। तदन्तरेणापि विरुद्ध-

धर्माध्यासेनैव बाह्यभेदसिद्धेः । न चेदिति । विरुद्धधर्माध्यासो यदि न भेदकस्तदाऽर्थक्रियाप्रतिनियमोऽपि न स्यादित्यर्थः ॥

---

भगी० टी० । ननु परस्पराभावव्याप्यत्वमात्रं न विरोधशरीरम्, किन्त्वर्थक्रियाप्रतिभासनियममन्तर्भाव्येत्यत आह । यस्त्विति । केवलो यदि विरुद्धधर्माध्यासो न भेदकस्तदार्थक्रियाप्रतिनियमो न स्यात्, न हि तस्या अपि भेदोऽर्थक्रियान्तरभेदात्, अनवस्थानात्, तथा च तां विना केवलात्तत्र भेदसिद्धावन्यत्रापि तथेति किमर्थक्रियाप्रतिनियमेनेत्यर्थः ॥

---

रघु० टी० । स तेषामेवास्त्विति सोपहासम् । सोऽपि अर्थक्रियानियमोऽपि । अर्थक्रियाया अर्थक्रियान्तरानुसरणेऽनवस्था, न चानवस्थितार्थक्रियासन्तानोऽसर्वज्ञपुरुषवेद्य इति ॥

---

अन्यच्च यथा बाह्येऽर्थक्रियाप्रतिनियमो न स्यादिति दण्डस्तथा ज्ञानेपि प्रतिभासनियमो न स्यादिति दण्ड एव ।

शङ्क० टी० । ननु यथा यदि बाह्यानां परस्परं भेदो न स्यात्तदार्थप्रतिनियमो न स्यादिति बाह्यभेदसाधने विपक्षदण्डः तथा ज्ञाने नास्ति येन तद्भेदोऽङ्गीक्रियेतेत्यत आह । अन्यच्चेति । प्रतिभासनियमो न स्यादिति । नीलज्ञानमपि पीताकारं भवेत् पीतज्ञानमपि नीलाकारं भवेदित्यर्थः ॥

---

भगी० टी० । किञ्च यथा घटपटयोरविरोधेऽर्थक्रिया-प्रतिनियमो न स्यादित्यनिष्टापत्तिरेवं नीलपीतयोरन्योन्य-ज्ञानेऽन्योन्यं न भासत इति प्रतिभासनियमो न स्यात्, नील-पीतयोर्भेदाभावात्, तथा च तयोरन्योन्यज्ञानेऽन्योन्यं भासेतेत्य-निष्टमापद्येतेत्यर्थः ॥

---

रघु० टी० । अथ बाह्यानां भेदे माभूदर्थक्रियानियमा-नुपपत्तिरस्ति विपक्षे बाधिका न तु ज्ञानस्य भेदे किमपी-त्यत आह । अन्यस्येति ॥

---

क्व प्रतिभासासाङ्कर्यनियमः, सहैव प्रतिभासोपि स्यादिति चेत्, न सहानुपलम्भमसाङ्कर्यं ब्रूमः, किन्तु नीलस्यैव पीतत्वेन पीतस्यैव नीलत्वेनानुपलम्भम् । स एव मूलं सर्वविरोधानाम् ।

शङ्क० टी० । ननु प्रतिभासनियमो न स्यादिति नेदम-निष्टं, नीलधवलादीनां सहैवोपलम्भस्य मयाभ्युपगमादिति शङ्कते । क्वेति । नीलपीतादीनां सहैवोपलम्भेन प्रतिभास-साङ्कर्य्येपि नीलस्यैव पीतत्वेन पीतस्यैव नीलत्वेन भानं त्वया नेष्यते तदेवापाद्यते, नीलपीतादीनां विरोधाभावादिति परि-हरति । न सहानुपलम्भमिति । सर्वविरोधानामिति । बाह्यानामपि विरोधानां तदेव मूलं यदेकस्यापरात्मतयाऽनुपलम्भ इत्यर्थः ॥

भगी० टी० । ननु नीलस्य पीतादिना सहोपलम्भदर्शनात्र तत्प्रतिनियम इतीष्टापत्तिरित्याह । क्वेति । न विषयप्रतिनियममात्रं प्रतिभासासाङ्कर्यं ब्रूमः, किन्तु पीतत्वेनोपलम्भान्नीलत्वेनोपलम्भो भिन्न इति, तथा च प्रकारतः प्रतिभासनियमो न स्यादेकज्ञानाभिन्नत्वान्नीलपीतयोरित्यापादनार्थं इत्याह । सहेति । स एवेति । प्रकारतः प्रतिभासनियमः, प्रकारत एव विरोधनिरूपणादित्यर्थः ॥

---

रघु० टी० । प्रतिभासस्य नियमोऽसाङ्कर्यम्, तच्च स्वरूपतः प्रकारतश्च, तत्राद्यस्यासिद्धिं शङ्कते । क्वेति । सहैवेति । नील-पीतावगाहिनो ज्ञानस्य नीलपीताकारयोस्तेनैव प्रतिभासना-दित्यर्थः । द्वितीयमभ्युपेत्य निराकरोति । नेति । किन्त्विति । नीलाकारस्य ज्ञानस्य पीताकारत्वेन पीताकारस्य च नीलाकार-त्वेनानुपलम्भं तयोरभेदबाधकं ब्रूम इत्यर्थः । तयोरभेदे हि एकैकाकारस्यापि ज्ञानस्योभयाकारतायामुभयाकारत्वेनोपलम्भ-प्रसङ्गात् । स एव एकस्यान्यात्मनानुपलम्भ एव । सर्वविरोधा-नाम् बाह्यान्तरविरोधानाम् ॥

---

अन्यथोपलम्भानुपलम्भयोरप्यसिद्धिरेव । यदपि नोपलभ्यत इत्युच्यते तदप्युपलभ्यत एव, यदिदमस्वा-दिकमुपलभ्यते तन्नोपलभ्यत इत्युक्त्यैव निर्वृत्तेः । तेनात्मना नोपलभ्यत इति चेत्, तत् किं सहोप-

लम्भेपि नीलात्मना पीतमुपलभ्यते यतो न विरोधः स्यात्। तस्मादुभावपि विरोधौ समौ क्षमौ चाभेदविसर्जने। केवलमेकस्य प्रौढिः सुभगाभिक्षुकन्यायेन यदि स्यात्।

शङ्क० टी। नीलधवलादीनां सहोपलम्भादविरोधश्चेत्तदोपलम्भानुपलम्भयोरपि विरोधो न स्यात्, कदाचित्तयोरपि सहोपलम्भसम्भवादित्याह। अन्यथेति। असिद्धिरेवेति। विरोधाधीनो हि भेदो विरोधश्चेन्नास्ति तदैकशेष एवेत्येकतरासिद्धिरित्यर्थः। एतदेवाह। यदपीति। अनुपलम्भस्याभावादित्यर्थः। मैत्रस्त्वया नोपलब्ध इति पृष्टोनुपलब्धमैत्रोप्युपलब्ध एव मैत्र इत्युक्तेरनिवृत्तिप्रसङ्गादित्याह। यदिदमिति। ननु[1] यद्युपलम्भोनुपलम्भात्मना उपलभ्येतानुपलम्भो वा उपलम्भात्मनेति तदा तयोरविरोधः स्यान्न चैवमित्याह। तेनेति। नीलधवलादावपि सहोपलम्भमात्रं न त्वेकात्मनाऽन्यस्योपलम्भ इति कथं न तत्र विरोधः स्यादित्याह। तत्किमिति। प्रतिभास भेदाय तत्रापि विरोधध्रौव्यमुपसंहरति। तस्मादिति। उभावपि बाह्यगतज्ञानगतौ भेदौ प्रवृत्तिनियमक्षमावित्यर्थः। प्रवृत्तिप्रतिनियमाधीनस्य बाह्यभेदस्य त्वयापि पुरस्कृतस्य सौभाग्यात् प्रौढिरस्मदापाद्यमानस्य प्रतिभासाधीनज्ञानभेदस्य त्वयाऽनभ्युपगमादप्रौढिरित्यर्थः। भिक्षुविसर्जने दुर्भगायाः प्राधान्यमसहमानया

(१) नन्वयमुपलम्भो इति ड पु० पा०।

सुभगया स्वयमेव भिक्षुर्विसर्जित इति सुभगाभिक्षुकन्यायः। यदि स्यादित्यत्र तदा स्यादिति शेषः। यद्वा यदिपरमसदास्तु विरह इतिवत् शेषापेक्षा ॥

---

भगी० टी। यदि च नैवं तदोपलम्भानुपलम्भयोरप्येक-ज्ञानगोचरत्वेनाविरोधे यदुपलभ्यते तन्नोपलभ्यते यच्च नोपलभ्यते तदुपलभ्यत एवेति तयोर्विरोधप्रवाह एव न स्यादित्याह। अन्य-थेति। यदिदमिति। इदं भूतलम्। यदुपलभ्यते स एव घटवत्त्वोपलम्भ इत्युक्तैव निवृत्तिरित्यर्थः। तेनेति। उपलम्भत्वे-नानुपलम्भसत्त्वेन चोपलम्भो नानुभूयत इत्यर्थः। तत् किमिति। तर्हि नीलपीतयोरेकज्ञानविषयत्वेऽप्यन्यतरसाधारणैकप्रकारवत्तया नानुभूयत इति प्रकारतासाङ्कर्यमस्त्वेवेत्यर्थः। उभावपीति। उभौ बाह्यज्ञानवृत्ती विरोधौ। अभेदविसर्जने भेदे समर्थौ। समत्वादित्येकस्यैव ज्ञानवृत्तेरेव तस्य प्रौढिभिक्षुकप्रस्थापनेपि दुर्भगायाः प्राधान्यमसहमानया सुभगयैव प्रस्थापित इति न्यायेन यदि स्यादित्यर्थः।

---

रघु० टी०। उपलम्भानुपलम्भयोश्च रूपभेदानिवेशने उप-लभ्यमानत्वानुपलभ्यमानत्वव्यवस्था न स्यादनुपलभ्यमानत्वेनाभि-मतस्योपलभ्यमानताया उपलभ्यमानत्वेनोपेतस्यचानुपलभ्यमानतायाः सुवचत्वादित्याह। अन्यथेति। यदपि गवादिकम्। कथं तदुपलभ्यत इत्यत आह। यदिदमश्वादिकमिति। एवं यद्-

श्वादिकमुपलभ्यत इत्युच्यते तन्नोपलभ्यते, कथं नन्नोपलभ्यते, यन्नोपलभ्यते गवादिकं तदेव तदिति । अथ गौर्गोत्वेनोपलभ्यते नाश्वत्वेन, अश्वस्तु अश्वत्वेन न गोत्वेनेति न तयोरभेद इति यदि तदैकज्ञानगोचरावपि नीलपीताकारौ नीलपीताकाराभ्यामुपलभ्येते न पीतनीलाकारत्वाभ्यामिति तयोरपि नाभेदः । न चैकं ज्ञानं भिन्नोभयाकारं भवितुमर्हति, तदाकाराकारिणोरभेदादिति शङ्कोत्तराभ्यामाह । तेनेत्यादि । सहोपलम्भे नीलपीतादिसमूहालम्बने । उभौ बाह्यार्थज्ञाननिष्ठौ । एतेनैकमेव विचित्रं ज्ञानं नीलपीताभ्यामाकाराभ्यामुपलभ्यत इति प्रत्युक्तम्, गवाश्वयोरिव नीलपीताकारयोरपि विज्ञानयोः प्रतिभासभेदादिना नियतभेदसिद्धेः, अन्यथा तयोरपि क्वचित् सङ्करप्रसङ्गात् । समौ प्रमाणप्रतीतत्वात् ॥

---

एतेन विवेचनाभावोपि निरस्तः, आकारयोरसभेदेन वेदनस्यैव विवेचनत्वात् ।

शङ्क० टी० । तदेवं विज्ञानस्य विरुद्धधर्माध्यासात्द्वयं नास्तीति यत्परेणोक्तं तन्निराकृत्य विवेचनाभावस्तु परमो निर्वाह(क) इति यत्परेणोक्तं तन्निराकरोति । एतेनेति । प्रतिभासभेदविवेचनेनेत्यर्थः । आकारयोरिति । नीलधवलाकारयोरसद्भेदस्य साधितस्तदा तदाकारज्ञानस्यापि भेदेनैव विवेचनं सिद्धं भवत इत्यर्थः ॥

---

भगी० टी०। ज्ञाने बाह्यस्य विवेचनमित्यत्र दूषणमाह। एतेनेति। विरोधोपस्थापनेन। नीलपीताद्याकारयोरनाकूर्येण वेदनमेव विवेचनपदार्थ इत्याह। आकारयोरिति॥

---

रघु० टी०। अभिन्नत्वेन विवेचनाभावो न ज्ञानाभेदसाधक इत्याह। एतेनेति॥

---

अपि च क्षणिकतायामेकपुरुषापेक्षया बाह्यस्यापि कुतो विवेचनम्। नानापुरुषापेक्षयापि सन्दिग्धम्। परेण परस्यावेदनात् क सन्देह इति चेत्, अभेदेनैव, तत्त्वविवेचनं साध्यम्, तथा च किं तेनोपन्यस्तेनापि।

शङ्क० टी०। अपि च बाह्यज्ञानयोरुभयोरपि विवेचनाभावस्तुल्य इत्याह। अपि चेति। क्केति। बाह्यस्य चणिकत्वेन भेदग्रहकाले विनाशात् क विवेचनमित्यर्थः। यदा बाह्येन सहोपलम्भनियमाद्यथा ज्ञाने विवेचनाभावस्तयोस्तथा सहोपलम्भयोर्नीलपीतयोस्तेन पुरुषेण विवेचनाभाव इत्यर्थः। ननु यौ नीलपीतावेकेन पुरुषेण सहोपलब्धौ तयोस्तदानीमेव पुरुषान्तरेण विवेचनं सम्भवत्येवेत्यत आह। नानेति। पुरुषान्तरेण तदा तयोर्विवेचनमिति निश्चयो नास्ति सन्देहस्तु तज्ज्ञानेपि सहोपलम्भयोरपि नीलतज्ज्ञानयोः पुरुषान्तरेण विवेचनसम्भवादित्यर्थः। ननु पुरुषान्तरेण ज्ञानयोर्ग्राह्यग्राहकयोर्वा भेदो

गृहीष्यत इत्याद्याकारस्सन्देहः तदा स्याद्यदि भेदेन ग्राह्यग्राहक-भावो भवेन्न चैतदस्तीत्याह। परेणेति। ज्ञाने विवेचनानुप-पत्त्या ग्राह्यग्राहकयोरभेदस्तया साध्यते तदुभयाभेदे च विवेचना-नुपपत्तिरित्यन्योन्याश्रय इत्यत आह। अभेदेनैवेति॥

---

भगी० टी०। तत्रैव दूषणान्तरमाह। अपि चेति। यदि येन ज्ञानेन सह यदुपलभ्यते तेन सह तस्याभेदः सहोपलम्भ-नियम इति ज्ञाने विवेचनाभावस्तदा चणिकयोर्नीलपीतयोः सहोपलम्भयोर्न कालान्तरे तेनैव पुरुषेण पृथगुपलम्भ इति बाह्येऽपि विवेचनाभाव एवेत्यर्थः। ननु तदैव तयोः पुरुषान्तरेण पृथगुपलम्भो विवेचनं स्यादित्यत आह। नानेति। अथ निश्चयाभावात् सन्देहो वाच्यः स च ज्ञानेऽपीति न विशेष इत्यर्थः। ननु परेण परवेदने न विषयविषयिभावनियामकमिति स्वेनैव स्वस्य वेदनान्न ज्ञाने तत्सन्देह इत्याह। परेणेति। ज्ञानस्य स्वग्राह्याभेदे साध्ये विवेचनानुपपत्तिः साधनमुक्तम्, तच्चाभिन्न-द्वारार्थमभेदेनैव ग्राह्यग्राहकभाव उक्तस्तच्च साध्याविशेष इत्याह। अभेदेनैवेति॥

---

रघु० टी०। अर्थैकाग्रहणेऽन्यस्य ग्रहणं विवेचनं, न च त्रिविध-ज्ञानगतयोर्नीलपीताकारयोस्तथा सम्भवति, स्वसम्वेदनसम्वेद्यत्वात्, अविविक्तज्ञानगतौ च नीलपीताकारावन्यावेव, आकारिणां भेदे तदभिन्नानामाकाराणामभेदानुपपत्तेरित्यत आह। अपि चेति।

विवेचनाभावस्तस्यां व्यक्तौ तज्जातीये सर्वत्र वा। आद्येप्येकस्य पुंसः पुरुषान्तरस्यापि वा। प्रथमे, क्षणिकतायामिति। क्षणिकयोर्नीलपीतयोरेकपुरुषीयैकज्ञानग्राह्ययोस्तेन पुंसा विवेचनस्याभावादित्यर्थः। चरमे, नानेति। एकपुरुषवेद्यस्य नीलादेः पुरुषान्तरेण ग्रहणे निश्चयाभावात् सन्देहो वाच्यः, स च ज्ञानाकारेपि तुल्य इत्यर्थः। एतेन तेनैव पुंसा कालान्तरे बाह्यस्य स्मरणादिलक्षणं विवेचनं प्रत्युक्तं वेदितव्यम्। अन्येनान्यस्यावेदनात्तद्भिन्नेन पुरुषान्तरीयज्ञानेन न तज्ज्ञानाकारविवेचनसम्भावनेत्याशङ्कते। परेणेति। निराकरोति। अभेदेनैवेति। अभेदसिद्धिपर्यवसायिन्या भेदे ग्राह्यग्राहकभावानुपपत्त्यैवाविवेचनं साध्यम्, तथा च किमन्तर्गडुनाऽविवेचनेन। न चैवमेवास्तु, तस्या असिद्धेः। अपि च भिन्नयोर्न चेद्ग्राह्यग्राहकभावः, कथं तर्हि बाह्ययोरपि सहोपलभ्ययोर्नीलपीतयोर्विवेचनम्। एकैकग्राहिणा ज्ञानान्तरेणेति चेत्, तदपि ततो भिन्नमभिन्नं वा। भिन्नं चेत्, न तर्हि ग्राह्यग्राहकभावः। अभिन्नं चेत्, पर्यवसितं तर्हि पक्षाणामभेदेन, तदभिन्नाभिन्नस्य तदभिन्नत्वात्, तथा च कुतो विवेचनम्। एवं च सहोपलम्भनियमे नियमांशो व्यर्थ इति द्रष्टव्यम्। परं च विवेचनाभावज्ञानं विवेचनं गृह्णाति न वा। गृह्णाति चेत्, सिद्धं तर्हि भिन्नस्यापि ग्राह्यत्वम्, विवेचनस्यानेकपदार्थघटितमूर्तिकत्वात्। न चेत्, नाभेदानुमापकम्, अभावमात्रस्यानैकान्तिकत्वात्। वस्तुगत्या विवेचनस्याभावो नानैकान्तिक इति चेत्, अस्त्विदमेव ज्ञानं तं तमर्थं गृह्णाति न

वेति विविच्यताम्। ग्रहणे भिन्नस्यापि ग्राह्यत्वमग्रहणे तु न नियम इति। एवं परेण परस्यावेदनादविवेचनं साध्यम्, तद्यदि न ज्ञातम्, कुतः साध्यसिद्धिः। ज्ञातं चेत्, सिद्धं परस्य परेण वेदनम्॥

---

तज्जातीयस्य तु बाह्यवद्विज्ञानस्यापि विवेचनमेवेति। स्वसम्वेदनबाधितोऽयं विरुद्धधर्म्माध्यासो न भेदसाधक इति उष्ट्रलगुडकम्, सम्वेदनेनैवास्य साधितत्वात्।

शङ्क॰ टी॰। ननु क्षणिकतयैवैका नीलव्यक्तिः पीतव्यक्तित्वेन पुरुषेण विविच्यतां, नीलजातीयं पीतजातीयाद्भिन्नमिति बाह्ये विवेचनमस्त्येवेत्यत आह। तज्जातीयस्येति। तर्हि नीलज्ञानजातीयं पीतज्ञानजातीयाद्भिन्नमिति विज्ञानेपि विवेचनमस्त्येवेत्यर्थः। ननु नीलपीतविषयकैकज्ञानस्यैकत्वेनानुभवाद्विरुद्धधर्म्माध्यासेन तद्भेदसाधनं बाधितमित्यत आह। सम्वेदनेति। एवं सम्वेदनमेव हन्तुमुपक्रान्तं तदेव भेदं हनिष्यति, तथा च कुरूपो हन्यतामिति श्रुत्वा कुरूपहननाय प्रथममुष्ट्रेणैव लगुडकं गृहीतमिति न्यायमनुभवतीत्यर्थः। नीलात् पीतं भिन्नं नीलजातीयात् पीतं भिन्नमिति बाह्येपि सम्वेदनाधीन एव भेदः स कथं तेनैव बाध्यतामिति सिद्धं विरुद्धद्व्याकारं ज्ञानमपि विरुद्धधर्म्माध्यासाद्भिन्नमिति भावः॥

---

भगी० टी० । बाह्यतज्जातीये विवेचनमस्त्येवेति ज्ञानेपि तुल्यमित्याह । तज्जातीयस्येति । ननु नीलपीतज्ञानस्य विरुद्ध-धर्म्माध्यासेन भेदसाधनं बाधितम्, नीलपीतयोर्विरोधेऽनुभूय-मानेपि तद्विषयज्ञानस्याभेदादित्यत आह । सम्वेदनेति । कुरूपहननप्रस्तावे कुरूपतर उष्ट्र एव लगुडं गटहीत्वोपस्थित इति न्यायमिदमनुहरतीत्यर्थः । अत्र हेतुमाह । सम्वेदने-नैवेति । नीलमिदं न पीतमिति ज्ञानेनैव विरोधस्य साधित-त्वात् तेनैव कथं तद्बाधः, अन्यथाऽविरुद्धधर्म्माध्यासेन ज्ञानैक्यमेव किं न साध्यते, यदि तज्ज्ञानैक्यं सम्वेदनबलादाश्रीयते, तदा विरुद्धधर्म्मस्यापि तत एव सिद्धिरिति ज्ञानविषययोरभेद एव बाध्यत इत्यर्थः ॥

---

रघु० टी० । द्वितीये, तज्जातीयेति । विरुद्धधर्म्माध्यासात् सम्विद्भेदः साध्यः, स एव तु नास्त्यनुभवबाधितत्वादित्याशङ्क्य निराकरोति । सम्वेदनेति । एवं ब्रुवतः कतमोभिप्रायः, किं नीलत्वादीनां विरोध एव नास्ति, किं वा विज्ञानस्य तद्वत्त्वम्, अथ तदनवगाहित्वम् । नाद्यः तेषां विरोधस्य साधितत्वात् । द्वितीये तु सिद्धं ज्ञानानात्मनोपि ग्राह्यत्वम् । तृतीयेत्वाह । उष्ट्रलगुडकमिति । अयायमाशयः, यथा भवतां नीलपीता-द्यारब्धेऽवयविन्येकत्रानेकरूपसमवायायोगादतिरिक्तं चित्रं रूपम्, तथाऽस्माकमप्येकत्र विज्ञानेऽनेकाकारासम्भवादतिरिक्त एव चित्राकार इति, सम्भाव्यताप्ययमिदं चित्रमिति ज्ञाने, न त्विदं

नीलमिदं च पीतमेते नीलपीते मिथो भिन्ने इत्यादिके ।
व्यक्तीभविष्यति चेदमग्रे ॥

छिनत्तु तर्हि प्रकाशमानताऽनेकत्वं विरुद्धधर्म्माध्यासोऽप्येकताम्, तथाप्येकत्वानेकत्वविकलनीलाद्याकारप्रकाशस्वरूपे किमायातमिति चेत्, तदिदं भीतैः श्वचनिनायनम् । नियताकारत्वमेव ह्येकत्वमनियताकारत्वं चानेकता, तन्निवृत्तौ च न नीलाकारं नापि नीलपीताद्याकारमित्यनाकारमेवावशिष्यते ।

शङ्क० टी । ननु नीलधवलाद्येकज्ञानकुचावेव प्रकाशमानत्वानुरोधात् प्रविष्टमपि तद्ज्ञानं कथमनेकं स्यान्न च तदेकमेव भवितुमर्हति, विरुद्धधर्म्माध्यासादित्येकत्वमनेकत्वं च विवादपदज्ञाने मानं मास्तु ज्ञानस्वरूपं तु स्वसम्वेदनसिद्धं दुर्न्निरसनम् । तदुक्तं ज्ञानश्रिया

"द्वित्वैकव्यवहारोऽपि भेदापोहपरो मतः ।
एकानेकत्वविकलः प्रकाशः केवलोऽत्र सन्" ॥

इत्याह । छिनत्त्विति । तर्हि तज्ज्ञानं नैकस्वरूपं न वाऽनेकस्वरूपमिति निःस्वरूपमेव पर्य्यवसन्नमित्याह । तदिदमिति । भीतैर्बर्बरैः श्वचनिनायनं श्वचकेवलीकरणम् । मत्स्यरक्षार्थं तृणे निरसनीये मत्स्यमपि निरस्तमेवेति यथेत्यर्थः ।
एतदेवाह । नियतेति ॥

भगी० टी० । ननु बाधकबलादेकत्वानेकत्वयोर्धर्मयोर्मिथो विरोधेनैकत्वाभावेपि धर्म्मिस्वरूपेण ज्ञानस्याभेदोऽस्त्वित्यत आह । छिनत्त्विति । तदिदं मध्योपचयाय तृणे निराकर्तव्ये बर्बरेण मध्यमपि निराकृतमितिवदित्याह । तदिदमिति । तत् स्पष्टयति । नियतेति ॥

---

रघु० टी० । प्रकृते । छिनत्त्विति । प्रकाशमानता अनेकत्वमिति भेदग्राह्यत्वायोगात्[१] । प्रकाशमानता एकत्वेन प्रकाश इत्यन्ये । प्रकाशस्वरूपरक्षणायैकत्वानेकत्वनिराकरणम्, तस्मिंश्च सति प्रकाशस्वरूपमेव न स्यादित्याह । तदिदमिति । नीतैः अनभिज्ञैः । तदेव व्युत्पादयति । नियतेति । तन्निवृत्तौ नियतानियताकारस्वरूपैकत्वानेकत्वनिवृत्तौ । निराकारमेवेति । तथा च नीलाद्याकारप्रकाशस्वरूप इति यदुक्तं तद्व्याहत-मिति भावः ॥

---

स्यादेतत् । पारमार्थिको विरुद्धधर्म्माध्यासो भेद-हेतुरयं काल्पनिक इति चेत्, एवं तर्हि सुतराम-यत्नसिद्धं स्फटिकवद्बोधस्य निराकारशुद्धत्वम्, आकार-नाकारस्त्वनात्मेव स्फुरतीत्युभयथैव कालात्ययाप-दिष्टाः सहोपलम्भादयः ।

(१) ग्राह्यत्वापातात् इति ३ पु० पा० ।

शङ्क० टी० । ननु नीलपीतादीनामवस्तुत्वात्कद्वटितो विरुद्धधर्माध्यासोऽप्यवस्तुभूतः कथं ज्ञानं भिन्द्यादित्याह । स्यादेतदिति । उभयथेति । नीलादीनां पारमार्थिकत्वे ऽपारमार्थिकत्वे चेत्यर्थः । तत्र पारमार्थिकत्वे विरुद्धधर्माध्यासादक्कादेव बाधो ज्ञानस्य नीलाद्यभेदे साध्ये अपरमार्थसतो ज्ञानस्यापारमार्थिकनीलाद्यभेदे साध्ये तु सुतरां बाध इत्यर्थः । उभयथेति । परमार्थसदाकारत्वे निराकारत्वे चेत्यर्थ इति केचित् ॥

---

भगी० टी० । निराकारशुद्धत्वं स्वात्मीभूताकारशून्यत्वमित्यर्थः । उभयथेति । ज्ञानस्य पारमार्थिकत्वेऽपारमार्थिकत्वे च ॥

---

रघु० टी० । उभयथापीति । प्रकाशमानस्य ज्ञाना(ना)त्मनो नीलाद्याकारस्य पारमार्थिकत्वे काल्पनिकत्वे चेत्यर्थः ॥

अपि च आस्तां तावद्विरुद्धधर्माध्यासचिन्ता । योऽयं ग्राह्यग्राहकभागभेदो ग्राह्यनीलादिभेदो वा चकास्ति, स किं सत्योऽसत्यो वा । सत्यत्वे स एव दोषः । असत्यत्वे नायमात्मा विज्ञानस्येत्यनात्मन्यपि सहोपलम्भनियमादयोग्यता इत्यनैकान्ताः । भेदो न प्रथत एवेति चेत्, एवं तर्हि अस्तु तावत् सर्वजनीनप्रतीतिविरोधः स्ववाग्विरोधो वा । असिद्धा-

स्तर्हि हेतवः। न हि भेदाप्रथने सद्दार्थं तद्व्याप्यतां वा पश्यामः। तदस्फुरणेऽपि पक्षादिप्रविभागोऽपि कथम्, कं च बोधयितुं प्रवृत्तोऽसि किमर्थं च, अन्वय-व्यतिरेकाप्रतीतौ किं च हेतोर्बलम्, कुतश्च विप्रति-पत्तिः कीदृशी चेति। सोऽयं विचारमारभते, भेदं तु साम्प्रतमपि नेच्छति, नूनमुन्मत्तोऽप्यनेन जितः।

शङ्क० टी०। एकदेशिमतमन्तर्भाव्य दोषान्तरमाह। अपि चेति। आस्तां तावदिति। दोषान्तरमेवाच द्रढीय इति भावः। स एवेति। भासमानस्य भेदस्य सत्यत्वे ग्राह्याभेद-साधने बाध एवेत्यर्थः। अनेकान्ता इति। असत्यस्य भेदस्य ग्राह्यत्वे सहोपलम्भनियतत्वादिति हेतुसत्त्वेपि साध्यस्य ग्राह्याभेदस्यासत्त्वादनैकान्तिकत्वमित्यर्थः। स्ववाग्विरोध इति। भेदपदमुच्चारयतो भेदो न प्रथत इति स्ववाग्विरोध इत्यर्थः। असिद्धाः स्वरूपासिद्धाः। तद्व्याप्यतामिति। तस्य (व्याप्य)व्याप्य-व्यापकभावस्य भेदगर्भत्वादित्यर्थः। पक्षादीति। पक्षसाध्यहेतु-दृष्टान्तादीनां भेदे सत्येव अनुमानप्रवृत्तेरित्यर्थः। किं चेति। वादिनोरपि भेदाभावादित्यर्थः। किमर्थं चेति। तत्त्वनिर्णय-विजयादीनामुद्देश्यानामसत्त्वादित्यर्थः। अन्वयव्यतिरेकयोरपि भेदाभावे प्रतीतिरनुपपन्ना, प्रतीतिभेदाभावे विरुद्धा प्रतिपत्ति-र्विप्रतिपत्तिरपि न स्यात्तदभावाच्च न विवादपदप्रवृत्तिरिति सर्वथा सर्व्वत्र भेदतज्ज्ञानयोरपेक्षेत्याह। अन्यथेति॥

---

भगी० टी। तथाहि, नीलपीतविषयकज्ञानस्य पक्षत्वे बाधः, एकस्य विरुद्धाकारतादात्म्यानुपपत्तेः। अलीकविषयकज्ञानस्य च पक्षत्वे ग्राह्याभेदसाधने बाधः, अनलीकज्ञानस्यालीकविषयतादात्म्यासम्भवादित्यर्थः। स एव बाध एवेत्यर्थः। अनेकान्ता इति। यदि कासाञ्चिद्बुद्धीनां पक्षाद्बहिर्भावः, तदैतदनैकान्तिकाभिधानम्, सर्वासां पक्षत्वे तत्र साध्याभावे बाध एवेति भावः। स्ववाग्विरोध इति। भेदो न प्रथत इत्यनेनैव भेदप्रथनादित्यर्थः। ननु तद्विषयप्रतीत्यविषयत्वं सहार्थो व्याप्यत्वं चाभेदेऽपि न विरुद्धत इत्यत आह। तदस्फुरण इति। सत्त्वं पक्षसत्त्वादि। कुतश्चेति। भेदज्ञानं विना विरोधज्ञानाभावेन विप्रतिपत्तेरभावादित्यर्थः। साम्प्रतमपीति। ज्ञायमानमात्रमपीत्यर्थः। उन्मत्तोपीति। उन्मत्तो ह्यनिष्टसाधने तत्त्वाज्ञानात् प्रवर्त्तते, अयं तु भेदो विद्वानपि साम्प्रतमपि तं नेच्छतीत्यनेन स जित इत्यर्थः॥

---

रघु० टी०। स एव बाध एव। एवं ग्राह्ययोर्भेदे सत्यत्वाङ्गीकारे ग्राहकस्य तदुभयाभेदे बाधः। नायमिति भेदस्य ज्ञानात्मकत्वे ज्ञानस्य ज्ञेयभिन्नत्वापत्तेरिति भाव.। विनापि भेदं तद्विषयकप्रतीतिविषयत्वरूपः सहोपलम्भः सम्भवतीत्यत आह। तद्व्याप्यतामिति। तन्नेयत्यम्। तद्धि तदविषयकप्रतीत्यविषयत्वादिरूपं न विना भेदं सम्भवतीति। तद्व्याप्यतां तेषां हेतूनां साध्यव्याप्यताम्, व्याप्तेर्भेदगर्भत्वादिति वाऽर्थः॥

---

विकल्पारूढ एव भेदो व्यवहाराङ्गं नानुभवारूढ इति चेत्, सोपि सत्योऽसत्यो वा भासते न वेति विकल्पान्नातिवर्तते ।

शङ्क० टी० । विकल्पः सविकल्पकः । अनुभवो निर्विकल्पकम् । तथा चापारमार्थिक एव भेद इति भावः । सत्य इति । सत्यो भेदो भासते च यदि तदा सिद्धं नः समीहितं ज्ञानमपि त्वन्मते भेदात्मकं स्यात् तदनात्मकत्वे च भेदेपि ग्राह्यग्राहकभावसिद्धिः । यदि च सत्यो भेदो न भासते तदा भेदव्यवहारानुपपत्तिर्न ह्यभासमानं किञ्चिद्व्यवह्रियते । अथासत्य एव भेदो भासते तदा तद्भेदात् ज्ञानमप्यसदेव स्यादन्यथा भेदे ग्राह्यग्राहकभावसिद्धिः । अथ न भासते तदा न भेदव्यवहार इत्यर्थः ॥

---

भगी० टी० । ननु निर्विकल्पकविषयत्वेन प्रामाणिक एव भेद एकत्वविरोधी, अयं तु कल्पनाविषयत्वेनासन् व्यवहारमात्राङ्गमित्याह । विकल्पेति । अनुभवो निर्विकल्पकम् । सोपि विकल्पारूढोपीत्यर्थः । सत्य इति । सत्यत्वे त्वेकस्य विरुद्धतादात्म्यम्, असत्यत्वे तु कालीकज्ञानयोरभेदः, भेदेनैव विषयत्वे हेतवस्तुचैवानेकात्मा इत्यर्थः ॥

---

रघु० टी० । अस्तु तर्हि सांवृत एव भेद इत्याशयवानाशङ्कते । विकल्पेति । नानुभवेति । अनुभवो निर्विकल्पकम् । तस्य

सत्त्वाचालम्बनत्वेन काल्पनिकोल्लेखायोगात्। सोपीति। अभासने केवलस्य वा भेदस्य भासने विचारानारम्भात् प्रतियोग्यादिमिलितस्य च सतोऽसतो वा भेदस्य नैकसद्विज्ञानतादात्म्यमिति कथं ग्राह्यत्वमिति॥

---

असन्नेवास्फुरन्नेवाध्यवसीयत इति चेत्, अध्यवसीयत इति विवरणार्हमेतत्। तद्विषयव्यवहारजननमध्यवसायार्थ इति चेत्, व्यवहारोपि यद्यज्ञानरूपः, कथमसंस्तेन जन्यताम्। ज्ञानरूपश्चेत, कथं नियामकं विना तद्विषयः। स्वकारणसामग्रीसामर्थ्यादिति चेत, सोऽयं व्यवहृतिरूपज्ञानालीकभेदयोर्नियामकान्तराभावेपि कारणसामर्थ्यमाश्रित्य विषयविषयिभावमिच्छति, न त्वनुभवानुभाव्ययोरिति क्षीरं विहाय रुचिररोचकग्रस्तस्य सौवीरे।

शङ्क० टी०। अस्फुरन्निति। अज्ञायमान इत्यर्थः। विचारणीयमिति। विचारासहमेतदित्यर्थः। ज्ञानाविषयेपि भेदव्यवहारं करोति विकल्प इत्याह। तद्विषयेति। व्यवहारोपीति। त्वन्मते ज्ञानातिरिक्तस्यासत्त्वादिति भावः। तद्विषय इति। भेदविषय इत्यर्थः। एवं सति नीलादीनामपि ज्ञानविषयत्वसिद्धिरिति भावः। व्यवहारस्वरूपं ज्ञानं स्वकारणबलात्तथोत्पन्नं यथाऽलीकं भेदं विषयीकरोतीत्याह। स्वकारणेति। व्यवहृतिरूपज्ञानस्यालीकभेदस्येति द्वन्द्वः समासः। अनुभवानुभाव्ययोरिति।

निर्विकल्पकवस्तुग्राह्ययोरित्यर्थः। वस्तुभूतं नीलादि स्वकारण-सामर्थ्यादेव भिन्नमपि विषयीकरोतु किन्नियामकान्तरेणेति भावः। वस्तुविषयतायां स्वकारणसामर्थ्यसम्भवः क्षीरमिष्टम्, अवस्तुविषयतायां तदसम्भवः। सौवीरं काञ्जिकम्(१)॥

---

भगी० टी०। ननु सामस्त्येव भेदः सविकल्पके भासते, तच्च च ज्ञानभिन्नस्यैव विषयत्वम्. मया च निर्विकल्पकं पक्षीकृत्य निर्विकल्पकत्वादेव विषयाभेदः साध्यत इति नानैकान्त इत्याह। असन्नेवेति। अस्फुरन् निर्विकल्पकाविषयीभवन्नित्यर्थः। यद्यज्ञान-रूप इति। ज्ञानभिन्नस्य साऽलीकत्वाभ्युपगमादित्यर्थः। व्यवहृति-रूपज्ञानं चालीकभेदश्चेति द्वन्द्वः। अनुभवेति। निर्विकल्पक-तद्विषययोरित्यर्थः। सविकल्पकवन्निर्विकल्पकेपि भेदे सत्येव स्वकारणसामर्थ्यादेव विषयविषयिभावसम्भवे विपक्षबाधकाभावा-न्नानुमानमभेदसाधकमिति भावः। क्षीरमिति। निर्विकल्पक-विषयस्य सत्त्वात् तत्र कारणसामर्थ्यं सम्भवतीति तत् क्षीरमिव. अलीकविषयकसविकल्पके तु तन्नास्तीति तत् सौवीरमेवेत्यर्थः॥

---

रघु० टी०। अस्फुरन् अभासमानः। अध्यवसीयते विक-ल्पेन विषयीक्रियते इति प्रसिद्धेऽर्थे अनात्मनोपि भानमस्फुर-न्नित्यनेन विरोधस्तेत्याशयेन पृच्छति। अध्यवसीयत इतीति।

---

(१) सौवीरं काश्मीरम्—पाठः।

तद्विषयेति। तथा चाध्यवसीयते विकल्पेन स्वजन्यव्यवहारविषयी-क्रियत इत्यर्थः। स्वकारणबलायातस्वायं विकल्पस्य स्वभावभेदो यत् कश्चिदेव विकल्पः कश्चिदेवासम्नमविषयमपि व्यवहारयति न सर्वः सर्वमिति भावः।

केचित्तु अस्फुरन् निर्विकल्पकाविषयः, तत्रैवानात्मभानं निषिद्धमित्यभिप्रायः। इत्थं च निर्विकल्पकतद्विषययोरेव ग्राह्य-ग्राहकाभ्यामभेदः साधनीयः, सहोपलम्भादौ चोपलम्भः साचात्कारो विवक्षणीयोऽतो नांशतो बाधो नाप्यनैकान्तिकमित्याहुः।

कथमसन्निति। विज्ञानवादे ज्ञानातिरिक्तमात्रस्यासत्त्वात्। यद्यपि व्यवहारात्मकज्ञानस्यासद्भेदविषयत्वे सिद्धमेव भिन्नस्यापि ग्राह्यत्वम्, तथाप्यन्येनान्यस्य ग्रहणेऽतिप्रसङ्गं परमुखेनैव निरा-कर्तुमाह। कथमिति। स्वकारणेति। एवं च व्यवहारतज्जनक-ज्ञानस्याप्यसद्भेदविषयत्वं कारणसामर्थ्यादविरुद्धमित्यपि मन्तव्यम्। अनुभवेति। अनुभवः साचात्कारः। तद्विषयत्वनुभाव्यः[१]। सतो हि ज्ञानविषयत्वे इन्द्रियसन्निकर्षादिकं नियामकं सम्भवतीति चौरतुल्यता। सौवीरम् काञ्जिकम्॥

---

भेदोपि विकल्पाकार एव, न तु बाह्य इति चेत्, यद्यसन्नेवासौ, कथं विकल्पाकारः। तदाकारश्चेत्, कथमसन्निति परिभावय। अस्तु तर्हि सन्नेवेति चेत्,

(१) तद्विषयः सन्ननुभाव्य इति ३ पु० पा०।

नन्वद्वयदर्शि चेद्विज्ञानम्, कथं भेदप्रथा। आकारद्वयदर्शि चेत्, कथमेकं सद्वयात्मकम्। चित्राकारमिति चेत्, चित्रमेकमनेकं वेति विकल्पगिलितमेव तव पश्यतः। अनेकत्वे क्व एकविज्ञानतादात्म्यम्। विज्ञानस्यापि यावदाकारमनेकत्वे क्व चित्राकारसम्वेदनम्, स्वस्वमात्रमग्नत्वात्। एकत्वे क्व भेदप्रतीतिः।

शङ्क० टी०। ननु विकल्पाद्भिन्नस्यालीकभेदस्य विषयतां नाङ्गीकुर्म्म इत्याह। भेदेपीति। कथमिति। वस्त्ववस्तुनोस्तादात्म्यानुपपत्तेरित्यर्थः। तद्वाकार इति। आकाराकारिणोरभेदादिति भावः। अस्त्विति। सन्नेव भेदो विकल्पाकारोस्तु तथा च न पूर्वदोष इत्यर्थः। अद्वयेति। ययोर्भेदो गृह्यते तदुभयाविषयं चेदित्यर्थः। न हि प्रतियोग्यनुयोगिनोर्नीलपीतयोरज्ञानेपि भेदज्ञानमिति भावः। ननु नीलपीताकारयोरनुयोगिप्रतियोगिनोर्ज्ञाने सत्येव भेदज्ञानमस्तु को दोष इत्यत आह। आकारेति। तर्हि विरुद्धद्वयाकारं ज्ञानमपि विरोधादेकं न स्यादित्यर्थः। रत्नकीर्तिमतं शङ्कते। चित्राकार(द्वय)मिति। न द्वयदर्शि नाप्यद्वयदर्शि किं तु चित्राकारमित्यर्थः। अत्रापि नैयायिकाभिमतैकगुणपरश्चित्रशब्दः कर्बुरार्थो वाऽनेकगुणपर इति विकल्पयति। चित्रमपीति। एकं तावन्न भवति विरुद्धधर्माध्यासा, नाप्यनेकमेकज्ञानतादात्म्याभावप्रसङ्गात् एतदेवाह। अनेकत्व इति। तव पश्यत इत्यनादरे षष्ठी त्वां पश्यन्तमप्यनादृत्येत्यर्थः। नन्वाकारनिकरानुरोधाद्विज्ञानमपि भिद्यतामत

आह। विज्ञानस्यापीति। तथा च त्वदनुमतं चित्राद्वैतमनुपपन्न-मिति भावः॥

---

भगी० टी०। कथमिति। आकाराकारिणोरभेदादित्यर्थः। अस्त्विति। विकल्पाकारस्य भेदस्य विकल्पाभिन्नतया भेदः सन्नेव, न त्वलीक इत्यर्थः। ययोर्भेदो विकल्पविषयस्तद्द्वयं यदि न विकल्पविषयस्तत्राह। अद्वयेति। प्रतियोग्यनुयोगिनोरज्ञाना-द्भेदज्ञानाभावादित्यर्थः। तदुभयग्रहणपक्षे दोषमाह। आकारेति। एकस्य विकल्पस्य विरुद्धाकारद्वयात्मकत्वादित्यर्थः। चित्रत्वं यद्येकानेकोभयात्मकत्वं, तदा विरोध एव। अथ ज्ञानवृत्ति-र्जातिस्तद्विशिष्टज्ञानाद्भेदव्यवहारः, तत्राह। चित्रमपीति। चित्र-त्वजातिविशिष्टमपीत्यर्थः। तवेत्यनादरे षष्ठी। विकल्पे दूषणमाह। अनेकत्व इति। अथ तदाकारं ज्ञानमपि नैकं, तत्राह। विज्ञानस्येति। मिथो विरुद्धानेकाकारावगाहित्वात्र चित्रत्वं तवेत्यर्थः। एकत्व इति विज्ञानस्येत्यनुषज्यते, एकस्य भिन्नाकारतादात्म्याभावादित्यर्थः॥

---

रघु० टी०। स्यादेतत्। विकल्पोल्लिखितो भेदो यदि ततो भिद्येत, तदा देशेनैताप्यन्येनान्यस्य ग्रहणम्, न त्वेतदस्ति, किं तु विकल्पाकार एव, न चाकार आकारिणो भिद्यत इत्याशङ्कते। भेदोपीति। अपिशब्दान्नीलादिरपि। तथा च ज्ञानाकारयोरेव नीलपीतयोर्ज्ञानाकारो भेदो विकल्पेनोल्लिखित इति न बाह्य-सम्वेदनसङ्ख्यापीति भावः। अद्वयदर्शि नीलपीताद्याकारद्वयादर्शि।

प्रतियोग्यनुयोग्यनुल्लेखिनो ज्ञानस्य तादृशव्यवहाराजनकत्वादित्युक्तत्वात्। अथ नैरन्तर्येण युगपदेव वोत्पन्नानि त्रीणि ज्ञानानि भेदं व्यवहारयन्तीति चेत्, एकं चेद्विज्ञानं नानेकदर्शि, कथमन्योन्यार्थस्य सिद्धिः। अनेकदर्शि चेत्, एकस्यानेकतादात्म्यविरोधात्सिद्धमन्येनान्यस्य ग्रहणम्। गूढाभिसन्धिः शङ्कते। चित्रेति। चित्राकारत्वं हि नीलपीताद्यतिरिक्ताकारविशेषशालित्वं वा नीलाद्यनेकाकारत्वं वेति विकल्पेन निराकरोति। चित्रमपीति। क्व चित्राकारसंवेदनम् क्व नीलाद्यनेकाकारसंवेदनम् असंवेदने कथं तद्भेदग्रहणम्। एकत्व इति। नीलाद्यतिरिक्तैकाकारशालित्वे नीलपीताद्यनुल्लेखे तद्भेदोल्लेखो न सम्भवतीत्यर्थः॥

---

अनीलाद्यनेकव्यावृत्तिकृतोऽनेकत्वाध्यवसाय एवेति चेत्, अतादात्म्ये कथं व्यावृत्तीनामुल्लेखः। तादात्म्ये कथमनेकत्वम्। एकत्वेपि क्व तत्कृतोपि भेदाध्यवसायः। उल्लेखोयमस्य विज्ञानस्य यदनेकत्वं नाम, न पुनस्तत्त्वान्तरमिति चेत्, स्वरूपमस्वरूपं वेति वाच्यम्। आद्ये अनेकस्वरूपमेकमिति कोऽन्या वदेदसुस्थात्। द्वितीयस्त्विष्यत एवास्माभिः, किं तु त्वयेष्यताम्। भ्रान्तिरसाविति चेत्, तस्यामपि स्वरूपमस्वरूपं वा प्रकाशेत, प्रकारान्तराभावादिति।

शङ्क० टी०। अत्र ज्ञानश्रियः समाधानं शङ्कते। अनीलेति। तदुक्तं ज्ञानश्रिया—

"यदि स्वरूपमाकारास्तस्यैतेकधियः कथम् ।
भेदः प्रत्यर्थता बुद्धेस्तदाऽन्योन्यस्य वेदनम् ॥
मिथस्तथापि व्यावृत्तौ बाह्यवस्तुगणस्थितिः ।
भेदेप्येवं धियस्तेषां प्रकाशघटना कथम्" ॥

इत्याशङ्क्याह—

"अलीकमन्यत्वेऽपीदं व्यावृत्त्यन्तरमीरितम्" ।

तदेतत्परिहरति । अतादात्म्य इति । व्यावृत्तयो यदि ज्ञानभिन्नास्तदा कथं प्रकाशन्ताम् । ज्ञानाभिन्ना एव चेत्तदा ज्ञानाभेदेन तासामप्यभेद एवेति क चित्राकारत्वम् । नन्वस्तु व्यावृत्तीनामप्यभेद एवेत्याह । एकत्वेपीति । तथा चानेकत्वा-ध्यवसायमात्रत्वं त्वन्मतेनेति इति रत्नकीर्त्तेः स्ववचनविरोध इत्यर्थः । ननु प्रतिशब्दवद्वास्तव एवायमुल्लेखो न तु वास्तवो येनानेकत्वं तदनुरोधात् ज्ञानस्य भवेदित्याशङ्कते । उल्लेखोयमिति । न पुनरिति । अनेकत्वमेव न वस्तुसिद्धं यच्चित्राकारे ज्ञाने त्वयाऽऽपाद्यत इत्यर्थः । परिहरति । स्वरूपमिति । यदनेकत्व-मुल्लिख्यते तद्यदि ज्ञानस्वरूपमेव तदा ज्ञानस्यानेकत्वमवर्जनीयम् । अथास्वरूपं ज्ञानाद्भिन्नमेव ज्ञानेनोल्लिख्यते तदा भेदेपि ग्राह्य-ग्राहकभाव इति सिद्धं नः समीहितमित्यर्थः । त्वयेति । तवेदम-त्यन्तमनिष्टमित्यर्थः । असाविति । अनेकत्वावगाही चित्रप्रत्यय इत्यर्थः । भ्रान्तिरपि हि ज्ञानमेव । तथापि पूर्वोक्तो विकल्प-स्तदवस्थ एवेत्यर्थः ॥

भगी० टी० । ननु नीलपीताद्यात्मकस्वलक्षणेऽनेकत्वं नास्त्येव, अनेकाध्यवसायस्य व्यावृत्तिविषय एवेत्याह । अलीकादीति । ज्ञानाद्व्यावृत्तीनां भेदे कथं विषयत्वमित्याह । अतादात्म्य इति । अथैकज्ञानाद्व्यावृत्तीनामभेदः, तत्राह । तादात्म्य इति । एकज्ञानतादात्म्ये व्यावृत्तीनां नानेकत्वमित्यर्थः । एकत्व इति । व्यावृत्तेरित्यनुषञ्जनीयम् । उल्लेखोऽयमिति । ज्ञानविषयमात्रमनेकत्वं न पारमार्थिकमित्यर्थः, तथा च पारमार्थिकविषयत्वेन विशेषिताः सहोपलम्भादयो हेतव इति नानैकान्ता इति भावः । स्वरूपमिति । अनेकत्वेन समं ज्ञानस्य तादात्म्यमतादात्म्यं वेत्यर्थः । किं त्विति । अपारमार्थिकस्य भेदे सति विषयत्ववत् पारमार्थिकेपि तदस्त्विति लप्स्येतास्, भेदे ग्राह्यलक्षणानुपपत्तेर्बाधिकाया अभावादित्यर्थः । भ्रान्तिरिति । हेतुषु प्रमारूपं ज्ञानं विवक्षितमिति नानैकान्तिकमिति भावः । तस्यामपीति । अत्रापि पूर्वोक्त एव भावः ॥

---

रघु० टी० । भवतां नीलपीतादिरूपविलक्षणचित्ररूपवदस्माकं नीलाद्याकारविलक्षणो विज्ञानस्य चित्राकारः, तस्य चैकत्वेप्यनीलाकाराद्यनेकव्यावृत्तिनिबन्धनस्तत्रानेकत्वोल्लेख इत्यभिसन्धिं प्रकाशयति । अनीलेति । ता अपि व्यावृत्तयो विज्ञानाद्भिन्ना न वा । भिन्नाश्चेत्, कथं विज्ञानेन तद्ग्रहः । अगृहीतानां च तासां न भेदाध्यवसायनिमित्तत्वम् । अभिन्नाश्चेत्, कथमेकज्ञानाभिन्नानां तासामनेकत्वम् । एकत्वे च कथं तत्कृतो भेदाध्यवसाय

इति निराकरोति। अतादात्म्य इति। स्यादेतत्। मा भूदनौलाद्यनेकव्यावृत्तिनिबन्धनोऽनेकत्वाध्यवसायः, स्वकारणसामर्थ्यायातस्तु स्यात्, तथानेकत्वं काल्पनिकमिति न वास्तवौं विकल्पैकतां विरुणद्धीत्याशङ्कते। उल्लेख इति। उल्लेखः उल्लेखमात्रम्, उल्लिख्यते परं विकल्पेनानेकत्वं न तु वास्तवमित्यर्थः। स्वरूपमिति। तदनेकत्वं ज्ञानादभिन्नं भिन्नं वेत्यर्थः। द्वितीय इति। ज्ञानेन स्वभिन्नस्यानेकत्वस्य प्रकाश इत्यर्थः। विकल्पस्य भ्रमत्वात्तत्रासत्प्रकाशो न विरुध्यते ऽसत्प्रकाशनस्वभावत्वाङ्गान्तेः, विरुध्यते तु निर्विकल्पके, तस्य तन्मात्रप्रकाशनशीलत्वादित्याशङ्कते। भ्रान्तिरसाविति। निराकरोति। तस्यामपीति॥

---

स्यादेतत्। यथाऽतत् तत्तया परिस्फुरदपि न वस्तुगत्या तदेव, तथा तदप्यतत्तया परिस्फुरदपि नातदेव, ततः स्वरूपस्यातत्तया प्रथनेपि न काचित् ग्राह्यलक्षणक्षतिरिति चेत्, यद्यतत्तापि परिस्फुरन्ती स्वरूपमेवास्य स्यात्, स्यादप्यस्योपन्यासस्य प्रस्तुतोपयोगः। अस्वरूपस्य कथं प्रकाश इति चेत् यद्यपि तथा वक्ष्यामः, तथाप्यतत्ता कथं तस्य स्वरूपमितीतोपि दीयतां दृष्टिः।

शङ्क० टी०। न ह्यविद्यासमारोपिताकारः पर्य्यनुयोगमर्हतीति कीर्तिमतमाशङ्कते। स्यादेतदिति। अतदिति। अरजतं शुक्तिस्वरूपं तत्तया रजततया स्फुरदपि यथा न वस्तु-

गत्या रजतमेव तथा तदप्येकमपि ज्ञानं अतत्तया अनेकतया स्फुरदपि न वस्तुगत्या अनेकमेव ततः स्वरूपस्य विज्ञानस्या-तत्तथानेकतया स्फुरणेपि भेदेन ग्राह्यग्राहकभावो भवत्येव, नास्मन्मते ग्राह्यलक्षणव्यतिरित्यर्थः। यदीति। अतत्ता अनेकता चित्रप्रत्यये स्फुरन्ती यदि चित्रप्रत्ययात्मा भवेत्तदायं समाधिः स्यादपि, न त्वेवमेकस्य चित्रप्रत्ययस्यानेकात्मकत्वप्रसङ्गस्य दुर्वार-त्वादित्यर्थः। ननु तत्ता चेत् स्फुरति तदा मा स्वरूपमेव वाच्या अस्वरूपस्य स्फुरणानुपपत्तेरित्याह। अस्वरूपस्येति। यद्यपीति। सर्वचास्वरूपमेव ग्राहकज्ञानभिन्नमेव स्फुरतीति ग्राह्यग्राहकलक्षणं वक्ष्याम एवेत्यर्थः। अतदिति। अस्वरूपमनेकत्वमित्यर्थः॥

---

भगी० टी०। यथेति। यथा रजततया भासमानापि शुक्तिर्न रजतमेव, न वा शुक्तिः शुक्त्यनात्मतया भासमाना शुक्तेर्भिन्ना, तथा चित्रप्रत्ययस्य यद्यप्यनेकत्वं ज्ञानतादात्म्यमेव तथाप्यनात्मतया भासत इत्यभेदान्न ग्राह्यलक्षणव्यतिरित्यर्थः। तथा च भिन्नत्वं ज्ञानस्य प्रकारो न विशेष्यम्, ग्राह्यत्वादिहेतौ च ग्रहणविशेष्यत्वं विवक्षितमतो नानैकान्त इति भावः। यदीति। विशिष्टज्ञाने विशेष्यवद्विशेषणस्यापि विषयत्वाद्धेदे च तदभावात् तत्स्वरूपत्वमपि ज्ञानस्यावर्जनीयमित्युक्त एव दोष इत्यर्थः। अस्वरूपस्येति। भिन्नयोर्विषयविषयिभावे नियामका-भावादित्यर्थः। यद्यपीति। तत्र नियामकं वक्ष्याम एव--देन विषयत्वे कथमतत्ता ज्ञानभिन्ना तद्विषय इत्यपि दृश्यतामित्यर्थः॥

---

रघु० टी०। विकल्पेनान्यस्यासत इव निर्विकल्पकेनाप्यन्यस्य सतः प्रकाशनमविरुद्धम् अन्येनान्यस्य सत इवासतोपि प्रकाशनेऽतिप्रसङ्गः समानो न हि घटादिविकल्पाः कूर्मरोमादिकमपि विषयीकुर्वन्ति, कारणसामर्थ्येन नियमनं तु निर्विकल्पकस्यापि न वार्यत इति, ग्राह्यत्वं हि ग्रहविशेष्यत्वं भेदे विरुध्यते, तेन न निर्विकल्पकस्य स्वभिन्नविशेष्यकत्वम्, न तु ग्रहविशेषणत्वमपि, भ्रान्तौ चान्यद्विशेषणमेव, न चासद्विशेषणभानादेव वस्तुनः स्वरूपहानिरित्याशङ्कते। स्यादेतदिति। यथेति। यथा स्थाणुः पुरुषत्वेनाबाह्यो वा ज्ञानाकारो वा बाह्यत्वेन भासमानो न पुरुषो न वा बाह्यः, तथाऽभिन्नो विकल्पोपि भिन्नत्वेन भासमानो न भिन्न इति ग्रहविशेष्यत्वं नानुपपन्नमित्यर्थः। अन्यस्यान्यत्र विशेषणत्वे सर्वस्य सर्वत्र विशेषणत्वापातादनायत्या विशेषणत्वमप्यभेदेनैव तथा वाच्यमित्याशयवान्निराकरोति। यदीति। अन्यस्यान्यविशेष्यत्वे सर्वस्य सर्वविशेष्यत्वं स्यादित्याशयवान् शङ्कते। असद्रूपस्येति। प्रकाशो ज्ञानविशेष्यत्वम्। भेदे विशेष्यत्वेऽतिप्रसङ्गेन भेदे विशेषणत्वेऽतिप्रसङ्गो न वार्यत इत्याशयवानाह। तथापीति। तस्माद्भेदे विशेषणत्ववद्विशेष्यत्वमपि स्वीकार्यम्, परिहार्यं वा विशेष्यत्ववद्विशेषणत्वमपीत्युभयथापि पक्षहानिर्भवतामिति भावः॥

---

कथ्मस्वरूपस्फुरणे दोषः। नायं भिन्नयोर्वेद्यवेदकभावो व्यापारनिबन्धनो नियतस्य तस्याभावात्, नापि तज्जातिनिबन्धनः कश्चित्कश्चित्प्रतिनियत इति-

व्यवस्थानुपपत्तिप्रसङ्गात्, न हि निसर्गसिद्धानां गोत्वादीनामीदृशी रीतिरिति चेत्। नन्वयमभेदेपि दोषस्तदवस्थ एव। तथाहि स्वस्य वेदनमिति नायं व्यापारनिबन्धनो व्यवहारः स्वात्मनि तदभावात्, नापि जातिनिबन्धनः साधारण्यप्रसङ्गात्, न हि जात्यैव गौः स्वात्मानं प्रति न तु परं प्रतीति नियमो दृष्टः, न च ज्ञानं स्वस्येव परस्यापि वेदनं सर्वसर्वज्ञत्वापत्तेः।

शङ्क० टी०। भेदेपि न ग्राह्यलक्षणक्षतिरिति स्वपक्षनिर्वाहाय पृच्छति। कस्येति। अस्वरूपं ज्ञानभिन्नं बाह्यं तत्स्फुरण इत्यर्थः। तत्र च ज्ञानश्रियोक्तं दोषमाशङ्कते। नायमिति। ज्ञाने विषयेण व्यापार आधीयते विषये ज्ञानेन वा। आद्ये व्युत्पादितेनैव ज्ञानस्य विषयकृतो व्यापारोन्योन्याज्ञाने तावद्विषयताधीनो व्यापारोऽनुपलम्भबाधित उत्पादकतया तदीयत्व चक्षुराद्यपि विषयः स्यात् विषये च ज्ञानेन ज्ञातताख्यव्यापाराधानेऽतीतानागतविषयता भज्येत, तदुक्तम्—

"उत्पादमात्रेऽतिशयान्तरे वा
ज्ञानात् प्रकाशो न हि बाह्यराशेः।
प्रकाशरूपस्य समुद्भवे तु
प्रसक्त साधारणताप्रसङ्गः" ॥

इति। ननु जातिनिबन्धन एव विषयविषयिभावोस्तु भेदेपीत्यत आह। नापीति। तथा सति यदेकस्य ज्ञेयं तत्सर्वस्यैव

स्यात्, एतदेवाह। न हीति। नन्वित्याभावे। स्वात्मनीति। न हि तेनैव ज्ञानेन स्वात्मनि व्यापारः कश्चिदाधीयत इत्यर्थः। साधारण्येति। तद् ज्ञानम्। सर्वस्यैव स्यादित्यर्थः। एतदेवाह। न हीति। ननु भवतु सर्वसाधारण्यं को दोष इत्यत आह। न चेति॥

---

भगी० टी०। परिहारान्तरमाह। कस्येति। भिन्नयोर्विषयविषयिभावे न विरोध इत्यर्थः। स्वरूपस्य ज्ञानात्मकस्येत्यर्थः। परो दोषमाह। नायमिति। यथा धूमज्ञानस्य वह्निविषयता स्वजन्यानुमितिविषयत्वेन तथा नेह स्वजन्यज्ञातताद्व्यापारनिबन्धना विषयता, क्वचित्तत्सम्भवेऽप्यतीतादिविषये तदभावादित्यर्थः। नापीति। न हि घटज्ञानं पटापेक्षया न ज्ञानजातीयमित्यर्थः। न हीति। न हि गौः किञ्चिदपेक्ष्यागौरित्यर्थः। तदभावात् व्यापाराभावादित्यर्थः। साधारण्येति। पटं प्रत्यपि घटज्ञानस्य ज्ञानजातीयत्वादित्यर्थः। इष्टापत्तिमाशङ्क्य निराकरोति। न चेति॥

---

रघु० टी०। स्वपक्षं स्थापयितुं पृच्छति। कस्येति। स्वरूप बाह्यं ज्ञानभिन्नं तस्य स्फुरण इत्यर्थः। तत्र च ज्ञानश्रियोक्तं दोषमाह। नायमित्यादि। विषयविषयिभावो न कार्यकारणभावनिबन्धनो चक्षुरिन्द्रिययोरपि तत्प्रसङ्गात्। नापि व्यापारनिबन्धनो ज्ञानेनातीतानागतयोरर्थयोस्ताभ्यां वा ज्ञाने व्यापाराधानायोगात्, वर्तमानार्थकस्थलेऽपि ज्ञाने व्यापारस्य योग्यस्य

अनुपलम्भबाधात्, अयोग्ये च मानाभावात् अर्थे ज्ञातताभ्युपगमेपि तस्या अव्यापकत्वेनातन्त्रत्वात् । एतेन ज्ञाने आकाराधानमपि प्रत्युक्तम् । तदुक्तम्, नियतस्येति । आकाराधानेपि[१] नियामकस्याभावात्, भावे वा व्यापारगवेषणवैयर्थ्यात्, तत एव तत्सम्भवात् । नापि जातिनिबन्धनः, पटत्वादेर्नियामकत्वे पटादेः सर्वज्ञानविषयतापत्तेः, ज्ञानत्वस्य नियामकत्वे सर्वज्ञानानां पटविषयत्वापत्तेः, तत्तत्पटादिव्यक्तिविषयतानियामकं च ज्ञानवैजात्यमनुपलम्भबाधितम्, समूहालम्बनादौ सङ्करप्रसङ्गश्चेति । स्वात्मनि तदभावात् व्यापाराभावात् । साधारण्यप्रसङ्गात् सर्वविषयत्वप्रसङ्गात् । अथ जात्यैव सर्वं विज्ञानं स्वविषयमिति चेत्, किमिदं स्वं नाम । यद्येका विज्ञानव्यक्तिः, सर्वज्ञानानां तद्विषयतापत्तिः, अथ विज्ञानमात्रम्, सर्वेषां विज्ञानानां सर्वविज्ञानविज्ञतापत्तिरिति ॥

---

न तत् कस्यचित्, किं तु वेदनमात्रमिति चेत्, तथाऽपि स्वात्मन्यजडवत् परत्राप्यजडं स्यात्, परस्मिन्नन्धवत् स्वस्मिन्नप्यन्धं प्रसज्येत, जात्यैव तद्रूपत्वात् । जात्यापि स्वकारणात् क्वचिन्नियतरूपमेव तदुत्पन्नमिति चेत्, नैवमुच्चैर्ब्रूयाः, परैरपि कदाचिदेवं श्रूयेत ।

शङ्क० टी० । ननु न ज्ञानं स्वात्मानं प्रकाशयति येन प्रतिबन्दिरियं स्यात्, तदुक्तम्—

(१) व्यापाराधानेऽपि इति ३ पु० पा० ।

"विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते।

इयमेवात्मसंवित्तिरस्य या ऽजडरूपता" ॥

यथा तथेत्ययं शून्यता यद्त्यादवारणात्"[१]। इत्यादि। तदेतदाशङ्कते। न तत्कस्यचिदिति। यथा तदीया स्वात्मन्य-जडरूपता तथा परं प्रति तथा स्यात् परस्मिन्नेवं चेत्स्वस्मिन्नपि तथा स्यादिति नैव प्रतिबन्धिरित्याह। तथापीति। ननु परं प्रत्यजडं स्यादिति परमपि ग्टह्णीयादित्यर्थो वा परापेक्षयाप्य-जडरूपतया व्यवह्रियतामिति वा। नाद्यः, उक्तदोषात्। नान्यः, इष्टापत्तेः। नैवम्। इयमेव चेत् स्वप्रकाशता तदा परप्रकाशता-पीयमेव स्यादित्यविशेषापादनमात्रतात्पर्यकत्वात्। परप्रकाशे दोषस्योद्धरणीयत्वादिति। ननु स्वस्मिन्नजडं चेत् तदा परत्रापि तथा स्यात्, अन्यं चेत् तदा स्वस्मिन्नपि तथा स्यादित्यत्र किमापादकमत आह। जात्यैवेति। तज्जातीयं यत् तत्सर्वं प्रति तथैवेति तथा दर्शनादित्यर्थः। स्वकारणबलात् स्वस्मिन्नेव तदजडरूपमित्याशङ्कते। जात्यापीति।

---

भगी० टी०। ननु परस्येव ज्ञानं स्वस्यापि न भवति, किं घटादिभ्यो जडरूपेभ्योऽयमेवास्य विशेषो यदिदमजडरूपमुत्पद्यते। यदाहुः।

विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते।

इयमेवात्मसंवित्तिरस्य या ऽजडरूपता ॥

(१) यथा तथेत्यशून्यताया यद्त्यसव्यापारवारणात् इति ४ पु० पा०।

इत्याह । न तदिति । घटज्ञानस्य यदि ज्ञानात्मत्वमेव तद्विषयत्वम्, तदा पटापेक्षयापि तत्तथैवेति तद्विषयत्वमपि स्यादित्याह । तथापीति । ननु जात्या तद्रूपत्वेपि स्वकारणात्कचित्तद्विषये सम्बद्धस्वभावं तज्जायत इत्याह । जात्यापीति । तर्हि भेदेपि तत एव नियमोऽस्त्वित्याह । नैवमिति ॥

---

रघु० टी० । स्वस्य स्वसम्वेदनमित्येवार्थो नोपेयत इत्याशङ्कते । न तत्कस्यचिदिति । तदुक्तम्—

"विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते ।
इयमेवात्मसम्वित्तिरस्य या ऽजडरूपता" ॥ इति ।

निराकरोति । तथापीति । अजडम् स्वसाक्षि । अन्यम् असाक्षि । विज्ञानं स्वस्मिन्निव परस्मिन् बाह्येपि साक्षि स्यात्, तथा च तत एव सिद्धं बाह्यम्, अथ परस्मिन्नसाक्षि, स्वस्मिन्नपि साक्षि न स्यात्, तथा च परासाक्षिकं तन्न सिद्ध्येत्, मानाभावात् । अथ स्वपरासाक्षिकमपि विज्ञानं परमार्थसत्त्वेन च व्यवह्रियते, तर्हि बाह्यमपि स्वपरासाक्षिकमेव परमार्थसदस्तु व्यवह्रियतां च तत्त्वेनेति कुतो बाह्यार्थभङ्गः । बाधकात्प्रमाणा(भावा)दिति चेत्, बाधकं यदि स्वाविषयमपि बाधते तदा विज्ञानमपि बाधेत, अविशेषादिति कुतो विज्ञानवादः । स्वविषयमेव चेत्, कथं न परेण परसम्वेदनम् ॥

---

अभेदोऽस्तु मा वा, भेदं तु प्रकाशमानत्वेन व्यासेधाम इति चेन्न । वस्तुनि भेदनिवृत्तेरेवाभेदरूपत्वात् ।

शङ्क० टी० । तदेतत्तुल्यमित्याह । अभेद इति । ननु प्रकाशमानत्वादिभिर्हेतुभिर्ज्ञानाभेदो नीलादीनां न मया साध्यते किन्तु ज्ञानाद्भेदमात्रं निराक्रियते, तथा चाभेदेऽपि प्रकाशमानता-निराकरणमतन्त्रमित्याह । आत्यायीति । तदेव तुल्यमित्याह । अभेद इति । भेदनिराकरणमेवाभेदसाधनमिति न प्रकारभेद इत्याह । (न) वस्तुनीति । अलीके भेदाभेदनिराकरणमसम्भवीत्यत उक्तं वस्तुनीति ॥

---

भगी० टी० । वस्तुनीत्यलीकव्यावृत्त्यर्थम् ॥

---

रघु० टी० । वस्तुनीति । तेषामलीकव्यावृत्तये ॥

---

अस्तु तर्हि भेदाभेदविधुरमेव चित्रम्, चेतोभेदे प्रकाशमानत्वायोगात्, अभेदे चित्रत्वानुपपत्तेरिति चेन्न, मिथोविरुद्धविधिद्वयविधिवत् तदुभयनिषेधस्याप्येकत्र विरुद्धत्वात् । न च सोऽप्यस्त्विति वाच्यम् । स्याद्वादावतारे तवापि दिगम्बरत्वप्रसङ्गात् ।

शङ्क० टी०। ननु नीलधवलाकारं चेतो न नीलादिभ्यो भिन्नं, नाप्यभिन्नं, भेदे सति नीलादीनां प्रकाशमानत्वं न स्यादभेदे सति नीलधवलादीनामेकरूपतापत्तौ चित्रत्वमेव ज्ञानस्य भज्येतेत्यत आह। अस्तु तर्हीति। यथा भेदाभेदावेकत्र विधातुं न शक्येते तथा निषेद्धुमपीत्याह। मिथ इति। नन्वेकत्र विरुद्धोभयनिषेधयोर्यो विरोध आपाद्यते सोप्यस्तु तस्यापि ज्ञानविषयत्वेन ज्ञानकुक्षिप्रविष्टत्वादित्यत आह। स्याद्वादेति। स्यादित्येवंरूपो वादः स्याद्वादः, तथा च यद्यदनिष्ट-मापाद्यते तत्र तत्रेष्टतापादने दिगम्बरमतानुप्रवेश इत्यर्थः। यद्वा एवं गतत्रपस्य तव वस्त्रत्यागोपि न लज्जामापादयेदित्यर्थः॥

---

भगी० टी०। भेदाभेदविधुरत्वे क्रमेण हेतुद्वयमाह। भेद इति। चित्रत्वम् नीलपीतादिविरुद्धतादात्म्यमित्यर्थः। मिथ इति। भेदाभेदौ हि मिथो निषेधरूपतया विरुद्धाविति तयो-र्यथा नैकत्र विधिर्विरोधात्, तथा निषेधोपि, भावाभावाभ्यां तृतीयप्रकाराभावादित्यर्थः। सोपि विरुद्धोपीत्यर्थः। स्याद्वादेति। एवं यद्यदनिष्टमापाद्यते तत्र तत्स्यादित्युत्तरे दिगम्बराणा-मिव तवापि विरुद्धस्वीकारादुन्मत्ततया नग्नत्वापत्तिरित्यर्थः॥

---

रघु० टी०। चित्रत्वम् मिथो विरुद्धनीलपीताद्याकारत्वम्। मिथो विरुद्धेति। परस्परविरुद्धरूपेत्यर्थः। सोपि विरुद्धसदु-भयनिषेधोपि। स्याद्वादावतार इति। स्यादिति तिङन्तप्रति-

रूपको निपातोऽनेकान्तवाची । दिगम्बरो वस्तूनां सत्त्वासत्त्वानिर्वचनीयत्वानि अनिर्द्धारितानि प्रतिजानीते । तथाहि ते सप्तभङ्गीनामकं नयमाचक्षते, स्यादस्ति, स्यान्नास्ति, स्यादवक्तव्यश्च, स्यादस्ति च नास्ति च, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेति । वस्तु सत्त्वाश्रय इत्यनिर्धारितम्, तथाऽसत्त्वाश्रय इति, अनिर्वचनीयत्वाश्रय इति, सत्त्वासत्त्वाश्रय इति, सत्त्वानिर्वक्तव्यत्वाश्रय इति, असत्त्वानिर्वक्तव्यत्वाश्रय इति, सत्त्वासत्त्वानिर्वचनीयत्वाश्रय इति, एवं सप्तधाप्यनिर्धारित इत्यर्थः । एवं तवाप्यनिर्धारणमात्रवादित्वे तन्मतप्रवेश एव स्यात्, तन्मतं च आनुभविकस्य सत्त्वस्य प्रमाणान्तराबाध्यत्वेन निर्धारणात् असत्त्वानिर्वचनीयत्वयोस्तत्र तत्र दूषितत्वात् द्वयोर्द्वयोस्त्रयाणां वा विरोधेनैकत्रासम्भवादिदोषादुभयगोचरस्य ज्ञानस्य संशयत्वेनाप्रमाणत्वाच्च समुच्चयपक्षस्य निरस्तत्वाद्दुष्टमिति भावः ॥

---

अस्तु तर्हि चतुःशिखरीशून्यमेव चित्रम्, आश्चर्यरूपत्वात्, एकानेकत्वविरहेपि सत्त्वमित्याश्चर्यार्थो हि चित्रशब्द इति चेत्, अथ चतुःशिखरशेखरमेव किं न स्यात्, आश्चर्यरूपतायुक्तेस्तुल्यत्वात्, एकैकपक्षानुपपत्तिश्च यथा तन्निषेधपर्यवसायिनी तथा तदितरविधिपर्यवसायिन्यपि स्यादिति ।

शङ्क० टी० । अस्त्विति । भेदविधिरभेदविधिर्भेदनिषेधो-

ऽभेदनिषेध इति तच्चत्वारि बुद्धविशेषकोटयस्तच्छून्यमित्यर्थः। नायं चित्र शब्दः कर्बुरार्थः किं त्वाश्चर्यार्थ इत्याह। एकानेकेति। नीलधवलाद्याकारं ज्ञानं विरुद्धधर्माध्यासादप्यनेकं प्रतिनियतप्रतिभासप्रसङ्गादेवं विरोधे सत्यपि चैतादृशं ज्ञानमिति सहदेवाश्चर्यमित्यर्थः। चतुष्कोटिशून्यतापेक्षया चतुष्कोटिसत्ताया एव लाघवेनाभ्युपगन्तुमुचितत्वादित्याह। अथेति। चतुःशिखरशेखरं चतुष्कोटिप्रधानमित्यर्थः। यथा शून्यतायामाश्चर्यं तथा चतुष्कोटिविधावपि विरोधस्तूभयत्रापि तुल्य इत्याह। आश्चर्येति। नन्वेकैकपक्षानुपपत्त्या सर्वकोट्यभावात् शून्यता स्यादित्यत आह। एकैकेति। यः पक्षे नोपपद्यते तस्य यथा निषेधस्तथा तद्विपरीतपक्षस्य विधिरित्यर्थः॥

---

भगी॰ टी॰। भेदाभेदौ तयोर्व्यतिरेकाविति चत्वारि शिखराणीत्यर्थः। ननु चित्रत्वं कर्बुरत्वं ज्ञाने बाधितमित्यन्यथोपपादयति। आश्चर्येति। तत्र हेतुमाह। एकेति। अथेति। एतस्यापि विरोधान्नैकत्र सम्भवः, यदि च विरुद्धस्याप्येकत्राभ्युपगमस्तदा चतुःशिखरमेव कुतो नाभ्युपगम्यते, तदभावेपि तस्योपजीव्यतया लाघवात्तथैवाभ्युपगन्तुमुचितत्वादित्यर्थः। ननु सर्वत्र पक्षे दोषसम्भवात् सर्वव्यतिरेकः स्यादित्यत आह। एकैकेति। भेदानुपपत्तिर्यथा भेदनिषेधपर्यवसायिनी, एवमन्यत्रापि, विरुद्धैकपक्षानुपपत्तावितरपक्षस्यावश्यकत्वादित्यर्थः॥

---

रघु० टी० । भेदाभेदौ तयोर्व्यतिरेकाविति चत्वारि विरुद्धानि कोटयः । अभेदस्तादात्म्यम् एकनिषेधस्यापरविधिपर्यवसायित्वात् कथमेतत्, तत्राह । चित्रमिति । (विरुद्धं) चित्रत्वं कर्बुरत्वं नैतदुपपादकमत आह । आश्चर्येति । आश्चर्यमाह । एकानेकेति । एकत्वानेकत्वेत्यर्थः । एकत्वमभेदः, अनेकत्वं भेदः । चित्रं ज्ञानमिति प्रयोगे चित्रपदस्याश्चर्यार्थताव्याख्यानानुरोधादेव चेद्विरुद्धधर्मसंसर्गित्वमुपेयम्, तदरं प्रथमोपस्थितत्वाल्लाघवाच्च चतुःशिखरग्राहित्वमेवोपेयतामित्याह । अर्थेति । अथ तत्तत्पक्षानुपपत्त्याऽवश्यं तत्तदभावैर्भवितव्यम्, तत्राह । एकैकेति । परस्परविधिनिषेधनान्तरीयकविधिनिषेधयोरेकतरनिषेधेऽपरविधिरप्यावश्यक इति ॥

---

अपि चात्र वस्तुतश्चतुष्कोटिविरहे चेतसो भापान्तरेणेदमुक्तम्, यदनात्मान एवैताश्चतस्रः कोटयो भासन्ते न वा प्रतिभान्तीति । तत्राप्रतिभासनमनुत्तरम् । प्रतिभासने तु ग्राह्यलक्षणायोगेऽपि ग्राह्यभाव इति चित्रमेतत् । तथा च चित्राद्वैतादरं चित्राद्वैतमस्तु प्रतिभासनानुरोधादिति ।

शङ्क० टी० । किं चेताश्चतस्रः कोटयो भासन्ते न वा । आद्ये ज्ञानाभिन्ना एव भासन्त इति पक्षः स्ववचनविरोधादेव त्याज्यः, अभाने चतुष्कोटिशब्दप्रयोगस्यैवानुपपत्तिरित्याह । अपि

चेति। चित्रद्वैतमिति। ग्राह्यलक्षणाभावेपि ग्रहणमित्येकं चित्रं तच्च ग्रहणमेकत्वानेकत्वविधुरमिति तन्मतानुसारादपरश्चित्रमित्यर्थः ॥

---

भगी० टी०। अपि चेति। विरुद्धकोटिचतुष्टयविषयकज्ञानस्य यदि तदात्मकत्वं तदा ज्ञानात्मकत्वं तस्य स्यात्, भेदे ग्राह्यत्वाभावात्। अथ विरुद्धकोटिचतुष्टयविषयकं न ज्ञानं तर्ह्यज्ञाते प्रवृत्त्यभावः स्यादित्यर्थः। तचेति। चतस्रः कोटयो न भासन्त इति शब्दादेव तज्ज्ञानादित्यर्थः। न भेदेन ग्राह्यत्वं नाप्यभेदेन, विरुद्धकोटिचतुष्टयात्मकत्वस्यासम्भवादित्यनेकात्मकमेवैकात्मकं तज्ज्ञानमिति चित्राद्वैतमभ्युपेयम्, तथा चैतस्माद्विरुद्धादरं चित्रद्वैतमेवास्तु, एवं सति मिथोविरुद्धाकारप्रतिभासोप्यनुरोधितः स्यादित्याह। तथा चेति ॥

---

रघु० टी०। किं चोक्तकोटिचतुष्टयाभाववत्तया चित्रज्ञानं गृह्यते न वा, न चेत्, न चित्रत्वसिद्धिः स्ववचनविरोधश्च। गृह्यते चेत्, कोटिचतुष्टयभानमावश्यकमभावमात्रग्रहे चित्रत्वासिद्धिः। न च कोटिचतुष्टयात्मकमेकं विज्ञानं भवितुमर्हतीत्यनायत्या अन्योन्यस्य ग्रहणमभ्युपगन्तव्यम्। तथा च प्रमाणबाधितं चित्रस्य मिथोविरुद्धधर्मवदनेकस्याद्वैत(मभेद)मुपेक्ष्य चित्रस्य द्वैतं भेद एवाङ्गीक्रियताम्। तथा सति नीलपीताद्यनेकोल्लेखित्वमेकत्वं च ज्ञानस्यानुभूयमानमनुरुद्धं भवतीत्याह। अपि चेति। ग्राह्यलक्षणमभेदः ॥

---

स्यादेतत् । बहिरन्तरुभयथापि ग्राह्यलक्षणक्षति-रस्तु, प्रकाशमानत्वं तु नीलादीनामशक्यापह्नवम्, तावन्मात्रं चास्माकमभिमतमिति चेत्, तदेतद्विक्रीत-गावीरक्षणम् । किमिदं (हि) प्रकाशमानत्वं यत् सर्वथा ग्राह्यलक्षणक्षतावपि न क्षीणम् । न प्रकाशसम्बन्धः, नियमानुपपत्तेरित्युक्तम् । न प्रकाशतादात्म्यम्, वैचित्र्यानुपपत्तेरित्युक्तम् । तस्मान्नीलादीनां प्रकाश-मानत्वं परिपालयता ग्राह्यलक्षणे यत्नः कर्तव्यः परिहर्तव्यं वा प्रकाशमानत्वम् । अन्यथा तपनीय-मपनीय वाससि ग्रन्थिकर्तारमुपहससि, स्वयं च कनकमुपादाय गगनाञ्चले ग्रन्थिं करोषीति । सेयं सर्वप्रकारमसिद्धिः सर्वप्रकारं चानैकान्तिकत्वमिति ।

शङ्क० टी० । ननु नीलादयः प्रकाशात्मानः प्रकाशमानत्वा-दित्येतावन्मात्रमस्मदभिमतं, न तु स्वस्य परस्य वा वेदनमित्य-प्यदभिमतमिष्टेत्याशङ्कते । स्यादेतदिति । तदुक्तं ज्ञानश्रिया—

"प्रकाशमानं नीलादि जडं वा ऽजडमेव वा ।

इति प्रकरणेऽस्माभिर्बुद्धित्वे हेतुरुच्यते" ॥ इति ।

बहिरन्तरिति । स्वसम्वेदने परसम्वेदने वा ग्राह्यलक्षण-क्षतिरस्त्वित्यर्थः । नीलादीनां प्रकाशमानत्वं त्वयैव दूरीकृतं त्वयैव च ज्ञानाभिन्नत्वे साध्ये हेतुत्वेनोपादीयत इत्युपहसति । तदेत-दिति । न प्रकाशेति । व्यापाराधानमन्तरेण नियमानुपपत्तेरिति

त्वयोक्तम्, न प्रकाशतादात्म्यं विरुद्धधर्माध्यासेन चित्राकारज्ञानस्य भेदप्रसङ्गादिति मयोक्तं, तथा चोभयथापि प्रकाशमानत्वं नीलादीनामनुपपन्नं, तथा च भेदेपि विषयविषयिभावोऽभ्युपगन्तव्य इत्युपसंहरति। तस्मादिति। अत्र ज्ञानश्रिया तदुभयमाकारवाह्यतामतिबाह्य बाह्यवादव्यसनिनो भेदसाधनविधिस्तपनीयमपनीय वासमपि ग्रन्थिकरणवृत्तान्तमनुहरतीति सोत्प्रासमुक्तं, तदिदानीमवसरप्राप्तेनोपहासान्तरेण शिथिलयन्नाह। अन्यथेति। नीलादीनां ज्ञानाकारभावं तपनीयं तत्त्वया परित्यक्तं बाह्यं वस्तु वासमपि ग्रन्थिः स च क्रियते। तच्चानुपपन्नम्। न हि ज्ञानाकारतिरस्कारे ग्राह्यलक्षणस्थितिरपरोपहासार्थः। यथा भेदे ग्राह्यलक्षणाभावस्तथा स्वसंवेदनेपि, तथा च सर्वथा ग्राह्यलक्षणाभावेपि प्रकाशमानत्वस्य गगनाम्बुजग्रन्थेः करणमिति परं प्रति नैयायिकानामुपहासः। सेयमिति। नीलं ज्ञानाभिन्नं प्रकाशमानत्वात्, सहोपलम्भादित्यादीनां नीलादिबाह्यानभ्युपगमे आश्रयासिद्धत्वं भेदेऽभेदेपि च ग्राह्यलक्षणाभावात् स्वरूपासिद्धत्वम्। तद्वृत्तियावद्धर्मवत्त्वं हि तदभेदे साध्ये उपाधिरिति सोपाधित्वाद्व्याप्यत्वासिद्धत्वं चेत्यर्थः। सर्वेति। प्रकाशमानत्वात्सहोपलम्भादित्यस्यालीके भेदेपि गतत्वात् साधारणत्वं सपक्षविपक्षव्यावृत्तत्वादाऽसाधारणत्वमत एव चानुपसंहारित्वं चेत्यर्थः। यद्यप्येकत्र साधारणानैकान्तिकत्वमसाधारणानैकान्तिकत्वं चानुपपन्नं तथापि विकल्प ऊहनीयमिति॥

भगी० टी० । ननु यद्यपि ज्ञानाद्भेदाभेदयोरुभयोरपि न ग्राह्यलक्षणयोगः, तथापि प्रकाशमानत्वमात्रेण ज्ञानविषययोरभेदः साध्यत इत्याह । बहिरिति । प्रकाशमानत्वं त्वया त्यक्तमिति तद्रक्षा विक्रीतगवीरक्षणवन्निष्फलेत्याह । तदेतदिति । प्रकाशमानत्वस्य त्यागे हेतुमाह । किमिदमिति । अत्र साकारवादिना ज्ञानश्रियाऽऽकारं निषिध्य बाह्यस्वीकरणं तपनीयमपनीय वाससि ग्रन्थिकरणमिवेत्युपहसितम्, आकारस्य विषयतानियामकस्य सुवर्णस्येव रक्षणाय ग्रन्थितुल्यं बाह्यम्, तदरक्षणे तु तन्निष्फलमिति, तदुदाहरति । तपनीयमिति । सुवर्णरक्षणेऽपि वाससि ग्रन्थिर्भवति, गगनाञ्चले न तत्सम्भव इत्याह । स्वयं चेति । अनुव्यवसायप्रमाणकं नीलादीनां प्रकाशमानत्वं गृहीत्वा सर्वथा ग्राह्यलक्षणाभावे ग्राह्यत्वेनैवाभेदसाधनं गगनग्रन्थिवदसम्भवीत्यर्थः । सर्वप्रकारमिति । तदविषयकप्रतीत्यविषयकत्वं ज्ञानस्वप्रकाशनिषेधात् स्वरूपासिद्धम्, तदवृत्तिधर्मशून्यत्वस्योपाधेः सत्त्वाद्व्याप्यत्वासिद्धम्, सर्वेषां पक्षत्वेऽनुपसंहार्यम्, विशिष्य हेतुपक्षनिर्वचने साधारणानैकान्तिकमित्यर्थः ॥

---

रघु० टी० । नीलादीनां बाह्यत्वे ज्ञानात्मकत्वे च ग्राह्यत्वासम्भवात्तन्नास्तु, प्रकाशमानत्वादेव तेषां ज्ञानाभेदः साधयितव्य इत्याशङ्कते । स्यादेतदिति । ग्रहणानां काचित्कनीलपीताद्याकारस्य कारणतया बाह्यं नीलादिकमुपेयम्, आकारं परित्यज्य बाह्याङ्गीकरणं काञ्चनपरिहारेण वसने ग्रन्थिः, बाह्यत्यागे

नीलादीनामसम्भवतः प्रकाशमानत्वस्य हेतुत्वेनोपादानं गगने ग्रन्थिः। सर्वप्रकारमिति। यदि कश्चिद्भेदेपि ग्राह्यत्वं यदि वा न क्वापि भेदे ग्राह्यत्वमुभयथापि विपक्षे बाधकाभावान्न व्याप्तिसिद्धिः, एवं भेदे ग्राह्यत्वे ग्राह्यत्वादेर्विपक्षवृत्तित्वं भेदे चाग्राह्यत्वे स्वप्रकाशनिषेधात् चित्रप्रत्ययानुपपत्त्या चाभेदे ग्राह्यत्वायोगात् सपक्षविपक्षव्यावृत्तत्वमित्येके वदन्ति।

अन्ये पुनः (स)प्रकारमसिद्ध्यादेरेवाहुः। तथाहि नीलादेर्ज्ञानाकारस्य नीलाकारज्ञानवादिनां बाह्यस्य च विज्ञानवादिनामसिद्धत्वादुभयसाधारणनीलत्वाद्यभावात् ज्ञाने सिद्धसाधनात् बाह्ये च बाधादाश्रयविशेषणसन्देहाभावाच्चाश्रयासिद्धिः, स्वप्रकाशनिषेधात् सहोपलम्भनियमस्य स्वरूपासिद्धिः, विपक्षे बाधकाभावात् तद्वृत्तिधर्मशून्यत्वस्योपाधित्वाच्च सर्वेषां व्याप्यत्वासिद्धिः, एवं सर्वेषां पक्षत्वेऽनुपसंहार्यत्वम्, विशिष्य पक्षत्वे तज्ज्ञानाभेदे साध्ये ग्राह्यत्वस्य साधारण्यम्, तज्ज्ञानग्राह्यत्वस्य च स्वप्रकाशनिषेधादसाधारण्यम्, साधारण्यमपि विचित्रज्ञानवेद्येऽनीके भेद इति।

केचित्तु प्रकारो विचित्रस्येत्याहुः॥

---

**एतेन द्वितीयः पक्षः प्रत्युक्तः। न हि सजातीयत्वेन ग्राह्यलक्षणवैधुर्यमुत्सार्यते, अतिप्रसङ्गस्य तादवस्थ्यात्। जडत्वे प्रकाशासम्भावनैवेति चेन्न, तुल्यत्वात्। यथा ह्यस्वसम्वेदनवादिनः परं प्रति प्रकाशमपि ज्ञानमात्मनि जडमेव, तथा स्वसम्वेदनवादिनोपि**

स्वात्मनि प्रकाशमपि ज्ञानं परं प्रति जडमेव। कथञ्चित् बुद्ध्यन्तरेप्यजडं चेत्, बाह्येपि तथा किं न स्यादिति सन्दिग्धविपक्षवृत्तित्वम्।

शङ्क० टी०। एतेनेति। ग्राह्यलक्षणाभावेनेत्यर्थः। अनैकान्तिकत्वेनेत्यन्ये। द्वितीयः पक्षः नीलादीनां ज्ञानाभिन्नजातीयत्वम्। सजातीयस्यापि ग्रहे ग्राह्यलक्षणक्षतिस्तदवस्थेत्याह। न हीति। अतिप्रसङ्गस्येति। घटपटादीनां सर्वेषां ज्ञानजातीयतया घटज्ञानस्य पटविषयत्वप्रसङ्गस्तदवस्थ एवेत्यर्थः। प्रकाशमानत्वेन ज्ञानसजातीयत्वं सेत्स्यति, जडस्य प्रकाशत्वानुपपत्तिरित्याशङ्कते। जडत्व इति। तुल्यत्वादिति। यथा भिन्नतया जडं न प्रकाशते तद्वदेवाजडमपीत्यर्थः। एतदेवाह। यथा हीति। नैयायिकानां ज्ञानं स्वात्मनि जडं बौद्धानां तु स्वभिन्नज्ञानजातीयमपि जडमेव, तथा च तदपि कथं गृह्णीयादित्यर्थः। ननु ज्ञानजातीयं स्वभिन्नमपि प्रकाशयति, न तु जडजातीयमित्यत आह। कथञ्चिदिति। ज्ञानानां स्वभिन्नप्रकाशनसामर्थ्यं यदि तदा स्वभिन्नं जडमपि प्रकाशयत्विति विपक्षे बाधकाभाव इत्यर्थः॥

---

भगी० टी०। एतेनानैकान्तिकत्वेन। द्वितीयः पक्षोऽभिन्नजातीयत्वम्। न हीति। ज्ञानत्वेन घटज्ञानस्य पटसाजात्यात् पटविषयत्वप्रसङ्गतादवस्थ्यादित्यर्थः। ननु नीलादेरप्रकाशात्मत्वे प्रकाशमानत्वानुपपत्तिः, तस्य प्रकाशत्वव्याप्यत्वादित्याह। जडत्व

इति। प्रकाशत्वेपि स्वमेव प्रकाशयेन्नान्यम्, यदि च सामग्रीवशा-दन्यमपि प्रकाशयति, तदा जडरूपस्यान्यस्य प्रकाश्यत्वे न दोष इत्याह। तुल्यत्वात्। तदेव स्पष्टयति। यथा हीति ॥

---

रघु० टी०। एतेन ग्राह्यलक्षणवैधुर्यणासिद्धत्वेन च। द्वितीयः पक्षोऽभिन्नजातीयत्वम्। अतिप्रसङ्गस्येति। साजात्यस्य नियामकत्वे सर्वज्ञानानां सर्वग्राह्यत्वापातादित्यर्थः। प्रकाशकत्वं प्रकाश्यत्वव्यापक(त्व)म्, न च विना व्यापकं व्याप्यसम्भव इत्याशङ्कते। जडत्व इति। जडत्वमप्रकाशकत्वम्। प्रकाशासम्भावना प्रकाश्यत्वा-सम्भावना। ज्ञानजातीयमपि किञ्चिदेव किञ्चिद्गृह्णाति न सर्वं सर्वम्, अत्र यद्यभेदो नियामको न तर्ह्यन्येन ज्ञानेनान्यज्ञानग्रहणम्। अथ कारणसामर्थ्यम्, तदा बाह्यस्यापि ग्रहणम्, बाधकाभावा-दित्याह। तुल्यत्वादिति। प्रकाशयतीति। प्रकाशम् इन्द्रिय-सन्निकर्षादिविरहादात्मनि जडमेव, अभेदविरहात् परं प्रति जडमेव, तथा च स्वमात्रसंवेदनवादिनामिव तवापि नान्येनान्य-ग्रहणम्, कथञ्चित् स्वकारणसामर्थ्यात् ज्ञानत्वेन साध्ये ग्राह्यत्वस्य हेतोः सन्दिग्धविपक्षवृत्तित्वमित्याखण्डलार्थः ॥

---

ननु बाह्ये सर्वथैव ग्राह्यलक्षणक्षतिः, इह तु समानोपादानतानियमेन चित्ताकाराणां परमार्थ-भिन्नानामेव व्यतिवेदनसिद्धिः। न। मिथः प्रथा-नियमे ह्युपादानमुखेन सामान्यतो वा सामग्री-

## सामर्थ्यमेव वक्तव्यम्, अन्यथा तथाविधकार्यानुत्पत्तेः, तथा च बाह्यग्राह्यनियतस्वभावज्ञानोत्पत्तावपि सुलभमेतदिति पूर्वक एव दोषः ।

शङ्क॰ टी॰ । ननु भिन्नमपि समानोपादानं गृह्णातीति नियमः स च बाह्यानां ज्ञानजातीयत्वे सम्भवति, न तु भिन्न-जातीयत्व इत्याह । नन्विति । चित्राकाराणां नीलधवलाद्या-काराणाम् । व्यतिरेकवेदनमन्योन्यवेदनम् । न मिथ इति । ज्ञानानां भेदे ग्राह्यग्राहकभावस्तावत्त्वयाप्यङ्गीकृत एव । तत्र नियामकं समानोपादानत्वं त्वयोच्यते, मया तु स्वसामग्रीतस्तथैव तज्ज्ञानमुत्पद्यते येन घटमेव गृह्णाति न तु पटमपीति तुल्यमित्यर्थः । उपादानमुखेन विशेषतः, कारणमात्रमुखेन सामान्यतः । तथाविधेति । ज्ञानजातीयमपि स्वभिन्नं नीलमेव गृह्णाति न तु पीतमपीति नियामकं तत्रापि कारणशक्तिभेद एवेत्यर्थः । तदेतत्तुल्यमित्याह । तथा चेति । पूर्वक एवेति । सन्दिग्धविपक्षव्यावृत्तिकत्वमेवेत्यर्थः ॥

---

भगी॰ टी॰ । ननु समानोपादानकतया ग्राह्यग्राहकभाव-नियमः, भिन्नजातीयत्वे च ग्राह्यस्य तदसम्भवः, समानजातीय-कारणस्यैवोपादानत्वादिति ग्राह्यं ज्ञानजातीयमभ्युपेयमित्याह । नन्विति । अभेदेन ग्राह्यग्राहकभावे नियामकमाह । चित्रा-काराणामिति । व्यतिभेदनं विभिन्नवेदनमन्योन्यवेदनं वा ।

एवमपि तत्र सामग्र्येव नियामिका, तथा च विषयजडत्वेपि तत एव तन्नियमोपपत्तौ तद्विशेषोपादानस्य व्यर्थत्वात् सन्दिग्धानैकान्तिकत्वमेवेत्याह । सिद्ध इति । उपादानमुखेन विशेषतः, कारणमात्रमुखेन सामान्यत इत्यर्थः ॥

---

रघु० टी० । स्यादेतत् । भेदस्य साजात्यस्य वा ग्राह्यत्वनियामकत्वेऽतिप्रसङ्गादभेदस्य तथात्वे च चित्रप्रत्ययानुपपत्तेर्न तदस्तु, अभिन्नोपादानकत्वं तु तथा भवेत्, न च बाह्यविज्ञानयोरेकोपादानकत्वं, नाम, सजातीयकारणत्वस्यैवोपादानत्वात्, तच्च स्वस्येव स्वसहोत्पन्नस्य विज्ञानान्तरस्याप्यविशिष्टम्, तेन सहोत्पन्ना नीलपीतादिप्रत्ययाः स्वात्मानं परं च गृह्णन्तो भवन्ति विचित्रप्रत्यया इत्याशङ्कते । नन्विति । इह विज्ञाने । चित्राकाराणां नीलपीतादिप्रत्ययानाम् । व्यतिवेदनम् मिथोग्रहणम् । एवमपि स्वकारणसामर्थ्यात् विज्ञानं नियतज्ञानग्राहकमित्यायातम्, तथा च तत एव नियतबाह्यग्राहकमपि भवेदिति सन्दिग्धानैकान्तिकत्वमिति दूषयति । नेति । हिशब्दो हेतौ । उपादानं यदि क्षणिकं स्यात् स्यादपि तत्सामर्थ्यं नियामकम्, न त्वेतदस्ति, स्थैर्यस्य प्रतिसन्धानादिति सामग्रीसामर्थ्यं नियामकं वक्तव्यम् । सामान्यतः कारणमात्रमुखेन । तथाविधं कार्यं नियतविषयकं विज्ञानम् । अथायमाशयः, तज्ज्ञानग्राह्यत्वे तत्सामग्रीजन्यत्वं नियामकमिति । नैतदपि । चित्रप्रत्ययानुपपत्तेः, सामग्र्यभेदे कार्यभेदायोगात् । कुतश्चेदमवधारितम् । तत्सामग्र्यजन्यस्य तद्ग्राह्य-

त्वेऽतिप्रसङ्गादिति चेत्, कस्य तावदेतावानर्थो विज्ञानस्य सामग्र्या जनितो येनायं विषयीकृत इति विभाव्यताम्। एतेन तत्सामग्री-जन्यत्वं तद्ग्राह्यत्वे नियामकमित्यादिकं व्याख्यातम्। अत एव वैनाशिकानां तदुपादानोपादेयत्वं नियामकमिति प्रत्युक्तम्॥

---

अस्तु तर्हि तृतीयः, सर्वथा ग्राह्यलक्षणानुपपत्तेः, तदभावे सामग्रीसामर्थ्यस्याप्याश्रयितुमशक्यत्वात्, विचारसिद्धे हि वस्तुनि कारणचिन्तनावसरो न त्वविवेचित इति चेत्, किं ग्राह्यलक्षणानिर्वक्तव्यतया प्रकाशमानत्वममीषां निवर्त्तते सत्त्वं वा।

शङ्क० टी०। ग्राह्यांशस्यालीकत्वमुत्थापयति। अस्त्विति। तर्हीति। तज्जातीयत्वेऽपि ग्राह्यलक्षणमनुपपन्नमित्यर्थः। अत्र हेतुमाह। सर्वथेति। भेदेऽभेदे च ग्राह्यलक्षणानुपपत्तेरित्यर्थः। तदभाव इति। ग्राह्याभाव इत्यर्थः। तदभावस्यालीकत्वादिति भावः। कथमेतदित्यत आह। विचारेति।

केचित्तु तदभावो ग्राह्यग्राहकलक्षणाभाव इत्याहुः।

यदि ग्राह्यग्राहकभावलक्षणं भवेत्तदार्थसामग्रीसामर्थ्याभिधानं घटेतापि, न तु तदभावेऽपीत्यर्थः। तदुक्तं ज्ञानश्रिया—

वेद्यवेदकरूपं हि नियतं यदि लक्षितम्।
तदुपादानपर्येषि सामग्रीशक्तिरन्तरम्॥(१)

(१) वस्तगमिति ३ पु० पा०।

वेद्यवेदकयो रूपं न चाद्यापि निवर्त्तते ।

ततः स्वरूपे वक्तव्ये सामग्रीपरिकीर्त्तनम् ॥

अप्रस्तुताभिधानं वा दिङ्क्रिकाकार एव वा "[१]। इत्यादि ।

परिहरति । तत्किमिति । ग्राह्यलक्षणाभावन्मम, स्ववचनमेव त्वया निर्वक्तुं न शक्यत एतावता नीलादीनां प्रकाशमानत्वं निवर्त्तते सत्त्वं वेत्यर्थः ॥

---

भगी० टी० । तृतीयः पक्षो ग्राह्यस्यालीकत्वम् । तत्र हेतुमाह । सर्वथेति । भिन्नत्वाभिन्नत्वाभ्यां ग्राह्यालीकत्वपक्षे सामग्र्या नियामकत्वं दूषयति । तदभाव इति । ग्राह्याभाव इत्यर्थः ॥

---

रघु० टी० । तृतीयः पक्षो ग्राह्यांशस्यालीकत्वम् । अत्र हेतुमाह । सर्वथेति । भिन्नत्वेऽभिन्नत्वे च सति ग्राह्यलक्षणानुपपत्तेरिति । मा भूत्सति ग्राह्यलक्षणम्, ग्राह्यत्वं तु ग्राह्यस्य ग्राहकस्य वा सामग्र्याः सामर्थ्यादेव भविष्यतीत्यत आह । तदभाव इति । लक्षणाभावे लक्ष्यस्यासम्भाविततया सामग्रीसामर्थ्यस्याकिञ्चित्करत्वादित्यर्थः ॥

न प्रथमः । न हि लक्षणापरिज्ञानमात्रेण स्पष्टदृष्टमपि लक्ष्यमपह्नोतुं शक्यते, अपरिज्ञानस्य दुरूहत्वेनाप्युपपत्तेः, तेषामप्रतिभासे तन्निषेधस्यानुपपत्तेः ।

(१) बाह्यमाश्रित्य एव वा इति ३ पु० पा० ।

शङ्क० टी०। स्पष्टदृष्टमिति। पूर्वा(सर्वा)नुभवसिद्धमित्यर्थः। ननु ग्राह्यलक्षणं न ज्ञायते चेदूनं नास्तीत्यत आह। अपरिज्ञानस्येति। तेषामिति। यदि बाह्यानामप्रतिभासो भवेत्तदा तच्च ग्राह्यलक्षणं नास्तीत्ययमपि निषेधो न घटते ग्राह्यत्वेन तेषामेवाभिधानादित्यर्थः॥

---

भगी० टी०। स्पष्टदृष्टम् सकलानुभवसाक्षिकम्। तेषामिति। ग्राह्यलक्षणमनुपपन्नमिति ज्ञानस्य तज्ज्ञानं विनाऽनुपपत्तेस्तदवश्यं स्वीकार्यमित्यर्थः॥

---

रघु० टी०। स्पष्टदृष्टम् सर्वानुभवसिद्धम्। अपरिज्ञानम् विशिष्यानिर्णयः। अथ नास्त्येव बाह्ये ग्राह्यलक्षणम्, निपुणपरिभावनेऽपि प्रज्ञाशालिभिरनाकलनात्, न च लक्षणाभावे लक्ष्यस्य ग्राह्यत्वस्य सम्भव इत्यत आह। तेषामिति। बाह्यानामभावे बाह्येषु ग्राह्यलक्षणं नास्तीति प्रत्ययोऽपि नोपपद्यते, तथा चानायत्यैव तत्र ग्राह्यत्वमुपेयम्, सिद्धे च ग्राह्यत्वे तदन्यथानुपपत्त्यैव लक्षणं सेत्स्यतीति॥

---

न द्वितीयः, तदा हि तल्लक्षणानुपपत्तिः सत्त्वं निवर्त्तयेत्, यद्यसत्त्वं लक्षणमुपपादयेत्, उभयथाप्यनुपपत्तौ कोऽनुरागोऽसत्त्वे। तदेव लक्षणमिति चेत्, सत्त्वमेव किं न स्यात्। अतिप्रसङ्गादिति चेत्, तुल्यम्।

शङ्क० टी० । तदा हीति । यद्यसत्त्वं ग्राह्यलक्षणनिर्वाह्यं भवेत्तदा तत्कल्पयितुमुचितमिति भावः । उभयथापीति । सत्त्वेऽसत्त्वे चेत्यर्थः । तदेवेति । असत्त्वमेव ग्राह्यलक्षणमित्यर्थः । सत्त्वमेवेति । विनिगमनाविरहादित्यर्थः । अतिप्रसङ्ग इति । सत्त्वे भेदे च ग्राह्यत्वे घटज्ञानं पटविषयकमपि स्यादित्यर्थः ॥

---

भगी० टी० । तदा हीति । अनुपपत्त्या ह्युपपादकः कल्प्यः, न च सत्त्वमिवासत्त्वमपि तदुपपादकमित्यर्थः । तदेव असत्त्वमित्यर्थः ॥

---

रघु० टी० । तदेवेति । असत्त्वमेवेत्यर्थः । तुल्यमिति । एकस्यासतो भाने सर्वासद्भानप्रसङ्ग इत्यर्थः ॥

---

वेदनाधीनव्यवहारगोचरत्वमिति चेत्, अस्तु तावदिदम्, तस्यैवेति तु नियमः कुतः । सामग्रीतस्तथा वेदनोत्पत्तिरिति चेत्, तदेतत् सम्भाव्यते सति, न त्वसतीति विशेषः । यथा हि सति ज्ञानेनाभिलाषः, तेन यत्नः, तेन प्रवृत्तिः, तया तत्प्राप्तिः क्रियते, न तथा अलीके तस्य प्राप्तुमशक्यत्वात्, शक्यत्वे वाऽनलीकत्वात् । व्यवहारोप्ययमलीक इति चेत्, तर्हि सुतरां लक्षणाभावः, तद्व्यवहारस्याप्यभावात् ।

मङ्ग० टी० । ग्राह्यलक्षणान्तरं मङ्कते । वेदनेति । अस्तु तावदिति । घटज्ञानेन घट एव व्यवहारो जन्यते न तु पट इत्यत्र किं नियामकमित्यर्थः । उपेक्षाज्ञानाव्यापकञ्चेदमिति भावः । सामग्रीसामर्थ्यं तत्र नियामकमित्याह । सामग्रीत इति । तदेतदिति । अर्थसामर्थ्यसमुत्थत्वाज्ज्ञानस्येत्यर्थः । बाह्यस्य सत्त्वे व्यवहारोत्पत्तिर्नासत्त्वे इत्याह । यथा हीति । प्रवृत्तिरिह चेष्टा । तस्य प्राप्तुं इत्युपलक्षणम् । ज्ञातुमभिलषितुमित्यपि द्रष्टव्यम् । अलीक इति । तथा चालीकनिर्वाह्य इत्यर्थः । तद्बाध-स्यापीति । तथा च वेदनाधीनव्यवहारगोचरत्वं यद् ग्राह्यलक्षणं कृतं तत् सुतरां न सम्भवति इत्यर्थः ॥

---

भगी० टी० । ग्राह्यलक्षणान्तरमाह । वेदनेति । अस्त्विति । तेन वेदनेन तत्रैव व्यवहारः कर्तव्य इत्यत्रैव किंनियामक-मित्यर्थः । वस्तुत उपेक्षाज्ञाने तदपि नास्ति, व्यवहारश्च यदि ज्ञानात्मकः, तदाऽऽत्माश्रयः, तेनैव तन्निरूपणात्, तदन्यरूपश्चेत्, तदा बाह्यस्वीकार इत्यर्थः । सम्भाव्यत इत्यनेनापाततः सन्दिग्ध-विपक्षवृत्तित्वमुक्ता न लभतीत्यनेन विरुद्धत्वमुक्तम । तद्द्वारस्यापि व्यवहाररूपद्वारस्येत्यर्थः ॥

---

रघु० टी० । लक्षणान्तरमाशङ्कते । वेदनेति । अस्त्विति । उपेक्षाज्ञानाव्यापकमिति भावः । तस्यैवेति । केनचिद्वेदनेन कचि-देव व्यवहारो जन्यत इत्येव नियमः कथमित्यर्थः । व्यवहारो

यदि वेदमान्तरं तदाऽनवस्था, अथ प्रवृत्त्यादिकं, तदपि सदसद्वा, आद्ये सिद्धमीप्सितम्, तस्यैव सत्त्वोपगमात्, अवस्तुनो वास्तवप्रवृत्त्यादिगोचरत्वायोगाच्चेत्याह । तदेतदिति । एतत् मत्येव सम्भवतीत्यर्थः । द्वितीयं शङ्कते । व्यवहारोपीति । तद्वारस्येति । असतोऽजन्यत्वादिति भावः । यदि चासतोपि प्रवृत्त्यादेर्जन्यत्वमुपेयते तदा सत एव तद्गोचरत्वमस्त्विति न ततोऽसत्त्वसिद्धिरिति ॥

---

अस्तु तर्हि सर्वथा विचारासहत्वमेव विश्वस्येति चेत्, तत्किमिदानीं तत्त्वोपप्लव एव, काष्ठाशून्यता वा । न प्रथमः, इयतीं भूमिमारूढस्यापि विचारस्य निश्चलतायां प्रमाणाभावात्, भावे वा कथं तत्त्वोपप्लवः, अस्यैव विचारस्यानुपप्लवात्, तत्समानन्यायस्यान्यस्यापि तथाभावप्राप्तेः, निष्फलत्वाच्च ।

शङ्क० टी । ननु ग्राह्यत्वं न सत्त्वेन नाप्यसत्त्वेन न भिन्नत्वेन नाप्यभिन्नत्वेन विचारयितुं शक्यते चेत्तदा विश्वस्य विचारासहत्वमेवोचितमित्याह । अस्तु तर्हीति । इदानीमिति । विज्ञानवादद्शायामित्यर्थः । काष्ठा पर्यवसानमेव । तद् वरं विचारः प्रवर्त्तितस्तेनैतत्सिद्धं यत् किमपि तत्त्वं नास्ति सर्वं वा शून्यमिति भावः । जायतामिति । अनेन विचारेण तत्त्वोपप्लवे सिद्धे विचारस्य उपप्लवो न वा । आद्ये केयमनेन तत्सिद्धिः अन्त्ये

विचार एव वस्तुसिद्धिः इति कथं तत्त्वोपप्लवो विचारस्यानुपप्लवे विचार्य आत्मा स च ज्ञानभिन्नो नित्यवि(भु)शुद्धश्चेत्याद्यपि सिद्ध-मेवेत्याह । तत्समानेति । इदानीं विचारस्यैवानारम्भणीयत्व-माह । निष्फलत्वाच्चेति ॥

---

भगी० टी० । सर्वथा ग्राह्यस्य सत्त्वासत्त्वाभ्यां भिन्नत्वाभिन्न-त्वाभ्यां निर्वक्तुमशक्यत्वेत्यर्थः । इदानीमिति । विज्ञानवादेऽस्य प्रसङ्गसङ्गतिप्रदर्शनार्थम् । तत्त्वोपप्लवो ग्राह्यस्य सत्त्वासत्त्वयोरुभयो-र्दोषदर्शनेनानध्यवसायः । तत्र काष्ठा पर्यवसानम् । शून्यतापक्षा-दत्र ज्ञानाभ्युपगम इति विशेषः । सर्वोपप्लवे सर्वमुपप्लुतमित्यय-मपि विचार उपप्लुत एवेत्येतद्विषयस्यानुपप्लुतत्वमसिद्धमित्याह । इयतीमिति । निखिलतायाम् अनुपप्लव इत्यर्थः । अथायं विचारो नोपप्लुतः, तत्राह । भावे वेति । तात्त्विकत्वे वेत्यर्थः । येन न्यायेनायं विचारस्तात्त्विकस्तेनान्यविषयकविचारोऽपि तथेत्याह । तत्समानेति । निष्फलत्वादिति । स्वसाधनस्योपप्लवे तत्साध्यं कथास्वरूपमेव न निष्पद्यतेत्यर्थः ॥

---

रघु० टी० । यदि बाह्यस्य सत्त्वेऽसत्त्वे च ग्राह्यलक्षणं नोप-पद्यते, तदा सत्त्वासत्त्वाभ्यां विचारासहत्वमेवास्त्वित्याशङ्कते । अस्तु तर्हीति । इदानीं बाह्यस्यासत्त्वमुपेत्य विचारासहत्वा-श्रयणादशायाम् । उपप्लवो दोषवत्त्वम् । अनध्यवसाय इत्यन्ये । काष्ठा

मर्यादा विश्रामस्थानम् तत्त्वोपप्लवमुखेन शून्यता वा। अलीकता-पक्षे असदेव बाह्यं गृह्यते, शून्यतापक्षे ज्ञानमपि नास्तीति विशेषः। विज्ञानवादप्रसङ्गादवान्तरवादान्तरावतारोऽयम्। निष्फलत्वं निर्दोषत्वम्। तथा च स्वयं दोषवता विचारेण नान्य-दृष्टत्वसाधनमिति भावः। अन्यस्य आत्मास्तित्वादिसाधकस्य। भवतामेतद्विचारारम्भोऽपि न युक्त इत्याह। निष्फलेति। अस्य विचारस्येति शेषः॥

---

न ह्यस्यातिप्रवृत्तिः फलम्, गगनास्वादनेनातृप्तेः, ज्वाला(अलीक)कलापालिङ्गनेन तापानपनोदनात्। नाप्यतिनिवृत्तिः, जडीभावमात्रेप्युपनिपातिदुःखा-निवृत्तेः। न च दुःखमपि विचारासहमित्यहेयमेव, तथाविधस्य विचारेप्यनधिकारात्। नापि यथालोकं व्यवस्थितिः, विचारात् प्रागपि तस्याः पामरादिवद-यत्नसिद्धेः। नापि परलोकमात्रान्निवृत्तिः, तस्यैहिक-तुल्यत्वात्। दृश्यते हि तावदयमिति चेत्, यदि ज्ञानवचनो दृशिस्तदापरोऽपि तथा। साक्षात्कार-वचनश्चेत्, इहैवानुमानादेरप्रवृत्तिप्रसङ्गः। तदपि प्रत्यक्षमिति चेत्, आमुष्मिकमपि प्रत्यक्षमेव, तथा-ऽपि किं विचारेण, तमन्तरेणापि तस्याः सुलभ-त्वात्, तामेवायं पुष्णातीति चेत् तुल्यलक्षणत्वात्। अरुचेरेव तत्र न प्रवृत्तिरिति चेत्, अविशेषादिहापि पुष्णीयादिति।

शङ्क० टी०। ननु प्रधानादेवं नियता प्रवृत्तिर्मा भूदेतदर्थं विचारारम्भ इत्याह न हीति। तथा सति गगनादावपि प्रवर्त्तेत। न च ततः सुखमिति नैतत् फलमित्यर्थः। ननु सुखार्थिनां मुमुक्षूणामनियता प्रवृत्तिः स्यादेतदर्थं विचारारम्भ इत्यत आह। ज्वालेति। भवेदेवं यदि तत्र प्रवृत्तौ दुःखोपशमः स्यान्न चैवमित्यर्थः। नन्वनेन विचारेण तत्त्वोपप्लवे ज्ञाते मुमुक्षूणां सर्वतो निवृत्तौ दुःखहानिः स्यात्, एतदर्थं विचारारम्भः इत्यत आह। नापीति। स्यादेवं यदि निवृत्तौ दुःखविरहः स्यात् न चैवमित्यर्थः। नन्वतिनिवृत्तिरेव विचारफलं, जडभूतस्यापि दुःखोपनिपातस्तथानिष्टं भवेद् यदि दुःखं हेयं स्यात्, न चैवमित्यत आह। न चेति। तथाविधस्येति। तदुक्तम्--

"हेयहीनस्य का मुक्तिः केन वाप्युपदिश्यते"

इत्यर्थः। यथा लोकव्यवस्थितिरित्यत्र विचारफलमित्यनुषज्यते। लोकतः सिद्धादन्यत्किमपि न तात्त्विकमित्येव विचारफलमित्यपि नास्तीत्यर्थः। नापीति। विचारेण तत्त्वोपप्लवे ज्ञाते स्वर्गार्थिनां नरकभीरूणाञ्च यागहिंसादौ प्रवृत्तिनिवृत्ती न स्यातामित्यर्थः। अयमिति। इहलोक इत्यर्थः। तथा च प्रवृत्तिनिवृत्ती स्याताम्मेवेति भावः। तदा परोपीति। आगमात् परलोकस्यापि ज्ञानात्। इहैवेति। साक्षात् क्रियमाणे यज्ञादौ प्रवृत्तिदर्शनादयं नियम इत्यर्थः। स्वर्गसुखं नरकदुःखं च प्रत्यक्षमेवेत्याह। आमुष्मिकेति। तुल्यलक्षणत्वादिति। सुखत्वं दुःखत्वं च प्रत्यक्षलक्षणमनयोरपि तुल्यमित्यर्थः। न हि सुखं दुःखं च साक्षात्कारा-

विषयश्चेति भावः। ननु परलोके स्वरसत इच्छैव न भवत्यतो न प्रवृत्तिरित्याह। अरुचेरिति। विचारफलं विचार्य्यते अनिच्छाधीना प्रवृत्तिर्न तत् फलमित्याह। तथापीति। तामेवेति। विचारेण परलोकोपप्लवे सुतरां तत्रारुचिरित्यर्थः। एवं तत्त्वोपप्लवे ज्ञाते चेष्टार्थेप्यरुचिः स्यादित्याह। इहापीति॥

---

भगी॰ टी॰। अस्य विचारस्य। अतिप्रवृत्तिः अनियता प्रवृत्तिः। इष्टत्यादेरुद्देश्यस्य चोपप्लवज्ञाने प्रवृत्तिर्न स्यादित्याह। गगनेति। तथाविधस्य हेयहीनस्य। तत्साध्यप्रयोजनस्य ज्ञानं विना विचारेऽप्यप्रवृत्तेरित्यर्थः। यथालोकमपरीक्षकमाधारत्वेन व्यवस्थितिः फलमित्यनुषज्यते। मात्रपदादैहिकफलसाधने प्रवृत्तिरेवेति भावः। तस्येति। तेन विचारेणैहिकफलसाधनस्याप्युपप्लवादित्यर्थः। अयम् इहलोकः। परः परलोकः। आमुष्मिकं स्वर्गादि। यद्यरुचिस्तत्त्वोपप्लवं विचारं विना तत्राह। तथापीति। ननु तत्साध्येव सेत्याह। तामेवेति। एवमिहलोकेप्यरुचिः स्यात् तस्यापि विचारेण तत्त्वोपप्लवादित्याह। इहापीति॥

---

रघु॰ टी॰। तात्त्विकीं सांवृतीं वा हितावाप्तिमहितनिवृत्तिं चोद्दिश्य प्रवृत्तिः, न च यत्र कश्चित्प्रवृत्त्या तत्सम्पत्तिरित्याह। गगनेत्यादिना। वस्तुतः फलस्यातात्त्विकत्वनिश्चये तदर्थं प्रवृत्तिरेव न सम्भवतीति द्रष्टव्यम्। अत्रौभावेति। न चाप्रवृत्तौ अमस्य कर्माशयानुत्पत्त्या चाऽनागतस्य दुःखस्यानुत्पाद इति

वाच्यम्। दुःखस्यापारमार्थिकत्वे तद्धानार्थं प्रेक्षावत्प्रवृत्त्यनुपपत्तेः, पारमार्थिकत्वे तु शून्यत्वायोगात्। तथाविधस्य हेयोपादेयज्ञानविधुरस्य पारलौकिकस्य सुखस्य दुःखस्य चापारमार्थिकत्वे तदर्थं व्रतनियमादौ न प्रवृत्तिः तद्भयाच्च न स्वच्छन्दपानभक्षणादेर्निवृत्तिरित्याशङ्क्य निराचष्टे। नापीति। अयमिति। लोक इति शेषः। इहैवेति। साधनस्य वह्न्यादेः कचित्सर्वत्र च हेयोपादेयसुखदुःखयोरानुमानिकत्वात्। तदपीति। साधनमिन्द्रियसन्निकर्षदशायाम्, सुखदुःखे चोत्पादानन्तरम्। इहापीति। विचारेणैहिकस्याप्युपप्लुतत्वात्॥

---

सोऽयं पवनतनयवार्तामुपश्रुत्य तत्स्पर्द्धया बालवानरः कियदपि दूरमुत्प्लुत्य महार्णवे पतितः प्राह, अपार एवायमकूपारो मिथ्या रामायण[1]मिति, तत् किमनेन। एवं ज्ञातुं निर्वक्तुं वा न शक्यते कीदृशं जगदित्येतावन्मात्रमपि पामरदशावन्निष्फलमेव। न च निष्फलत्वेपि श्रद्धेयमिदं, तावत्परामर्शपाटवाभावेनाप्युपपत्तेः। न हि जात्यन्धो नीलं ज्ञातुं निर्वक्तुं वा न शक्त इत्यज्ञेयानिर्वाच्यमेव तल्लोक इति।

शङ्क० टी०। विचारकुशलस्पर्द्धया विचाराकुशलस्त्वं तच्चोपप्लवं विचारविकलमादर्शयन्नुपहसनीयोऽसीति दृष्टान्तेन दर्शयति। सोयमिति। विचारस्य फलान्तरमाशङ्कते। एवमिति।

(१) रामायणी कथेति ३ पु० पा०।

तदुक्तम्—

"बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निःस्वभावमिदं जगत् ॥" इति ।

परिहरति। एतावन्मात्रम् इति। विचारं विनापि पामरसाधारणमिदं फलमित्यर्थः। महता विचारेण सिद्धत्वनिर्वचनीयत्वं विश्रम्य, तदपि मोक्षाननुकूलतया निष्फलमेवेत्याह। न चेति। अत्र हेयतायां निमित्तमाह। तावदिति। विचारं विनापि तस्यान्यथासिद्धत्वादित्यर्थः। निर्व्वक्तुं शक्तं चाशक्यमपि ज्ञेयं निर्वाह्यञ्च भवतीत्याह। न चेति ॥

---

भगी० टी०। तस्मात् सूक्ष्मदर्शिस्पर्द्धया मन्दधीस्त्वं तत्त्वं विवेचयितुमुद्यतस्तच्चाशक्त्या विचारासहमेव विश्वं ब्रूष इति निदर्शनेनोपहसति। मोघमिति। न च निर्वचनसन्देह एवानिर्वचनीयत्वम्, क्वचिदपि निर्वचनाभावे तत्कोटिकसंशयानुपपत्तेः, क्वचिदप्यनिश्चये साध्याभावे वादित्वाभावाच्चेत्याह। एवमिति। नाध्यापततो निश्चयाभावे गुरुणा तत्त्वविचारेणातत्त्वविचारेण तन्निश्चय एवानिर्वचनीयत्वम्, यावता परामर्षेण तन्निश्चयः तदभावे पुरुषाशक्त्या न वस्त्वेवानिर्वचनीयं स्यादिति सनिदर्शनमाह। चेति ॥

---

रघु० टी०। विचारकुशलस्पर्द्धया च विचारयितुं प्रवृत्तं मन्दबुद्धिं तदसामर्थ्यादिचार्यमेव विचारासहं ब्रुवाणं निदर्शने-

नोपपद्यत इति । सोऽयमिति । बाह्यस्यानिर्वाच्यत्वं निराकृत्य वक्तृनिर्वचनासामर्थ्यं निराकरोति । एवमिति । अथ वक्तृनिर्वचनासामर्थ्यं वाच्यस्य न निर्वाच्यत्वमिति चेत्, भवेदेवं यदि सर्व एव वक्तारस्तथा भवेयुः, न त्वेतदस्तीत्याह । न[1] दीत्यादिना । इदमनिर्वाच्यत्वम् । सत्त्वासत्त्वयोर्बाधादनिर्वाच्यतेति चेन्न, व्याघातेनोभयबाधासम्भवात्, सत्त्वे बाधकस्य बङ्गशो निराकार्यत्वात्, बाधकस्य चाबाध्यत्वे तस्यैव तात्त्विकत्वात्, बाध्यत्वे च तेनेतरबाधायोगात् ॥

---

अस्तु तर्हि शून्यतैव परमं निर्वाणमिति चेन्न, सा हि यद्यसिद्धा, कथं तदवशेषमपि विश्वमभिधीयते, वाङ्मात्रस्य सर्वत्र सुलभत्वात् । परतश्चेत् सिद्धा, परोऽप्यभ्युपगन्तव्यो ग्राह्यलक्षणं चावर्जनीयमिति । स च परो यदि संवृतिरेव, विश्वशून्यतयोर्न कश्चिद्विशेषः, कथं तदप्यवशिष्येत । असंवृतिरूपश्चेत् परः, परत एव तस्य सिद्धावनवस्था । स्वयमसिद्धश्चेत्, कथं शून्यत्वमपि साधयेत् । स्वतः सिद्धश्चेत्, आयातोऽसि मार्गेण ।

शङ्क० टी० । माध्यमिकमतं द्वितीयं पक्षमाह । अस्तु तर्हीति । परमं निर्वाणं ज्ञानस्यापि लोपात् । यथा दीपस्य निर्व्वाणतो महान्धकार इति भावः ।

(१) न चेत्यादिना इति ३ पु० पा० ।

बाह्यज्ञानयोरभावे न कुतोपि भीतिरिति परमा निर्वृत्ति-रित्यर्थ इत्यन्ये ।

शून्यतायां यदि प्रमाणमस्ति तदा न शून्यता । यदि च न प्रमाणं तदा पूर्णतया किमपराद्धमित्याह । मा भैति । परत इति । प्रमाणादित्यर्थः । भिन्नाया एव शून्यताया ग्रहणे विरुद्धस्य ग्राह्यलक्षणमित्यर्थः । ननु न प्रमाणं परशब्देनोच्यते किं तु सम्वृति-स्तथा च न ग्राह्यलक्षणं न वा शून्यताभङ्ग इत्याह । स चेति । सम्वृत्या विश्वस्यापि विषयीकरणादित्यर्थः । कथमिति । शून्यता-वादिनः सम्वृतेरभ्युपगमे शून्यताव्यतिरेकेत्यर्थः । असम्वृतीति । प्रमाणान्तरापेक्षायामनवस्थेत्यर्थः । स्वयमिति । अनवस्थाभयेन प्रमाणेन प्रमाणान्तराननुसरणे मूलपर्यन्तमसिद्धेरित्यर्थः । स्वत इति । स्वप्रकाशत्वादेव शून्यतासिद्धौ नानवस्थेत्यर्थः । अथ तटस्थो वेदान्ती स्वमतपर्य्यवसानमालोच्याह । आयातोसीति ॥

---

भगी० टी० । माध्यमिकमतमाह । अस्त्विति । तथा च बाह्यज्ञानयोरभावे न कुतोपि भीतिरिति परमा निर्वृतिरित्यर्थः । सर्वशून्यतापक्षे शून्यताग्राहकमानस्यापि शून्यत्वान्न तत्सिद्धिः, मानं विनापि तत्सिद्धावविशेषेण पूर्णतैव किं न स्यादित्याह । मा भैति । अथ तद्ग्राहकमशून्यम्, न तर्हि सर्वशून्यता, तस्मानजन्या बुद्धिर्ग्राहिका ग्राह्या च शून्यतेति, तद्वत् परमार्थसत्यपि विश्वस्मिन् विषयविषयिभावः स्यादित्याह । परतश्चेदिति । सम्वृतिः बुद्धिः । तथा च तद्वदन्यत्रापि विषयविषयिभावः स्यादित्याह । विश्वेति ।

असम्वृत्तिरूपस्य यदि सिद्धिः परतः, तदा तत्सिद्धिरपि परत एवेत्यनवस्थेत्याह। असम्वृत्तीति। ननु बुद्धिरूपः परः, स च प्रकाश इति नानवस्थेत्याह। स्वत इति। अत्र तटस्थो वेदान्त्याह। आयातोऽसीति। मार्गेण, वेदान्तिनां स्वप्रकाशब्रह्माद्वैतपक्षस्य निर्दोषत्वादित्यर्थः॥

---

रघु० टी०। सर्वशून्यतावादी माध्यमिकः प्रत्यवतिष्ठते। अस्तु तर्हीति। हेयोपादेयतत्साधनविरहे द्वेषभयरागादिविरहात् परमा निर्वृतिः। तमेनं वेदान्तिनयेन निराकुरुते। सा हीति। असिद्धत्वाविशेषादिश्वमेव किं न स्यात्। परोपीति। परः प्रमाणान्तरम्। तथाच क सर्वशून्यत्वम्। अवर्जनीयमिति। शून्यताप्रमाणयोर्विषयविषयिभावाङ्गीकारेणेत्यर्थः। सम्वृतिर्विकल्पः। कथं तदपि शून्यत्वमपि कथमवशिष्यते। विश्वस्य सम्वृतिसिद्धत्वात्। असंवृतिरूपोऽनुभवरूपः। कथमिति। असिद्धेनैव शून्यतासाधने वा विश्वमेव किं न साधयेत्। मार्गेण औपनिषदेन॥

---

तथाहि। स्वतः सिद्धतया तदनुभवरूपम्, शून्यत्वादेव च न तस्य कालावच्छेद इति नित्यम्, अत एव च न देशावच्छेद इति व्यापकम्, अत एव तन्निर्धर्मकमिति विचारास्पृष्टम्, तस्य धर्मधर्मिभावमुपादाय प्रवृत्तेः, अत एव विशेषाभाव इत्यद्वैतम्, प्रपञ्चस्यापारमार्थिकत्वाच्च, निष्प्रतियोगिकमिति विधि-

रूपम्, अविचारितप्रपञ्चापेक्षया तु शून्यमिति व्यवहारः। तथापि प्रपञ्चशून्यस्यानुभवमात्रस्य प्रपञ्चेन सह कः सम्बन्धः, न च नायं प्रकाशत इति चेत्, वस्तुगत्या न कश्चित्, संवृत्त्या तु गगनगन्धर्वनगरयोराधाराधेयभाव इव विषयविषयिभावः, स च यथा नैयायिकैः समर्थयिष्यते तथैव, वेद्यनिष्ठस्त्वसावस्मिन् दर्शन इति विशेषः। अविद्यैव हि तथा तथा विवर्त्तते यथा यथाऽनुभाव्यतया[1] व्यवह्रियते। तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमवतरति गगनमिव स्वप्नदृष्टघटकटाहकोटरकुटीकोटिभिः। तदास्तां तावत्, किमार्द्रकवणिजो वहित्रचिन्तया।

शङ्क० टी०। वेदान्ती स्वमतमुपस्करोति। तथाहीति। अनुभवरूपं स्वप्रकाशज्ञानात्मकम्। शून्यत्वादिति। प्रपञ्चस्य मिथ्यात्वादित्यर्थः। नित्यं विज्ञानमानन्दं ब्रह्मेति श्रौतं नित्यत्वं कालस्य कालोपाधीनाञ्चासत्त्वादेव न तदवच्छेद एतावतैवोपचरितमित्यर्थः। अत एवेति। शून्यत्वादेव देशाभावादित्यर्थः। तस्येति। विचारस्येत्यर्थः। विशेषाभावो वैधर्म्याभावस्तदभावाश्चान्योन्याभावाभाव इति द्वैताभाव इत्यर्थः। स च ब्रह्मात्मक एवेति भावः। ननु प्रपञ्चभिन्नत्वात्तन्निषेधरूपमेव तत्त्व कथमत

(१) ऽनुभवनीयतया इति ३ पु० पा०।

आह। प्रपञ्चस्येति। ब्रह्मभिन्नत्वं यदि परमार्थसद्भवेत् तदा तत्प्रतियोगिकनिषेधरूपता स्यात् न त्वेवमित्यर्थः। तर्हि सति स्वप्रकाशज्ञाने शून्यत्वाभिधानं कथमित्यत आह। अविचारितेति। ज्ञानभिन्नं किमपि नास्तीत्येव शून्यतेत्यर्थः। तथापीति। विषयविषयिभावस्य त्वयाऽनभ्युपगमादिति भावः। वस्तुगत्येति। तस्यापि प्रपञ्चान्तर्गतत्वादित्यर्थः। व्यवहारं समर्थयति। सम्वृत्येति। ननु विषयविषयिभावः क इत्यत आह। स चेति। वेद्यनिष्ठ इति। तेन प्रपञ्चेन सहैव निवर्त्तत इत्यर्थः। न च नैयायिकानामिव ज्ञाननिष्ठः ज्ञानस्यापारमार्थिकप्रपञ्चेन सम्बन्धाभावादिति भावः। अस्मिन् दर्शने वेदान्तदर्शने। नन्वेवं घटपटादीनां घटज्ञानपटज्ञानादीनां च कथं भेदाभिमान इत्यत आह। अविद्येव चीति। अनाद्यविद्यावशात्तथाऽनुभव इत्यर्थः। एक एवानुभवो ब्रह्मात्मकः कथमविद्यावशादपि भेदेन भासतामित्यनुपपत्तिं दृष्टान्तेन निरस्यति। गगनमिवेति। तदास्तामिति। इदानीं योगाचारमतनिरासाय प्रवृत्तोऽहं वेदान्तिमतमग्रे निराकरिष्यामीत्यर्थः। वेदान्तिमतस्य सुनिरसत्वमुपहासेन दर्शयति। किमिति। वह्निचस्य चिरमाध्यत्वमार्द्रकस्यापि च निवर्त्तनीयत्वं यथा तथा योगाचारमतस्य दुर्निरसत्वमस्य तु सुनिरसत्वमित्यर्थः॥

---

भगी॰ टी॰। तेषामेव मतं प्रपञ्चयति। तथाहीति। स्वप्रकाशतया तज्ज्ञानरूपमित्यर्थः। एवं श्रौतं नित्यत्वादिव्यपदेशं

समर्थयति । शून्यत्वादेवेति । कालावच्छेदकानामुपाधीनामभावादेव ब्रह्मणि न कालावच्छेद इति नित्यत्वमुक्तं श्रुतौ वस्तुतो न तत्र धर्म्मः कश्चिदित्यर्थः । अतएव देशस्य शून्यत्वादेव विशेषाभावः भेदरूपधर्म्माभाव इत्यर्थः । प्रपञ्चो ज्ञानभिन्नो घटादिः । अविचारितेति । सत्त्वासत्त्वाभ्यामनिर्वचनीयघटाद्यपेक्षयेत्यर्थः । ननु प्रपञ्चः प्रकाशत इत्यनुभवसिद्धम्, तस्य ज्ञानान्तरप्रकाश्यत्वे द्वैतापत्त्या ब्रह्मप्रकाश्यतायां ब्रह्मवत् प्रपञ्चोपि वास्तवः स्यात्, ब्रह्मणश्च प्रमाणत्वाद्ब्राह्मलक्षणं चावर्जनीयमित्याह । तथापीति । ब्रह्मणः स्वात्मनि धर्म्मिणि प्रमाणत्वेपि बाधकात् प्रपञ्चांशे भ्रमत्वमेवेत्याह । वस्तुगत्येति । सम्बृत्या त्विति । यथा तयोराधाराधेयभावो न तात्त्विकस्तथाऽस्माकं सम्बृत्या विषयविषयिभावोपीत्यर्थः । वेद्यनिष्ठ इति । अस्मिन् वेदान्तनये । स विषयविषयिभावः । वेद्यनिष्ठः, न तु नैयायिकानामिव ज्ञानात्मकब्रह्मणा पारमार्थिकेनापारमार्थिकप्रपञ्चस्य सम्बन्धाभावादित्यर्थः । अविद्यैवेति । ज्ञानासम्बन्धेपि प्रपञ्चस्य प्रपञ्चसम्बन्धिताव्यवहारो न सत्यः, किन्त्वविद्यानिबन्धन इत्यर्थः । ननु घटज्ञानपटज्ञानयोर्भेदव्यवहारो न स्यात्, ब्रह्मणो निरूपकस्याभेदादित्यत आह । तत्तदिति । अविद्यात एकमपि तत्तद्विषयोपधानेन भिन्नमिव भासत इत्यर्थः । तदयं वेदान्तिपक्षो नेदानीं दूष्यते, अप्रसक्तत्वात्, ज्ञानभिन्नं ग्राह्यमलीकमित्यभ्युपगमाच्च, योगाचारमतनिरासस्यैव प्रकृतत्वादित्याह । तदास्तामिति ॥

रघु० टी०। औपचारिकं नित्यत्वादिव्यवहारं समर्थयति। शून्यत्वादेवेत्यादिना। शून्यत्वात् द्वितीयविरहात्। ननु बाह्योपि तावत्प्रपञ्चः प्रकाशते, प्रकाशश्चास्य यदि ज्ञानान्तरं? तदा द्वैतापत्तिरथ ब्रह्मैव, तदा यथार्थानुभवस्य ब्रह्मणो विषयत्वात् प्रपञ्चस्य पारमार्थिकत्वप्रसङ्ग इत्याशयेन पृच्छति। तथापीति। वस्तुतः प्रपञ्चः प्रकाशत इत्येव न, आविद्यकस्तु तथा व्यवहार इति परिहरति। वस्तुगत्येति। संवृत्त्या अविद्यया। वेद्यनिष्ठ इति। आविद्यकस्य आविद्यकप्रपञ्चसम्बन्धस्य च तस्य परमार्थसति ब्रह्मण्यसम्भवादिति भावः। घटपटाद्यनुभवभेदव्यवहारं समर्थयति। तत्तदिति। एवं च प्रपञ्चवत्तस्याऽऽविद्यकप्रकाशान्तरस्वीकारेपि न क्षतिरित्यपि मन्तव्यम्। अथ निरस्यन्तु शून्यतामौपनिषदा द्वैतवादिनस्तु कथम्। तथैव। तथाहि, असिद्धैव चेच्छून्यतोपेयते किमपराद्धं व्यवहारसिद्धया पूर्णतया। अनुभवबलादिति चेत्, तदिदं विपरीतम्। न खलु स्वप्नेपि शून्यता स्वारसिकस्य कस्याप्यनुभवस्य गोचरोऽपि तु पूर्णतैव, अनुभवोपगमे च क्व नाम शून्यता। प्रपञ्चे बाधकादिति चेत्, न, प्रागेव दत्तोत्तरत्वात्। अपि च किमिदं शून्यत्वं नाम?। अभाव इति चेन्न, अविरोधात्। सार्वदिकोऽभाव इति चेत्, तथाप्यविरोध एव, कश्चित् कस्यचिदभावोपगमात्। सार्वत्रिक इति चेत्, तथापि तथैव, एकेन सम्बन्धेन सतोऽपि सम्बन्धान्तरेणासत्त्वोपगमात्। सर्वेण सम्बन्धेनेति चेत्, कस्याभाव इति वक्तव्यम्। सर्वेषामिति चेत्, सर्वकालदेशसम्बन्धप्रतियोगिनामुपगमेपि शून्यतैवेति महदाश्चर्यम्॥

---

तस्मादनुभवव्यवस्थितौ अनात्मापि स्फुरतीत्यवर्जनीयमेतत्। तत्सिद्धौ तल्लक्षणमपि किञ्चिदस्त्येव। तच्च बाह्याविरोधे ज्ञानानित्यतायां तन्निष्ठमुभयनिष्ठं वा, बाह्यविरोधे ज्ञाननिष्ठमेव, तन्नित्यतायां तु ग्राह्यनिष्ठमेवेति। तथाहि, लक्ष्यस्तावदत्र विषयविषयिभावः। स च प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेषः। स्वभावत्वादेव च नोपकारान्तरमपेक्षते, तन्मात्रीयत्वादेव च नान्यदीयः।

शङ्क० टी०। तस्मादिति। बाह्यस्यालीकत्वेपि तदनुभवस्तावदस्ति, तथा चानात्मा स्फुरतीति त्वया स्वीकर्त्तव्यमिति प्रकाशमानत्वादीनां हेतूनामनैकान्तिकत्वादिति भावः। तत्सिद्धाविति। अनात्मस्फुरणसिद्धावित्यर्थः। तल्लक्षणं ग्राह्यलक्षणम्। बाह्याविरोधे बाह्यपारमार्थिकत्वे। तन्निष्ठमिति। ज्ञाननिष्ठमित्यर्थः। उभयनिष्ठमिति। ज्ञानज्ञेयनिष्ठमित्यर्थः। एतच्च साकारविज्ञानमते। ज्ञाननित्यतायामिति। वेदान्तिपक्षे ग्राह्यनिष्ठमेव। अन्यथा घटं जानामीति सर्वदाऽनुव्यवसायप्रसङ्गात्। इदानीं स्वमतेन विषयविषयिभावमुपपादयति। तथाहीति। प्रकाशस्येति वदता ज्ञायतेऽनेनेति वा ज्ञानं जानातीति वा ज्ञानं ज्ञप्तिर्वा ज्ञानमित्यादि ज्ञानश्रिया ज्ञानपदे कृतं विकल्पजातं निरस्तम्। सत इत्यनेन शून्यतानिरासः। तदीयतेति। घटज्ञानं पटज्ञानमित्यत्र षष्ठ्यर्थोऽनुभूयमान उपपादितः, मात्रपदेन घटज्ञानस्य पटविषयताप्रसङ्गो निरस्तः, स्वभावपदेन चोपकाराद्यधीनत्वं

विषयित्वस्य निरासम् । विशेषपदेन च ज्ञानाभावज्ञानसमवाययोः स्वरूपसम्बन्धेपि विषयत्वं निरस्तम् । नन्वेतावता ज्ञानविषययोः स्वरूपं विषयविषयिभाव इत्युक्तं भवति, तच्चातिप्रसक्तं, चैत्रः किञ्चित् जानात्ययञ्च घट इति स्वरूपद्वयज्ञानेपि तद्विषयताया अज्ञानादतिरिक्तैव सा वाच्या, स्वरूपं च प्रतिस्वमशमित्यननुगमः । मैवम् । स्वरूपद्वयज्ञानेपि तद्रूपश्लिष्टतायाः अज्ञानात् । अन्यथा विषयतामादायाप्यप्रतीकारात्, भवति हि चैत्रो जानाति कञ्चि-दस्य ज्ञानस्य विषयतेति जानतोयं घटं जानाति न वेति सन्देहः, विषयतयापि ज्ञानस्य स्वरूपसम्बन्धस्यैवाभ्युपगमात् । अन्यथाति-प्रसङ्गात् । अननुगमस्तु न प्रकृते दोषः । अनुगतं तु तन्निरूपणा-योग्यत्वं तद्विषयत्वमिति । तन्मात्रीयत्वादवेति । तन्निरूपणा-धीननिरूपणत्वादित्यर्थः । एतादृशी च सविषयतेच्छाकृत्योरपि, परं तु न सा स्वाभाविकी, किं तु ज्ञानौपाधिकी, ज्ञानस्य तु स्वाभाविकीति विशेषः । अत एव विषयप्रवणत्वं ज्ञानस्यैव, न तु तयोः, लक्षणमपि तदेव ज्ञानस्य । यदिच्छाधिकरण-क्षणाव्यवहितपूर्व्वक्षणस्थितिकसमानाधिकरणज्ञानस्यैवेच्छाया विषय-प्रतिनियमप्रयोजकत्वादेवश्चेश्वरेच्छाया अपि स्वविषयतायां नित्यज्ञानस्यैव नियामकत्वमिति भावः ॥

---

भगी॰ टी॰ । तस्मादिति । अनुभवबलाज्ज्ञानभिन्नमेव तत्र भासत इत्यभ्युपगमे ग्राह्यग्राहकयोरभेदसाधनान्यनैकान्तिका-नीत्यर्थः । तच्चेति । बाह्यं पारमार्थिकं ज्ञानमनित्यमिति

नैयायिकपक्षे ज्ञाननिष्ठमेव तद्विषयत्वं वाच्यम्, ज्ञाननित्यत्वे तु तस्य ज्ञाननिष्ठत्वाज्ज्ञानामीत्यनुव्यवसायः सदैव स्यादित्यर्थः। साकारविज्ञानवादिमतम्, उभयेति। ज्ञानमर्थश्चेत्युभयम्। योगाचारमतं बाह्येति। बाह्यालीकत्वे पारमार्थिकज्ञाननिष्ठमेव तदित्यर्थः। साङ्ख्यमतम्, तस्मित्यतायामिति। अचोक्तैव युक्तिः। स्वमते ज्ञाननिष्ठस्य विषयविषयिभावस्य लक्षणमाह। स चेति।

ननु कोऽयं स्वभावः। स्वस्य भावो धर्म्मो वा स्वभावः स्व एव वा भावः। नाद्यः, ज्ञानस्य धर्म्मो घटत्वादीत्यभ्युपगमे साकारमतप्रवेशापत्तेः। नान्त्यः, विषयस्यापि ज्ञानात्मनि प्रवेशे विज्ञानवादिमतापत्तेः, स्वरूपमात्रस्यातिप्रसञ्जकत्वात्। स्वरूप-विशेषस्य चाव्यापकत्वात्। किञ्च तदीयेति कप्रत्ययस्य तस्येद-मित्यर्थेऽनुशासनात् विषयसम्बन्धित्वमर्थः प्रतीयते, तद्यदि ज्ञान-निष्ठम्, तदा घटो ज्ञानविषय इति सामानाधिकरण्यधीर्न स्यात्। अथ विषयनिष्ठमेव, तदा ज्ञानाग्रहेपि तद्ग्रहप्रसङ्गात्। अपि च ज्ञानेन तत्प्रागभावसमवाययोरपि स्वरूपसम्बन्धात्तयोरपि विषयत्वापत्तिः, घटपटोभयविषयकसमूहालम्बने घटत्वेन घटो विषयो न पटत्वेनेति पटत्वप्रकारकविषयतायां घटत्वप्रकारक विषयतया समं भेदग्रहादेकमेव ज्ञानं स्वतो भिद्येत, किञ्चैवं वस्तुतो घटविषयकज्ञानवत्येव किञ्चिदयं जानातीति ज्ञाने घटे च ज्ञाते घटविषयकज्ञानवानयं न वेति संशयो न स्यात्, ज्ञान-घटस्वरूपयोर्निश्चयात्, अतो विषयताख्यं धर्मान्तरमेव ज्ञान-विशेषणतारूपं स्वीकार्यम्। अथ ज्ञानजन्यव्यवहारविषयत्वम्,

न चात्माश्रयः, विषयत्वस्य सामान्यतः सिद्धेः, अन्यथाऽऽश्रयासिद्धे-र्लक्षणस्येति चेन्न। उपेक्षाज्ञानाव्याप्तेः, तेन व्यवहाराजननात्, तद्योग्यतायास्तदवच्छेदकरूपापरिचयेऽज्ञानात्, तत्परिचये वा तस्यैव लक्षणतापत्तेः।

अत्राहुः। ज्ञानस्वरूपमेव विषयत्वम्, न चातिप्रसङ्गः, एक-ज्ञानस्वरूपस्य तदितरज्ञानानात्मकत्वात्। विशिष्य तु घटज्ञान-घटयोस्तत्स्वरूपमेव तद्विषयत्वम्। तत्तद्घटज्ञानानां प्रतिस्वं भेदेऽपि घटत्वेनैवानुगतधीर्दण्डत्वेनेव दण्डिनाम्।

यद्वा ज्ञानस्वरूपत्वेऽपि विषयतायामनुगमो ज्ञानत्वौपाधिक एव, ज्ञानमात्रस्यैव सविषयकत्वात्, कप्रत्ययार्थस्तु सम्बन्धस्तच्च विशिष्टबुद्ध्यादिजनकत्वमेव, सम्बन्धान्तराभावे तस्यैव सम्बन्ध-रूपत्वात्, रूपस्य समवाय इतिवत् समवायस्यैकत्वात्। न च समूहालम्बनेऽनुपपत्तिः, समवायवदवच्छेदभेदेनैव तदुपपत्तेः। नापि संशयानुपपत्तिः, ज्ञानघटस्वरूपयोरपि सम्बन्धान्तरं विना तद्विशिष्टधीजनकत्वस्य तदीयत्वस्याग्रहात्। अनुव्यवसायोऽपि स्व-योग्यासाधारणधर्माग्रहस्य प्रतिबन्धकत्वाच्च। अन्यथाऽतिरिक्त-विषयतापक्षेऽपि तत्प्रतीतिसम्भवेनाप्रतीकारात्।

यद्वा ज्ञानवृत्तितदनुव्यवसायकारणतावच्छेदकत्वमेव ज्ञान-विषयत्वम्। न च तदनुव्यवसायस्य तद्विषयकव्यवसायरूपतया-मात्माश्रयः, सामान्यतो विषयत्वस्य ज्ञानत्वादिव्यापकत्वात्।

यद्वा ज्ञानजन्येच्छागोचरत्वयोग्यता तद्विषयता। योग्यता-वच्छेदकं च तत्तत्स्वरूपमेवेति नोपेक्षाज्ञानाव्याप्तिः। प्रकाशस्येति

त्विच्छादिव्यावर्त्तनार्थम् । जनकज्ञानविषयौपाधिकत्वेनैव सविषयकत्वव्यवहारोपपत्तेः ।

ननु किमत्र नियामकम्, वैपरीत्यस्यापि सुवचत्वात् । अथ सर्वं न सविषयकम्, किन्तु किञ्चिदेवेत्यत्र नियामकं नात्मधर्मत्वम्, अदृष्टेऽतिव्याप्तेः, तदज्ञानेपि तथाव्यवहाराच्च, किन्तु ज्ञानत्वम्, इच्छादौ तदौपाधिकम्, न तु वैपरीत्यम्, ज्ञाने तदसम्भवात्, उपाधित्वेनाभिमतानामिच्छादीनामव्येतनत्वात्, तेषां विषयप्रतिनियमे ज्ञानविषयत्वस्यैव नियामकत्वाच्च, उपेक्षाज्ञाने तदसम्भवाच्च, अत एव ज्ञानत्वनिबन्धन एव विषयतानुगम इति न तदर्थमतिरिक्तविषयताऽभ्युपगम्यते । मैवम् । किं ज्ञानविषयतैव तज्जन्येच्छाविषयता, किं वा तद्विषयकज्ञानजन्यत्वमेवेच्छायास्तद्विषयत्वम् । नाद्यः, ज्ञाननाशे सति इच्छाया निर्विषयतापत्तेः । नान्त्यः, ज्ञानानवगमेप्यवगम्यमानत्वात्, जनकज्ञानस्यानियतविषयत्वेपीच्छाया नियतविषयत्वाच्च ।

अत्राहुः । यथा घटादिना स्वसम्बन्धे समवायस्याभेदेनैव सम्बन्धरूपत्वम्, रूपादिसम्बन्धे तु तत्त्वेन, तथा ज्ञानस्यापि घटादिना स्वसम्बन्धे स्वसम्बन्धरूपत्वमभेदेन, इच्छादिसम्बन्धरूपत्वञ्च भेदेन । नन्वयं पौर्वापर्यसम्बन्धोऽनुगतधर्मगर्भो न च घटेच्छात्वादिकं जातिरस्ति, घटगोचरेच्छात्वादिनैव तत्त्वेऽन्योन्याश्रय इति चेन्न, न हीच्छाकारणत्वमेव ज्ञानस्येच्छासम्बन्धरूपत्वम्, किन्तु ज्ञानस्वरूपमेव तथा, नियामको हि जन्यजनकभावः संस्कारवत् । न चैवं जनकज्ञानोपगमे सत्यपि प्रयत्नो

निर्विषयः स्यात्, तथा च प्रवृत्त्यनियमः स्यादिति वाच्यम् । तथापि तं करोमि न तु वेद्मीति कदाचिज्ज्ञानोपगमात्, ज्ञानान्तरं तत्रोत्पद्यत इति तु तुल्यम् । तथापि प्रयत्नजनक ज्ञानं नास्ति, तच्च सम्बन्धरूपमिति चेत्, न, तद्विषयत्वेन तस्य कारणता, तद्विषयज्ञानमात्रस्यैव सम्बन्धलरूपत्वात् । न चैवमीश्व रेच्छादिकमविषयं स्यात्, जनकज्ञानाभावादिति वाच्यम् । यद्विषयकस्य ज्ञानस्य यद्विषयकेच्छाधिकरणक्षणाव्यवहितपूर्वक्षणे नियमेन यत्सत्त्वम्, तज्ज्ञानौपाधिकमिच्छायास्तद्विषयत्वमित्यस्ये-श्वरेच्छासाधारणस्य नियामकत्वादिति सङ्क्षेपः ।

ननु तदीयतानियामकं तेनोपकृतत्वं तस्मिन्नुपकारजनकत्वं वा तत्र नास्तीत्यत आह । स्वभावादेवेति । उपकाराधानेपि स्वभाव एव नियामक इति भावः ॥

---

रघु० टी० । तस्मादिति । अनुभवो हि कश्चिदिदं नील मिति, कश्चिच्चेमे नीलपीते मिथोभिन्ने इति, न चेयं व्यवस्था ज्ञानाकारेणोपपादयितुं शक्यते इति मतोऽमतो वा ज्ञानभिन्नस्य भानमावश्यकमित्यर्थः । तत्सिद्धौ बाह्यग्राह्यत्वसिद्धौ । तस्यत्वगं ग्राह्यत्वनियामकम् । तच्च व्यवहारविशेषनिमित्तं ज्ञानार्थयो र्विषयविषयिभावरूपं, बाह्याविरोधि बाह्यस्य पारमार्थिकत्वे, तन्निष्ठं ज्ञाननिष्ठम् । उभयनिष्ठं सामर्थ्यमित्युभयम् । आश्रमलीकं ज्ञानं चानित्यमितियोगाचारमते प्राह । बाह्येति । ज्ञानं नित्यं प्रपञ्चस्तु अतात्त्विक इति वेदान्तिमते त्वाह । तन्नित्यतायामिति । निमित्तमुक्तं प्राक् ।

केचित्तु घटादिव्यवहारप्रयोजकस्य तद्विषयत्वस्य नित्यज्ञाननिष्ठत्वे सर्वदा तद्व्यवहारापत्तिः, नित्यज्ञानस्वरूपानतिरिक्तस्य च तस्य सामग्रीविशेषजन्यताया वक्तुमशक्यत्वात्। एवं घटविषयत्वेनानुव्यवसायदशायां पटविषयत्वेनापि तदापत्तिरित्याहुः। तच्चिन्त्यम्।

प्रकाशस्येत्यादि। तदीयता तत्सम्बन्धित्वम्। स्वभावः स्वरूपम्। तथा च ज्ञानस्वरूपमेव ज्ञानस्यार्थेन सम्बन्धः, सम्बन्धसम्बन्धिनोस्त्वभेदो न दोषाय. सर्वच स्वरूपसम्बन्धे तथैव कल्पनात्। सामान्यतस्तु विषयता ज्ञानस्वरूपम्, घटादिविषयता तु सम्बन्धिना घटादिना अनुगता, ज्ञानविशेषा एव संयोगविशेषा इव घटादीनां सम्बन्धाः, व्यवहारनिमित्तं च ज्ञाननिष्ठमर्थसम्बन्धित्वम्, नार्थनिष्ठं ज्ञानसम्बन्धित्वम्, अतीतानागतज्ञानव्यवहारानुरोधादिति वदन्ति।

दण्डपुरुषसंयोगाः ज्ञानघटविषयता इतिवच्च ज्ञानघटाविति समूहालम्बनेपि न विशिष्टव्यवहारादिः ज्ञानविशेषस्यैव तत्र तन्त्रत्वादिति।

अत्र वदन्ति। यदि ज्ञानस्वरूपमेव विषयता, तदा घटपटाविति समूहालम्बनस्य पटत्वघटत्वावच्छिन्नघटपटीयस्वात्मकविषयताशालित्वाद्भ्रमत्वापत्तिः। अथ यथा समवायोऽनवच्छिन्न एव सत्ताया, रूपसंयोगाद्यवच्छिन्नस्तु रूपसंयोगादेः सम्बन्धस्तथा निर्विकल्पकं ज्ञानमनवच्छिन्नमेव, सविकल्पकं तु तत्तत्प्रकारावच्छिन्नं विषयता, समूहालम्बने घटपटत्वाद्यवच्छिन्नं ज्ञानं घटादेर्भ्रमे तु घटत्वाद्यवच्छिन्नं पटादेरित्यदोष इति चेत्, तर्हि

घटज्ञानं ज्ञातो घट इत्येव स्यात्, न तु घटत्वेन घटज्ञानं घटत्वेन घटो ज्ञात इति, घटत्वस्य सम्बन्धकोटौ प्रवेशात्, न हि भवति नीलत्वेन नीलो घटो नीलत्वेन घटनीलिमेति,(१) तदवच्छिन्नत्वं च यदि धर्मान्तरं, तदा भावान्तरेणातिरिक्त-विषयतास्वीकारः, अथ तदुभयमेव, तदाऽतीतानागतविशेषणके-ऽप्रतीकारः । अपि च यदि विज्ञानं स्वरूपेण घटादिभिः सम्बद्धमिति तेषु व्यवहारमाधत्ते, तदा स्वात्मनि स्वाभावे स्वकालादावप्यादध्यात्तैरपि समं तस्य स्वरूपेण सम्बद्धत्वात् । किं च यदि विषयता तत्त्वं वा नातिरिच्यते, तदा कथं तद्विषय-केच्छादिसामान्ये तद्विषयकज्ञानानां कारणत्वमननुगतत्वात्, सम्बन्धत्वेन चानुगमेऽतद्विषयके तत्सम्बन्धान्तरशालिनि ज्ञाने-ऽतिप्रसङ्गः, तस्मादतिरिक्तैव विषयता, तद्विशेषास्तु प्रकारत्वादयः, एवं विषयतात्वादिकमपि । एतेन प्रतियोगित्वाधिकरणत्वादयो व्याख्याताः । सप्तपदार्थीप्रवादस्तु वैशेषिकप्रसिद्धिमनुरुध्यैव । अथैवं सम्बन्धानन्त्येऽनवस्था स्यात्, स्यादेव, यदि कश्चिदपि स्वरूप-सम्बन्धेन न प्रतीकारः, अन्यथाऽनुपपत्तेर्दुर्वारत्वात्, सा च ज्ञान-निष्ठा ज्ञानस्य च नियतकार्यजनकतावच्छेदकतया कल्पनीया, तत्प्रतियोगितया चार्थे विषयव्यवहारः ।

परे तु विषयत्वविषयित्वे भिन्ने एवार्थज्ञानयोः प्रतियोगि-त्वानुयोगित्वे इव भावाभावयोरित्याहुः ।

(१) नीलमिति २ पु० पा० ।

यत्तु तद्गोचरव्यवहारजनकत्वमेव तद्विषयत्वमिति, तच्चास्तां व्यवहारस्य तद्गोचरत्वविचारः, किञ्चिदेव विज्ञानं क्वचिदेव व्यवहारमाधत्ते नान्यत्रेत्यत्र नियामकं वक्तव्यम्, जनकत्वं च न फलोपधानम्, सर्वत्र तदभावात्। नापि योग्यता, अवच्छेदकानिर्वचनात्। इत्थं च स्वभावेति स्वीयभावार्थकं, प्रकाशस्येति इच्छादिनिरासायेत्युत्तरग्रन्थानुरोधेन वर्णयन्ति।

वस्तुत इच्छादयोऽपि सविषयका एव। तेषां जनकज्ञानोपाधिकं सविषयत्वमिति चेत्, जनकज्ञानविषयत्वं जनकं ज्ञानं वा न तद्विषयत्वम्, अतिप्रसङ्गात्, ईश्वरेच्छादावभावाच्च। अथ यद्विषयत्वेन ज्ञानस्येच्छाजनकत्वम् तद्विषयकं ज्ञानमेव तद्विषयत्वमिति चेत्, न तर्हीश्वरेच्छादिकं सर्वविषयं स्यात्, सर्वविषयत्वेनेच्छाद्यनुत्पादकत्वात्। स्याच्च सुखादीच्छाया अपि दुःखाभावादिविषयत्वम्। अथ यद्विषयकज्ञानस्य यद्विषयकसमानाधिकरणेच्छादिसमयाव्यवहितपूर्वसमये तादृशेच्छादिसमये वा नियमतः सत्त्वं तद्विषयकं ज्ञानमेव तथा। सुवचश्च महाप्रलयाव्यवहितपूर्वक्षण एवेश्वरेच्छाधिकरणसमयाव्यवहितपूर्वः समय इति चेत्, तर्हि पाकादीच्छाया इष्टसाधनतादिविषयतापि स्यात्, न स्याच्च कृतेः पाकादिविषयत्वं, तदव्यवहितपूर्वक्षणे पाकादिज्ञानान्तरे मानाभावात्। स्याच्चेच्छायाः कृत्युत्पादसमये निर्विषयत्वम्, इच्छानन्तरं तादृशं ज्ञानं तदनन्तरं कृतिः, तदनन्तरं तादृशं ज्ञानान्तरं किं वा युगपद्योग्यात्मगुणद्वयोत्पादमुपेत्येच्छाकृत्युत्पादसमये नियमतस्तादृशं ज्ञानान्तरं कल्पनीयमिति चेत्, तर्हि लाघवात् संस्कारे गत्यन्तराभावाच्च

तेषां स्वतः सविषयत्वस्यैव कल्पयितुमुचितत्वात्, बाधकाभावात्। एतेन किमस्माकमनुगतरूपविवेचनेन, किञ्चित् ज्ञानं काचिद्वा तद्विषयता कस्यचिदिच्छादेर्विषयत्वमिति परास्तमिति हतं पल्लवितेन।

---

किमस्य फलमिति प्रश्नप्रसङ्गेऽपि बहिस्तद्गोचरव्यवहारप्रवृत्तिरान्तरमपि तेन ज्ञाननिरूपणम्। कुतोऽयमीदृगित्यनुयोगेऽपि सामग्रीशक्तिरेवोत्तरं कार्यकारणवत्। अन्यथा तत्राप्युपकारान्तरापेक्षायामनवस्था, तदनपेक्षायां (वा) साधारण्यं केन वार्यम्[1]। तेन तदेव क्रियते, अनेनाप्येतदेव विषयीक्रियत इति विवेचनीयम्। विषयीक्रियत इति कोऽर्थः, क्रियत इत्यपि कोऽर्थ इति विचारणीयम्, कार्योत्पादनमेव करणं, तदीयतयोत्पत्तिरेव विषयीकरणमिति विवेचनीयम्। उपकारस्तु यथाऽत्र विज्ञानस्वरूपातिरिक्तो नास्ति, तथाऽत्रापि कार्यस्वरूपातिरिक्तो नास्तीति प्रतिसन्धेयमिति।

शङ्क० टी०। किमस्येति। विषयविषयिभावसम्बन्धस्य किं फलमित्यर्थः। फलमन्तरेणार्थक्रियाजनकत्वरूपं सत्त्वमेवास्य न स्यादिति भावः। बहिर्व्यवहार एव फलमन्तरेऽपि ज्ञाननिरूपणमित्याह। बहिरिति। यद्यप्यपेक्षाज्ञाने बहिष्फलं नास्ति ज्ञान-

(१) वार्यत इति ३ पु० पा०।

बाधाविरामे चान्त: फलं नास्ति, तथापि स्वविषयविषयक-संस्कारोत्पादनमुभयत्रापि फलमित्यर्थः। ईदृगिति। नियतविषय इत्यर्थः। सामग्रीति। स्वकारणबलान्नियतविषयमेवोत्पन्नमित्यर्थः। स्वप्रकाशेऽपि सामग्रीशक्तेरेव त्वया नियामकत्वोपगमादिति भाव:। कार्यकारणवदिति। यथा कार्य्यस्य तादूप्ये कारणमेव नियामकमित्यर्थः। अन्यथेति। यदि कारणेन कार्ये कश्चि-दुपकार: प्रतिनियमं प्रत्याधीयत इत्यभ्युपगम्येत तदोपकारकरूपेऽपि कार्य्ये स्यादुपकाराधानमित्यनवस्था स्यादित्यर्थः। साधारण्यं एकस्यैव सर्वकार्यकारित्वम्। पूर्व्वपक्ष्याह। तेनेति। सिद्धान्त्याह। अनेनापीति। पूर्व्वपक्ष्याह। विषयीक्रियत इति। सिद्धान्त्याह। क्रियत इति। पूर्व्वपक्ष्याह। (विषय)कार्येति। सिद्धान्त्याह। तदीयतयेति। ननु तथापि विषयप्रतिनियमं प्रति कश्चिदुप-कारोऽभ्युपेय एवेत्याह। उपकारस्त्विति। उपकारान्तरेऽनवस्थाया उक्तत्वादिति भाव:। कारणस्वाभाव्यमेव प्रतिनियतविषयक-ज्ञानोत्पत्तौ नियामकं, ज्ञानस्वाभाव्यमेव तन्माचविषयतायामिति सिद्धान्तसारं प्रतिवन्दिमुखेन द्रष्टव्यम्॥

---

भगी० टी०। किमस्येति। फलं विनाऽर्थक्रियाजनकत्व-लक्षणं सत्त्वं न स्यादित्यर्थः। बहिस्तदुत्तरप्रवृत्तिः फलम्, अन्तस्तेन विषयेण सह ज्ञाननिरूपणं फलमित्यर्थः। ईदृक् नियतविषय इत्यर्थः। कार्येति। तया सामग्र्या तदेव जन्यत इति यथेत्यर्थः। तथापि कार्यकारणभावेऽपीत्यर्थः। साधारण्यम् अनियतकार्य-

कारित्वमित्यर्थः। तेनेति पूर्वपक्षिणो वचनम्। अनेनेति सिद्धान्तिनः। विषयीति। अनेनेदं विषयीकृतमिति धीबलादतिरिक्तं विषयत्वमङ्गीकार्यमित्यर्थः। क्रियत इति सिद्धान्तिनो वचनम्। कार्येति पूर्वपक्षिणः। तदीयतयेति सिद्धान्तिनः॥

---

रघु० टी०। फलम् प्रयोज्यम्। प्रश्नप्रसङ्गेपीति। कार्यानुगुणत्वेपि सत्त्वाविरोधादिति हृदयम्॥

---

अतएव कार्यकारणभावोऽप्युपेक्षितव्य इति तु महत्साहसम्, तथा सति हि स्यादेव न स्यादेवेत्यापद्येत, तथा च प्रकाशतमसोरन्यतरस्य कौटस्थ्यप्रसङ्गः। मांहतोऽस्त्विति चेत्, विषयविषयिभावोऽप्येवमस्तु, यदि विषयकार्ययोर्बलवती बाधेति मांहतः नोचेदेवमिति द्वयी गतिः।

शङ्क० टी०। उपकाराधानेऽनवस्था तदनाधाने च साधारण्यमित्येतस्मादेव दोषात् कार्यकारणभाव एव वयं विप्रतिपद्यामहे, किं तद्दृष्टान्तेन विषयविषयिभावसाधनमित्याशङ्क्याह। अत एवेति। साहसमेव दर्शयति। तथा सतीति। स्यादेवेति। नित्यं स्यादित्यर्थः। न स्यादेवेति। अलीकं स्यादित्यर्थः। कारणाद्विरहस्य नित्यत्वालीकत्वान्यतरव्याप्यत्वादन्यतरापादनम्, यथा देवदत्तस्य गृहासत्त्वं मरणान्यत्रसत्त्वान्यतरव्याप्यत्वादन्यतरा-

पादकमिति भावः । अपव्याख्यानमन्यत् । कार्यकारणभावाभावेपि विपक्षदण्डमुक्त्वा विषयविषयिभावाभावे विपक्षदण्डमाह । तथा चेति । विषयविषयिभावाभावो यदि ज्ञानाभावाधीनस्तदा तमःकौटस्थ्यं विषयाभावाधीनश्चेत्तदा प्रकाशकौटस्थ्यम् जगतामान्ध्यमेव तमः । ननु कार्यकारणभावं नावजानीमहे, येन स्यादेव न स्यादेवेति वा स्यादपि तु साम्प्रतोस्तीत्याह । साम्प्रत इति । द्वयी गतिरिति । बलवति बाधके साम्प्रतत्वमसति बाधके वास्तवत्वमित्यर्थः ॥

---

भगी० टी० । अत एवेति । उपकारानुपकारयोरनवस्थासाधारण्यदोषादेवेत्यर्थः । तथा सतीति ।

ननु चाहेतुकत्वेनैकेन व्याप्येन विरुद्धं व्यापकद्वयं कथमापाद्यते, न ह्येकं मिथो विरोधिद्वयव्यापकम् ।

अत्राहुः । एतत्कालीनोत्पत्तिको ऽभावो यद्येतत्पूर्वकालानपेक्षोत्पत्तिकः स्यादेतत्पूर्वकालीनः स्यात् सकलकालावृत्तीदं कार्यं यदि निरपेक्षं स्यात् किञ्चित्कालावृत्तित्वे सति किञ्चित्कालवृत्ति न स्यादित्यापादनार्थः । ननु कार्यकारणभावभावे बाधकसत्त्वेऽपि विषयविषयिभावसत्त्वेन किञ्चिद्बाधकमिति ब्रूयात्तत्राह । तथा चेति । प्रकाशो ज्ञानम् । तमो बाह्यम् । बाह्यं यदि ज्ञानत्वप्रयोजकप्रयोज्यं स्यात् ज्ञानजातीयं स्यात्, एवं ज्ञानेपि बाह्यजातीयत्वमापाद्यम् । तदनयोर्ज्ञानबाह्ययोर्मध्येऽन्यतरकौटस्थ्यमेकस्य सदा सत्त्वं स्यादित्यर्थः ।

यद्वा विषयाभावाद्वा विषयविषयिभावाभावो विषय्यभावाद्वा । आद्ये प्रकाशस्यैव सत्त्वम्, अन्त्ये विषयस्यैव सत्त्वमित्यर्थः । ननूभयाभावात्तदभाव इति शून्यत्वमेव स्यात्, ज्ञानविषययोर्व्यवहारश्च सांवृतो न वास्तव इत्याह । सांवृत इति ॥

---

रघु॰ टी॰ । स्यादेवेत्येवकारेण प्रागसत्त्वस्य न स्यादेवेत्येवकारेण कादाचित्कत्वस्य व्यवच्छेदः । आद्ये अनादित्वं, अन्त्ये चालीकत्वम् । मतभेदेन चेदम् । एकदेशोत्कीर्तनेन निखिलमेव कुसुमाञ्जलावभिहितं स्मारितम् । सामान्यतोऽभिहितं बाधकं प्रकृते विशेषे योजयति । तथा चेति । प्रकाशस्य कारणानपेक्षत्वे यद्यनादित्वं तदाऽनादेर्भावस्याविनाशित्वात् प्रकाशस्य ज्ञानस्य कौटस्थ्यं सार्वदिकत्वं स्यात्, यदि चालीकत्वं, तदा तमसो ज्ञानाभावस्य कौटस्थ्यं स्यादिति क्व क्षणिकविज्ञानवादः ।

यत्तु कार्यकारणभावाभावं बाधकमुक्त्वा विषयविषयिभावे तदाह । तथा चेति । तमो बाह्यम् । कौटस्थ्यम एकशेषः । विषयस्याभावाद्यदि तदभावस्तदा प्रकाशस्यैव सत्त्वं, अथ विषयिणोऽभावात् तदा बाह्यस्यैवेत्यर्थः, अथो भयाभावस्तदा शून्यतैवेति भाव इति । तत्पूर्वापरग्रन्थसन्दर्भावबोधविजृम्भितम् । सांवृतोऽस्तु कार्यकारणभाव इत्यनुषज्यते । इति द्योतीति । यद्युभयत्र बलवद्बाधकं, तदोभयोरपि सांवृतत्वम्, अथ तदभावस्तदा वास्तवत्वमित्यर्थः ॥

---

तदृच तत्त्वम् । न तावदुभयनिष्ठं लक्षणम्, सतोऽसतो वा स्थिरस्यापि स्फुरणात्, । न च ज्ञाननित्यतायां पारमार्थिकबाह्यनिष्ठम् सत्कार्यवादव्यावृत्तेः साङ्ख्यप्रक्रियाविध्वंसात्। न खलु पूर्व्वापर(पूर्व)तिरोभावाविर्भावावन्तरेण विचारस्याप्यवसरः। नाप्यलीकग्राह्यतया क्षणिकज्ञाननिष्ठमिति, तुच्छस्य विशेषाभावात्, ज्ञानस्य च निराकारत्वात्, अन्यथाप्य(प्र)सिद्धेरारोपयितुमशक्यत्वात् ।

शङ्क० टी० । सिद्धं स्वपक्षं पारिशेष्येण द्रढयति । तदृचेति । बौद्धमते विषयविषयिभाव निरस्यति । न तावदिति । उभयनिष्ठतायां विषयस्थैर्ये तत्प्रतिबद्धस्वभावं ज्ञानमपि स्थिरं स्यादिति दोषः । साङ्ख्यपक्षे तदनुपपत्तिमाह । न ज्ञानेति । बुद्धेर्नित्यत्वात् तत्परिणामो ज्ञानमपि नित्यं विषयास्त्वाविर्भवन्ति तिरोभवन्ति चेति विषयनिष्ठैव विषयता, तेन न सर्वदा विषयप्रकाश इति साङ्ख्यमतं, तच्च तदा स्याद्यदि सत्कार्यवादः स्यात् स च निराकृत एवेत्यर्थः । सत्कार्यवादनिरासे युक्तिमाह । न खल्विति । विचारेण ह्यपूर्वं ज्ञानमुत्पाद्यं पूर्वस्य नाशः अन्यथा स निष्फल एव स्यादित्यर्थः । योगाचारमतं निराचष्टे । नापीति । नीलपीतादीनामलीकत्वे ज्ञानमेव केन विशेष्यमित्यर्थः । ननु स्वाकार एव ज्ञानं विशिंष्यादित्यत आह । ज्ञानस्य चेति । नन्वारोपितेन नीलधवलादिना ज्ञानं विशिष्यतां रक्तः स्फटिक इतिवदित्यत आह । अन्यथापीति ॥

भगी० टी० । पूर्व्वोक्तकल्पेष्वन्यत्र बाधकात् स्वपक्षं द्रढयति । न तावदिति । ज्ञानं विषयश्चेत्युभयम् । विषयस्य क्षणिकत्वे ज्ञानविषयौ मिथः सम्बद्धावेवोत्पन्नावित्युभयविषयकत्वलक्षणसत्त्वेपि सतोऽसतो वा स्थिरस्य विषयत्वात्तत्कालोत्पन्नं ज्ञानमेव विषयसम्बद्धरूपमुत्पद्यत इति तन्निष्ठमेव तल्लक्षणमित्याह । सत इति । यदि ज्ञानं नित्यं स्यात्तदा विषय एव तत्सम्बद्धरूप आविर्भवतीति साङ्ख्यराद्धान्तः स्यात्, न चैवम्, तत्परिभाषानिरासादित्याह । न चेति । पूर्वापरेत्यत्र तिरोभावाविर्भावाभ्यां यथासङ्ख्यमन्वयः । नापीति । निराकारत्वाद्बुद्धीनां विषयकृत एव विशेषः, अलीके च विशेषो नास्तीत्यलीकविषयज्ञानयोरविशेषप्रसङ्ग इत्यर्थः । ज्ञानस्येति । साकारविज्ञानपक्षे आकारोपि विशेषकः स्यान्निराकारपक्षे तु सोपि नास्तीत्यर्थः । न चान्यथाकारः सिद्धो येनालीके तदारोपः स्यादित्याह । अन्यत्रापीति । प्रमितस्यैवारोपादित्यर्थः ॥

---

रघु० टी० । ज्ञानज्ञेययोर्विषयित्वविषयत्वे ज्ञेयज्ञानयोश्च तन्निरूपकत्वे इति ज्ञेये विषयत्वं ज्ञाने च तन्निरूपकतामात्रम्, तत्रापि ज्ञेयं पारमार्थिकमलीकं च ज्ञानं नित्यमनित्यं चेति मतानि पारमार्थिकयाद्यनिरूपितमनित्यज्ञाननिष्ठं विषयित्वमिति कण्ठरवेण कलतश्च स्वमतं व्यवस्थापयितुं निरस्यति। न तावदिति । लक्षणं व्यवहारनियामकं रूपम्[1] । क्षणिकयोः सहोत्पन्नयोर्ज्ञेय-

---

(१) सत्वे वर्त्तमानस्य असतोऽतीतानागतस्य इत्यधिकं २ पुस्तके ।

ज्ञानयोर्विषयित्वविषयत्वे सम्भवत इत्यत आह। स्थिरस्यापीति। तथा चावश्यके ज्ञाने विषयित्वे ज्ञेयेऽतिरिक्तविषयत्वे मानाभाव इति भावः। नित्यज्ञाने विषयित्वोपगमे सदा व्यवहारापत्त्या तन्नियामकमावश्यकं क्षणिके ग्राह्ये विषयत्वम्, ज्ञानस्य तु तन्निरूपकतामात्रमिति मतं निरस्यति। न चेत्यादिना। ज्ञानस्य नित्यत्वे तदुत्पादविनाशयोरसम्भवेन विपरीतपूर्वज्ञाननिवृत्ति-यथार्थापूर्वज्ञानोत्पत्त्यर्थको विचारो विफलः स्यादित्यर्थः। तिरोभावाविर्भावौ विनाशोत्पादौ। नापीति। विषयस्य निर्विशेषतया विषयकृतस्य निराकारतया चाकारकृतस्य विशेषस्यासम्भवेन नील-पीतादिज्ञानानां विशेषानुभवानुपपत्तेरित्यर्थः। वास्तवविशेषा-भावेऽप्यारोपः स्यात्तत्राह। अन्यत्रेति ॥

---

असन्त एव विशेषकाश्चकासतीति चेन्न, असन्त इति ह्यतत्काला अतद्देशा इति वा अकिञ्चिद्रूपा इति वा नियतव्यावृत्तिमात्ररूपा इति वा। प्रथमे काल-देशान्तरयोः सत्त्वप्रसङ्गः। द्वितीये त्वविशेषता। तृतीये नीलस्यालीकस्यानीलव्यावृत्तिरूपतायामनी-लानां पारमार्थिकत्वप्रसङ्गः, तेषामलीकत्वे तद्व्यावृ-त्त्यात्मनो नीलस्यानलीकत्वापत्तिः। तथाप्यलीकत्वे-ऽविशेषत्वम् ॥

शङ्क० टी०। नन्वतीतानागतानामसतामेव यथा ज्ञानविशेष-कत्वं तथा नीलधवलादीनामसतामेव विशेषकत्वं स्यादत आह।

अयन्त इति। प्रथम इति। मम ज्ञातीतानागतादीनां कालान्तरगतामेव विशेषकत्वमिति भावः। द्वितीय इति। तुच्छत्वाच्च विशेषकतेत्यर्थः। तृतीय इति। यत्प्रतियोगिका व्यावृत्तिर्नीलादिस्तत्परमार्थसदित्यर्थः। तदप्यलीकमिति यदि, तदा तद्व्यावृत्तिरूपं नीलाद्येव पारमार्थिकमित्यायातमित्याह। तेषामिति। उभयमप्यलीकमिति यदि, तदा ज्ञानं केनविशेष्यतामिति पूर्वपक्ष एव दोष इत्याह। तथापीति ॥

---

भगी० टी०। असत्ख्यातिपक्षमाश्रित्याह। अयन्त एवेति। प्रथम इति। विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वादित्यर्थः। अविशेषः अलीकस्य ज्ञानाविशेषकत्वादित्यर्थः। अनीलं यद्यनलीकं, तत्राह। नीलस्येति। अथ तदलीकं तत्राह। तेषामिति। तथापीति। विरोधमनादृत्य नीलस्यालीकत्व इत्यर्थः।

---

रघु० टी०। असत्ख्यातिनयेनाऽऽशङ्कते। अयन्त इति। तत्कालतद्देशयोरयन्त इत्यर्थः। नियतेति। कचिद्व्यावृत्तिरनीलमात्रात् कचिच्चापीतमात्रादित्यादिर्नियमः। कालेत्यादि। विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात्, अन्यथा विशेषोपादानवैयर्थ्यात्। अनीलव्यावृत्तेर्नीलस्यालीकत्वेऽनीलानां पारमार्थिकत्वं व्यावृत्तिप्रतियोगिनामनीलानामलीकत्वे व्यावृत्तेर्नीलस्यापारमार्थिकत्वम्, विधिनिषेधयोरेकतरापारमार्थिकत्वेऽन्यतरपारमार्थिकत्वध्रौव्यस्योक्तत्वे च द्वयोरप्यलीकत्वे न विशेष इत्याह। नीलस्येत्यादिना ॥

---

**तेन रूपेणाविशेषत्वमेवेति चेत्, अथ विशेषः केन। नीलपीतादिनेति चेत् तत् किं ततोऽधिकम्? अनलीकं तर्हि स्यात्। अनधिकं चेत् कुतस्तेनापीति ॥**

शङ्क० टी०। ननु नीलादीनामलीकत्वेन रूपेण न ज्ञानविशेषकत्वं ब्रूम इत्याह। तेनेति। तर्हि येन रूपेण ज्ञानविशेषकत्वं नीलादीनां तदलीकमेव वाच्यमित्याशयेन पृच्छति। अथेति। तेनापीति। अत्र विशेष इत्यनुषङ्गः ॥

---

भगी० टी०। नन्वलीकयोरलीकत्वेन न मिथो विरोध इत्याह। तेनेति। तदिति। तत् नीलादि ततोऽलीकादधिकं भिन्नमित्यर्थः। अनधिकमिति। नीलाद्यलीकादनधिकमभिन्नमिति चेत्, ततो न विशेषकत्वं तस्येत्यर्थः ॥

---

रघु० टी०। यथा भवतां सत्त्वेनाविशिष्टानामपि नीलपीतादीनां मिथो विशेषस्तथाऽस्माकमसत्त्वेनाविशिष्टानामपि स्यादित्याशङ्कते। तेन रूपेणेति। तत् नीलादिकम्। ततः अलीकात्। अधिकं भिन्नम्। अनधिकं अलीकादभिन्नं चेत्, कुतस्तेनापि विशेष इति। अस्माकं तु नीलपीतादीनां पारमार्थिकानां नीलत्वपीतत्वादिनैव विशेष इति भावः।

---

**वासनावशाद्विशेषाः स्फुरन्तीति चेत्, स्फुरन्तु, कः कारणे विप्रतिपद्यते, ते तु नीलादयो यत्किञ्चिद्रूपाः,**

कथं विशेषाः, तदितररूपेणाकिञ्चिद्रूपत्वे तेन रूपेण किञ्चिद्रूपा एवेति ब्रूमः । विचारासहतामात्रमलीकत्वमिति चेत्, तथापि भाषापरिवर्त्तनमात्रम्, विचारासहतायाः किञ्चिद्रूपत्वविरोधित्वात्, अविरोधे वा त्वद्विचारासहना अपि किञ्चिद्रूपा एव नीलादयः इति विचारस्य दुर्विचारत्वप्रसङ्गः तेन नीलादीनां छायामात्रस्याप्यनाक्रान्तेः, प्रविश वा अनिर्वचनीयख्यातिकुक्षिम्, तिष्ठ वा मतिकर्द्दममपहाय न्यायनयानुसारेण नीलादीनां पारमार्थिकत्वे ॥

शङ्क० टी० । वासनेति । वासनाविशेषादसन्तोपि स्फुरन्त्यतो ज्ञानस्य विशेषका भविष्यन्तीति भावः[(१)] । असतां विशेषकत्वमनुपपन्नमित्याह । स्फुरन्तीति । विशेषकास्तर्हि सन्त एवेत्याह । ते तदितररूपेणेति । नीलादीनां यद्रूपं न भासते तेनाकिञ्चित्करत्वेपि भासमानेन रूपेण ज्ञानविशेषकत्वात् किञ्चित्करा एवेत्यर्थः। नीलादयः स्फुरन्ति ज्ञानमपि विशेषयन्ति, परं तु विचारं न सहन्त इत्येतावताऽलीकत्वं तेषामिति शङ्कते । विचारेति । एतावता तुच्छत्वमेव पर्यवस्यतीत्याह । तथापीति । भाषापरिवर्त्तस्तुच्छत्वस्यैव विचारासहत्वेनाभिधानम् । न हि किञ्चिद्रूपवद्विचारासहञ्चेति सम्भवति, तेनैव रूपेण विचारसहत्वादित्यर्थः । ननु नीलादि विचारासहमपि स्यात् किञ्चिद्रूपवदपि भवतु, को विरोध इत्यत आह । अविरोधेति। यदि तद्विचारेण

(१) शेष इति २ पु० पा० ।

नीलादीनां स्वरूपं न खण्डितं तदा तत्फलकत्वेनाभिमन्यमानो विचारो दुर्विचार एव पर्यवसन्न इत्यर्थः । अत्र हेतुमाह । तेनेति । नीलादीनां स्वरूपस्य विचारेणाखण्डितत्वादित्यर्थः । प्रविश्य वेति । असत्ख्यात्यभिमानं छित्वा वेदान्तिमतमालम्बस्वेत्यर्थः । तिष्ठ वेति । नैयायिकमतमालम्बस्वेत्यर्थः ॥

---

भगी॰ टी॰ । नन्वलौकज्ञानयोर्वैषयिकविशेषाभावेपि कारणकृत एव विशेषः स्यादित्याह । वासनेति । स्वसामाधारणहेतोरित्यर्थः । तावताऽलौकज्ञानानां विषयकृतो विशेषो न समर्थित इत्याह । स्फुरन्त्विति । विचारेति । सामत्त्वमलौकत्वम्, किं तु सदसत्त्वाभ्यां विचारासहत्वम्, नीलादीनां तत्त्वमित्यर्थः । विचारासहत्वमशेषवस्तुविरोधि न वा, आद्ये व्याघातः, विचारस्यापि विचारासहत्वात्, नीलादीनां किञ्चिद्रूपविरोधश्चेत्याह। विचारासहताया इति। अन्त्ये, अविरोधे वेति। वस्तुमात्रविरोधप्रवृत्तस्य किञ्चिद्रूपसहिष्णुतया विचारस्य दुर्विचारत्वप्रसङ्ग इत्यर्थः । तदेवाह । तेनेति ॥

---

रघु॰ टी॰ । त्वदभिमतं विचारासहत्वं नीलादीनां किञ्चिद्रूपतां विरुणद्धि न वा, आद्येऽकिञ्चिद्रूपाणां नीलादीनां न विशेष इति कुतस्तत्कृतो ज्ञानादीनां विशेषः । द्वितीये तु नीलादीनां किञ्चिद्रूपताबाधनाय प्रवृत्तस्य विचारस्य तत्रासामर्थ्याद्दुर्विचारत्वप्रसङ्ग इत्याह । तथापीत्यादिना ॥

---

तस्मात्,

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति-
स्तद्बाधने बलिनि वेदनये जयश्रीः ।
नो चेदनिन्द्यमिदमीदृशमेव विश्वं
तथ्यं तथागतमतस्य तु कोऽवकाशः ॥ १ ॥

शङ्क० टी० । अन्यतरमतप्रवेशमन्तरेण नान्या गतिरित्युपसंहरति । तस्मादिति । ग्राह्यभेदं ग्राह्याणां नीलधवलादीनां परस्परं भेदं तस्यैवाज्ञानस्य भेदमवधूय तिरस्कृत्य धियां वृत्तिर्विषयविषयिभावः सम्बन्धो न सिद्ध्यतीत्यर्थः । तद्बाधन इति । ग्राह्यभेदबाधन इत्यर्थः । वेदनयो वेदान्तमतस्य बलवत्त्वमेकमेवाद्वितीयं ब्रह्मेत्यादिश्रुत्युपष्टम्भात् । ननु श्रुतिवाक्यं घटात्पटो भिन्न इत्यादिप्रत्यक्षबाधितं ग्रावप्लवनश्रुतिवदन्यतात्पर्यकमित्याह । नोचेदिति । अनिन्द्यं परोक्तदोषास्पृष्टम् । ईदृशं यथाप्रतीयमानं तथ्यमबाधितम् । तथागतो बौद्धः ॥

---

भगी० टी० । न ग्राह्येति । विषयभेदं विना न नीलपीतबुद्ध्योर्भेदः, न च तं विना बुद्धेर्वृत्तिर्विषयविषयिभावलक्षणः सम्बन्ध इत्यर्थः । तद्बाधने भेदांशबाधने । वेदनये वेदान्तनये । तथ्यं पारमार्थिकं विश्वं सिद्धमतो न बौद्धमतावकाश इत्यर्थः ॥

---

रघु० टी० । उपसंहरति । तस्मादिति । ग्राह्याणां नीलधवलादीनां हि भेदात् प्रतिनियततद्विषयकाणां ज्ञानानां भेदसिद्धिः, ग्राह्यभेदबाधने च ज्ञानभेदसाधकस्य प्रतिनियत-विषयत्वस्याभावात् क्षणिकानेकविज्ञानधाराकल्पने गौरवात्, एकत्वे च लाघवात् बलवत्यौपनिषदनये जयश्रीः, एकमेवा-द्वितीयं ब्रह्म सत्यं विज्ञानमानन्दं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेत्यादयो ह्युपनिषदो नित्यमद्वितीयं ज्ञानं प्रतिपादयन्तीति ॥

---

तच्चालीकं विचारासहमनिर्वचनीयं वा यमाश्रित्य जगद्गीयते स एव विचारश्चिन्त्यतां कोऽसौ कीदृशश्चेति । सतर्कं प्रमाणमेव वाक्यारूढमिति चेत्, तच्चेद्विचारासहं, किं तेन भीतविचारकल्पेन ।

तथाहि, केनचिद्भीतेन राजद्वारि द्विरदमवलोक्य विकल्पितम्, किमयमन्धकारो मूलकमत्ति, आहो-स्वित् जलवाहो बलाकान् वर्षति गर्जति च, यद्वा बान्धवोऽयं, "राजद्वारे श्मशाने च यस्तिष्ठति स बान्धव" इति परमाचार्यवचनात्, अथवा योऽयं भूमौ दृश्यते तस्य छायेति ।

दूषितञ्च, तत्र नाद्यः, शूर्पयुगलप्रस्फोटनानुप-पत्तेः(१) । न द्वितीयः, तस्य स्तम्भचतुष्टयाभावात् । न तृतीयः, तस्य लगुडभ्रामणाभावात् । न चतुर्थः,

(१) नाभावात् इति इ पु० पा० ।

तस्य नरशिरःश्रतोऽशिरणाभावात् । ततो न किञ्चि-दिदमिति ।

किमेतावता द्विरदस्वरूपं निवर्तताम्, यद्वा वर-मेतस्माद्योयं सोयमिति वादी द्वितीयो भीतः । तद्वि-चारसहमिति चेत्, एवं तर्हि स्वयमेव विलीनमली-कादिवादैः, नोत्तरप्रतीक्षणमपि ।

शङ्क० टी० । मतभेदेन विचारफलं दर्शयित्वा विचारस्वरूपं पृच्छति । कोमाविति । वाक्यारूढं पञ्चावयववाक्यविषयः । किं तेनेति । विचारस्य विचारासहत्वे तत्फलस्यालीकत्वादि-सिद्धेर्मिथ्यात्वमिति सिद्धं नः समीहितमित्यर्थः । भीतो बर्व्वरः । बर्व्वरान्तरविचारमुपदर्श्योपहसति । तथाहीति । हस्तिनि तमस्त्वं दन्तद्वये च मूलकत्वमारोपितम् । कर्णे शूर्पत्वं जङ्घा-चतुष्टये स्तम्भत्वं लाङ्गूले शुण्डादण्डे वा लगुडत्वं पुरीषपिण्डेषु नरशिरस्त्वमारोप्यते । अत्र हस्तिनि मेघत्वं दन्ते बलाकात्वं मूत्रे मदचरणे वा वर्षणत्वं बृंहिते गर्जितमारोपितम् । यद्वेति । अत्र हस्तिनि बाध्यत्वारोपः । अथ वेति । छायायां हस्तित्वारोपो हस्तिनि छायारोपः । कर्णद्वये शूर्पत्वं जङ्घाचतुष्टये स्तम्भत्वं लाङ्गूले वा लगुडत्वं पुरीषपिण्डेषु नरशिरस्त्वं आरोप्यते । योयं सोयमितीति । अबाधितप्रत्यक्षेण यथा विषयीक्रियते तथेत्यर्थः । तद्विति । मतर्कं प्रमाणमित्यर्थः । स्वयमेवेति । विचारस्यैवासत्तीकत्वात् निर्वचनीयत्वाचेत्यर्थः ॥

---

भगी० टी० । ननु ग्राह्यभेदेपि विषयस्यालीकत्वात् कुतस्तथात्वमित्यत आह । तत्रेति । अलीकमप्रामाणिकं, विचारासहमप्रतिरुद्धप्रमाणाविषयः, अनिर्वचनीयं सदसत्त्वाभ्यां निर्वक्तुमशक्यम् । वाक्यं पञ्चावयवरूपं तदारूढं तत्प्रतिपाद्यम् । येन प्रमाणेन विचारासहत्वं तद्विचारसहं न वा, आद्ये, तच्चेदिति । तथा च तस्य विचारासहत्वमेवेति भावः । किमित्यादि । अत्र हस्ती नीलत्वेनान्धकारतयाऽऽरोपितः, तद्दन्तद्वयं मूलकत्वेन, अग्रे स एव मेघत्वेन, तदेव बलाकात्वेन, मदचरणं वर्षत्वेन, करिच्छायोपरि दृष्टो हस्ती च्छायात्वेन, तत्कर्णद्वयं शूर्पयुगलद्वयम्, जङ्घाचतुष्टयं स्तम्भत्वेन, हस्तो लगुडत्वेन, गजत्पिण्डो नरशिरस्त्वेनारोपितः । द्वितीयं शङ्कते । तद्विचारेति । तत् प्रमाणम् । एवं सति सर्वं विचारासहमिति न सिद्ध्यति, तस्यैव विचारसहत्वादिति परिहरति । एवं तर्हीति ॥

---

रघु० टी० । जगतो विचारासहत्वादिपरीवादमपाकर्तुं पृच्छति । तत्रेत्यादि । यं विचारम् । कोऽसाविति स्वरूपे कीदृश इति प्रकारे प्रश्नः । वाक्यं न्यायादि । जगदलीकत्वादिसाधकं प्रमाणं विचारसहं न वा, अन्त्ये, तच्चेदिति । तत् सतर्कं प्रमाणम् । आद्यं शङ्कते । तदिति । निराकरोति । एवं तर्हीति । तर्कप्रमाणवाक्यानां पारमार्थिकत्वे विषयवत्प्रयोजनवत्त्वादीनामपि पारमार्थिकत्वमवर्जनीयमिति कुतो जगतोऽलीकत्वादिकमित्यर्थः ॥

---

लोकसिद्धमिति चेत्, तर्हि तस्य परिकरशुद्धिरपि तथैव ग्राह्या, अन्यथा लोकस्यापि व्यतिक्रमे विचारस्य यादृच्छिकवाङ्मात्रत्वापत्तेः। लोके चाकाङ्क्षायोग्यतासत्तिमत्तया प्रतिसंहितमश्लिष्टार्थं प्रमाणान्तराप्रतिहतं स्ववचनस्वक्रियास्वज्ञानव्याघातादिदोषरहितं स्वार्थप्रतिक्षेपकयुक्तेरनाक्षेपकं वाक्यमर्थप्रतिपत्तेरङ्गम्, यथा पर्वतोऽयं वह्निमानिति। अनङ्गमितरत्, यथाऽयं पर्वतो देवदत्तो गौर इति, जलह्रदो वह्निमानिति, गिरिर्देवदत्तेन भुक्तमग्निमानिति, श्वेतो डित्थो धावतीति, शशो विषाणीति, माता वन्ध्येति, अहं मूक इति, इमं न जानामीति, मम कर्णे प्रविश्य गजो गर्जति भेषजमुच्यतामिति।

शङ्क० टी०। तत् पञ्चावयववाक्यारूढं प्रमाणं यथालोकसिद्धं ग्राह्यं, न त्वेतावतैवालौकत्वादिचतिरित्याह। लोकेति। परिकरशुद्धिः सहकारिचक्रशुद्धिः। अन्यथेति। लोकसिद्धातिक्रमे इत्यर्थः। शिष्यबुद्धिवैशद्याय परिकरमाह। आकाङ्क्षेति। स्मारिततदाक्षिप्ताविनाभावे सति श्रोभवितरि तत्पादासंसर्गाविगमः प्रागभावः। न च प्रागभावस्य कार्यमात्रहेतुत्वेन नासाधारणकारणतेति वाच्यम्। तदुत्पादासंसर्गाविगमरूपप्रतियोगिविशेषितस्यासाधारणत्वात्। न च योग्यतासत्योरकारणतापत्तिः, अन्यथापि कार्यकारणतान्तरविलोपापत्तेः। अभिधानापर्य्यवसानमाकाङ्क्षा, अपर्यवसानं च येन विना यस्य न स्वार्थान्वयानुभावकत्वं इत्यादावपि

अपर्यवसानादेः प्रागभावरूपतया दोषसाम्यादित्यादि मयूखे विस्तीर्णम् । बाधकप्रमाविरहो योग्यता । अव्यवधानेन प्रकृत-संसर्गप्रतियोग्युपस्थितिरासत्तिः । स्वरूपसत्यश्चैताः शाब्दप्रमा-प्रयोजिकाः । तेन प्रतिसंहितमिति । प्रतिपदं सङ्घटितमिति व्याख्येयम् ।

आकाङ्क्षा सत्तया हेतुरितरे च ज्ञाते इत्याचार्य्याः ।

सर्वा एव ज्ञाता इत्यपरे ।

निराकाङ्क्षस्योदाहरणं, यथायं पर्वत इति । अयोग्यस्योदाहरणं जलहृद इति । अनासन्नस्य गिरिरिति श्लिष्टस्य श्वेत इति । प्रमाणान्तरप्रतिहतस्य शशोविषाणीति । यद्यप्ययोग्यमप्येतत्तथापि प्रमाणान्तरप्रतीघातोऽत्र स्फुटतर इति तथोक्तम् । स्ववचन-प्रतिहतस्य मातेति । जनकत्वौलमजनकत्वौलञ्च परस्परविरुद्ध-मित्यर्थः । स्वक्रियाप्रतिहतस्याहमिति । अत्र वचनलक्षणया स्वक्रिययैव मूकत्वं स्वस्य प्रतिहतम् । अज्ञानप्रतिहतस्योदा-हरणमिति । ज्ञानविषयतैवेदन्ता न जानामीत्यनेन प्रतिहता । स्वार्थप्रतिक्षेपकयुक्तेराक्षेपकमुदाहरति । मम कर्ण इति । न हि कर्णे गजप्रवेशः सम्भवति यद्वारणार्थं भेषजोपन्यासः । यद्वा गज-प्रवेशेन बाधिर्य्यं वाक्यार्थः । भेषजशुश्रूषया च तत्प्रतिक्षेपः ॥

---

भगी० टी० । लोकसिद्धं व्यवहारमात्रसिद्धमित्यर्थः । परिकरः सहकारिचक्रं, तस्य शुद्धिरनाभासत्वम् । तथैव लोक-सिद्धतयैव । तथा च साधनार्थमुपजीव्यं लोकसिद्धमन्यदपीति

तद्बाधितं विचारासहत्वसाधनमित्यर्थः । तदाह । लोके चेति । नन्वाकाङ्क्षा श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावः, स (इ) च स्वरूपसन्नेव हेतुः, तदुत्पाद्यसंसर्गावगमे ज्ञाते तत्प्रागभावरूपाकाङ्क्षाज्ञानं, तदुत्पाद्यसंसर्गावगमस्याकाङ्क्षाज्ञाने सतीत्यन्योन्याश्रयः । मैवम् । न प्रागभावरूपाकाङ्क्षा, अयोग्यानामनयोस्तदभावा-(देवा)न्वयज्ञानानुत्पत्तौ योग्यतासत्त्योरहेतुतापत्तेः, प्रागभावाभावस्य कारणान्तराभावव्याप्यतया तत एव कार्याभाव इत्याकाङ्क्षाया अहेतुतापत्तेः, प्रागभावस्य कार्यमात्रहेतुत्वेनाकाङ्क्षायाः शाब्दज्ञानासाधारणहेतुतानापत्तेः, किन्त्वभिधानापर्यवसानमाकाङ्क्षा, येन विना यस्य न स्वार्थान्वयानुभावकत्वं तस्य तदपर्यवसानम्, प्रकृतिप्रत्ययादीनामन्योन्यं विना स्वार्थान्वयाननुभावकत्वात् । योग्यता च न बाधकमानाभावः, अन्यत्र यद्बाधकं तस्यायोग्येपि सत्त्वात्, प्रकृतसंसर्गे च न तदभावः, सिद्ध्यसिद्धिव्याघातात् । ननु प्रकृतसंसर्गेऽन्यत्र सिद्धबाधकस्याभावः, प्रकृतसंसर्गस्य प्रागज्ञानात् । सजातीये दर्शनं च न योग्यता, यथाकथञ्चित् पदार्थतावच्छेदकाभ्यां साजात्यविकल्पग्रासात् । न चान्वयप्रयोजकरूपवत्त्वं साजात्यम्, अनाप्तोक्ते पयसा सिञ्चतीत्यत्राप्यन्वयबोधापत्तेः, अन्वयप्रयोजकद्रवद्रव्यत्वस्य सत्त्वात् । नापि समभिव्याहृतपदार्थसंसर्गव्याप्यधर्मवत्त्वम्, वाक्यार्थस्यानुमेयतापत्तेः, किन्त्वेकपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावः । आसत्तिश्चाव्यवधानेनान्वयप्रतियोगिज्ञानम्, ताश्च ज्ञाता वाक्यार्थधीहेतवो न स्वरूपसत्यः, ज्ञायमानकरणज्ञानो-

पयोगित्यभिचारिवैलक्षण्यात्, व्याप्तिवच्छब्दशक्तिवच्च। न चाप्रयोजकत्वम्, आकाङ्क्षाद्यसत्त्वे तज्ज्ञानादन्वयबोधाभावापत्तेः, अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राजा पुरुषमाकाङ्क्षति पुत्रं वेति संशये तद्विपर्यये चान्वयधीप्रतिबन्धात्, यदभावसंशयविपर्ययौ यत्र प्रतिबन्धकौ तत्तत्त्वनिश्चयस्य तत्र हेतुत्वात्। योग्यतायास्तु संशयसाधारणं ज्ञानमात्रमेव हेतुः, तत्संशयेऽप्यन्वयबोधात्, बाधसंशयस्य प्रमायामप्रतिबन्धकत्वात्, अन्यथा प्रमाणमात्रोच्छेदादिति सङ्क्षेपः।

अश्लिष्टार्थमिति। यद्यपि यत्रानेकार्थपरतया श्लिष्टं वाक्यमुच्चार्यते तत्रानेकार्थधीर्भवत्येव, यत्र चैकत्र तात्पर्याभावस्तत्र न श्लेषावकाशः, तथापि यत्रानेकार्थपरत्वस्याज्ञानं तत्परोऽयं ग्रन्थः, एतन्मूलक एव मल्लद्वचरिते मल्लद्र्यप्रत्यायकत्वमिति भावः। प्रमाणान्तरेति। यद्यपि यत्र संसर्गधीर्मानान्तरेण बाध्यते, तत्रायोग्यत्वमेवेति योग्यतयैव तद्गतार्थः, तथापि तस्यास्तत्कालीनाभावप्रमाविरहत्वादस्य च प्रतीत्युत्तरकालविवक्षयाभिधानात्। योग्यताविवरणपरमेवोत्तरं सर्वम्। क्रियापदमुपात्तवचनादीतरक्रियापरम्। एतेषां हेतुत्वनिश्चयार्थमेव तदभावादन्वयबोधाभावोदाहरणानि क्रमेणाह। यथेत्यादि। इमं न जानामीत्यत्र इममित्याकारेणैव ज्ञानाद्विरोधः। ममेति। अहं न शृणोमि भेषजमुच्यतामिति विरोधः। निवार्यासम्भवान्निवारकासम्भवस्य स्वार्थस्य प्रतिक्षेपे वा॥

---

रघु॰ टी॰ । तद्दीति । तथा चोपजीव्यविरोधात्त्वदीयो विचार एवाभास इति भावः । आकाङ्क्षादीनां ज्ञातानां प्रयोजकत्वपक्षे प्रतिसंहितं ज्ञातं, इतरथा तु सम्बद्धमित्यर्थः । अभिष्टार्थमिति कथाभिप्रायेण । प्रमाणान्तरेति[१] । प्रमाणान्तरप्रतिहतं यद्यप्यर्थबाधादयोग्यमेव, तथापि सजातीयेऽन्वयदर्शनं योग्यतेत्यभिप्रायेणेदमित्येके ।

अयोग्यत्वेपि प्रमाणान्तरप्रतीघातस्योद्भटत्वात्पृथगुपन्यास इत्यन्ये ।

योग्यताविवरणमेवोत्तरमित्यपरे ।

स्ववचनव्याघातः स्ववचनयोर्मिथो विरुद्धार्थकत्वम् । स्वक्रियाव्याघातः स्वक्रियामाश्रेनाहं मूक इति वाक्येनैव तदर्थबाधः । स्वज्ञानव्याघातः स्वक्रियया इमं न जानामीति वाक्येनाचिप्तेनेदमाकारज्ञानेन तदर्थबाधः । स्वार्थस्य कर्णप्रविष्टगजगर्जननिवारणार्थं भेषजाभिधानस्य प्रतिक्षेपिका युक्तिरत्यन्तासतो निवार्यस्य निवारणार्थं भेषजाभिधानायोग्यत्वम् ।

केचित्तु न शृणोमीति गर्जत्यन्तार्थः पर्यवसितः, तथा च स्वार्थस्य श्रवणार्थकभेषजाभिधानस्य प्रतिक्षेपिका युक्तिरश्रोतर्यभिधानवैफल्यमित्याहुः ॥

---

तदर्थश्च साधनं दूषणं च, तत्र साधनं व्याप्तिपक्षधर्मतौपयिकरूपपञ्चकोपेतं लिङ्गम्, यथा विशिष्टधूमवत्त्वादिति। लिङ्गाभासमितरत्, यथा जलाशय-

(१) प्रमाणेति ३ पु॰ पा॰ ।

त्वादिति। तत्परिकरश्च तर्कः। सोपि व्याप्तिबल-मालम्ब्यानिष्टप्रसङ्गरूपः। अनिष्टं च द्विविधं प्रामाणिकपरित्यागोऽप्रामाणिकपरिग्रहश्च,[१] यथा यद्युदकं पिपासादुःखं न शमयेत् न पीयेत, यदि च तदेव परमन्तर्दहेत् तदाविशिष्टं मामपि दहेत्। इतरस्तु तर्काभासः। यथा यदि जलं पिपासादुःखं नाशमयिष्यत् रूपवदपि नाभविष्यत्, यथाऽऽकाशम्, यदि च तदेव परमन्तरधक्ष्यत् मामपि सुरभिमकरिष्यदिति। दूषणमपि स्वप्रतिक्षेपकयुक्तेरनाक्षेपकं दूष्यासाधकत्वाविनाभूतं सिद्धं च। यथाग्निमत्त्वे साध्ये प्रमेयत्वमनैकान्तिकत्वादहेतुरिति। अन्यथा तु तदाभासे, यथाऽयं धूमो नाग्निसाधकः सर्वथानुपलभ्यमानोपाधिशङ्काग्रस्तत्वात् प्रमेयत्वात् विरुद्धत्वाच्चेति। इतरदपि प्रमाणमनुमानच्छाययैव विचाराङ्गं, तर्कमनन्यथासिद्धिं च पुरस्कृत्य प्रवृत्तेः, ततस्तत्राप्येषैव रीतिरनुगन्तव्येति।

शङ्क० टी०। तदर्थ इति। वाक्यार्थ इत्यर्थः। रूपपञ्चकेति। यद्यपि केवलान्वयिकेवलव्यतिरेकिणोस्तद्रूपमपि लिङ्गं तथापि परस्यानभ्युपगमात्तदर्थमुपन्यासः। विशिष्टेति सन्ततोर्द्धगामित्वादिविशिष्टोपादानम्। पर्वतोऽग्निमानिति प्रतिज्ञायामेव लिङ्गाभासमुदाहरति। यथेति। अत्र न व्याप्तिर्न वा

(१) काभ्युपगमश्च इति ३ पु० पा०।

पक्षधर्मतेत्यर्थः। प्रामाणिकपरित्यागमनिष्टमुदाहरति। न पीयेतेति। तोयपानस्येष्टत्वात्। अप्रामाणिकपरिग्रहमुदाहरति। यदि तोयमन्यपुरुषमप्यन्तर्दहेत्तदा तत्पुरुषाविशिष्टं मामप्यन्तर्दहेत्। अत्र तोयदाहो न प्रमाणसिद्धः स एवापाद्यते इति। यथा यद्दीति। उभयथापि मूलशैथिल्यादाभासत्वम्। स्वार्थेति। स्वव्याघातकत्वशून्यमित्यर्थः। दूष्यसाधकत्वाविनाभूतमिति जात्युत्तराणां निराकरणाय। सिद्धमिति छलानां निराकरणाय। दूष्ये हेतुपक्षदृष्टान्तादिस्तत्साधकत्वाविनाभावे सति। तच्च सत्यपि सिद्धत्वं पक्षधर्मत्वं नास्ति। प्रमेयत्वमहेतुरिति। प्रमेयत्वं प्रकृतसाध्यासाधकमित्यर्थः। अत्र हेतुमाह। अनैकान्तिकत्वादिति। अनैकान्तिकत्वं हि दूष्यासाधकाविनाभूतं च प्रमेयत्वे सिद्धञ्चेत्यर्थः। दूषणाभासेषु मध्ये स्वप्रतिक्षेपकत्वमुदाहरति। सर्वथेति। इदं हि दूषणं स्वात्मानमपि व्याहन्तीत्यर्थः। दूष्यासाधकत्वाविनाभावशून्यमुदाहरंति। प्रमेयत्वादिति। न हि यत् प्रमेयं तदन्यसाधक धूमादौ व्यभिचारात्। असिद्धमुदाहरति। विरुद्धत्वादिति। न हि वह्निसाधकत्वेनोपपत्तिविरुद्धत्वमस्ति। ननु सतर्कं प्रमाणं वाक्यारूढमिति यद्विचारलक्षणं कृतं तत् कथायां प्रत्यक्षोपन्यासस्थले शब्दोपन्यासस्थले चाव्यापकमत आह। इतरदपीति। अनुमानच्छाया अनुमानेतिकर्त्तव्यता। तामेवाह। तर्कमिति। यद्वा सन्दिग्धमिति कर्त्तव्यताऽनुमानमात्रस्योक्ता, प्रमाणान्तरन्तु कथं व्यवतिष्ठतामित्यत आह। इतरदपीति॥

---

भगी॰ टी॰। तदर्थः पञ्चावयववाक्यार्थः। तत् खल्विति। वाक्यमित्यर्थः। तत्र साधनदूषणयोर्मध्ये। रूपपञ्चकेति। यद्यपि चतूरूपसम्पन्नमपि लिङ्गं, तथापि बौद्धैरन्वयव्यतिरेकिण एव गमकत्वाभ्युपगमादेतदुक्तम्। गमकरूपमात्रोपलक्षणपरं वा। विशिष्टेति। अविच्छिन्नमूलत्वादिभिरित्यर्थः। प्रामाणिकत्यागोदाहरणं यथेति। अप्रामाणिकपरिग्रहे, यदीति। नन्वेतस्यैव साधनदूषणप्रयोजकत्वे प्रत्यक्षशब्दयोरुपन्यासाव्याप्तिरित्याह। इतरदपीति। छायामेवाह। तर्कमिति। न च प्रत्यक्षादावेव तर्कसहकारित्वम्, व्यभिचारादिति भावः॥

---

रघु॰ टी॰। तदर्थः कथान्तर्गतवाक्यविशेषार्थः। तत्र साधनदूषणयोर्मध्ये। व्याप्तीति। गमकतौपयिकेत्यर्थः। पञ्चकेति परमतानुसारेण, तेनान्वयव्यतिरेकिण एवानुमानत्वोपगमात्। यथाद्वयानन्तरं* पर्वतो वह्निमानिति पूरणीयम्। अविच्छिन्नमूलत्वादिर्विशेषः। जलाशयत्वे पक्षसत्त्वादीनां त्रयाणां व्यतिरेकः। स्वप्रतिक्षेपकेति। यद्यपि तदाक्षेपकेऽसाधकत्वाविनाभावोपि नास्ति, तथापि तत्त्वस्योद्भटत्वात्पृथगुपन्यासः। नन्वीदृशयोरेव साधनदूषणयोः कथायामुपन्यासे कथं प्रत्यक्षाद्युपन्यास इत्यत आह। इतरदपीति। छायामाह। तर्कमिति॥

---

* यथाशब्दद्वयानन्तरमित्यर्थः।

एवं व्यवस्थिते लोकव्यवहारे साधनोपक्रमेण यदि विचारयसि, प्रतिज्ञैव तावन्नाङ्गं धारयति। तथाहि। न किञ्चिदस्ति न किञ्चित्सत्यं न किञ्चित्कारकं न किञ्चिद्विचारसहं न किञ्चित्सालम्बनं न किञ्चिद्दर्शनं न कश्चित्सिद्धान्त इत्यादौ स्वार्थप्रतिक्षेपस्तावद्दुरुद्धरः(१)। प्रतिज्ञापि हि न स्यान्न सत्या न कारिका न विचारसहा, तद्विज्ञानमपि न सालम्बनं, तत्फलमपि न दर्शनं, तदर्थोऽपि न सिद्धान्त इत्यापद्येत॥

शङ्क॰ टी॰। ननु भवत्वेतादृशो लोकव्यवहारस्तथापि सौगतादिभिरलौकिकत्वं वा शून्यताया विचारासहत्वादि वा यत् साध्यते तत्र को दोष इत्यत आह। एवमिति। न किञ्चिदस्तीत्यादौ किञ्चित्पदार्थः। प्रतिज्ञापि चेत्तदाह। प्रतिज्ञापि हीति॥

भगी॰ टी॰। न किञ्चिदस्तीत्यादिप्रतिज्ञास्तु हेतवो दृष्टान्ताश्चाग्रे भविष्यन्तीति व्याघातमेवाह। यदि हीति॥

रघु॰ टी॰। अथ लोकव्यवहारसिद्धपरिकरशुद्धैरेव विचारादीहितमस्मदीयं सेत्स्यतीत्यत आह। एवमिति। न किञ्चिदस्ति ज्ञेयत्वात् रज्जुसर्पवत् न किञ्चित्सत्यं ज्ञानत्वाद्रज्जुसर्पज्ञानवत्, न किञ्चित्कारकमसत्त्वाच्छशविषाणवत्, न किञ्चिद्विचारसहं

(१) दुर्वार इति १ पु॰ पा॰।

विकल्पानुपपत्तेः दर्पणमुखवत्, सत्त्वे बाध्यत्वस्यासत्त्वे व्यवहार्यत्वस्य चायोगात्, न किञ्चित्सालम्बनं प्रत्ययत्वात् स्वप्नप्रत्ययवत्, न किञ्चिद्दर्शनं कर्मानुपपत्तेः क्रियानुपपत्तौ छिदावत्, न कश्चित् सिद्धान्तः मिथो व्याघातात्, मिथः शोषकनिर्वापकानलसलिलवत् । प्रतिज्ञापौत्यादि । न सत्येति । सत्यत्वमबाध्यत्वम् । सत्यत्वं प्रमात्वमित्यभिप्रायेण तु प्रतिज्ञाज्ञानं वक्तव्यम् । तद्विज्ञानं प्रतिज्ञाज्ञानम् । तत्फलं प्रतिज्ञाजन्यं फलम् । दर्शनं दृष्टिः ॥

---

इष्यत एवेदमिति चेन्न, इच्छामात्रेण व्याघातानिवृत्तेः । यदि हि न (ज्ञातं)[1] किञ्चिदस्तीत्यादिप्रतिज्ञार्थः प्रतिज्ञां स्पृशेत् कथमयमर्थः प्रत्येतव्यः । न चेत् कथं सानुपपन्ना । तदनुपपन्नत्वे च कथं पुनः प्रतिज्ञार्थ उपपद्यते । तदिदमायातं स्वविषमूर्छिता भुजङ्गी आत्मानमेव[2] दशतीति ॥

शङ्क० टी० । कथमयमिति । तत्र प्रतिज्ञायां असत्त्वे भवत्प्रतिज्ञार्थः कथं प्रत्येतव्य इत्यर्थः । अथ प्रतिज्ञां प्रतिज्ञार्थोऽपि न स्पृशति तदा न किञ्चिदस्तीत्यादिप्रतिज्ञार्थः कथं सिद्ध्येत्, प्रतिज्ञाया एव सत्त्वात्, सत्यत्वात् कारकत्वादिचारसहत्वात् सालम्बनत्वात् दर्शनत्वात् सिद्धान्तत्वाच्चेत्याह । न चेदिति ॥

---

(१) ज्ञातमिति १ पुस्तके नास्ति ।

(२) स्वात्मानमपि इति १ पु० पा० ।

भगी० टी०। न किञ्चिदस्तीत्यभ्युपगमे प्रतिज्ञाऽस्ति न वा, अन्त्ये कथमिति। एतदर्थप्रतीतौ प्रतिज्ञायाः कारणत्वादित्यर्थः। आद्ये न चेदिति॥

---

रघु० टी०। व्याघातं विवृणोति। यदि हीति। प्रतिज्ञां स्पृशेत् स्वरूपतोऽर्थतश्च। अर्थतः स्पर्शे प्रतिज्ञार्थस्यासत्यत्वात् तद्विपरीतस्य सत्यत्वम्, अस्पर्शे तु तस्यैव सत्यत्वात् कथं सर्वासत्यत्वम्। प्रतिज्ञायाः साधनानङ्गत्वे चोदाहरणादेः सत्त्वे बाधोऽनैकान्तिकत्वं वा, असत्त्वे तु न तदर्थसिद्धिरिति। एवं यदि सर्वं ज्ञानमप्रमेति ज्ञानमप्रमा, तर्हि सिद्धं ज्ञानप्रामाण्यम्, अथ प्रमा, न तर्हि सर्व-ज्ञानाप्रामाण्यमित्यादिकमुन्नेयम्॥

---

तत्त्वत इति विशेषणाददयमदोष इति चेत्, तद्विचारो वा स्यात् लोकमर्यादातिक्रमो वा। प्रथमः पूर्वमेव निरस्तः, तस्य प्रतिज्ञारूपतया कुलीरस्येव स्वप्रसूतयुक्त्यपत्येनैव प्रतिहतत्वात्। द्वितीये तु स्वच्छायातिक्रमवत् स एव व्याघातः। यदि हि लोकमर्यादातिक्रमो न विचारस्वरूपस्थितिः ततस्वरूपस्थितिश्चेन्न तदतिक्रम(१) इत्यर्थः।

शङ्क० टी०। ननु प्रतिज्ञायाः सत्त्वासत्त्वादिकं व्यावहारिकं स्वीकुर्म एव तेन न किञ्चिदस्तीत्यादिप्रतिज्ञायां तत्त्वत इति विशेषणं

(१) इति प्रतिषेध्यसिद्ध्यसिद्धिभ्यां व्याघातात् इति २ पु० पा०।

देयमित्याह । तत्त्वत इति । तत्त्वपदे प्रकृतिभूते तच्छब्दार्थं पृच्छति । तदिति । पूर्वमेवेति । विचारस्य सत्त्वे न सर्वासत्त्वं तदसत्त्वेऽपि न तदधीनं सर्वासत्त्वं विचारस्यैव दुर्विचारत्वादित्यर्थः । तदेवाह । तस्येति । प्रतिज्ञाद्यात्मकस्य विचारस्य सर्वासत्त्वसाधकस्य प्रतिज्ञादिसत्त्वेनैव निरस्तत्वात् यथा कुलीरः स्वापत्यनाश्य इत्यर्थः । स एवेति । विचारसत्त्वासत्त्वविकल्पघटित एवेत्यर्थः । एतदेव स्फुटयति । यदि हीति । विचारस्य लोकमर्यादायत्ततया तदतिक्रमे दुर्विचारत्वं सुविचारत्वे च न तदतिक्रम इत्यर्थः ॥

---

भगी० टी० । तत्त्वत इति । तत्त्वतो न किञ्चिदस्तीति प्रतिज्ञेति न व्याघात इत्यर्थः । तत्त्वशब्दप्रकृतितच्छब्दार्थं विकल्पयति । तद्धीति । तस्येति । विचारस्य प्रतिज्ञादिरूपस्य सत्त्वासत्त्वाभ्यां व्याघात इत्यर्थः । स एवेति । विचारसत्त्वासत्त्वघटित इत्यर्थः । एतदेव स्फुटयति । यदिति ॥

---

रघु० टी० । व्यावहारिकं सत्त्वादिकमङ्गीकुर्मेहे न तु तात्त्विकमित्याशङ्कते । तत्त्वत इति । तदिति तदा तत्त्वपरामर्शः । व्याघातं विवृणोति । यदि हीति ॥

---

**प्रतिषेध्यसिद्ध्यसिद्धिव्याघातश्च । यदि हि प्रतिषेध्यं सिद्धं नात्यन्ताय प्रतिषेधः । न चेन्नतराम् । लोकव्यवहारसिद्धमिति चेत्, सिद्धमेव हि तर्हि, न ह्यन्य-**

तोपि किञ्चित्सिद्ध्यति । नायमबाध्यो व्यवहार इति चेत्, न, यदि नैकत्र, अन्यत्रापि तथाभावप्रसङ्गात् । सर्वत्र बाध्यत इति चेत्, तदपेक्षसिद्धिना व्यवहारेणानपेक्षेण वा अव्यवहारेणैव वेति । यस्तावत्तदपेक्षसिद्धिः स कथं तमेव बाधेत, न ह्यनुष्णत्वानुमानेनोष्णत्वग्राहिप्रत्यक्षबाधो लोके । द्वितीयस्त्वसम्भवी, न हि निषेधकं प्रमाणं निषेध्यसिद्धिनिरपेक्षं भवितुं क्षमते । तृतीये तु तद्विपरीतापत्तिः, विचारबाध्यत्वमुपक्रम्याविचारेण मुद्रणात्[१] ॥

शङ्क० टी० । प्रतिज्ञासु दोषान्तरमाह । निषेध्येति । प्रथम प्रतिज्ञायां निषेध्यं सत्त्व द्वितीयादिषु सत्यत्वादि, तत् सिद्धञ्चेत् कथमत्यन्तनिषेधः । न सिद्धञ्चेत्तदा कथं निषेधः, प्रमितप्रतियोगिकस्यैव निषेधत्वात् इत्यर्थः । एतदेव स्फुटयति । यदि चेति । ज्ञानमात्रमभिप्रेत्याह । लोकेति । यदि लोकव्यवहारः प्रमाणं तदाह । सिद्धमिति । एतदेवाभिप्रेत्याह । नहीति । असत्ख्यातिमभिप्रेत्याह । नायमिति । अन्यथाख्यातिमभिप्रेत्याह । यदिति । एकत्र शुक्तौ रजतत्वञ्चेदबाध्यं अन्यत्र वणिग्वीथ्यां तथाभावादबाध्यत्वमसम्भवादित्यर्थः । अपिरभ्युपगमे । अत्यन्तासत्त्वमभिप्रेत्याह । सर्वत्रेति । तदपेक्षेति । यद्बाध्यत्वेनाभिमतं तत् सापेक्षं वा बाधकत्वाभिमतं प्रमाणं तदनपेक्षं वा अप्रमाणमेव वा तदिति विकल्पार्थः । व्यवहारपदं प्रमाणपरम् । आद्यं दूष-

(१) विचारबाध्यत्वेन संहरणात् इति १ पु० पा० ।

यति । यस्तावदिति । न हीति । न ह्युपजीवकेनोपजीव्यं बाध्यते तत्रोदाहरणमाह । न हीति । श्रोत्रत्वसिद्धिमन्तरेणानौत्सुक्यस्योपसंहर्त्तुमशक्यत्वात् । द्वितीयं निराचष्टे । द्वितीयस्त्विति । प्रतियोगिप्रसिद्ध्यर्थमवश्यं तदपेक्षायाः सत्त्वात् । तदेवाह । न हीति । विपरीतेति । बाध्यत्वाभिमतस्यैव सिद्धिरेवं सति स्यात् न ह्यप्रमाणेन किञ्चिद्बाध्यते । एतदेवाह । विचारेति । विचारबाध्यं विश्वमित्यभिधायाविचारबाध्यत्वेन पर्यवसानात् ॥

---

भगी० टी० । लोकव्यवहारो यदि प्रमाणं तत्राह । सिद्धमेवेति । ननु प्रतिषेधे प्रतिषेध्यस्य ज्ञानमात्रं हेतुर्न तु प्रमेत्याह । नायमिति । यदि प्रतिषेध्यं विशेषे नास्तीति प्रतिषेधार्थस्तदाऽर्थाद्देशान्तरेऽस्तीत्यायातमित्याह । यदीति । अपिशब्दोऽभ्युपगमे । ननु चासत्ख्यातिपक्षमाश्रित्य सर्वत्र निषेध इति न तथात्वमित्याह । सर्वत्रेति । न ह्यनुष्णत्वेति । यद्यपि न किञ्चिदस्ति ज्ञेयत्वादित्यस्योपजीव्यं व्याप्त्यादिज्ञानं तदनेन न बाध्यते, तथापि यदनुमानात् प्राङ् नियमतः प्रत्ययान्तरमुत्पद्यते तेनैव तस्य बाध इति भावः । मुद्रणात् पर्यवसानादित्यर्थः ॥

---

रघु० टी० । तत्त्वं परमार्थः, तथा च परमार्थतो न किञ्चिदपि सदित्यादिकं प्रतिज्ञार्थं इत्यत आह । प्रतिषेध्येति । व्याघातं विवृणोति । यदि हीति । सिद्धं प्रमितम् । नतरामिति । निषेध्यप्रमाया निषेधबुद्धिहेतुत्वादिति भावः । निषेध्यज्ञानमात्रं तथेत्याशयेनाऽऽशङ्कते । लोकेति । अबाध्यादेव

लोकव्यवहारादर्थसिद्धिरन्यथाऽतिप्रसङ्गादित्याशङ्कते । नायमिति । किमयं व्यवहारः क्वचिदेव बाध्यः सर्वत्र वा, आद्ये यदीति । अपिरभ्युपगमे, अन्यत्रा(प्य)भ्युपगन्तव्य इत्यर्थः । द्वितीयं शङ्कते । सर्वत्रेति । तदपेक्षसिद्धिना निषेध्याधीनसिद्धिना । व्यवहारेण प्रमाणेन । बाध्यत इत्यनुषज्यते । यस्तावदिति । प्रतियोगिज्ञानाधीनप्रवृत्तिकं निषेधकं प्रमाणं नोपजीव्यप्रतियोगिज्ञानबाधकमित्यर्थः । अपि च हेतोर्व्याप्तिग्रहो निषेधमात्रेण सत्त्वादिसम्वलितनिषेधेन वा । आद्ये न ततः सत्त्वादिनिषेधः । द्वितीये तूपजीव्यविरोधः । एवं निषेधकमपि प्रमाणं निषेधमात्रमवगाहते सत्त्वादिसम्वलितनिषेधं वा । आद्ये न सत्त्वादिनिषेधो मानाभावात् । द्वितीये सत्त्वादेर्नात्यन्तिको निषेधः प्रमाणसिद्धत्वात् । विपरीतापत्तिं विवृणोति । विचारेति । मुद्रणात् विचारबाध्यत्वस्यावरणात् । पर्यवसानादित्यर्थ इत्यन्ये ॥

---

न चैतदपि निर्व्यूढम् । स ह्ययत्नसिद्धमध्यस्तं वा स्यात् अनिष्टिमात्रं वा । आद्ये विरोधोऽसिद्धिश्च । द्वितीये लोकातिक्रमः, परानिष्ट्या त्वदनिष्टिबाधप्रसङ्गश्चेति ॥

शङ्क० टी० । न चेतदिति । स्वव्यवहारबाध्यत्वमपि न सिद्धमस्तीत्यर्थः । किञ्च व्यवहारोऽपि न तावत् व्यवस्थित इत्याह । स हीति । विशेषादर्शनसाधारणमध्यस्तमेव नाव्यवहारः तथा सति प्रत्यक्षप्रामाण्याऽभ्युपगमविरोध इत्याह । आद्य इति । असिद्धिर्म

प्रतिविचारबाध्यं जगदिति प्रत्यक्षस्यासिद्धेरित्यर्थः। लोकेति। न ह्यनिष्टिमात्रेण किञ्चिद्बाध्यत इति स्पष्टमित्यर्थः। दोषान्तरमाह। परेति। मयान्विष्यमाणायास्त्वदनिष्टेर्नापबाध्यत्वं स्यादित्यर्थः॥

भगी० टी०। एतदपि विचारबाध्यमानत्वमपीत्यर्थः। अवि-चारेण सत्त्वमेव कुतो न स्यादिति भावः। सोऽविचारः। विरोधः तथा सति प्रत्यक्षप्रामाण्याङ्गीकारादित्यर्थः। असिद्धिः सर्वथा विचारबाध्योऽयमर्थ इति प्रत्यक्षाभावादित्यर्थः। परेति। त्वदनिष्टिरपि परेण नेष्यतेति सापि बाध्येतेत्यर्थः।

रघु० टी०। एतत् [1]विचारबाध्यत्वम्। सः अविचारः। विरोधः अध्यक्षस्यैव सत्त्वाभ्युपगमात्। असिद्धिरपि अध्यक्षेण सत्त्वादेरेवावगाहनात्। त्वदनिष्टीति पक्षस्यापि सङ्ग्राहकम्॥

एतेन हेतवो निरस्ताः। ते हि ज्ञेयत्वात् ज्ञानत्वात् असत्त्वात् विकल्पानुपपत्तेः प्रत्ययत्वात् कर्मानुपपत्तेः मिथो व्याघातादित्यादयः। एते हि सर्व एव स्वार्थ-क्रियाप्रतिक्षेपिकां युक्तिमाक्षिपन्ति, निषेध्यसिद्धि-ञ्चापेक्षन्ते। अनैकान्तिकौ च प्रथमद्वितीयौ स्वफल एव व्यभिचारात्, असिद्धौ तृतीयचतुर्थौ, अनैकान्ति-कश्च पञ्चमः पूर्ववत्, असिद्धौ व्याघातेनानैकान्तिकश्च षष्ठः, असिद्धोऽनैकान्तिकश्च सप्तमः, सर्व एव काला-त्ययापदिष्टा इति॥

(१) एतदविचारेति २ पु० पा०।

शङ्क० टी०। एतेनेति। व्याघातेनैवेत्यर्थः। तदित्थं प्रयोग-परिशुद्धिर्नकिञ्चिदस्ति ज्ञेयत्वात् रज्जुसर्पवत्, न किञ्चित् सत्यं ज्ञानत्वात् रज्जुसर्पज्ञानवत्, न किञ्चित् कारकमसत्त्वात् शशविषाण-वत्, न किञ्चित् विचारसहं विकल्पानुपपत्तेः दर्पणमुखवत्, न किञ्चित् सालम्बनं प्रत्ययत्वात् स्वप्नप्रत्ययवत्, न किञ्चिद् दर्शनं कर्मत्वानुपपत्तेः स्वच्छेद्यानुपपत्तौ स्वच्छेदावत्, न कश्चित् सिद्धान्तः मिथो व्याघातात् मिथः शोषकनिर्वापकानलसलिलवत्। सर्व-हेतूनां साधारणं दोषमाह। स्वार्थेति। हेतूनां योऽर्थस्तत्प्रति-क्षेपिकामपवादिकां युक्तिमाक्षिपन्तीत्यर्थः। तथाहि। ज्ञेयत्वमपि ज्ञेयं न वा, आद्ये हेतुरपि न स्यात्, तस्यापि ज्ञेयत्वात्। अन्त्ये हेतुत्वानुपपत्तेः, न ह्यज्ञातस्य हेतुत्वमुपपद्यते। ज्ञेयं हि रज्ज्वा-दावारोपितं सर्पत्वं ह्यसदित्युभयसिद्धं। तदुक्तम्।

"मायामात्रमिदं विश्वं जगत् स्थावरजङ्गमम्"। इति।

ज्ञानत्वादिति। रज्जुसर्पत इत्यर्थः। निषेध्येति। प्रतिज्ञापदेषु यन्निषेध्यं सत्त्वं सत्यत्वं सालम्बनत्वं कारकत्वं दर्शनत्वं सिद्धान्तत्वं वा, तच्च यदि न क्वचित् सिद्धं तदा तदभावोऽप्यसिद्ध एवेति व्याप्तिग्रहाभावात् व्याप्यत्वासिद्धा एव हेतव इत्यर्थः। विशेषदोषमाह। अनैकान्तिकाविति। अनुमितिरस्ति तज्ज्ञया चेति अनुमितिः सत्या ज्ञानञ्चेति साध्याभाववत्त्वानुमिता त्वफल एवेत्यर्थः। न चेदेतस्या अनुमितेः सत्त्वं सत्यत्वमस्ति तदा सिद्धं नः समीहितमिति भावः। असत्त्वादिति तृतीयो विकल्पानुप-पत्तेरिति चतुर्थस्त्वसिद्धावित्याह। असिद्धाविति। बाह्यसत्त्वस्य साधनात् विकल्पानाञ्चोपपादनादिति भावः। प्रत्ययत्वादिति

पञ्चमस्य हेतोः स्वफल एव व्यभिचारादित्याह । अनैकान्तिक इति । कर्मत्वानुपपत्तेरिति षष्ठहेतुं दूषयति । असिद्ध इति । कर्मत्वस्य ग्राह्यत्वस्योपपादनादसिद्धत्वं स्वफल एव चानैकान्तिकत्वं तस्य त्वया सविषयत्वाभ्युपगमात् ज्ञानविषयस्यैव ज्ञानकर्मत्वात् न किञ्चिद् दर्शनमित्याकारमेव त्वद्दर्शनं तस्य च तदेव कर्मेति व्याघातः । मिथोव्याघातादिति । सप्तमं हेतुं दूषयति । असिद्धोऽनैकान्तिकश्चेति । एकस्यैव सिद्धान्तस्य प्रामाणिकत्वादन्यस्य तद्विरोधिनः प्रमाणाभासमूलकत्वात् क्व मिथो विरोधः । न कश्चित् सिद्धान्त इत्ययमेव च सिद्धान्त इति हेतुरयं अनैकान्त इत्यर्थः । कालात्ययापदिष्टा इति । सर्वसत्यत्वादेरेव साध्याभावस्य प्रमाणसिद्धत्वादित्यर्थः । एतच्च दृष्टान्तानां दूषणे व्यक्तीभविष्यति ॥

———

भगी० टी० । प्रतिज्ञास्तु क्रमेण हेतूनाह । ते हीति । विकल्पेनेति । सत्त्वासत्त्वयोरुभयत्र दोषादित्यर्थः । कर्मेति । कर्मलक्षणानुपपत्तेर्दृश्याभावेन दर्शनाभावादित्यर्थः । मिथ इति । शब्दनित्यत्वानित्यत्वाभ्यामित्यर्थः । स्वफल एवेति । अनुमानस्य फलमसत्त्वानुमितिः, तस्या असत्त्वे विषयस्य सत्त्वमेव स्यादिति तस्याः सत्त्वं वाच्यमतस्तत्रैवानेकान्त इत्यर्थः । पूर्ववदिति । स्वफल एवेत्यर्थः । असिद्ध इति दर्शनकर्मतोपपादनादित्यर्थः । व्याहत इति । दर्शनकर्मत्वानुपपत्तेरेव दर्शनकर्मत्वाभ्युपगमादित्यर्थः । अनैकान्तिकश्चेति । स्वफल एवेत्यर्थः । असिद्ध इति । एकस्यैव प्रामाणिकत्वाभ्युपगमेन विरुद्धे तात्पर्याभावादित्यर्थः ॥

———

रघु० टी० । एते हेतवः । स्वार्थस्य स्वसाध्यार्थस्य सर्वासत्त्वादेः प्रतिक्षेपिकां युक्तिमुद्भिरन्ति । असतो हेतुत्वानुपपत्त्या हेतोरेव सत्त्वात् । असत्यस्यानुमितिहेतुत्वानुपपत्त्या हेतुज्ञानस्यैव सत्यत्वात् । हेतुप्रयोगस्य हेतुज्ञानं प्रति तस्य चानुमितिं प्रति कारणत्वात् अन्यथा प्रयोगवैयर्थ्यात् । विचारासहस्य हेतुत्वानुपपत्त्या हेतोस्तज्ज्ञानस्य च विचारसहत्वात् । हेत्वाद्य[1]नालम्बनस्य प्रत्ययस्यानुमितिहेतुत्वानुपपत्त्या हेत्वादिप्रत्ययानां हेत्वाद्यालम्बनत्वात् । हेतुसाध्यदृष्टेरेव दर्शनत्वात् अन्यथा हेत्वाद्यसिद्धेः । हेतुसाध्यादेरेवाभ्युपगम्यमानत्वेन सिद्धान्तत्वात् । निषेध्येति । निषेध्यस्य सिद्धौ नात्यन्तिकस्तन्निषेधः असिद्धौ च न तदभावस्य सिद्धिः न वाऽन्वयतो व्यतिरेकतो वा व्याप्तिग्रह इति । अनैकान्तिकाविति । अभावे साध्ये प्रतियोगिसामानाधिकरण्यमेवानैकान्तिकत्वमित्यर्थः । स्वस्य हेतोः फलेऽनुमितौ । तस्या असत्त्वे साध्यासिद्धिः, असत्यत्वे च विपरीतापत्तिः । तृतीयस्यासिद्धिरप्रसिद्धिः। चतुर्थस्य स्वरूपासिद्धिः बाह्यस्याबाध्यत्वेन सत्यत्वोपपत्तेः। पूर्ववत् स्वफल एव । कर्म हि विषयो वा क्रियाजन्यफलशालि वा धात्वर्थतावच्छेदकफलशालि वा । आद्ये तदनुपपत्तिरसिद्धा, ज्ञानमात्रस्य सद्विषयकत्वात् । द्वितीये भागासिद्धिः प्रायशो ज्ञेयस्य ज्ञानजन्योपादानादिशालित्वात् । तृतीये तु ज्ञानमात्रस्यैवसज्ञानत्वापत्तौ अज्ञातस्य हेतोर्गमकत्वे व्याघातः साध्यस्यासिद्धिप्रसङ्गश्च । अथ तयोर्ज्ञानमुपेयते तदा तत्रैव व्यभिचार इति ।

(१) हेत्वाद्यालम्बनस्य इति ग पु० पा० ।

मिथोव्याघातश्च मिथोबाध्यत्वं वा मिथोविरोधित्वमात्रं वा। आद्ये असिद्धिः प्रामाणिकस्य पक्षस्याप्रामाणिकेनेतरेणाबाधनात्। द्वितीये व्यभिचारः। सत्पक्षविरुद्धपक्षस्य त्वत्सिद्धान्तत्वादिति॥

एतेन दृष्टान्ता अपि विमर्शनीयाः। ते हि रज्जुसर्पवत् तज्ज्ञानवत् शशविषाणवत् दर्पणमुखवत् स्वप्नप्रत्ययवत् च्छेद्यानुपपत्तौ च्छिदावत् मिथः शोषकनिर्वापकानलसलिलवदित्यादयः। येन च तत्र सर्पस्यासत्त्वं तज्ज्ञानस्य मिथ्यात्वं शशविषाणस्याकारकत्वं दर्पणमुखस्य विचारासहत्वं स्वप्नज्ञानस्य निरालम्बनत्वं च्छेद्यानुपपत्तौ च्छिदानुपपत्तिश्चावधारितानि तेनैव तत्र रज्जोः सत्त्वं असर्पज्ञानस्य सत्यत्वं शशस्यान्यत्र गवादेर्विषाण एव कारकत्वं दर्पणस्य विचारसहत्वं अस्वप्नज्ञानस्य सालम्बनत्वं च्छेद्यनिष्ठा च्छिदा सिद्धौ ज्ञानं कर्म चोपपादितानि। तदनुपपत्तौ वा साध्यविकलतया सर्व एवैते दृष्टान्ताभासाः। अन्तिमस्तु साधनविकलः। सिद्धान्तानां व्याघातः परस्परविरहरूपत्वलक्षणः जलानलयोस्तु वध्यघातकस्वभावत्वलक्षणः, न च शब्दसाम्येनानुमानमित्येषा दिक्।

शङ्क० टी०। तदेवाह। ते हीति। व्यक्तमन्यत्। शशस्यान्यत्र लोमादौ। गवादेः स्वविषाण एव कारकत्वादित्यर्थः। शब्दसाम्येनेति। अन्यथा गोत्वादीनामपि विषाणित्वं स्यादिति भावः॥

भगी॰ टी॰ । एतेन स्वार्थप्रतिक्षेपादिनेत्यर्थः । तदनुपपत्ताविति । यदि रज्ज्वादेः सर्पादित्वं तात्त्विकं तदा साध्यविकला दृष्टान्ता इत्यर्थः । साधनेति । पक्षदृष्टान्तसाधारणस्यैकस्य मिथोव्याघातस्याभावादित्यर्थः ॥

रघु॰ टी॰ । मिथ्यात्वं प्रमात्वविरहः । स्वप्नज्ञानस्य निरालम्बनत्वमित्यभ्युपेत्य, वस्तुतस्तस्याप्यन्यथाख्यातिरूपतया सालम्बनत्वात् सालम्बनस्याप्रसिद्धौ साध्याप्रसिद्धिः । तेनैव तत्तुल्येन वा । तत्र अन्यत्र वा । रज्जोः अन्यस्य वेत्यादि नेयम् । तदनुपपत्तौ क्वचिदपि सत्त्वाद्यप्रसिद्धौ साध्यविकलतया सत्त्वाद्यभावरूपसाध्यवत्त्वेनानिश्चिततया ॥

———

अस्तु तर्हि दूषणोपक्रमेण विचार इति चेत्, तमपि पश्यामः कीदृशोऽसाविति । नेदं स्थूलं विरुद्धधर्मासंसर्गप्रसङ्गात्, नास्थूलं तथा प्रतिभासप्रसङ्गात्, न परानपेक्षं सदातनत्वप्रसङ्गात्, न परापेक्षं सदसद्व्यतिरेकप्रसङ्गात्, नैकं तथा प्रतिभासप्रसङ्गात्, नानेकं भेदव्यवस्थितिप्रसङ्गात्, न च व्यापकं निष्क्रियत्वप्रसङ्गात्, नाव्यापकं अविधेयत्वप्रसङ्गादित्यादिरिति चेन्न। मिथोविरोधमूलशैथिल्येष्टापादनानुकूलत्वविपर्ययापर्यवसानैस्तर्काभासत्वात् ।

शङ्क० टी० । अवयविनिरासे सर्वप्रत्यक्षविलोपे तन्मूलकसर्वप्रमाणविलोपे स्वप्रकाशज्ञानात्मकं जगत् स्यादथ वा शून्यतैव स्यात् तदुक्तम् "सर्वाग्रहणमवयव्यसिद्धे"रित्यभिप्रायेण परोऽवयविनिरासाय प्रतिजानीते। नेदं स्थूलमिति। अयमेव च दूषणोपक्रमो यदस्मात् सिद्धान्तव्यतिरेकस्थापना प्राथमिकी। तत्रावयविनि विप्रतिपत्तय: द्रव्यत्वं अणुत्वव्याप्यं न वा परमाणु: स्वभिन्नोपादेयोपादानं न वा मूर्त्तत्वं अणुत्वव्याप्यं न वा एवं स्पर्शवत्त्वादि पचौक्त्योह्यम् इदं घटादि यदि स्थूलं स्याद्विरुद्धधर्मासंसृष्टं स्यादित्यर्थ:। विरुद्धधर्मस्य ग्रहणादेर्वर्त्त्यमाणत्वादिति भाव:। तथा प्रतिभासेति। अस्थूलत्वेन प्रतिभासप्रसङ्गादित्यर्थ:। परस्परविरोधे हि न प्रकारान्तरस्थितिरिति भाव:। सदातनेति। अहेतुकं हि सदेव वा यथा आकाशं असदेव वा यथा शशविषाणमिति भाव:। सदसदिति। न हि घट: कारणव्यापारात् प्राक् सन्नेव दण्डादिभिर्जन्यते नाप्यसन् असत्त्वाविशेषेण घटकारणात् पटोऽपि स्यादित्यर्थ:। नैकमिति। रूपादिसमुदायो हि घटोऽनुभूयते एकत्वे तु रूपादिविनाकृतं घटमात्रं प्रतिभासेतेत्यर्थ:। भेदेति। भेदव्यवस्थायाश्च दूष्यत्वादिति भाव:। अविधेयत्वेति। देशभेदेन विधिनिषेधो ज्ञान एव प्रतिबन्धसिद्धि:। असत्त्वादिति। सत्त्वस्य व्यवस्थापयितुमशक्यत्वादित्यर्थ:। विकल्पानुपपत्तेरिति। विश्वमिदं सदसदुभयात्मक मनुभयात्मकं वा आद्यमपि नित्यमनित्यं वा नित्यमप्येकमनेकं वा एकमपि भावात्मकमभावात्मकं वा इति विकल्पेषु विनिगमकप्रमाणाभावादनुपपत्ति:। कर्मत्वानुपपत्तिरिति। परमसवेत-

क्रियाफलभागिता हि कर्मता, सा च दृश्यकर्मणि नैयायिकैर्नाभ्युपगम्यते मीमांसकैः प्राकट्याभ्युपगमेपि स्वभावनियमाभावादुपकारोपि दुर्घट इत्यादिदोषदुष्टमेव तथा च दृश्याभावे दर्शनाभाव इति सिद्धम्। मिथोव्याघातादिति। वादिनां परस्परं व्याघाताभ्युपगमात् सिद्धम्। एतेषां हेतूनां साधारणं दोषमाह। एते हीति। हेतूनां हेत्ववयवानां यः स्वात्मज्ञेयत्वज्ञानत्वादि, तस्यापि प्रतिक्षेपोऽमीभिर्हेतुभिः क्रियते न वा इत्यर्थः। विधिनिषेधोभयविषयत्वं अव्यापकत्वं विधेयत्वन्तु विधिमात्रविषयत्वं तथा चोभयविषयत्वे ह्येकमात्रविषयत्वमित्यर्थः। यद्वा इह घटोस्ति उपलभ्यमानत्वादित्यनेन प्रकारेण घटस्य विधेयत्वं न स्यात्। अव्यापकत्वाद्व्याप्यप्रतियोगित्वादिति कल्पम्। मिथोविरोधः परस्परप्रतिक्षेपकत्वम्। मूलशैथिल्यं तर्कमूलभूतव्याप्तिविरहः। इष्टापादनं वादिस्वीकृतार्थापादनम्। अनुकूलत्वं प्रतिवाद्यभ्युपगतप्रमाणोपष्टम्भकत्वम्। विपर्ययापर्यवसानं व्यतिरेकव्याप्त्यभावः। यद्यपि मूलशैथिल्यनान्तरीयकमेतत। तथाप्यन्वयव्यतिरेक(रूप)विषयभेदेन दोषद्वैधं द्रष्टव्यम।

---

भगी॰ टी॰। यद्यप्यवयविनिराकरण न विज्ञानवादिनयानुकूलं न वात्मनि बाधकं, तथाप्यवयविनि निरस्ते तद्रूपत्वे(वि)(व्य)सिद्धिकप्रत्यक्षाभावात्तन्मूलकमानान्तरस्याप्यभावे स्वप्रकाशं ज्ञानमात्रमवशिष्यते शून्यता वेत्यवयविनि बाधकमाह। नेदमिति। यद्यपि परस्य स्थलाप्रसिद्धौ न तन्निषेधः, तथापि द्रव्यत्वमणुत्वव्याप्यं

न वा परमाणुः स्वभिन्नोपादेयोपादानं न वेति संशयः। इदं घटादि यद्यवयवि स्यात् विरुद्धधर्मासंसृष्टं स्यात्, न चैवम्, ग्रहणाग्रहणादिविरुद्धधर्मसंसर्गस्य वक्ष्यमाणत्वादित्यर्थः। न च स्थूलास्थूलाभ्यामन्यः प्रकारोऽस्तीति भावः। एवमग्रेऽपि। सदातनत्वेति। अहेतुकाकाशवच्छशशृङ्गवद्वा नित्यं स्यादित्यर्थः। सदसदिति। घटः सन्नेव न स्वकारणेन जन्यते सिद्धत्वात्, नाप्यसन् असत्त्वात्, पटवत्, अन्यथा त्वसत्त्वाविशेषादन्यदपि जन्येतेति जन्यं सदसद्भिन्नं स्यादित्यर्थः। न चापाद्यप्रसिद्धिः, इदं सदसदात्मकं यदि सापेक्षं स्यात् असत् स्यादित्यर्थः। तथेति। घटपटादीनामेकात्मतानुभवापातादित्यर्थः। भेदेति। अनेकत्वे भेदव्यवस्थापत्तिः सा चाग्रे निरस्येत्यर्थः। अविधेयत्वेति। देशभेदेन सत्त्वासत्त्वव्यापकत्वं, तथा चैकदा घटादेः क्वचिद्विधेयत्वं न स्यात् न चैकदा विधिनिषेधात्मकत्वमेकस्य सम्भवतीत्यर्थः। मिथोविरोधः अन्योन्यार्थप्रतिक्षेपकत्वम्। मूलशैथिल्यं तर्कमूलव्याप्यभावः। अनुकूलत्वं अस्मदभ्युपगतार्थानुग्राहकत्वम्। विपर्ययापर्यवसानं व्यतिरेकव्याप्यभावः॥

---

रघु० टी०। अवयविनिरासे सर्वप्रत्यक्षविलोपे तन्मूलकप्रमाणान्तरासम्भवात् स्वप्रकाशज्ञानमात्रमवशिष्यते, तथा च सूत्रं सर्वाग्रहणमवयव्यसिद्धेरित्याशयेनावयविनं निरस्यति। नेदमित्यादिना। इदं घटादि बाह्यं, साम्वृतौ निषेध्यादिसिद्धिरिति भावः। विरुद्धेति। दर्शयिष्यते च विरुद्धधर्मसंसर्ग इति भावः।

तथाऽस्थूलत्वेन[१]। सदातनत्वमादिमत्त्वविरहः। सदसदिति। सतो गगनादेरसतश्च शशविषाणादेः परापेक्षत्वविरहात् ।

कारणेन न सदेव साध्यते सतः साध्यत्वायोगात् नाप्यसत् असत्त्वाविशेषेण पटादिकारणात् घटादिसिद्धिप्रसङ्गादित्यन्ये ।

नैकं परस्परमभिन्नम् । तथा परस्पराभिन्नत्वेन । भेदेति । भेदस्य स्वरूपाद्यात्मनोऽग्रे निरस्यत्वात् । व्यापकत्वं सर्वत्र सत्त्वम् । अव्यापकत्वं क्वचिदसत्त्वम् । विधेयत्वं सत्त्वेन प्रमापणीयत्वम् । न चासतस्तत्सम्भवतीति हृदयम् । मिथोविरोधः परस्परार्थप्रतिक्षेपकत्वम् । सूत्रगर्भित्वं, तर्कस्य सूत्रमापाद्यापादकव्याप्तिनिश्चयापादकाभ्युपगमौ तर्कगर्भित्वं तदन्यतरव्यतिरेकः । अनुकूलत्वं वाद्यभ्युपगतार्थसिद्ध्यनुकूलत्वम् अस्थूलत्वादिषु तथाप्रतिभासादिप्रसङ्गानां विपर्ययैः साध्यानां स्थूलत्वादीनां वादिनाऽभ्युपगतत्वात् । यत्रेष्टापादनं तत्रापाद्यव्यतिरेकस्यापक्षधर्मत्वात् विपर्ययापर्यवसानं प्रतिबन्धस्यासिद्धेरनिश्चयात्, क्वचिदापादकानभ्युपगमाच्चेत्यपि द्रष्टव्यम् ॥

---

यथा हि नायं पर्वतो निरग्निः निर्धूमत्वप्रसङ्गात् नाप्यग्निमान् तथोपलब्धिप्रसङ्गात् इत्यनयोरेक आभासः, परस्परार्थ-प्रतिक्षेपकयोरुभयोरनाभासत्वानुपपत्तेः, तथाचापि। न ह्यस्थूलतादिनिषेधादन्यः स्थूलतादिविधिः तन्निषेधाद्वान्योऽस्थूलतादिविधिरिति।

(१) तथाऽनुकूलत्वेन इति २ पु० पा० ।

शङ्क० टी० । मिथोविरोधमाह । यथा हीति । तथेति । वह्निमत्तयेत्यर्थः । एकाभासतायां हेतुमाह । तयोरिति । अन्यथा वस्तुदैरूप्यतापत्तेरिति भावः । दृष्टान्ते विरोधमुक्त्वा दार्ष्टान्तिके तमाह । तथेति । विरोधमेवोपपादयति । न हीति ॥

---

शिथिलमूलाश्चैते प्रतिबन्धस्यासिद्धेः । सिद्धौ वा व्याप्यव्यापकतदधिकरणानां सिद्धौ विवादनिवृत्तेः ।

शङ्क० टी० शिथिलेति । पराभ्युपगममनुरुध्य, अन्यथा न परानपेक्षं न व्यापकमित्यनयोर्व्याप्तिमत्त्वात् सर्वोपप्लवो मन्दः स्यात् । पराभ्युपगममेव स्फुटयति । सिद्धौ वेति । विवादेति । व्याप्यादिसिद्धेरेव शून्यताद्यनुपपत्तेरित्यर्थः ।

---

भगी० टी० । विवादेति । व्याप्यादीनामेव वस्तुत्वे सर्वासिद्ध्यभावादित्यर्थः ।

---

इष्टापादनं च प्रथमे, अनुभूतावसिते स्थूले विरुद्ध-धर्मासंसर्गस्येष्टत्वात् । तथा च वक्ष्यामः ।

शङ्क० टी० । प्रथम इति । नेदं स्थूलमित्यत्र ॥

---

भगी० टी० । अनुभूतेति । पूर्वमनुभूते निर्विकल्पकविषयीकृते पश्चादवसिते सविकल्पकविषय इत्यर्थः । वक्ष्यामः विरुद्ध-धर्मासंसर्गमिति शेषः ॥

---

रघु॰ टी॰। प्रथममनुभूते पश्चादवमिते। अनुभवावमायौ निर्विकल्पकसविकल्पकौ। नेच्छाभावाद्बाधनिवृत्तिरत आह। तथा चेति। विरुद्धधर्मासंसर्गसाधकं प्रकारं वक्ष्याम इत्यर्थः॥

---

अनुकूलश्च द्वितीयः। अस्थूलताप्रतिक्षेपस्य स्थूलतोपलम्भानुग्राहकत्वात् तद्रूपताव्यवहारस्य तथा प्रतिभासव्याप्तत्वाच्च। एवं तृतीयोऽपि। अनपेक्षत्वप्रतिक्षेपस्य सापेक्षत्वोपलम्भानुग्राहकत्वात् अनपेक्षत्वविधेः सदातनत्वव्याप्तत्वाच्च। चतुर्थस्त्वप्रसिद्धव्यापकः, सदसत्त्वस्य विरोधेनैकत्र विधिवन्निषेधस्याप्यनुपपत्तेः। पञ्चमस्त्वनुकूल एव। अनेकत्वाभिमते वस्तुन्येकताप्रतिक्षेपस्यानेकतोपलम्भोपष्टम्भकत्वात् ताद्रूप्यव्यवहारस्य तथा प्रतिभासव्याप्तत्वाच्चेति। षष्ठस्त्विष्ट एवास्माकम्।

शङ्क॰ टी॰। स्थूलोपलम्भेति। तथा चास्मदनुकूलमेव साधितं स्यादित्यर्थः। द्वितीयस्य सत्तर्कत्वमाह। तद्रूपतेति। तद्रूपतायास्तथाप्रतिभासव्याप्तत्वात् इति वक्तव्ये व्यवहारपदं तद्रूपतादाढ्यार्थम्। प्रतिभासः कादाचित्को विवक्षित ऐश्वरो वा। एवमिति। अनुकूलः सत्तर्कश्चेत्यर्थः। अनुकूलत्वमाह। अनपेक्षत्वेति। सत्तर्कत्वमाह। अनपेक्षत्वविधेरिति। चतुर्थे आपाद्याप्रसिद्धिमाह। चतुर्थस्त्विति। अप्रसिद्धिमेव दर्शयति। सदसत्त्वस्येति। सत्त्ववद्विति एकत्वनिषेधो मानुकूल इत्यत आह। अनेकत्वाभिमत इति।

मत्तर्कत्वमाह। तादूप्येति । यदनेकं तत्र कदाचित्तथा प्रतिभासो भवत्येवेत्यर्थः। दृष्ट एवेति। अनेकत्वाभिमतं वस्तु भेदेन व्यवतिष्ठत एवेत्यर्थः ॥

---

भगी० टी० । अस्थूलतेति। स्थूले घटादावस्थूलताप्रतिक्षेपस्य स्थूलत्वानुभवानुकूलत्वादित्यर्थः । तद्रूपतेति। यत्र वस्तुतोऽस्थूलत्वं तत्र तथा प्रतिभासोऽप्यस्त्येवेति प्रकृते न किञ्चिद्दुष्यतीत्यर्थः। अनपेक्षत्वेति । सापेक्षे घटादावनपेक्षत्वप्रतिक्षेपोऽनुकूल एवेत्यर्थः। अनपेक्षत्वेति । यत्रानपेक्षत्वं तत्र सदातनत्वमिष्यत एवेत्यर्थः। अप्रसिद्धेति । आपाद्याप्रसिद्ध्या तर्कस्याभासत्वमित्यर्थः। पञ्चमस्त्विति । एकत्वोपलम्भाभावस्यानेकतोपलम्भोपष्टम्भकत्वादित्यर्थः। तादूप्येति । एकत्वैकत्वव्यवहारोऽप्यस्त्येवेत्यर्थः। षष्ठस्त्विति । भेदव्यवस्था स्वीक्रियत एवेत्यर्थः ॥

---

रघु० टी० । अस्थूलतायाः प्रतिक्षेपस्य करणव्युत्पत्त्या प्रतिक्षेपकस्यास्थूलत्वेऽनिष्टप्रसङ्गस्य स्थूलत्वोपलम्भः स्थूलत्वसिद्धिः। एवमग्रेपि नेयम्। आपाद्यापादकयोर्व्याप्तिं विना न तर्कस्य तादृग्ज्ञानानुकूलत्वमिति तां दर्शयति। तद्रूपताव्यवहारस्येति। व्यवह्रियमाणायास्तद्रूपतायाः। अनपेक्षत्वविधेः विधीयमानस्यानपेक्षत्वस्य। अप्रसिद्धव्यापकः सत्त्वासत्त्वोभयव्यतिरेकः। सत्त्वं यदि वस्तुत्वं न तर्हि तद्व्यतिरेकप्रसिद्धिः। अथ सत्त्वाश्राखिलमर्थक्रियाकारित्वं

वा, तद्व्यतिरेकस्यासत्त्वं, न तर्हि कश्चिदपि तदुभयव्यतिरेकप्रसिद्धि-रिति। सत्त्वस्यासत्त्वस्य च व्यापकस्य परानपेक्षत्वस्य व्यतिरेके परा-पेक्षत्वे सत्त्वस्यासत्त्वस्य च व्यतिरेकप्रसङ्ग एवोभयव्यतिरेकप्रसङ्ग इति चेदत्राह। सदसत्त्वस्येत्यादि। अथैवं विलीनं व्यापकानुप-लब्ध्येति चेत्, न विलीनं, व्यतिरेकिणो धर्मस्य भावाभावोभय-व्यापकत्वायोगात्। तादूप्य व्यवहारस्य व्यवह्रियमाणतादूप्यस्य॥

---

ननु भेदः स्वरूपं वा स्यादितरेतराभावो वा धर्मान्तरं वा। न पूर्वः, घटो भिन्न इति सहप्रयोगा-नुपपत्तेः। नापरः, प्रतीतावात्माश्रयप्रसङ्गात्, भिन्न-प्रतियोगिनिरूपणाद्धि तदभावो निरूप्यस्तन्नि-रूपणमेव च भेदनिरूपणम्। नोत्तरः, अनवस्था-प्रसङ्गात्। तत् कथमसौ (१)व्यवतिष्ठतामिति चेत्।

शङ्क० टी०। ननु भेद एव नास्ति कथं तद्व्यवस्थेति चेदात्राह। नन्विति। सहप्रयोगानुपपत्तेरित्युपलक्षणम्। भेदो घटविशेषणत्वेन न भासेत इत्यपि द्रष्टव्यम्। न हि स्वमेव स्ववि-शेषणं भवति। आत्माश्रयेति। भिन्नतया प्रतियोगिज्ञाने सति भेदग्रह इति तेनैव तन्निरूपणमित्यर्थः। आत्माश्रयमेव विवृणोति। भिन्नेति। भिन्नत्वेन प्रतियोगिनिरूपणादित्यर्थः। अनवस्थेति। वैधर्म्यं हि घटपटयोर्घटत्वं पटत्वञ्च। तत्रापि वैधर्म्यान्तरं वाच्य-

(१) भवतु इत्यतामिति २ पु० पा०।

मेवं तत्र तत्रापीत्यर्थः । तत् कथमिति । भिद्यत इति भेदो भिद्यते ऽनेनेति भेदो भेदनं भेद इति प्रकारत्रयस्यापि दुष्टत्वादित्यर्थः ॥

---

भगी० टी० । भिद्यत इति भेदो भेदनं भेदो भिद्यते-ऽनेनेति भेद इति व्युत्पत्त्या क्रमेण स्वरूपाद्यभिधीयत इति तद्विकल्पयति । नन्विति । सप्तेति । स्वरूपस्य घटपदेनोक्तत्वात् भिन्नपदं पुनरुक्तमित्यर्थः । आत्माश्रयेति । भिन्नप्रतियोगि-ज्ञाननिरूप्योऽन्योन्याभावो भेदश्चान्योन्याभाव एवेति तेनैव तन्नि-रूपणादित्यर्थः । एतदेव स्पष्टयति । भिन्नेति । अनवस्थेति । वैधर्म्यं चेदभिन्नं कथं तद्योगात्तदाश्रयो भिन्नः, अथ भिन्नं तदा तत्रापि भेदान्तरं स्यादित्यनवस्थेत्यर्थः ॥

---

रघु० टी० । धर्म्मान्तरं अनुयोगितावच्छेदकवद्वृत्तिवैधर्म्या-न्तरं, यद्दर्शयति पटोऽयं न घटस्तन्तुमयस्वेति । सहप्रयोगेति । स्वरूपं हि स्वस्यानुयोगिनो रूपं धर्मोऽनुयोगितावच्छेदको घटत्वादिः स्वयमेव रूपमनुयोग्यात्मकं वा । आद्ये पुनरुक्तत्वादन्त्ये च स्वस्य स्वानधिकरणत्वेनायोग्यत्वान्मिलित प्रयोगानुपपत्तिः। घट इत्यादौ च घटत्वादिकं स्वरूपेण सम्बन्धस्य संसर्गमर्यादया भासते भिन्न इत्यत्र च घटत्वादिकं घटत्वत्वादिना आश्रयत्वं चाश्रयत्वत्वेन प्रकारीभूयेत्यपौनरुक्त्यसमर्थनेपि घटत्ववान् भिन्न इत्यादौ पौन-रुक्त्यतादवस्थ्यमिति भावं वर्णयन्ति। भिन्नेति। इतरभिन्नयो-

रेकार्थत्वात्। न च भिन्ननिरूपणं विना तदभावनिरूपणमिति। अनवस्थेति। वैधर्म्ये वैधर्म्याभावे तदद्वैते धर्मिद्वैतानुपपत्तेरिति भावः। असौ भेदः॥

---

तत् किं भेदज्ञानमेव नास्ति, सदपि वा नित्यं, अनित्यमपि[1] वा निर्हेतुकं, सहेतुकमपि वा निर्विषयकं, सविषयकमपि वा बाध्यमानविषयकमिति। तत्र प्रथमः सर्वतो विरोधादनुत्तरः। द्वितीयः सुषुप्त्यवस्थानुरोधादुपेक्षणीयः। तृतीयोऽपि विरोधाद्धेयः। चतुर्थस्तु भेदोल्लेखादेव त्याज्यः। पञ्चमस्तु चिन्त्यते, किमेतेष्वन्यतमात्मा तस्य विषयः तदन्यो वेति। तत्र यद्यन्य एव, किमेताभिर्व्यधिकरणानुपपत्तिभिस्तस्य बाध्येत। एवं हि चौरापराधेन व्यक्तमयं माण्डव्य निग्रहः स्यात्।

शङ्क० टी०। तत् किमिति। ज्ञानस्य ज्ञेयनिरूप्यतया भेदसिद्धिपर्यवसानादित्यर्थः। सर्वत इति[2]। भेदज्ञानं नास्तीति सर्वानुभवसिद्धज्ञानापलापः प्रतियोग्यप्रसिद्धिः स्ववचनविरोधः। न हि भेदमज्ञात्वा तदभिलापसम्भवः। वादिप्रतिवादिनोर्भेदेन ज्ञाने सत्येव कथाप्रवृत्तेश्चेति। सुषुप्तेति। ज्ञानाभावदशाया एव सुषुप्तित्वादित्यर्थः। विरोधादिति। अहेतुकत्वेऽनित्यत्वानुपपत्तेरित्यर्थः। भेदोल्लेखादित्युपलक्षणम्। ज्ञानस्य सविषयत्व-

(१) अनित्यमेव इति २ पु० पा०। (२) सर्वत्रेति १ पु० पा०।

नियमादित्यपि द्रष्टव्यम् । अन्यतमोऽस्य विषयो यो बाध्यत्वेनाभिमत इति शेषः । यद्यन्य एवेति । तथा त्वेतेषामेव त्रयाणां बाधोपन्यासादैयधिकरण्यमित्यर्थः ॥

---

रघु० टी० । सर्वत इति । सर्वानुभवसिद्धभेदज्ञानापलापः प्रतियोग्यसत्त्वे निषेधानुपपत्तिः स्ववचनविरोधो वादिप्रतिवादिभेदज्ञानं विना कथाप्रवृत्त्ययोगश्चेति । विरोधात् अहेतुकत्वे कादाचित्कत्वविरोधात् । भेदोल्लेखादिति । घटज्ञानमित्यादौ घटादिविषयत्वस्येव भेदज्ञानमित्यत्रापि भेदविषयतायाः सर्वानुभवसिद्धत्वात् क्वचिदपि सविषयत्वस्याप्रसिद्धौ च तन्निषेधानुपपत्तिः ॥

---

अथान्यतमात्मा,(१) तत्रापि यदि धर्मान्तरमेवेति तत्त्वं, तदाऽनवस्थाभिया तदधिक एव प्रवाहस्त्यज्यतां तस्य कुतस्त्यागः । न ह्यनवस्था प्रतिभासमानमर्थं निवर्त्तयति, किन्तु प्रवाहं परिहापयति, गन्धे गन्धान्तरवत् ।

शङ्क० टी० । वैधर्म्यभेदे बाधमुद्धरति तत्रापीति । स्वरूपभेदेनैव घटत्वपटत्वयोरपि भेदव्यवहारसिद्धेरित्यर्थः । प्रतिभासमानमिति । बलवत्प्रमाणविषयीभूतस्य त्यागादित्यर्थः ॥

---

(१) अथान्यतमोऽस्य विषय इति २ पु० पा० ।

भगी० टी०। तस्य त्विति। घटत्वादेः प्रत्यक्षसिद्धत्वादित्यर्थः। न ह्यीति। अनवस्थायाः प्रमाणाभावमूलकत्वादिति भावः॥

---

रघु० टी०। तदधिक इति। ननूक्तं वैधर्म्ये वैधर्म्याभावे तदद्वैते धर्मिद्वैतानुपपत्तिरिति, अभिन्नस्य चोभयवृत्तेर्धर्मस्यैकतरभेदत्वे स्वस्मादपि भेदापत्तिः। न च वैधर्म्यं न भिन्नं, नाप्यभिन्नं, परस्परविरहरूपोभयरूपपरित्यागानुपपत्तेरिति चेन्न। वैधर्म्ये स्वरूपादेरेव भेदस्योपगमात्। धर्मान्तरमेवेति तु घटपटभेदाभिप्रायम्।

वैधर्म्येपि वैधर्म्यान्तरमस्त्येव, प्रामाणिकी चानवस्था न दोषाय। प्रवाहस्त्वज्ञ्यतामिति तु तन्तुमयत्वादेर्भेदरूपत्वे बाधकं नास्तीत्येतावत्परमित्यपि वदन्ति॥

---

अथेतरेतराभावमेव भेदज्ञानमवलम्बत इति तत्त्वं, तत्रापि क्वात्माश्रयः, तेन हि भेदज्ञानमेव न स्यात्, अस्ति च तत्, ततो हेत्वन्तरमाक्षिपेत्, न तु स्वात्मनि स्वयमहेतुत्वे स्वयमेव निवर्तते। अविद्यावशादिति चेत्, किञ्चातः। न ह्यविद्येत्येवा(१)त्माश्रयनिवृत्तिः, तथा सति घटादयोपि कुलालादिनिरपेक्षाः स्वयमेव भवेयुः। अथात्माश्रयदोषोपहततया तन्न स्वस्यैव कारणं, ततो यतः कुतश्चित् तस्य जन्म, तच्च दुर्निरूप-

(१) न ह्यविद्येत्येवमात्मा इति १ पु० पा०।

मतोऽविद्येत्युच्यत इति विचारार्थः, नाम्नि तर्हि विवादः। न च तदपि दुर्निरूपम्, प्रतियोगिरूपत्वेनाप्रतीतावधिकरणप्रतीतिरधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्चेतरेतराभावग्रहणकारणमिति निरूपणात्।

शङ्क० टी०। स्वयमेवेति। स्वस्य स्वं प्रत्यजनकतयाऽन्योन्याभावभेदात्मना बुद्धिरेव नोत्पद्येत, उत्पद्यते च, तथा च कारणान्तरमनुसर्तुमर्हतीति भावः। अविद्येति। भेदज्ञानमाविद्यकं न कारणान्तरापेक्षमित्यर्थः। किञ्चात इति। भेदज्ञानं चेत्त्वयाऽङ्गीकृतं तदाऽविद्या कारणत्वेन त्वयोपन्यस्यत इत्यस्मदनुकूलमेवाचरितमित्यर्थः। यद्वा आविद्यकमपि भेदज्ञानं न कारणनिरपेक्षं न वा स्वजन्यमिति कारणान्तरं तत्रावश्यं वाच्यमित्यर्थः। तथा मतीति। लभ्यते घटादीनामप्यविद्याविवर्त्तत्वेन त्वयोपन्यस्यतां स्वयमेवोत्पत्तिः स्यादित्यर्थः। स्वस्मादेव तावद्भेदज्ञानं नोत्पद्यते यत उत्पद्यते तद् दुर्निरूपमित्यविद्येत्युच्यते इत्याह। अथेति। नाम्नीति। यत् कारणं मयाऽभिप्रेतं तदेवाविद्यापदेन त्वयोच्यत इत्यर्थः। घटः पटो न भवतीत्यत्र घटावृत्ति पटत्वं पटावृत्तिघटवृत्तिघटत्वस्वरूपेण ज्ञातं सदन्योन्याभावप्रतीतिकारणं, न तु प्रतियोगिवृत्तित्वेनाधिकरणवृत्तित्वेन येन प्रतियोगित्वाधिकरणत्वग्रहगर्भोऽन्योन्याभावग्रह इत्यात्माश्रयः स्यादित्यत आह। न च तदपीति।

---

भगी० टी०। अविद्यापदेनान्योन्याभाव एवोच्यतेऽन्यदा, आद्ये किञ्चेति। अन्त्ये अथेति। नाप्नीति। अन्योन्याभावनिरूपकस्यान्यस्याभ्युपगमादित्यर्थः। प्रतियोगीति। रूपत्वं धर्मः (स्वाभावे धर्मः) स्वभावः। तथा च प्रतियोगित्वानिरूपकधर्मेणाधिकरणज्ञानमधिकरणत्वानिरूपकधर्मेण प्रतियोगिज्ञानमन्योन्याभावरूपभेदज्ञानहेतुरित्यर्थः। अभिन्नेऽपि क्वचिद्भेदग्रहस्तस्मिन्सत्यपि भेदाग्रहस्य दोषात्मत्वाच्चेति भावः। ननु प्रतियोगिनो ज्ञानमात्रं विवक्षितं स्मृतिर्वा। नाद्यः, इतरेतराभावग्रहकारणमित्यत्र इतरेतरपदवैयर्थ्यापत्तेः अभावग्रहमात्र एव तस्य हेतुत्वात्। न च प्रमेयपदजन्याभावग्रहे न तद्धेतुः, तथा सति तज्जन्यान्योन्याभावग्रहेऽपि तद्धेतुतानापत्तेः। न चान्योन्याभावत्वेन ग्रहसामग्री, घटातिरिक्तं प्रमेयमिति शब्दजतादृशज्ञाने व्यभिचारात्। अपि च यत्किञ्चित्प्रतियोगित्वाधिकरणत्वाभ्यां ग्रहो न कारणम्, अतिप्रसङ्गात्, तत्प्रतियोगित्वादिना तद्ग्रहस्य हेतुत्वे आत्माश्रयापत्तेः, अन्योन्याभावत्वेन प्रत्यक्षे अन्योन्याभावग्रहे सामग्रीयम्। यदा तद्घटात्यन्ताभावग्रहस्तद्घटेऽपि भवति, न च तत्र प्रतियोगितावच्छेदकरूपभिन्नमधिकरणरूपमिति संसर्गाभावग्रहमात्रे व्यभिचारान्नेदं तद्धेतुः, प्रतियोग्यादिस्वरूपग्रहस्यैव तत्प्रयोजकत्वादित्यभिप्रायः। न च भेदभ्रमस्थले भेदग्रहप्रसङ्गः, दोषस्यैव प्रतिबन्धकत्वात्, यत्र च न प्रतिबन्धको दोषस्तदन्यजिज्ञासादिकं वा, तत्रान्यहेतुसम्पत्तौ भेदः प्रतीयत एव॥

---

रघु॰ टी॰। अविद्यावशादिति कोऽर्थः, किमविद्याप्रभावाद्भेदज्ञान स्वस्मादेव जायते इति, किं वा अविद्यारूपात्कारणादिति। आद्ये किं चेति। द्वितीयमाशङ्कते। अथेत्यादि। इतरयोरधिकरणप्रतियोगिनोरितरत्वेन ज्ञानं न हेतुर्येनात्माश्रयः स्यादित्याशयेनाह। न चेत्यादि। प्रतियोगिरूपत्वं प्रतियोगितावच्छेदकरूपवत्त्वम्। अधिकरणस्वभावत्वं अधिकरणतावच्छेदकरूपवत्त्वम्। एतद्द्वयं ज्ञानमात्रपरम्। स्वस्मिन्नपि स्वात्यन्ताभावग्रहणादितरेतरेति। ग्रहणं प्रत्यक्षम्। भिन्नाभ्यां रूपाभ्यां प्रतियोग्यधिकरणयोर्ज्ञानं कारणम्; प्रतिबन्धकस्त्वधिकरणतावच्छेदकवति प्रतियोगितावच्छेदकादिग्रहः॥

---

अथ स्वरूपमेव भेदप्रतिभासस्य विषय इति तत्त्वम्, तथापि सहप्रयोग एवानुपपन्नस्त्यज्यताम्, भेदेन तु किमपराद्धम्। सोऽपि दृश्यत इति चेत्, नैमित्तिकस्तु स्यात्, न स्वरूपतः। न हि घटमानय पटमवलोकयेत्यादौ भेदपदमपि प्रेक्षावानुपादत्ते। व्याख्यायां तु मूढप्रबोधनाय घटः कुम्भ इतिवत् सहप्रयोगेऽपि न दोषः।

शङ्क॰ टी॰। तथापीति। स्वरूपभेदस्य भेदज्ञानविषयत्वेन त्वयाऽभ्युपगमात् न च बाधकं द्वयोरप्यवयोर्निरसनीयमित्यर्थः। सोऽपीति। यथा भेदज्ञानमस्ति तथा सहप्रयोगोऽप्यस्ति तथा च तद्बलाद् भेदज्ञानमेव निवर्तितामित्यर्थः। न हि घटो भेद इति

सत्प्रयोगोऽस्ति घटो भिन्न इति तु भेदस्य वैधर्म्यस्यान्योन्याभावस्य वा वैशिष्ट्यं घटे भासते, भवतु वा कथञ्चित् सत्प्रयोगः समूह-प्रतीत्यर्थं भवतीति न दोष इत्याह नैमित्तिकमिति ॥

---

भगी० टी०। नैमित्तिक इति। यो घट इत्युक्ते भेदत्वं तस्य . . . . . नार्थमित्यर्थः। तदेव स्फोरयति। न हीति॥

---

तथापि कः परमार्थः? यथायथं त्रयमपि। पटस्य हि घटात्मनाऽप्रतीतिरघटात्मना च प्रतीतिस्ततो वैशिष्ट्यप्रतीतिश्चेत्यनुभवमिदम्, तत्राभावस्य प्रथम-मात्रम्, अभावान्तरधर्मान्तरयोरभावात्, सामान्या-दिषु त्रिषु द्वयं, धर्मान्तराभावात्। द्रव्यादिषु त्रिषु त्रयं, त्रयस्यापि सम्भवात्। भवति पटोऽयं न घट-स्तन्तुमयश्चेति, गन्धोऽयं न रूपं सुरभिश्चेति, गतिरियं नोत्क्षेपणं तिर्यक् चेति। लक्षणं च स्वरूपभेदस्य ताद्रूप्येणाप्रतीतौ प्रतीतिः, इतरेतराभावस्य त्वबाधितः समानाधिकरणो निषेधप्रत्ययः, वैधर्म्यस्य तु विरोधः, स चैकधर्म्यसमावेश इत्येषा दिक्।

शङ्क० टी०। सुहृद्भावेन पृच्छति तथापीति। यथायथ-मिति। यत्र यत् प्रमाणसिद्धं तत्र स एव भेद इत्यर्थः। द्रव्ये त्रयमपि प्रामाणिकम्। तत्र स्वरूपभेदमाह। पटस्य

ह्यौति। घटाद्यात्मनाऽप्रतीतौ सत्यां पटस्य स्वरूपप्रतीतिरेव स्वरूपभेदलक्षणमित्यर्थः। अन्यथा पटमानयेति नियुक्तो घटमप्यानयेदिति भावः। अन्योन्याभावमाह। अघटेति। घटान्योन्याभाववत्तयेत्यर्थः। यद्यपि पटान्योन्याभावप्रतीतिर्नेयं तथापि पटनिष्ठघटान्योन्याभावप्रतीतिस्तावदियमिति भावः। तत इति। घटनिष्ठात्यन्ताभावप्रतियोगिधर्मविशिष्टप्रतिपत्तिश्चेत्यर्थः। यथायथमिति यदुक्तं तदेव स्फुटयति। तत्रेति। प्रथमः स्वरूपभेदः। अभावान्तरेति। तत्राभावान्तराभ्युपगमेऽनवस्थापत्तिरिति भावः। धर्मान्तरेति। सामान्यरूपस्य वैधर्म्यस्येति भावः। वस्तुतः प्रतियोग्यादिघटितं वैधर्म्यं तत्रास्तीति भावः। द्वयमिति। अन्योन्या भावस्वरूपभेदावित्यर्थः। अत्रापि वैधर्म्यस्याभावाभिधानं जातिपरं वैधर्म्यमित्यभिप्रेत्य, अन्यथाऽन्योन्याभावग्रहोऽपि न स्यात्, एतच्च तन्तुमयश्चेति वैधर्म्यभेदाभिधानेन स्वयमेव स्फुटीकरिष्यति। तिर्यक्त्वं गतौ जातिविशेषः। तादृप्येणेति। स्वान्योन्याभाववत्तयाऽप्रतीतौ स्वरूपप्रतीतिरित्यर्थः। तथा च प्रतीयमानं स्वरूपमेव स्वरूपभेद इति भावः। वस्तुतो भिद्यत इति व्युत्पत्त्या भेदपदं घटादौ प्रवर्तते, भेदव्यवहारस्तु वैधर्म्यान्योन्याभ्यामेव, अभावेपि तयोर्दर्शितत्वात्। समानाधिकरण इति। प्रतियोगिसमानकालीनसमानाधिकरणो निषेध इत्यर्थः। प्रतीयत इति प्रत्ययो निषेधस्यासौ प्रत्ययश्चेति निषेधप्रत्ययः प्रतीयमानो निषेध इत्यर्थः। विरोध इति। सहानवस्थितौ धर्मौ गोत्वाश्वत्वे गवाश्वयोर्वैधर्म्यं भेद इत्यर्थः। एतदेव दर्शयति। स चेति।

दिगिति। ननु घटे पटत्वात्यन्ताभावाधीन एव तदन्योन्याभावव्यवहारोऽस्तु किमधिकेनेति चेन्न। इदमिदं न भवतीति धर्मिसमभिव्याहृतनञा धर्माभावासंस्पर्शात्, इदमिदं न भवति नेदमिहेति प्रतीतिभ्यामेवाभावद्वयविभागात्। तादात्म्यावच्छिन्नप्रतियोगिताकत्वसंसर्गावच्छिन्नप्रतियोगिताकत्वयोश्चान्योन्याभावसंसर्गाभावयोर्वैलक्षण्यादिति दिगित्यर्थः॥

---

भगी०टी०। पूर्वापदर्शितव्युत्पत्तिचयमभिसन्धायाह। यथार्थमिति। न चैवं भेदपदस्य नानार्थत्वापत्तिः, लाघवाद्भेदनं भेद इति प्रकृत्यर्थ एव भेदपदस्य ग्रक्तैर्वैधर्म्यादिर्लक्षणयाऽन्यलभ्यत्वात्। तदेव क्रमेण विशदयति। पटस्य चेति। प्रथमेति। स्वरूपभेद इत्यर्थः। ननु भावादभावत्वं वैधर्म्यमेव भेदोऽस्ति, मिथो भेदकं चात्यन्ताभावत्वादिकमेव, एवमन्योन्याभावो न भवतीति प्रतीतेः, तादृशबुद्धेश्चान्योन्याभावविषयकत्वात्।

अत्राहुः। अत्यन्ताभावान्योन्याभावयोर्भेदव्यवहारस्य स्वरूपत एवोपपत्तेर्नाभावान्तरम्, तत्रानवस्थाभयादित्येवंपरो ग्रन्थः। अनन्यथासिद्धप्रतीतिबलादभावेऽप्यभावधीरभावनिबन्धना, प्रमेयत्व इवात्माश्रयत्वस्यादोषत्वात्, प्रमाणसिद्धत्वात्।

इदमेवाभिप्रेत्याभावान्तर नेत्युक्तमन्यथाऽन्तरपदवैयर्थ्यादित्येके।

यदि घटाभावो घटात्यन्ताभाववान्न स्यात् न च भावत्वमुपाधिः साधनव्यापकत्वादिति तर्कसहितानन्यथासिद्धबुद्धेरभावेऽप्यभावान्तरमस्त्येव, न चानवस्था, द्वितीयाभावमाचाङ्गीकारे

तदभावात्, तृतीयादिकमादाय तदभावात्, प्रमाणाभावस्य तन्मूलत्वात्, अन्यथाऽऽद्येऽप्यभावे भावापत्तिरित्यन्ये ।

सामान्यादिष्विति । स्वरूपभेदोऽन्योन्याभावश्चेति द्वयम् । यद्यपि सामान्यादिष्वपि लक्षणरूपं वैधर्म्यमस्ति, अन्ततो निर्द्धर्मकत्वस्यापि तद्धर्मत्वातद्धर्मत्वाभ्यां व्याघातात्, अन्यथाऽन्योन्याभावस्यापि कथं तत्र निरूपणम्, तस्य वैधर्म्यग्रहनिरूप्यत्वात् । न च तदाश्रयव्यक्तेरेव तत्र वैधर्म्यरूपत्वम्, तथा सति व्यावृत्तावन्योन्यज्ञानजन्यान्योन्यव्यावृत्तधीरित्यन्योन्याश्रयान्नैकमपि व्यावृत्तमवगम्येत । तथापि साक्षात्सम्बद्धधर्माभावमभिप्रेत्यायं ग्रन्थः, लक्षणानामुपाधिरूपतया परम्परासम्बन्धात् । घटोऽयमिति स्वरूपभेदकथनम् । न घट इत्यन्योन्याभावस्य, तन्त्मयश्चेति वैधर्म्यस्य, एवं गुणकर्मणोरपि क्रमेणोदाहरणम् ।

ननु स्वरूप न भेदः, अभेदसंशयविपर्ययोच्छेदापत्तेः, स्वरूपाग्रहे तयोरनवकाशात् । न च भेदग्रहेऽपि भेदत्वं तत्र न गृहीतम्, तच्च तदविषयधीविषयत्वं विशिष्यैव निर्वक्तव्यमिति वाच्यम् । तस्यैव भेदत्वापत्तेः, तस्य वैधर्म्यरूपत्वात् । भेदस्य सप्रतियोगिकत्वे निःप्रतियोगिकस्वरूपात्मकत्वासम्भवाच्च । यदि च स्वरूपं घटादिकं भेदस्तदा तद्योगादन्यो भिन्नः स्यात्, भिन्नत्वे वा नासौ भेदः । नाप्यन्योन्याभावो भेदः, तद्ग्रहो हि प्रतियोग्यधिकरणग्रहणे सति स्यात्, तयोश्च ग्रहणं धर्मिस्वरूपेणैव प्रतियोगित्वाधिकरणत्वाभ्यां वा, आद्ये रजतमिदमिति भ्रमो न स्यात्, पुरोवर्त्तिरजतस्वरूपग्रहेऽन्योन्याभावग्रहापत्तेः, अन्त्ये यत्किञ्चित्प्रतियोगित्वादिग्रहेऽति-

प्रसङ्गः, तत्प्रतियोगित्वादिग्रहे चात्माश्रयः । नापि वैधर्म्यं भेदः, स हि न स्वरूपेण, भ्रमाद्यनुपपत्तेः, नापि विरोधितया, भेदानिरूपणे तदनिरूपणात्, वैधर्म्यस्य घटत्वादिरूपतया निःप्रतियोगिकत्वाच्च, वैधर्म्येऽनवस्थाभिया वैधर्म्यान्तरास्वीकारे तदभेदात्तदाश्रययोरप्यभेदापत्तेः । यश्च कश्चिद्भेदो वाच्यः, स भिन्ने धर्मिणि विद्यतेऽभिन्ने वा । आद्ये तेनैव भेदेन भिन्नेऽन्येन वा । प्रथमे स्वविशिष्टे स्ववृत्तावात्माश्रयः । अन्त्येऽनवस्था । अभिन्ने तु भेदविरोध एवेति ।

अत्राहुः । भिद्यते व्यावर्त्यतेऽभेदबुद्धिविरोधिधीविषयीक्रियत इति व्युत्पत्त्या भेदपदं व्युत्पन्नं, स्वात्मना च पटस्तथा क्रियत इति तस्य भेदत्वम् । भेदार्थोऽपि सप्रतियोगिक एव, प्रतियोगिना सहवर्तमानत्वात् । तथाभूत एव तत्र प्रमाणप्रसरात् । न तु प्रतियोगिघटितमूर्तिः सप्रतियोगिकः, तथा सति प्रतियोग्यभिन्नतया प्रतियोगिना सहेति सहार्थस्यैवाभावात्स्वप्रतियोगिकतापत्तेः, पटस्वरूपं च यद्यपीतरनिराकाङ्क्षम्, घटो निरूप्यमाणो यथोक्तनिरूपणविषयो भवन् भेदो भवति । प्रतियोगित्वं च प्रकृते ग्राह्यभेदधीकारणीभूतज्ञानविशेषविषयत्वम् । दोषवशात्तद्रूपापरिचये चाभेदसंशयादिः । भिन्नत्वधीरपि स्वरूप एव । न हि तत्र तद्योगः । अन्योन्याभावेऽपि भेदे नोक्तदोषः । तथा हि । अधिकरणतया बुद्धिरेव नान्योन्याभावधीकरणतया यत्किञ्चिदधिकरणतयाऽन्योन्याभावस्योत्तरकारणवेद्यत्वात्, अधिकरणत्वस्योत्पत्त्याद्यर्थमपेक्ष्यमाणत्वरूपत्वाच्च । यद्रूपतया च यस्या-

नुपलब्धिसत्त्वस्वरूपबुद्धिरेवान्योन्याभावधीहेतुरभिमता । वैधर्म्य-भेदेपि नानवस्था । यदि हि वैधर्म्यमेव परं भेदस्तदा वैधर्म्यधी-व्यवहारार्थं तत्रापि वैधर्म्यान्तरापेक्षा स्यात्, न चैवम्, तत्र स्वरूपादेरेव भेदत्वात् ।

एतेन यत्किञ्चिदुक्तम्, अनवस्थापीष्यत एव, न हि कस्यापि निर्धर्मकत्वम्, निर्द्धर्मकत्वस्यापि तद्धर्मत्वातद्धर्मत्वाभ्यां व्याघाता-दिति, तदप्यपास्तम् । वैधर्म्यभेदज्ञानस्य स्वरूपभेदेनैवोपपत्तेः ।

यदा च जातिवैधर्म्यमेव भेदस्तदा वैधर्म्यान्तरानवगमान्न भेदः, तस्य तत्प्रतीतिमानकत्वात्, न हि भेदो नास्तीत्येतावतैवा-भेदः, मा हि भूदभेदो नास्तीत्येतावतैव भेदः, तथा च वैधर्म्यं न भिन्नं न चाभिन्नं स्यादिति विरोधः ।

यच्च भेदः किं भिन्ने वर्ततेऽभिन्ने वेत्युक्तम्, तन्न, अनवस्था भावप्रसञ्जनस्य प्रसङ्गसमत्वात् । भेदोपलक्षिते वस्तुनि प्रमाणप्रतीतस्यैकस्यानेकस्य वा भेदस्य वृत्त्युपगमात्, न तूप-लक्षणस्याप्यधिकरणकोटावन्तर्भावः । किञ्च कुत्र वर्तते भेद इत्यस्य प्रश्ने यत्र प्रमीयत इत्येवोत्तरम् । क्व प्रमीयत इत्यत्र यत्रास्तीत्येव ।

एतेन किं गवि गोत्वमुत गवि गोत्वमित्यादि प्रत्युक्तम् । गोत्वस्य व्यक्तौ विशेषणत्वेपि स्वव्यावृत्त्या तदुपलक्षकत्वात् स्वक्रिया-व्याघातश्च । खण्डकखण्डनीयत्रिभागापरिचये भवतस्तदर्थं प्रवृत्त्य-नुपपत्तेरिति सङ्क्षेपः ।

तादूप्येणेति । पटस्य घटत्वेनाप्रतीतौ प्रतीतिरित्यर्थः । ननु

प्रतीतिः प्रत्येतव्ये न लक्षणं तत्रावृत्तेः, भिद्यत इति व्युत्पत्त्या धर्म्यैव भेदः पूर्वमुक्तोऽधुना च प्रतीतिरुच्यतेऽतो विरोधः।

अत्राहुः। प्रमाविषयत्वं स्वरूपभेदः, एतच्चाव्यावर्तकमपि भेदप्रवृत्तिनिमित्तम्, स्वान्योन्याभावात्यन्ताभाववत्त्वं वा। इतरेतरेति। नन्वनेन प्रतियोगिसमानाधिकरणोऽभावोन्योन्याभाव इत्युक्तम्, तच्च ध्वंसप्रागभावयोरतिव्यापकम्। न च सदातनत्वेन विशेषणीयम्, तथाप्यव्याप्यवृत्त्यत्यन्ताभावातिव्याप्तेः। प्रत्ययविषयत्वं च व्यर्थम्।

अत्राहुः। एकस्मिन्नवच्छेदे एकस्मिन् काले प्रतियोगिसमानाधिकरणोऽभावोन्योन्याभावः। प्रत्ययपदं तु तत्र प्रमाणसूचनार्थम्।

यद्वा प्रतियोग्यवृत्तिः सदातनोऽभावोऽन्योन्याभावः। न च कालान्योन्याभावाव्याप्तिः, तस्य प्रतियोगिनि कालेऽपि वृत्तेः, अन्यथा सकलकालवृत्तित्वरूपनित्यत्वमप्यस्य न स्यादिति वाच्यम्। वृत्तिपदेन धर्मित्वस्य विवक्षितत्वात्, काले त्वाधारतामात्रत्वात्, तस्याश्च धर्मित्वभिन्नाया विशेषणताभेदत्वात्। अत एव सकललक्षणानां कालेऽतिव्यापकत्वमपास्तम्।

यद्वा इदमिह नास्तीति संसर्गेण प्रतियोगिताऽवच्छिद्यते, इदमिदं न भवतीति तादात्म्येन, तादात्म्यं च तदेकवृत्तिर्धर्मः, एकवृत्तित्वं च स्वसमानाधिकरणधर्मविरोधिधर्मासामानाधिकरण्यम्। संसर्गस्तु नैकवृत्तिर्धर्मः। अवच्छेदकत्वं तन्निरूपकत्वम्। तथा चैकवृत्तिमात्रधर्मावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः। व्यासज्यप्रतियोगिकस्त्वन्योन्याभावो नाभ्युपगम्यते। संसर्गावच्छिन्न-

प्रतियोगिताकोऽभावः संसर्गाभावः। न च घटत्वसंसर्गिघटभिन्नोऽयं घट इत्यत्र नैकवृत्तिधर्मेण प्रतियोगिताऽवच्छिद्यते, किन्तु संसर्गेणेति तत्रातिव्याप्तिरिति वाच्यम्। तत्राप्येकवृत्तेरेव धर्मस्य प्रतियोगितावच्छेदकत्वात्, कथमन्यथा घटत्वसंसर्गदशायामप्येतद्घटभिन्नोऽयं घट इति प्रतीतिः।

ननु धर्मात्यन्ताभावेनैव धर्मिणोऽन्योन्याभावव्यवहारोपपत्तिः, सविशेषणेति न्यायेन घटोऽयं नेति धर्मस्यैव निषेधात्। अन्यथा पाकदशायां रक्तोयं घटो न श्याम इति प्रतीतेस्तत्रैव तदन्योन्याभावः स्यात्, धर्माभावेनैवोपपत्तिरिति तुल्यम्। न च धर्म्यन्योन्याभावेनैव धर्मात्यन्ताभावोपपत्तिः, एवं सत्याकाश एवाव्याप्यवृत्त्यत्यन्ताभावव्यवहारानुपपत्तेः, आकाशान्योन्याभावस्याकाशेऽभावात्।

अत्राहुः। अयं घटो नेति धर्मिप्रतियोगिकोऽभावोनुभूयते न धर्मप्रतियोगिकः, बाधकं विना चैतदनादरेऽतिप्रसङ्गः। धर्माभावग्रहेपि तद्धर्मान्तरात्यन्ताभावग्रहसम्भवे क्वचिदप्यविश्रान्तेः। अधिकं तु द्वितीयाध्यायप्रकाशे प्रपञ्चितमिति।

वैधर्म्यस्य त्विति। व्यतिरेकिधर्मत्वं वैधर्म्यमात्रलक्षणम्। विशिष्य तु तदन्योन्याभावव्याप्यधर्मत्वं तद्वैधर्म्यमित्यर्थः॥

---

रघु॰ टी॰। धर्मान्तरेत्यभ्युपगमवादेन। धर्मपदं समवेतपरम्, अग्रे च तन्तुमय इति समवेतधर्मान्तरोपलक्षकमित्यपि केचित्।

ननु स्वरूपस्य भेदत्वे इद तन्न वेति संशयो नेदं तदिति विपर्ययश्च न स्यात्, धर्मिणो ग्रहे भेदस्यैव ग्रहात्, अग्रहे च तयो-

रनुत्पादात्, स्वस्य स्वावृत्तित्वादिदं भिन्नमितिप्रतीत्यनुपपत्तिश्च, धर्मिभेदस्य धर्मस्वरूपस्य धर्मिवृत्तितया तत्रैव तद्भेदप्रतीत्यादिप्रसङ्गः, निष्प्रतियोगिकस्य स्वरूपस्य सप्रतियोगिकत्वायोगश्चेति ।

अत्र वदन्ति । स्वरूपपक्षेऽपि तद्भेदत्वाग्रहात्संशयादिः । तद्भेदत्वं च न तद्विषयकप्रतीतिविषयत्वम्, अत्यात्मत्वापातात् । किन्तु विलक्षणः प्रतियोग्यनुयोगिभावलक्षणः सम्बन्धः । स च स्वरूपमतिरिक्तो वेत्यन्यदेतत् । तज्ज्ञानमपि सम्बन्धविधया प्रकारतया वेत्यपि तथा । सम्बन्धविशेषेण स्वस्य स्ववृत्तित्वं स्वाश्रयावृत्तित्वं च नानुपपन्नम् । स्वस्य स्वाभावप्रतियोगिकत्ववत् स्वभिन्नप्रतियोगिकत्वमपि तथा । एतेन वैधर्म्यं व्याख्यातम् । अन्योन्याभावस्तु भाववदभावान्तरे स्वस्मिंश्च वर्तते, भिन्नताप्रतीतेरविशेषात् । अन्योन्याभावान्तरकल्पनमन्योन्याश्रयानवस्थाचक्रकान्यतमं चापेक्ष्यात्माश्रयस्यैवोचितत्वात् । एतेनात्यन्ताभावो व्याख्यातः । अभावत्वान्योन्याभावत्वसंसर्गाभावत्वादिना चाभावाद्भेदः स्वरूपं वैधर्म्यमन्योन्याभावो वा । तत्तदभावभेदस्तु नाधिको भेदानन्त्यप्रसङ्गात् । घटपटाभावस्वरूपयोर्मिथो भेदत्वे तयोः परस्पराश्रयत्वात्तस्मादपि भेदापत्तिः, परस्परानाश्रितत्वे च घटपटाभावयोः पटघटौ न स्त इति प्रतीत्यनुपपत्तिः । तदुभयस्वरूपमपि तयोर्नास्तीति चेत्, तर्हि घटशून्यस्य पटवतः पटशून्यत्वं पटशून्यस्य च घटवतो घटशून्यत्वं स्यात्, तस्माद्भेदानन्त्यमेव ज्यायः । प्रामाणिकं त्वानन्त्यं न दोषाय । एवं यदि स्वरूपसम्बन्धेन न निर्वाहस्तदा सम्बन्धानन्त्यमप्यस्तु । न चोत्तरोत्तरेण पूर्वपूर्वकार्यकरणसम्भवात् पूर्वपूर्ववैयर्थ्यम्,

पूर्वस्य सम्बन्धताप्रतीत्यन्यथानुपपत्त्या कल्पितेन तदुत्सारणायोगादित्यपि वदन्ति ।

अत्यन्ताभावस्यात्यन्ताभावान्तराभ्युपगमेपि नानवस्था । अभावाभावस्यैव स्वाभावाभावत्वात् । एतेन ध्वंसप्रागभावयोः प्रागभावध्वंसौ व्याख्यातौ ।

इदं त्ववधातव्यम् । यद् अन्योन्याभावसम्भवे स्वरूपवैधर्म्ययोर्भेदत्वकल्पनमन्याय्यमिति । भिद्यते व्यावृत्तत्वेन प्रत्याय्यतेऽयमनेन वेति व्युत्पत्तिभेदादेव स्वरूपवैधर्म्ययोर्भेदव्यवहार इत्यपि वदन्ति।

केचित्तु प्रतियोगितावच्छेदकधर्मात्यन्ताभाव एव तदन्योन्याभावः । वैपरीत्यमेव किं न स्यादिति चेन्न, अनवबोधात्, एकस्यैवोभयरूपताभ्युपगमात् । अवृत्तिगगनादेरत्यन्ताभावस्यैवावश्योपेयत्वाच्च । अथैवमव्याप्यवृत्तिधर्मवदन्योन्याभावोप्यव्याप्यवृत्तिः स्यादिति चेत् न, दृष्टत्वात् । अस्तु वा तत्सहचरितव्याप्यवृत्तिधर्मान्तरात्यन्ताभाव एव तथा । अथ घटवति भूतले नेदं घट इतिवन्नात्र घट इत्यपि स्यात्, स्याच्च घटत्वे न घटत्वमितिवद्घटत्वं न घटत्वमित्यपीति चेत्, यथा हि घटाभावपटाभावरूपयोः परस्परप्रतियोगिकमेव भेदत्वं घटपटप्रतियोगिकमेव चात्यन्ताभावत्वं, अन्यथा घटपटशून्ये तदुभयाभावशून्यतायां घटपटयोश्च स्वात्यन्ताभाववतोः स्वभेदवत्तायां दुर्वारत्वात् भेदानन्त्यप्रसङ्गाद्वा, तथा तत्रापि धर्मप्रतियोगिकमेवात्यन्ताभावत्वं धर्मिप्रतियोगिकमेव चान्योन्याभावत्वमित्यदोषात् । भावस्येवाभावस्यापि भेदो विरुद्धधर्माध्यासादेवेति वदन्ति ।

तादूप्येणेति । अप्रतीतौ अप्रमितौ । तथा च तादात्म्यप्रमाविषयत्वाभाव एव लक्षणम् । प्रतीतिस्तु व्यवहारनिमित्तमुक्ता । समानाधिकरण इति । समानाधिकरणः समानाधिकरणसमभिव्याहृतजन्यः । सामानाधिकरण्यं च समानविभक्तिकत्वम् । तथा चानुयोग्युपस्थापकपदसमानविभक्तिकप्रतियोग्युपस्थापकपदसमभिव्याहृतेन नञा जन्यो निषेधप्रत्यय इत्यर्थः। तादृशनञ्प्रतिपाद्यत्वं तु फलितार्थः । भूतलं घटो नेत्यत्र पदद्वयस्यापि प्रथमान्तत्वात् ।

नन्वेतदप्रतिपाद्यमानतादृशायामव्यापकम्, सकलतद्व्यक्तीनां तादृशाभिलापोऽसम्भवी प्रमाणशून्यः, योग्यतायाश्चानुगतरूपनिरूप्यत्वात् । अथ प्रतियोगिनः समानाधिकरणो निषेधप्रत्ययः प्रतीयमानो निषेधः, तथा च प्रतियोगिसमानाधिकरणाभावत्वं फलितार्थः । न च प्रागभावप्रध्वंसयोरव्याप्यवृत्त्यन्ताभावे चातिव्याप्तिः, एकदा एकावच्छेदेन सामानाधिकरण्यस्य विवक्षितत्वादिति चेन्न। यत्किञ्चित्प्रतियोगिसामानाधिकरण्यस्यातिप्रसक्तत्वात्, स्वप्रतियोगिसामानाधिकरण्यस्य चाननुगतत्वात्, सम्बन्धान्तरेण प्रतियोगिसमानाधिकरणे सम्बन्धान्तरेणाभावेऽतिव्याप्तेः, अवृत्तिगगनादिप्रतियोगिकान्योन्याभावे चाव्याप्तेः । अथ प्रतियोग्यवृत्तिसार्वदिकाभावत्वं तत् । न च कालान्योन्याभावाव्याप्तिः, काले द्रव्यभेदद्रव्यत्वाभावयोर्वृत्तावपि कालो न द्रव्यं काले न द्रव्यत्वमित्यप्रत्ययात् तादृशप्रतीतिनियामकवृत्तेर्विवक्षितत्वादिति चेन्न, सामान्यं सत् सतौ सत्तेति प्रत्ययानुरोधादेकार्थसमवायेन स्वरूपसम्बन्धविशेषेण च सत्तायामपि सत्ताया वृत्तिरुपेया, तेन

च सम्बन्धेन सत्ताविरहो न सत्तावृत्तिरिति तत्रातिव्याप्तेः, पूर्वोक्त-दोषाच्च । अथारोप्य निषिध्यते, संयोगादिना च प्रतियोग्यारोपे संसर्गाभावः, तादात्म्येन च तस्मिन्नन्योन्याभावः प्रतीयते, तथा च तादात्म्यसम्बन्धारोपजन्यप्रतीतिकाभावत्वमन्योन्याभावत्वमिति । मैवम् । प्रतियोग्यारोपस्याभावधीहेतुत्वे मानाभावात्, अनाहार्या-रोपस्य विरोधित्वादाहार्यस्य चाभावप्रत्ययात्प्रागसम्भवात् । अथैवं संसर्गाभावप्रत्ययकालेऽन्योन्याभावोपि प्रतीयेतेति चेत्, सत्यपि प्रतिबन्धकाभावादौ न प्रतीयत इति कः प्राह । उपेयतां वाऽऽरोपनियामकमेव तत्र नियामकम् । अस्तु वा अभावस्य प्रत्ययविशेषहेतुत्वं न तु प्रत्ययमात्रे, अनुमित्यादौ व्यभिचारात्, तथा चातीन्द्रियान्योन्याभावाव्याप्तिरिति । अथैकसम्बन्धेन प्रति-योगिसत्त्यपि सम्बन्धान्तरेणाभावसत्त्वात् सम्बन्धविशेषोपि प्रति-योगितावच्छेदकोभ्युपेयते, तथा च तादात्म्यावच्छिन्नप्रतियोगि-ताकाभावत्वं तथेति चेत्, तादात्म्यं हि तद्वृत्तिधर्मविशेषः । संयोगिनश्च तादात्म्यं संयोग एव, तथा च संयोगसम्बन्धेन संयोगिनोऽत्यन्ताभावेऽतिव्याप्तिः । संयोगितादात्म्यं संयोगित्वम्, न तु संयोग इति चेन्न, शुद्धस्यापि संयोगस्य विशेषणत्वसम्भवेन तादात्म्यत्वात् । ध्वंसप्रागभावान्योन्याभावप्रतियोगितायां सम्बन्ध-भेदानुप्रवेशे मानाभावाच्च । अथैवं सम्बन्धावच्छिन्नप्रतियोगिताकत्व-शून्यनित्याभावत्वमेव तदस्त्विति चेन्न, विनाऽन्योन्याभावं सम्बन्धत्वस्य दुर्वचत्वात् । अभेदेन च विशिष्टज्ञाने तादात्म्यमेव सम्बन्धो भासते, तत्र घटत्वादिकमेवेत्यन्योन्याभावस्यापि संसर्गावच्छिन्नप्रति-

योगिताकत्वात्। अवच्छेदकतायां विशेषस्य दुर्वचत्वात्, शून्यत्वस्यानिर्वचनात्, नित्यत्वस्यानिरुक्तेः। प्राक्प्रध्वंसात्यन्ताभावाप्रतियोगित्वं तत्, गन्धानाधारसमयानाधाराभावः प्रागभावः, तत्प्रतियोगी चाभावः प्रध्वंस इति चेत्, गन्धाभावाधारत्वं अन्नावच्छेदेन गोत्वादिवृत्ति, गन्धाधारत्वाभाववत्त्वं च सर्वेषामेव समयानाम्, गन्धाधारभिन्नत्वं च भेदघटितं, तादृशसमयसिद्धिश्च न विना प्रध्वंसादिप्रत्ययम्। गन्धत्वं स्वाधिकरणानधिकरणसमयवृत्ति, कार्यमात्रवृत्तिजातित्वात्, चैत्रत्वादिवदिति तत्सिद्धिरिति चेन्न, पक्षतावच्छेदकस्य गन्धत्वस्य गन्धेतरासमवेतत्वघटितत्वेनान्योन्याभावघटितत्वात्, स्वत्वाननुगमात्, कार्यत्वस्य प्रागभावगर्भत्वात्, जातित्वस्य नित्यत्वसमवेतत्वघटितत्वात्, समवायत्वस्य विनाऽन्योन्याभावं दुर्वचत्वात्। स्वप्रतियोग्यधिकरणयावत्कालवृत्त्यवधिकसामयिकपरत्वाश्रययावद्वृत्त्यधिकरणक्षणवृत्तिः कादाचित्कोऽभावः प्रागभावः, स्वप्रतियोग्यवधिकत्वं वा परत्वस्य वक्तव्यम्। अपरत्वानाधारयोरपि गुणकर्मणोः परत्वावधित्वप्रतीतेर्बाधकं विना भ्रान्तित्वायोगात्। अत एव खण्डप्रलये जन्यद्रव्याणामसत्त्वेपि न क्षतिः, सामयिकेति च जातिविशेषपरिचायकमिति चेन्न।

स्वत्वाननुगमात्, सामयिकत्वस्य विनाऽन्योन्याभावं दुर्वचत्वात्। किं चोत्पन्ने परत्वे तज्ज्ञानात्प्रागभावादिज्ञानं ज्ञाते च प्रागभावादौ तद्घटितबहुतरतपनपरिस्पन्दान्तरितजन्मकत्वस्य; क्षणमात्राश्रयोपि परत्वात् पूर्वकालोत्पन्नत्वस्य वा ज्ञानात्परत्वोत्पत्तेरित्यन्योन्याश्रयात्। क्षणजन्म(ान्तरितत्वस्य) ध्वंसाद्यन्यतरघटितत्वाच्च।

एतेन स्वप्रतियोग्यधिकरणकालापेक्षिकाधिकरणकालवृत्ति-यावत्(समान)कालीनकादाचित्काभावत्वं नञ्त्वमिति परास्तम्। यथाकथञ्चिदधिककालवृत्तित्वस्य समानकालोत्पन्ने ततश्चिरंजीविन्यपि सत्त्वात्, इतरस्य च विना ध्वंसप्रागभावौ दुर्वचत्वादिति। अथात्र नित्यत्वं गोत्वादेः पृथिव्या वा व्यापकत्वम्, इदं च कालिकं ग्राह्यमिति चेत्, तद्व्यापकत्वं तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वं, सर्वे चान्योन्याभावाः प्रतियोगितावच्छेदकात्मकस्यातिरिक्तस्य वा समयवृत्तेरत्यन्ताभावस्य प्रतियोगिन इति। प्रतियोग्यसामानाधिकरण्यमत्यन्ताभावे विशेषणमिति चेत्, तर्हि न प्रतियोग्यधिकरणवृत्तित्वाभावः, सर्वेषामत्यन्ताभावानां प्रतियोग्यधिकरणेऽन्ततो महाकाल एव वृत्तेः। नापि प्रतियोग्यभावाधिकरणवृत्तित्वम्, वैयर्थ्यात्। अत्यन्ताभावानिरुक्तेश्च। प्रतियोग्यधिकरणभिन्नवृत्तित्वं च भेदगर्भम्।

अत्र वदन्ति। अभावत्वान्योन्याभावत्वप्रागभावत्वप्रध्वंसाभावत्वादयः प्रतीतिविशेषसाक्षिका अखण्डा एवोपाधयोऽतिरिक्ताः पदार्थाः। तदेव चान्योन्याभावत्वं तादृश-नञ्-प्रतिपाद्यतावच्छेदकमिति॥

---

सप्तमोऽप्यनुकूल एव, घटादौ व्यापकताप्रतिक्षेपस्याव्यापकतोपलम्भोपष्टम्भकत्वात्, व्यापकत्वस्य निष्क्रियत्वव्याप्तत्वाच्च।

शङ्क० टी० । सप्तमोपीति । न व्यापकं निष्क्रियत्वप्रसङ्गा-दित्यनुकूल एवेत्यर्थः । नन्वयमनुकूलस्तदा स्याद्यदि सत्तर्कः स्यादतः सत्तर्कतां दर्शयति । व्यापकत्वस्येति ॥

---

अष्टमस्तु क्वचिदिष्ट एव । यत एव हि क्वचिद-विधेयोऽत एव क्वचिद्विधेयोऽव्यापक इति व्यवह्रियते । सर्वत्रेति चेन्न । व्याप्त्यसिद्धेः, विरोधाच्च । न हि यद-व्यापकं तत् सर्वत्राविधेयमिति प्रतिबन्धः । क्वचिद-स्तीत्यव्यापकार्थः सर्वत्र नास्तीति चाविधेयार्थस्तवाभि-मतस्तदनयोर्विरोधोऽपि स्यात् ।

शङ्क० टी० । अष्टमस्त्विति । अविधेयत्वप्रसङ्गलक्षणः । क्वचिदिति । स्वाभावस्थले । न हि यत्र घटाभावस्तत्रापि घटो विधीयते । क्वचित्केनाविधेयत्वेन क्वचित्कं यद्विधेयत्वं तदेवा-व्यापकत्वार्थ इत्यर्थः । सर्वत्रेति । सर्वत्रैवाविधेयत्वमापाद्यत इत्यर्थः । अव्याप्तिमाह । न हीति । विरोधमाह । क्वचिदिति ॥

---

भगी० टी० । अव्यापकत्वेन क्वचिदविधेयत्वं यद्यापाद्यते तदेष्टापत्तिरित्याह । यत एवेति । ननु नाव्यापकत्वेन सर्वत्रा-विधेयत्वमापाद्यत इत्याह । सर्वत्रेति । व्याप्त्यसिद्धिं स्पष्टयति । न हीति । विरोधं विवृणोति । क्वचिदिति ॥

रघु॰ टी॰। क्वचिदविधेयत्वं वाऽऽपाद्यं सर्वत्राविधेयत्वं वा। आद्य आह। अष्टमस्त्विति। अविधेयत्वे क्वचिदिति विशेषणोपादानबलात्क्वचिद्विधेयत्वं लभ्यते। अन्यथाऽविधेयत्वमात्रस्यैव वक्तुमुचितत्वादित्याह। यत एवेत्यादि। द्वितीयं शङ्कते। सर्वत्रेति। निराकरोति। नेति। व्याप्यसिद्धिं विवृणोति। न हीति। सर्वत्राविधेयत्वं यद्यप्रसिद्धं न तर्हि व्याप्तिग्रहः। अथ कथञ्चिद्गगनादावलीके वा तावत्तत्प्रसिद्धिरुपेयेत, तथाप्येकत्रासतोऽप्यन्यत्र सत्त्वेन विधेयत्वोपपत्त्या न व्याप्तिसिद्धिरित्यर्थः। विरोधं विवृणोति। क्वचिदिति। अव्यापकार्थः अव्यापकत्वनिरुक्तिबलायातोऽर्थः। अव्यापकत्वे क्वचिदसत्त्वविशेषणोपन्यासात्क्वचित्सत्त्वस्य लाभात्। अविधेयार्थः अविधेयत्वाभिप्रेतोऽर्थः। सर्वत्रासत्त्वमस्माकमप्रसिद्धमत उक्तं तवाभिमत इति।

वृत्तिगर्भं सत्त्वं तद्व्यतिरेको गगनादौ प्रसिद्ध इत्यपि केचित्।

अनयोः क्वचिदस्तित्वसर्वत्रनास्तित्वयोः। यद्यपि सत्त्वेनाप्रतीयमानत्वस्यापि क्वचिदस्तित्वेन समं विरोध एव, तथापि शाब्दं विरोधमभिप्रेत्य सर्वत्र नास्तित्वमुपात्तम्। अथवा अव्यापकत्वं सर्वत्रासत्त्वं क्वचिदसत्त्वं वा तस्मिन् सति क्वचित्सत्त्वं वा। आद्य अप्रसिद्धिः स्वरूपासिद्धिर्वा। द्वितीयतृतीये व्याप्यसिद्धिविरोधाभ्यां निरस्यति। नेत्यादि। शेषमशेषं पूर्ववत्॥

---

**यद्विधेयस्वभावं तत् कथं प्रतिषेध्यमिति चेन्न। प्रतिषेधस्वभावता हि विधेयस्य विरुद्धा, न तु प्रति-**

षेधप्रतियोगितापि। अथ योस्ति कथं तस्य प्रतिषेधोप्यस्तीति चेत्, को दोषः। अनयोरविरोधप्रसङ्ग इति चेत्, प्रकारभेदेन प्रस(ङ्गो)ङ्गोपि न दोषमावहति। तद्भेदेन तु विधिनिषेधौ केन स्वीकृतौ यं प्रत्यविरोधः प्रसज्येतेति। एतेन कालभेदादिनाऽप्यविरोधो द्रष्टव्यः।

शङ्क॰ टी॰। ननु प्रतिषेध्यत्वं विधेयत्वं चैकस्य विरुद्धस्वाभाव्यादनुपपन्नमित्याह। यदिति। प्रतिषेध्यत्वविधेयत्वयोर्न विरोधोऽपि तु प्रतिषेधत्वविधेयत्वयोरित्याह। प्रतिषेध्येति। ननु वस्तुनः कथमभावप्रतियोगिता स्यादस्ति नास्तीति प्रतीत्योरेकत्रासम्भवादिति शङ्कते। अथेति। प्रकारभेदेनेति। प्रसङ्गोपि सङ्ग प्रकारभेदेन दोषमावहतीति योज्यम्। तद्भेदेनेति। प्रकाराभेदेन। एकत्राप्यधिकरणेऽवच्छेदकभेदेन संयोगतदभावयोः प्रतीयमानत्वात्, देशभेदेन तु भावाभावयोर्विरोधगन्धोपि नास्तीति भावः। नन्ववच्छेदकभेदं विनाऽप्येकत्र कपाले घटत्प्रागभावप्रध्वंसदर्शनात् कथं न विरोध इत्यत आह। एतेनेति॥

भगी॰ टी॰। यद्विधेयेति। एकस्य विधिप्रतिषेधयोर्विरोधादित्यर्थः। प्रतिषेधेति। विधिप्रतिषेधयोरैकात्म्यं नेष्यते, प्रतिषेधप्रतियोगिता त्विष्यते, सा चाविरुद्धेत्यर्थः। अथेति। सतो निषेधप्रतियोगित्वमेव विरुद्धम्, सत्त्वासत्त्वयोरेकत्र विरोधा-

दित्यर्थः। क इति। तयोर्विरोधग्राहकं मानमस्तीत्यर्थः। प्रकारभेदेन देशकालभेदेनेत्यर्थः॥

---

रघु० टी०। व्यापकयोरस्तित्वनास्तित्वयोर्विरोधाद्व्याप्ययोर्विधित्वप्रतिषेध्यत्वयोरपि विरोध एवेत्याशयेनाशङ्कते। यदिति। तत्रास्तित्व तत्र नास्तित्वयोर्विरोधो न पुनरस्तित्व तत्र नास्तित्वयोरित्याशयेनोत्तरयति। प्रतिषेधेति। शङ्किताऽऽशयं प्रकाशयितुं पृच्छति। अथेति। आशयं प्रकाशयति। अनयोरिति। अस्तित्वनास्तित्वयोरित्यर्थः। प्रकारेति। प्रकारो देशः। देशाभेदेन विरोधेऽपि न देशभेदेन विरोध इत्यर्थः। अथैवं कार्यस्य समवायिन्यव्याप्यवृत्तेस्तैकत्र धर्मिणि सत्त्वासत्त्वे न स्यातामत आह। एतेनेति॥

---

अस्तु तर्हि स्थूलघाती विरुद्धधर्माध्यासो ग्रहणाग्रहणादिः पञ्चविधः। न। असिद्धेः।

शङ्क० टी०। स्थूलघातीति। अवयविनि बाधक इत्यर्थः। पञ्चविध इति। ग्रहणाग्रहणावृतानावृतत्वकम्पाकम्परक्तारक्तसंयुक्तासंयुक्तरूप इत्यर्थः। वृत्तिविकल्पेन सह वा पञ्चत्वम्। नासिद्धेरिति। समावेशस्यासिद्धेः। यद्वा विरोधासिद्धेः समावेशादेवेत्यर्थः॥

---

भगी० टी०। असिद्धेरिति। यादृशं विरुद्धं तत्र तत्रास्ति यत्र तत्रास्ति तन्न विरुद्धमित्यर्थः॥

रघु० टी० । असिद्धेरिति । यादृशस्य विरोधो न तस्याध्यासो यादृशस्य चाध्यासो न तस्य विरोध इत्यर्थः ॥

---

तथाहि । यो येन यत्रैव यदैवोपलभ्यते स तेन तत्रैव तदैव नोपलभ्यत इति नानुभवः, नाप्यभ्युपगमः । एकावयवसहितस्योपलम्भोऽन्यावयवसहितस्यानुपलम्भ इति चेत्, एवं तर्ह्यवयविन्युपलभ्यमाने कश्चिदवयव उपलभ्यते कश्चिन्नेति वाक्यार्थः, सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामत इति न्यायात्, तथा चावयवानामुपलम्भानुपलम्भाववयविनि सञ्चार्य प्रसङ्गस्तदलमनेन ।

शङ्क० टी० । ग्रहणाग्रहणे हि तदा विरुद्धे स्यातां यदि कालाभेदेन पुरुषाभेदेन विषयाभेदेन स्यातामित्यर्थः । नन्वेक एव घट एकदा एकेनैव पुरुषेणार्वाग्भागावच्छेदेन गृह्यते परभागावच्छेदेन न गृह्यत इति कथं न विरोध इति शङ्कते । एकावयवेति । एवमिति । उपलम्भानुपलम्भयोरवयविनि समावेशो नोपपादित इत्यर्थः । सञ्चार्येति । अवयवगतावुपलम्भानुपलम्भाववयविनि सञ्चारिताविन्यर्थः ॥

---

भगी० टी० । तथा चेति । किञ्चिदवयवानामग्रहेऽपि अवयविनो ग्रहात्तस्य ग्रहणाग्रहणे न स्त इत्यर्थः ॥

---

एतेनावृतत्वानावृतत्वं व्याख्यातम् । अनावरण-दशावत् कतिपयावयवावरणेऽपि तथाविधस्थौल्योप-लम्भः किं न स्यादिति त्ववशिष्यते । तदप्यसत् । तस्य परिमाणगतसामान्यविशेषस्य ततोऽन्यस्य नियत-सामग्रीवेद्यस्य तदभावे तदुपलम्भेऽप्यनुपलम्भात् ।

शङ्क० टी० । एतेनेति । अवयविनि तदुभयसमावेशा-भावेनेत्यर्थः । अत्र दोषमाशङ्क्य निराकरोति । अनावरणेति । तथाविधेति । द्विहस्तत्वत्रिहस्तत्वादिरूपस्थौल्योपलम्भप्रसङ्ग इत्यर्थः । ततोन्यस्येति । अवयविनोन्यस्येत्यर्थः । नियता सामग्री भूयोव-यवावच्छेदेनेन्द्रियसन्निकर्षः । तदुपलम्भेपीति । अवयविनः परि-माणस्य चोपलम्भेपीत्यर्थः ॥

---

भगी० टी० । ननु किञ्चिदवयवावरणेऽवयवी यद्यावृतस्तदा परभागावच्छेदेनेवार्वाग्भागावच्छेदेनापि स नोपलभ्येत, अथाना-वृतस्तदा परभागावच्छेदेनापि स गृह्येतेत्यनावरणदशावत्ताद्दृश-स्थौल्योपलम्भ इत्यप्यवयवानामेवावृतत्वानावृतत्वे अवयवी त्वनावृत एवेति न तत्र विरुद्धधर्माध्यास इत्यनेन निरस्त इत्याह । एतेनेति । नन्वेवमनावरणदशावद्विहस्तत्वादिशालिमत्परिमाणग्रहणप्रसङ्ग इत्यत

आह । अनावरणेति । अवयविग्रहे तत्परिमाणग्रहेऽपि तद्गत-जातिविशेषस्य तावदवयवग्रहव्यङ्ग्यतया तदभावादेवाग्रह इत्यर्थः । ननु किं तावत्त्वं यावत्त्वं बहुत्वं वा । नाद्योऽसम्भवात्, अर्वाग्भाग-व्यवधाने मध्यपरभागयोरग्रहात् । नान्त्यः, नानास्थानेषु परमाणु-मात्रान्तरितस्याप्यवयविनः स्थौल्योपलम्भापातात् । न । सन्निकर्ष-विशेषस्य कार्यदर्शनकल्प्यत्वात् ॥

रघु० टी० । एतेन कस्यचिदवयवस्यावरणेऽप्यवयविनस्तद-भावेन । तथाविधेति । तादृशजातिविशेषविशिष्टेत्यर्थः । तदुप-लम्भेऽपि परिमाणोपलम्भेऽपि ॥

एतेन कम्पाकम्पसंसर्गो निरस्तः । सामग्री-भेदेनावयवनियतकम्पोत्पादे तस्यां दशायामवयविनो निश्चलत्वात् । एवं तर्हि कम्पाकम्पयोरवयवयोर्विभा-गात् संयोगनाशे द्रव्यनाशः स्यादिति चेत् । ततः किम् । अपसिद्धान्त इति चेन्न । एवमपि क्वचिदभ्यु-पगमात् । सर्वत्रैवं प्रसङ्ग इति चेत्, तथाप्यवयविनः किमत्याहितम् । न चैवमपि । कर्मणो द्रव्यारम्भक-संयोगप्रतिद्वन्द्विविभागजननानियमानभ्युपगमात् । कारणविशेषात् कस्यचिदेव कर्मणस्तथाभूतविशेषो-पलब्धेः ।

शङ्क० टी० । एतेनेति । अवयविन्येकदा ज्ञानसमावेशा-भावेनेत्यर्थः । सामग्रीति । अवयवकम्पसामग्रीतोऽवयविकम्पसामग्र्या भिन्नत्वेन तदुभयो[१]पपत्तेरित्यर्थः । एवं तर्हीति । कतिपयावयवकम्पेपि कतिपयावयवनिश्चलतायामित्यर्थः । अपसिद्धान्त इति । तस्यां दशायामवयविनाशस्य त्वयाऽनभ्युपगमादित्यर्थ एवेत्यर्थः । एवमपीति । द्रव्यनाशस्यापीत्यर्थः । सर्वत्रेति । यत्रापि त्वया नाभ्युपगम्यते तत्रापीत्यर्थः । तथापीति । एतावताऽप्यवयवी सिद्ध एवेत्यर्थः । अत्याहितम् महाभयम् । न चेति । अवयवकर्मणा द्रव्यारम्भकसंयोगविरोधिविभागाजननात् । अन्यथोत्पन्नादौ प्रत्यभिज्ञानं न स्यादिति भावः ॥

---

भगी० टी० । एतेनेति । सामान्यतोऽसिद्धेत्यर्थः । तदुपलम्भेऽप्यवयविपरिमाणोपलम्भेपीत्यर्थः । नन्ववयवेषु कम्पमानेष्ववयवी यद्यकम्पस्तदा किञ्चिदवयवावच्छेदेन तत्र कम्पो नोपलभ्येत । अथ सकम्पस्तदा प्रदेशान्तरेऽप्यकम्पो नोपलभ्येतेत्यकम्पोपि तत्र स्वीकार्यः, तथा च (विरोध) इत्यत आह । सामग्रीति । अवयविकम्पस्य सकलावयवकम्पनियतत्वात् कचिदवयवकम्पेऽप्यवयवी निष्कम्प एवेत्यर्थः । न च संयोगवत्कर्माव्याप्यवृत्ति भवत्विति वाच्यम् । मानाभावात्, अवयविनि यथोक्तेनैवोपपत्तेः । अवयवेषु सकलावच्छेदेनैव कम्पोपलम्भात् । विभागादिति । अन्यतरकर्मजादित्यर्थः । संयोगनाशे द्रव्यारम्भकसंयोगनाश इत्यर्थः । तत इति ।

---

(१) अपसिद्धान्त इति चिह्नेन तदुभयो इति २ पु० पा० ।

नेदमनिष्टमित्यर्थः । अपसिद्धान्त इति । न हि चलत्येवावयवेऽवयवी नश्यति इत्यभ्युपगम्यत इत्यर्थः । एवमपीति । द्रव्यारम्भकसंयोगविरोधिविभागजनकक्रिया यत्रावयवेषूत्पद्यते तत्र तथाऽभ्युपगम इत्यर्थः । तथापीति । अर्थान्तरं नाम निग्रहस्थानमित्यर्थः । अत्याहितं महाभयम् । न चेति । अन्यथा सर्वत्र द्रव्यानाशप्रसङ्ग इत्यर्थः । न चेष्टापत्तिः, अवयविनस्तादृप्येणैव प्रत्यभिज्ञानात् । ननु कर्मत्वाविशेषात् कुतोऽयं नियम इत्यत आह । कारणेति । तस्य च कार्यदर्शनैकमानत्वादित्यर्थः ।

---

रघु० टी० । एतेन असिद्धत्वेन । नन्ववयवे कर्मोत्पादेऽवश्यमवयविनि कर्म, अन्यथा सर्वावयवकम्पेऽपि निष्कम्पोऽवयव्युपलभ्येतेति चलावयवावच्छेदेनावयविनि कर्म निश्चलावयवावच्छेदेन निश्चलत्वोपलम्भात् कर्माभावोऽपीति नासिद्धमत आह । सामग्रीति । कार्यभेदे सामग्रीभेदस्यावश्यकत्वात् क्षुद्रावयवे कम्पेऽपि(१) महावयविनि कम्पानुपलम्भात् फलबलात् सामग्रीविशेषः कल्प्यत इत्यर्थः । संयोगवत् कर्माव्याप्यवृत्त्यस्त्विति चेन्न । संयोगस्य व्याप्यवृत्तित्वेऽवयविन्यवयवपरम्परायां क्षुद्रक्षुद्रतराद्यवयवावच्छेदेन तत्तत्संयोगाभावोपलम्भाद्गुणमात्रवृत्तित्वेऽतीन्द्रियत्वं घटादेरप्रत्यक्षत्वमनुत्पत्तिश्च स्यादिति तस्याव्याप्यवृत्तित्वमाश्रीयते, चले चावयवे कर्म व्यापकमेवोपलभ्यते, अवयविनि च तस्याव्यापकत्वे कर्मत्वस्य तदुभय-

(१) कर्मण्यपि इति २ पु० पा० ।

वृत्तित्वानुपपत्तिः, सविषयावृत्तिजातेर्व्याप्याव्याप्यवृत्तिवृत्तित्वविरोधात् वेपते पल्लवो न तु महीरुह इत्यनुभवाच्चेति सम्प्रदायः ।

यत्रैकस्मिन्नवयवे निश्चलेऽप्यवयवी चलतीति प्रतीयते तत्राव्याप्यवृत्त्येव कर्म, सविषयावृत्तीत्यादेः परिभाषामात्रत्वात्, एतेन रूपादयो व्याख्याता इत्यपि केचित् ।

संयोगनाशे द्रव्यारम्भकसंयोगनाशे । तथापीति । विनाशस्य प्रतियोगित्वबाधकत्वात् प्रत्युत साधकत्वादेवेति भावः । कर्मणा इत्यादि । अवयवकम्पेऽप्यवयविनः प्रत्यभिज्ञानादिति भावः । ननु कर्मत्वाविशेषेपि किञ्चिदेव कर्म द्रव्यारम्भकसंयोगविरोधिनं विभागमारभते नेतरदिति कुतो विशेष इत्यत आह । कारणेति ॥

---

एतेन पाणौ चलति तन्मूलभूतः परमाणुरपि चलेत्, ततोऽचलत्तद्भुजपरमाणोर्विभागः, ततो यो येन संयुज्यते विभज्यते वा स तत्कार्यद्रव्येणापीति न्यायेन भुजपाण्योरपि विभागः, ततः संयोगनाशः, ततः शरीरनाश इति निरस्तम् ।

न हि पाणिपरमाणुक्रिया भुजपरमाणुविभागमारभते नियमेन । तदनारम्भकत्वे कर्मलक्षणक्षतिरिति चेन्न । आकाशादिदेशविभागजननादपि तदुपपत्तेः, नुद्यकर्मवत् । कुतोऽयं विशेष इति चेत्, कारणविशेषादित्युक्तम् । एवं तर्हि यद्यवयवकम्पेऽप्यकम्प एवावयवी हन्तावयवसंयोगिविभागिभ्या-

माकाशादिदेशाभ्यां न संयुज्येत न विभज्येतेति चेन्न। अवयवसंयोगविभागाभ्यामेव तत्सिद्धेः। एतच्च सम्यगवबोद्धुं वैशेषिकमनु[1]सन्धेयम्। तर्हि चलदवयवसमाश्रितोऽप्यचलन्नेवावयव्युपलभ्येतेति चेत्, नेदमनिष्टम्, पाणौ कम्पमाने शरीरं न कम्पत इति प्रत्ययात्।

शङ्क० टी०। एतेनेति। सर्वेषामवयवकर्मणां द्रव्यविरोधिविभागजनकत्वानभ्युपगमेनेत्यर्थः। ततः इति। चलतः पाणिपरमाणोरचलभुजपरमाणुविभागे पाणिभुजविभागोऽपि स्यादित्यर्थः। संयोगनाश इति। शरीरारम्भकभुजपाणिसंयोगनाश इत्यर्थः। यदि तु पाणिर्भुजावयवस्तदाऽवयवान्तरपरमाणुकर्मोदाहार्यम्। कर्मलक्षणेति। संयोगविभागयोरनपेक्षं कारणं कर्मेति लक्षणक्षतिरिति भावः। तदुपपत्तिरिति। कर्मलक्षणोपपत्तेरित्यर्थः। अथ नुन्नकर्मवदिति। यथा नद्यनिष्ठेन कर्मणा नोदकेन सह विभागाजननेऽप्याकाशादिविभागजननेन कर्मलक्षणोपपत्तिरित्यर्थः। अयमिति। किञ्चित्कर्म द्रव्यारम्भकसंयोगविरोधिविभागजनकं किञ्चिन्न तथेति विशेष इत्यर्थः। अवयवकम्पेनाकाशादवयवस्य संयोगविभागयोरुत्पादेऽपि निष्कम्पस्यावयविनः कथमाकाशादिदेशात् तौ स्यातामित्याशङ्कते। यद्येवमिति। एवं कारणसंयोगविभागाभ्यां कार्यस्य तयोरभ्युपगमादित्यर्थः। ननु तत्रैव न

(१) मधीत्य इति २ पु० पा०।

प्रमाणमित्यत आह। एतच्चेति। नन्वेवं पाणौ चलत्यपि तदवच्छिन्नोऽवयवी निश्चल एवोपलभ्येतेत्यत आह। तर्हीति॥

---

भगी० टी०। एतेनेति। चलाचलपरमाण्वोर्विभागे सत्यनन्तरा कारणविभागाद्भुजपरमाणुना सह पाणेः पाणिपरमाणुना भुजस्य विभाग इत्यर्थः। तदनारम्भ इति। संयोगविभागानपेक्षकारणत्वस्य कर्मलक्षणत्वादित्यर्थः। अयमिति। द्रव्यारम्भकसंयोगाविरोधि-विभागरूप इत्यर्थः। नन्ववयवक्रियातस्तस्याकाशादिना विभागे-प्यवयविनः स न स्यात्तस्य निष्कर्मकत्वात्, अवयवकर्मणश्च व्यधि-करणत्वादतोऽवयवी चलेऽवयवेऽवश्यं चल इत्युपेयमित्याह। एवं तर्हीति। अवयवेति। अवयविनि कर्माभावेपि कारणाकारण-विभागाभ्यामेव विभागजविभागोत्पत्तेरित्यर्थः। ननु विभागस्य विभागजनकत्वे कर्मत्वापत्तिरित्यत आह। एतच्चेति। नन्ववय-विनो निश्चलत्वे(न) चलदवयवाश्रिततयोपलभ्यमानत्वे चलतीति धीविषयत्वं न स्यादित्याह। तर्हीति। पाणिपदं शरीरावयवो-पलक्षणम्॥

---

रघु० टी०। भुजपरमाणोरित्युपलक्षणम्, भुजादित्यपि द्रष्टव्यम्, तुल्यन्यायत्वात्। भुजपाण्योरपीत्यस्य द्व्यणुकादिविभाग-क्रमेणेत्यादिः। भुजपरमाणुविभागं भुजतत्परमाणुविभागम्। कर्मलक्षणस्य क्षतिः विभागजनकत्वगर्भत्वात्तस्य। आकाशादीति

प्रकृते सत्त्वविलेन[1]। वस्तुतो जननयोग्यत्वं लक्षणम्, न तूपधानम्। अत एव विनश्यदवस्थेपि द्रव्ये कर्मोत्पादं सामग्रीसम्भवादुपगच्छन्ति। नुद्यकर्मवदिति। यथा नोदकाद्विभागमजनयदपि नुद्यकर्माऽऽकाशादिविभागजनकमित्यर्थः। अयं विशेषो द्रव्यारम्भकसंयोगविरोधिविभागजनकत्वलक्षणः। न संयुज्येतेत्यादि। संयोगादिकारणस्य कर्मणोऽन्यतरत्राप्यसम्भवात्[2]। न चावयवकर्मैव तत्र कारणैकार्थप्रत्यासत्त्याऽसमवायिकारणं वाच्यम्, अवयवावयवादौ चलितेऽवयविनि संयोगाद्यनुत्पादप्रसङ्गात् इति भावः। संयोगादेः संयोगादिजनकत्वे किं मानमित्यत आह। एतच्चेति॥

---

अथवा यो यदाश्रिततयोपलभ्यते स तस्मिंश्चलत्यचलोपि चल एव विभाव्यते दर्पणमुखवत् जलचन्द्रवच्चेत्यपि द्रष्टव्यम्। कृतं प्रतीतिकलहेन, एवमपि सर्वत्र चल एवोपलभ्येतेति चेत्, चलत्यवयवे सर्वत्र तथैवेति न किञ्चिदनुपपन्नम्। अचले तु कथं तथोपलभ्यताम्। तथापि चलाचलाश्रयस्य चलाचलतया प्रतीतौ चलाचलजलचन्द्रवत् द्वैतप्रत्ययोपि स्यादिति चेत्, स्यादपि यद्याश्रयविच्छेदः स्यात्। न ह्येकस्मिन्नेव जलेऽविच्छिन्नावयवभेदेन द्विचन्द्रभ्रमो नाम। किन्तु

(१) वास्तविलेन इति २ पु० पा०।।
(२) प्यभावादिति २ पु० पा०।

स एवैकस्थले चल उपलभ्यतेऽचले त्वचल इति। वीचिषु सोपि सहस्रनिभ इति चेत्, एवमेतत्, तासां विच्छेदेनाकलनात्।

शङ्क० टी०। ननु पाण्यवच्छेदेनाप्यवयविनो निश्चलस्योपलम्भ इति दुर्घटमित्यनुशयेनाह। अथ वेति। निश्चलोपि चलाश्रित-श्चलतीति न प्रतीतिविषयो भवतीति दृष्टत्वाद्दुष्टमित्यर्थः। चला-श्रितश्चेच्चल उपलभ्यते तदा निश्चलपादावच्छिन्नेनापि शरीरं चलमेवोपलभ्येतेत्याशङ्कते। एवमपीति। अचले त्विति। तदवच्छेदेन शरीरस्य चलाश्रितत्वाभावादित्यर्थः। द्वैतेति। तच्च शरीरे द्वित्वं प्रतीयेतेत्यर्थः। आश्रयविच्छेद इति। चलाचलयो-राश्रययोर्यत्र विभागस्तत्रैवं, न तु सर्वत्र तथा प्रतिभासनियम इत्यर्थः। न हीति। यत्र जलमचलं तत्र चन्द्रबिम्बमप्येकमेव भासत इत्यर्थः। तथा चाश्रयविच्छेदो द्वित्वविभ्रमे मूलमिति भावः। आश्रयचलत्वाधीन आश्रितचलत्वप्रत्यय इति द्रढयति। किं त्विति। वीचिष्विति। आश्रयाविच्छेदाभिमानेनाशङ्का। आश्रयविच्छेदप्रत्ययेन समाधिमाह। तासामिति॥

---

भगी० टी०। अथवेति। अवयववृत्तित्वेनानुभूयमानकर्मा-वयविन्यारोप्यत इत्यर्थः। एवमपीति। चलपाण्यग्रेपि यदा निश्चलावयववृत्तित्वेनावयवी गृह्यते तदापि चलतीति धीः स्या-दित्यर्थः। चलतीति। यत्र सकलावयवकर्मानुभूयते तत्रेष्टापत्तिः, यत्र चलावयवस्याग्रहे निश्चलावयववृत्तितयाऽवयविग्रहस्तत्रानुभूय-

मानकर्मारोपसामग्र्येव नास्तीत्यर्थः । नन्वेवं चलाचलावयववृत्तित्वेन चलाचलतयाऽनुभूयमानोऽवयवी द्वैतधीविषयः स्यात् चलाचल-वृत्तितया चलाचलत्वेनानुभूयमानचन्द्रवदित्याह । तथापीति । तथाविधे या द्वैतधीस्तत्राश्रयविच्छेदवैशिष्ट्यं प्रयोजकतया साधना-वच्छिन्नसाध्यव्यापकमुपाधिरिह तु तदभावः, संयोगस्याविरलत्वा-दित्याह । स्यादपीति । प्रयोजकत्वमेव तस्याह । न हीति । नन्वाश्रयविच्छेदो न तद्व्यापकस्तद्भागरूपाश्रयाविच्छेदेपि तद्धीषु चन्द्रद्वैतबुद्ध्युत्पत्तेरित्याह । वीचिष्विति । तत्राप्याश्रयविच्छेद-बुद्धिरस्त्येव, तदभावे चन्द्रबुद्धिरपि नास्तीत्याह । एवमेतदिति ॥

---

रघु० टी० । अथैवं निश्चलैकद्रव्यवयवोप्यवयवी चलत्वेन नोप-लभ्येतेत्यत आह । अथ वेति । यद्यवयवचलनग्रहणादेवावयविनि चलतीति प्रत्ययो निश्चलावयवावच्छेदेनापि तदा भवेत्, अव्यापके तु कर्मण्युपगते नायं दोषस्तदवच्छेदेनावृत्तेरित्याशङ्कते । एवमपीति । यत्राश्रये चलनं गृह्यते तदवच्छेदेनैव तदारोप्यत इति फलबलात्कल्प्यत इत्युत्तरयति । चलतीति । आश्रयेति । गृह्यमाणविच्छेदाश्रयद्वयवृत्तित्वग्रहणादन्तरा चाग्रहणाद्दोषाद्भेद-प्रत्ययोऽत एव चलयोरचलयोरेव वा जलयोरादर्शयोश्च चन्द्र-वदनादिभेदप्रत्ययः, करचरणादिविच्छेदग्रहेऽप्यन्तराग्रहणाच्च शरीरे भेदभ्रमः[१] । सति चारोपे निमित्तानुसरणं न तु निमित्त-मस्तीत्यारोप इति भावः ॥

---

(१) ०ल भेदभ्रम इति २ पु० पा० ।

अस्तु तर्हि चलाचलयोर्युतसिद्धिप्रसङ्ग इति चेन्न। स्वयं प्रतिबन्धासिद्धेः। न च प्रसङ्गे व्याप्तावपि पराभ्युपगमः शरणम्। न चैवं पराभ्युपगमोपि। वस्त्रोदकादौ दृश्यते तावदयमिति चेन्न। तन्तुवस्त्रादौ विपर्ययस्यापि दर्शनात्। इदं मिथ्येति चेत्, तत् कथं सत्यम्। अबाधादिति चेत्, इह तर्हि बाधकान्तरं वाच्यम्। चलाचलत्वमेवेति चेन्न। युतसिद्धा[१]वपि किमिति नेदं बाधकमिति विपर्ययस्यापि वक्तुं शक्यत्वादिति।

शङ्क० टी०। यदि पाणौ चलत्यपि शरीरमचलमेव तदा पाणिशरीरयोः सम्बद्धयोरसम्बद्धयोरपि विद्यमानत्वं स्यादित्याह। अस्तु तर्हीति। ननु द्वयोरसम्बद्धविद्यमानत्वं क्षणिकत्ववादिना नाभ्युपेयत इति न प्रसङ्ग इत्याह। स्वयमिति। ननु तर्कः पराभ्युपगमाधीनप्रवृत्तिक एवेत्याह। न चेति। आपादकस्य पराभ्युपगमस्तर्के प्रयोजको न त्वापाद्यापादकयोर्व्याप्तावपीत्यर्थः। न चैवमिति। चलाचलयोर्युतसिद्धिरिति नैयायिकोपि नाभ्युपगच्छतीत्यर्थः। वस्त्रोदकादौ दर्शनबलादवश्यं तथा स्वीकर्तव्यमित्याह। वस्त्रेति। तन्तुपटयोस्तथा दर्शनाद्व्यभिचारान्नैवं व्याप्तिरित्यर्थः। तन्तुपटयोरप्यसम्बद्धविद्यमानत्वमस्त्येव, सम्बन्धानुभवस्तु भ्रान्त इत्याह। इदमिति। तत्कथं सत्यमिति। वस्त्रो-

(१) युतसिद्धावेव इति ३ पु॰ पा॰।

दकयोरसम्बद्धविद्यमानत्वदर्शनमित्यर्थः। अबाधादिति। वस्तात् स्खलितमपि जलं वस्त्रसम्बद्धमेवेति कस्यापि नात्र बाधावतार इति तत्सत्यमित्यर्थः। इहेति। चलाचलयोस्तन्तुपटयोः सम्बद्धयोः सत्त्वेपि न बाधकमस्तीत्यर्थः। चलाचलत्वमसम्बद्धविद्यमानत्वव्याप्यमित्युक्तमित्याह। चलाचलत्वमिति। चलाचलयोरपि तन्तुपटयोर्दर्शनेन चलाचलत्वमयुतसिद्धत्वव्याप्यं किं न स्याद्दर्शनस्योभयत्र तुल्यत्वादित्याह। युतसिद्धाविति। तथा च संयोगिनोश्चलाचलत्वं युतसिद्धत्वव्याप्यं न त्वसंयोगिनोरपि पाणिशरीरयोरिति भावः।

---

भगी० टी०। नन्वेवमवयवावयविनौ युतसिद्धौ स्याताम्, यस्मिंश्चलेपि यदचलं तत्तेन युतसिद्धमिति व्याप्तेर्वस्त्रोदकादौ ग्रहादित्याह। अस्त्विति। असम्बद्धयोर्विद्यमानता युतसिद्धिः, क्षणिकयोस्तयोत्पन्नयोरन्यतरस्मिंश्चलेप्यचलत्वं, न च तयोरसम्बद्धयोः सत्त्वं क्षणिकत्वादित्याह। स्वयमिति। ननु परसिद्धेन परस्यापादनं स्यादित्यत आह। न चेति। आपादकमात्रेण परसिद्धेन तर्कः प्रवर्त्तते व्याप्तिस्तु स्वसिद्धैव तन्मूलमित्यर्थः। न चैवमिति। अवयविन्येव परस्य तथात्वासिद्धेरित्यर्थः। एवमिति। असम्बद्धयो र्विद्यमानत्वमित्यर्थः। विपर्ययस्य असम्बद्धयोरविद्यमानत्वस्येत्यर्थः। युतसिद्धावेवेति। चलाचलतया यथा वस्त्रोदकदृष्टान्तेनावयवावयविनोर्युतसिद्धिरापाद्या, तथा च तत एवावयविदृष्टान्तेन वस्त्रोदकयोरयुतसिद्धिरेव किं नापाद्यत इत्यर्थः॥

---

रघु० टी० । एतसिद्धिरसम्बद्धयोर्विद्यमानत्वम् । स्वयमिति । निरन्तरोत्पन्नस्थिरत्वपरमाणुद्वयसम्बद्धयोः स्थिराचलयोः क्षणिक-निरन्तरपरमाण्वोरसम्बद्धविद्यमानत्वाभावात् । पररीत्या परस्या-पाद्यतामित्यत आह । न चैवमिति । तादृशव्याप्तौ न कस्याप्य-भ्युपगम इत्यर्थः । स्थैर्ये व्यभिचारादर्शनात्सहचारनिदर्शनाच्च तथा व्याप्तिनिश्चयः स्यात् इत्याशङ्कते । वस्त्वविति । व्यभिचारदर्शन-माह । तन्त्विति । तन्तुवस्त्रादौ सत्यपि चलाचलत्वे विपर्ययस्या-सम्बद्धयोरविद्यमानत्वस्य दर्शनादिति । इदं व्यभिचारदर्शनम् । तत् सहचारदर्शनम् । विपक्षे बाधकाभावान्न सहचारदर्शनमात्रा-द्व्याप्तिनिश्चय इत्याशयेनाह । एतेनेति ॥

---

रक्तारक्तविरोध इति चेन्न । भ्रान्तत्वात् । तन्मूल-रागिद्रव्यसंयोगासंयोगविरोधोऽस्त्विति चेन्न । पर-माणुवादिनं प्रति प्रागेव परिहृतत्वात् । इतरं प्रति का वार्त्तेति चेत्, सैव तावत् तथैवाविरोधात् । प्रकार-भेदेनापि विरोधाभ्युपगमे व्याप्तेरसिद्धेः संयोगतद-भावयोरेवासिद्धेः । सिद्धौ वा प्रकारभेदाविरुद्ध-स्वाभावसादेश्यापरित्यागात् । न चैवं पदार्थान्तर-वैधर्म्येण संयोग एव निराकर्त्तव्यः, तद्वैधर्म्येण तेषामेव निराकरणप्रसङ्गात् ।

शङ्क० टी० । रक्तारक्तविरोध इति । अवयविनि बाधक इति शेषः । भ्रान्तत्वादिति । रक्तः पट इति प्रतीतेरिति शेषः ।

तथा च पटस्यारक्तत्वमेवेति न विरोध इति भावः। तर्हि महारजनसंयोगासंयोगावेवैकत्र विरुद्धाववयविभेदकावित्याह। तन्मूलेति। परमाणुवादिनं प्रति क्षणभङ्गनिराकरणावसरे प्रकारभेदमादाय विरोधस्य परिहृतत्वादित्याह। परमाणिवति। इतरं प्रतीति। ज्ञानभिन्नपरमाण्वनङ्गीकर्त्तारं प्रतीत्यर्थः। मैवेति। प्रकारभेदेनाविरोधोपपादकयुक्तेरिहापि तुल्यत्वात्। अन्यथा रक्तारक्तप्रकारकैकज्ञानेपि विरोधापत्तेरिति भावः। यदि पटो महारजनसंयोगतदभाववान् स्यात् भिद्येतेति व्याप्तिरेवासिद्धेत्यर्थः। कुत इत्यत आह। संयोगेति। संयोगतदभावसिद्धौ प्रकारभेदेनाविरोधो सुलभ. तेनापि च विरोधे तावेव न स्याताभित्यर्थः। सिद्धौ वेति। यदि संयोगतदभावयोः सिद्धिस्तदा प्रकारभेदेनाविरुद्धो यः स्वाभावस्तत्वादेश्यमादायैवेत्यर्थः॥

---

भगी० टी०। ननु महारजनरक्तार्धः पटो यदि रक्तस्तदावयवान्तरग्रहेपि रक्तपट इति धीः स्यादथ न. रक्तभागेपि रक्तधीर्न स्यादिति रक्तारक्तत्वे वाच्ये, तथा च विरुद्धधर्माध्यास इत्याह। रक्तेति। रक्तः पट इत्यनुभवस्य महारजनलौहित्यं विषयो न तु पटे लौहित्यरूपसमवायः, तथा च भ्रम एवेत्याह। भ्रान्तत्वादिति। तथापि तद्भ्रमबीजं महारजनसंयोगो यदि व्याप्यवृत्तिस्तदा भागान्तरेपि तत्र रक्तभ्रमः स्यादथाव्याप्यवृत्तिस्तदा संयुक्तत्वासंयुक्तत्वविरोध इत्याह। तन्मूलेति। क्षणिकपरमाणोरण्यस्य विरोधस्य दुर्वारत्वादित्यादिना क्षणभङ्गनिरास एव प्रकार-

भेदमुपादायाविरोध उपपादित इत्याह । परमाण्विति । इतर-मिति । यो ज्ञानभिन्नं परमाणुं न समर्थयते तं प्रतीत्यर्थः । तथैव प्रकारभेदेनैवेत्यर्थः । तथापीति । प्रकारभेदेनापि चेद्वि-रोधस्तदा देशकालभेदेपि विरोधः स्यादेवेति संयोगतदभावयो-रप्यसिद्धौ क तदन्तर्भावेनापि व्याप्तिरित्यर्थः ॥

---

रघु० टी० । रक्तारक्तत्वविरोधो रागिद्रव्यार्धरक्ते(१) पटादौ । रक्तत्वं तत्र नास्त्येव एकदेशे तत्प्रतीतिस्तु भ्रान्तेत्याह । भ्रान्तत्वा-दिति । तन्मूलेति । प्रादेशिकभ्रममूलेत्यर्थः । प्रागेव चणिक-परमाणोरप्यस्य विरोधस्य दुर्वारत्वादित्यादिना परिहृतत्वात् । इतरं विज्ञानवादिनम् । तथैव प्रकारभेदेनैव । व्याप्तेः संयोग-तदभावयोरसमानाधिकरण्यनियमस्य असिद्धिः । कुत इत्यत आह । संयोगेति । सिद्धौ वा प्रकारभेदेनाविरुद्धस्य स्वाभावसामानाधि-करण्यस्यापरित्यागादेकचैवावच्छेदभेदेन संयोगतदभावग्राहिणा प्रत्यक्षेणाविरोधस्य स्वहस्तितत्वादिति भावः । तद्वैधर्म्येण हि तत्तादात्म्यं निराक्रियते न तु स्वरूपमेव, सर्वशून्यताप्रसङ्गादित्या-शयेनाह । तद्वैधर्म्येणेति ॥

---

न चैवमेव न्याय्यम्, नियमवता हि सत्यवैधर्म्येणे-तरन्निराक्रियते, असत्यवैधर्म्येण सत्यत्वस्यैव निर्वाहात्, निषेध्यप्रतीतिनान्तरीयकत्वाच्च निषेधसिद्धेः । शश-

(१) र्धलिप्ते इति २ पु० पा० ।

विषाणादौ कल्पितेन निषेध्येन निषेधसिद्धिरिति चेन्न। निराकृतत्वात्, संयोगस्य वाङ्मात्रेण काल्पनिकत्वसिद्धावतिप्रसङ्गाच्च, शशशृङ्गन्यायस्य च योग्यानुपलम्भाभावेनासिद्धेः, इत एव बाधकात् तत्सिद्धावितरेतराश्रयत्वम्।

शङ्क॰ टी॰। न चैवमेवेति। अस्तु सर्वपदार्थनिराकरणं नेदमनिष्टमित्यर्थः। तथा च ममाभिमता शून्यतैव सिद्ध्येदिति भावः। नियमवता हौति। साधर्म्यसमानाधिकरणेन वैधर्म्येणेत्यर्थः। प्रकृते तु संयोगस्य सत्त्वगुणत्वाभिधेयत्वप्रमेयत्वादिकं सत्यसाधर्म्यमप्यस्तीति भावः। असत्यवैधर्म्येणेति। सत्त्वप्रमेयत्वादिनेत्यर्थः। दोषान्तरमाह। निषेध्येति। तथा च संयोगनिषेधसिद्धिश्चेव संयोगसिद्धिरित्यर्थः। असत्ख्यातिरूपैव तर्हि प्रतीतिरत्रापीत्याशङ्कते। शशेति। निराकृतत्वादिति। क्षणिकतावादे व्यतिरेकिभङ्गावसरे। संयोगस्येति। शब्दादिलक्षणार्थक्रियाकारिणः संयोगस्य काल्पनिकत्वे नीलाद्यपि काल्पनिकं स्यादित्यर्थः। ननु यथा शशे शृङ्गाभावो योग्यानुपलम्भेन सिद्धस्तथा संयोगाभावोपि सेत्स्यतीत्यत आह। शशशृङ्गेति। संयोगस्य योग्यायोग्यसाधारणतया परमाण्वादौ संयोगानुपलम्भेपि योग्यताविशेषणं नास्ति, घटपटादिसंयोगे त्वनुपलम्भ एव नास्तीत्यर्थः। इत एवेति। पदार्थान्तरवैधर्म्यात् संयोगाभावसिद्धावनुपलम्भोपि सिद्ध एव यदि, तदाऽन्योन्याश्रयः, संयोगाभावे सिद्धे योग्यानुपलम्भसिद्धिस्तत्सिद्धौ च संयोगाभावसिद्धिरित्यर्थः॥

भगी० टी० । एवमेवेति । संयोगवैधर्म्येण तेषामेव निराकरणमित्यर्थः । नियमवता व्याप्तिमतेत्यर्थः । निषेध्येति । तथा चोपजीव्यविरोधान्न निराकरणमित्यर्थः । इत एवेति । स्वाभावमादेश्यविरोधसिद्धौ काल्पनिकत्वसिद्धिस्तत्सिद्धौ च विरोधसिद्धिरित्यन्योन्याश्रय इत्यर्थः ॥

---

रघु० टी०। शून्यतैवास्त्वित्याशङ्क्य निराकरोति। न चैवमिति। नियमेति। नियमतस्तद्रूपावच्छिन्नव्यावृत्तेन (१)हि धर्मेण ताद्रूप्यं निराक्रियते। न च कस्यचिद्धर्मस्य सत्यमात्रावृत्तित्वं कस्यापि प्रमाणस्य विषयो येन सत्यत्वं क्वापि निराक्रियेत, प्रत्युतासत्यवैधर्म्येण सत्यनियतेन धर्मेणार्थक्रियाकारित्वादिना सत्यत्वस्यैव सिद्धेरित्यर्थः। निराकृतत्वात् असत्ख्यातिनिरासेन। निषेधकं च प्रमाणं यदि निषेध्यविशेषनियन्त्रितं निषेधमवगाहेत तत एव तर्हि सिद्धो निषेध्यः, नो चेत्तन्निषेध एव कुत इत्युक्तमनुसर्त्तव्यम्। ननु शशशृङ्गवद्योग्यानुपलम्भबाधितत्वात्संयोगस्य काल्पनिकत्वं न तु ताद्गात्म्यादत आह। शशेति। इत एव काल्पनिकत्वादेव। तत्सिद्धौ योग्यानुपलम्भसिद्धौ। इतरेतराश्रयत्वं काल्पनिकत्वस्य योग्यानुपलम्भसाध्यत्वात् ॥

---

शब्दप्रत्यभिज्ञानवत् संयोगप्रतीतेरन्यथोपपत्तिमात्रेण बाधकप्रवृत्तिरिति चेन्न। अनुभवस्य तदनु-

(१) वैधर्म्येण इति १ पु० पा०।

रूपमुपाधिमुखपिण्डमदत्वा भ्रान्तत्वेनान्यथोपपत्तौ तद्विपरीतानुमानप्रवर्त्तनेऽग्नावनुष्णत्वानुमाने प्रवृत्तिप्रसङ्गात्। न च प्रत्यभिज्ञानस्य सामान्यवत् संयोगप्रत्ययस्य तदनुरूपमुपाध्यन्तरमस्ति। एवम्भूतमर्यादातिक्रमे तु त्वदभिप्रेतप्रतिबन्धप्रत्ययस्यापि भ्रान्तत्वेनान्यथासिद्धिप्रसङ्गः कथं वार्यः, तदवारणे शिथिलमूलस्तर्कः कथं प्रवर्त्तेत। यथालोकव्यवस्थानं चाध्यक्षान्तरवत् संयोगस्यापि शब्दपाकजाद्यर्थक्रिया[१]स्थितेस्तदध्यक्षस्यापि प्रामाण्यसिद्धेर्न भ्रान्तत्वशङ्कावकाश इति।

शङ्क० टी०। ननु द्रव्ययोरविरलदेशोत्पादनिबन्धना संयोगप्रतीतिर्यथा स एवायं गकार इति जात्यभेदालम्बना प्रतीतिर्न गकाराभेदमवलम्बते। तथा चानुपलम्भ एव चेत् संयोगस्य पदार्थान्तरवैधर्म्यं यत् संयोगबाधकं तत्प्रतीतिरप्रत्यूहेत्याशङ्कते। शब्देति। तत्र यथा गत्वाभेदो विषयस्तथा सयुक्तप्रतीतौ संयोगातिरिक्तं न विषयो येनान्यथासिद्धिः स्यादविरलदेशोत्पादस्त्वतीन्द्रियो न तथा भवितुमर्हतीति परिहरति। अनुभवस्येति। अनन्यथासिद्धस्याप्यनुभवस्य तिरस्कारे वह्नावौष्ण्यग्राहि प्रत्यक्षमप्यनौष्ण्यानुमानपरिपन्थि न भवेदित्यर्थः। न चेति। स एवायं गकार इति प्रत्यभिज्ञानस्य गत्वसामान्यवदित्यर्थः। एवम्भूतेति। अनन्यथासिद्धप्रत्यक्षस्य वस्त्वनुरोधातिक्रम इत्यर्थः। यद्विरुद्धधर्माध्यस्तं न

(१) सिद्धः इति ३ पु० पा०।

तदेकं यथा गवाश्वमहिषनकुलं, विरुद्धधर्माध्यस्तत्वेनैकत्वेनाभिमन्य-मानो घटादिरिति तदनुमतप्रतिबन्धप्रत्ययोपि भ्रान्त एव स्या-दित्यर्थः। प्रतिबन्धप्रत्ययस्य भ्रान्तत्वे दण्डमाह। तदवधारण इति। अध्यक्षान्तरवदिति। नीलाद्यध्यक्षवदित्यर्थः। नीलादीना-मर्थक्रियास्थितेर्यदि व्यवस्थितिस्तदा प्रकृतेऽपि तुल्यमित्याह। संयोगस्यापीति॥

---

भगी० टी०। ननु यथा स एवायं गकार इति प्रत्य-भिज्ञानं गत्वजातिविषयत्वेनान्यथोपपन्नं न गकारनित्यत्वे मानं, तथा संयोगधीरप्यन्यथोपपन्ना न संयोगसिद्धौ मानमित्याह। शब्देति। तदुदत्र तस्या न नियमः कश्चिदुपाधिरूपो विषयः समस्ति येनान्यथोपपत्तिस्तथापि भ्रान्तत्वकल्पनेऽतिप्रसङ्ग इत्याह। अनुभवस्येति। येन न्यायेन त्वया निर्विकल्पकान्तरस्य प्रामाण्यं मन्तव्यं तेन संयोगविषयकस्यापि तस्य, सर्वाप्रामाण्ये तु व्याघात इत्याह। यथेति। नन्वर्थक्रियाविरहात् संयोगस्यासत्त्वमित्यत आह। संयोगस्यापीति। भेरीदण्डसंयोगाच्छब्दोऽग्निसंयोगा-त्पाकजाः॥

---

रघु० टी०। यथा प्रत्यभिज्ञानं तज्जातीयविषयत्वेनोप-पद्यमानं न व्यक्त्यभेदे मानमिति शब्दानित्यत्वबाधकप्रमाणप्रवृत्ति-रेवं संयोगप्रवृत्तिरप्यन्यथोपपद्यमाना न तत्र तत्त्वान्तरे मानमिति संयोगबाधकप्रमाणप्रवृत्तिरित्याशङ्कते। शब्देति। अन्यथाऽन्य-

विषयत्वेनोपपत्तिर्भ्रान्तत्वेन वा। नाद्यः, तादृशान्यस्याभावात्। नान्त्यः, विना बाधकं तथात्वेऽतिप्रसङ्गादित्याह। अनुभवस्येति। न चेत्यादि। ननु नैरन्तर्यमेव संयोगस्थानेऽभिषिच्यतां कृतं तत्त्वान्तरेणेति चेत्, किमिदं नैरन्तर्यम्। द्वयोर्मध्ये मूर्तद्रव्यविरह इति चेत्, उष्णं जलं शीतलं शिलातलमित्यादौ जलादिमध्ये तेजःपाथसोः सत्त्वेन जलाद्यग्रहणप्रसङ्गात्। निबिडद्रव्याभावस्तथेति चेत्, विच्छेदेऽपि तथात्वे त्वचा द्रव्यग्रहणप्रसङ्गः, निबिडसंयुक्तयोर्मध्याग्रहणात्संयुक्तप्रत्ययानुदयप्रसङ्गश्चेत्यादि स्वयमूहनीयम्। यदेकं तन्न विरुद्धधर्माध्यस्तं यथा क्षणिकं स्वलक्षणं यच्च विरुद्धधर्माध्यस्तं न तदेकं यथा गवाश्वमिति प्रतिबन्धः। यदेकं तन्न विरुद्ध धर्माध्यस्तं यथा क्षणिकः परमाणुरेकश्चाभ्युपेयतेऽवयवी परेणेति तर्कः। नन्वर्थक्रियाशून्यविषयत्वं संयोगप्रत्ययस्य प्रामाण्यबाधकमत आह। संयोगस्यापीति॥

---

अस्तु तर्हि तद्देशत्वातद्देशत्वरूपो विरोधः। न। विरोधलक्षणाभावात्। न हि तद्देशसंसर्गविधौ नियमेन देशान्तरसंसर्गनिषेधः। तद्देशत्वतद्देशत्वयोस्तु स्यात्, तत्संसर्गस्तु केनेष्यते। अध्यक्षमेवैकसंसर्गपरिच्छेदकं तदभावव्यवच्छेदमुखेन तदन्यव्यवच्छेदफलमिमं विरोधमुद्गिरतीति चेत्, स्यादप्येवं, यदि नियमेनैकसंसृष्टस्यान्यसंसर्गं प्रतिक्षिपदध्यक्षमुदियात्, न त्वेतदस्ति, युगपदेकस्यानेकसंसर्गप्रवृत्तमध्यक्षमविशेषात्

**सर्वसंसर्गं वा प्रतिक्षिपेत्, न वा कमपि, स्वात्मानमेव वा, सर्वथा न विरोधं दीपयेत्, अन्ततः परमाणोरप्येकस्यानेकैः परमाणुभिः संसर्गस्वीकाराच्चेति ।**

शङ्क० टी० । अतद्देशत्वमिति । तद्देशभिन्नदेशत्वं नञः पर्युदासार्थत्वमाश्रित्य यदि विवक्षितं तदा न विरोध इत्याह । विरोधेति । विरोधाभावमेवाह । न हीति । प्रसज्यप्रतिषेधार्थत्वे विरोधमभ्युपेत्य तदभावमाह । तद्देशत्वेति । एतद्देशसंसृष्टोऽयमित्यध्यक्षं नैतद्देशासंसृष्ट इत्याकारेण जायमानं नैतद्देशभिन्नदेशसंसृष्ट इत्यपि फलतो विषयीकरोत्येवेति कथं न विरोध इति शङ्कते । अध्यक्षमेवेति । एतादृशमध्यक्षमेव नोदेतीत्याह । स्यादपीति । प्रत्युत प्रकृते विपरीतमध्यक्षमस्तीत्याह । युगपदिति । तन्तुषु पट इत्यध्यक्षं तावदस्ति, तच्च यदि तन्त्वन्तरसंसर्गं प्रतिक्षिपेत् तन्तुमात्रसंसर्गमेव प्रतिक्षिपेत्, सर्वतन्तुषु संसर्गग्रहस्याविशेषात् । न वा कमपीत्यत्र प्रतिक्षिपेदित्यावृत्तेन सम्बन्धः । एवमग्रेऽपि । आत्मानमिति । नोत्पद्यतेवेत्यर्थः । अन्तत इति ।

'षट्केन युगपद्योगात् परमाणोः षडंशता-'

इति त्वदभ्युपगमादित्यर्थः ॥

---

भगी० टी० । अतद्देशत्वमिति यदि पर्युदासे नञ् तदा तदितरदेशवृत्तित्वमर्थः, तत्राह । विरोधेति । अथ प्रसज्यप्रतिषेधे नञ् तदा तद्देशासम्बद्धत्वमर्थः, तत्राह । तद्देशत्वेति । न हि यदा यद्देशेऽवयवी वर्त्तते तदा तत्रैव न वर्तत इति स्वीकुर्मः । नन्वे-

कस्यैकच संसर्गं विषयीकुर्वदध्यक्षमेव तदभावं व्यवच्छिन्दद्ग्राह्यमन्य-संसर्गं व्यवच्छिनत्तीत्याह। अध्यक्षमेवेति। एकावयववृत्तित्वे नावयवान्तरावृत्तित्वं रूपादिवदनुमातुमपि शक्यमिति भावः। एकसंसर्गपरिच्छेदकमध्यक्षं तदभावं व्यवच्छिन्ददप्यन्यसंसर्गं न व्यव-च्छिनत्ति, एकेनैवाध्यक्षेणैकदाऽनेकसंसर्गस्य विषयीकरणादित्याह। स्यादपीति। आत्मानमपीति। प्रतिक्षिपेदित्यन्वयः। प्रत्यक्ष-मप्यनेकसंसर्गं विषयीकुर्वदनेकसंसर्गीत्यवयविवत्तदपि न स्यादित्यर्थः। अन्तत इति। अनेकवृत्तेरेकस्यानभ्युपगमे षट्परमाणुवृत्तिः परमाणुरप्येको न स्यादित्यर्थः॥

---

रघु० टी०। अतद्देशत्वं हि तदन्यदेशत्वं वा तद्देशत्वाभावो वा। आद्ये विरोधेति। द्वितीये तद्देशत्वेति। स्थिरस्य तद्देश-संयोगिनः कदाचित् तदभावः कालभेदादविरुद्ध इति भावः। एतेनाश्रयनाशनाशो व्याख्यातः। तदभावव्यवच्छेदमुखेनेति। व्यापकस्य तद्देशवृत्तित्वाभावस्य निवृत्तौ व्याप्यस्य तदन्यवृत्ति-त्वस्यापि निवृत्तेरिति। एकस्यानेकसंसर्गित्वस्य प्रत्यक्षसिद्धत्वान्न तादृशी व्याप्तिरित्याह। स्यादिति। आत्मानमिति। प्रत्यक्षस्या-प्यनेकविषयसंसर्गित्वात्॥

---

एतेन वृत्तिविकल्पो निरस्तः, परमाणुवृत्त्याऽव-यविवृत्तेस्तुल्ययोगक्षेमत्वात्।

शङ्क॰ टी॰। एतेनेति। अवयविनि सम्भवेनेत्यर्थः। वृत्ति-विकल्प इति। अवयवी यद्येकस्मिन्नवयवे कार्त्स्न्येन वर्त्तेत तदाऽवयवान्तरे न वर्त्ततैव, एकत्रैव परिसमाप्तेः। नाप्येकदेशेन, अवयवभिन्नस्यैकदेशस्याभावात्। तथा च न वर्त्तेत इत्यायातम्। एवं संयोगविभागसामान्यादीनां प्रतिक्षेप इति बौद्धाः। अत्र प्रतिबन्दिमाह। परमाणाविति। परमाणौ संयोगलक्षणा वृत्ति-रवयविनि तु समवाय इति विशेषः। एकत्रावयविनि कार्त्स्न्यैक-देशव्यवस्थैव नास्तीति न तद्विकल्पावसर इत्यग्रे स्फुटीभविष्यति॥

---

भगी॰ टी॰। नन्ववयवेष्ववयवी यदि कार्त्स्न्येन वर्त्तते, तदाऽवयवान्तरे न वर्त्तते, न ह्यस्ति सम्भवः कार्त्स्न्येन तत्रैव वर्त्तते-ऽवयवान्तरवृत्तिश्चेति। नाप्येकदेशेन वर्त्तते, एकदेशान्तराभावा-दिति वृत्तिव्यापकतदुभयाभावान्न वर्त्तत एवेत्यत आह। एतेनेति। षड्भिः परमाणुभिरेकः परमाणुः संसृष्टः किं कार्त्स्न्येनैकदेशेन वेति विकल्पात्। अथैकरूपे परमाणौ न कार्त्स्न्यैकदेशविकल्प-सम्भवः, तदाऽवयविन्यपि तुल्यमित्यर्थः॥

---

रघु॰ टी॰। वृत्तिविकल्पः कार्त्स्न्यैकदेशाभ्याम्। एकत्र कार्त्स्न्येन वृत्तावन्यत्र वृत्त्यसम्भवः, एकदेशेन च वृत्तौ तत्र तत्राप्येक-देशान्तरापेक्षायामनवस्था॥

---

अस्तु तर्हि चित्रे नीलानीलादिविरोधः। न हि तदेकं रूपं चित्रत्वविरोधात्, नाप्यनेकम्, एकावयविसमवायविरोधात्। न चानेकं व्यापकं, तथानुपलम्भविरोधात्। न चाव्यापकं, स्वाभावविदेशजातीयत्वविरोधात्, अन्यथा विरोधाविरोधव्यवस्थाविरोधात्। न चारूप एवावयवी, चाक्षुषत्वविरोधादिति चेन्न।

शङ्क० टी०। चित्रः पटो गुणविरोधादनेकः स्यादित्याक्षिपति। अस्त्विति। चित्रत्वेति। नानाभूत एव वस्तुनि चित्रपदप्रयोगादित्यर्थः। स्वाभावेति। रूपादीनां व्याप्यवृत्तिजातीयत्वेनाव्याप्यवृत्तित्वविरोधादित्यर्थः। ननु यथा हरीतकी गुणविरोधेन नीरसैव, तथा पटोपि नीरूप एव स्यादित्यत आह। न चेति॥

---

भगी० टी०। ननु विजातीयवर्णनानातन्त्वारब्धपटे नीलपीतादिविरुद्धधर्माध्यासान्नैकोऽवयवीत्याह। अस्त्विति। तदुपपादयति। न हीति। तादृशे पटे यद्रूपं तद्यद्येकं तदा चित्रं न स्यात्, नानाभूतस्य चित्रपदवाच्यत्वादित्यर्थः। नन्वनेकमेव रूपं नीलत्वादिविरुद्धजातिमत्तया चित्रमुच्यत इत्याह। नानेकमिति। विरुद्धानेकजातीयरूपस्यैकत्रावयविनि विरोधादवृत्तेरित्यर्थः। अथ तादृशपटवृत्ति रूपमनेकं? तद्व्याप्यवृत्त्यव्याप्यवृत्ति वा। आद्ये न चानेकमिति। सकलावयवावच्छेदेनावयविनि विजातीयानेकरूपानुपलम्भेरित्यर्थः। अन्त्ये न चेति। संस्कारत्वान्यमूर्तमात्र-

वृत्तिगुणवृत्तिगुणत्वव्याप्यजातेरव्याप्यवृत्तिवृत्तित्वविरोधादित्यर्थः। एतच्च चतुर्थाध्यायप्रकाशे व्युत्पादितमस्माभिः। अन्यथेति। परस्पराभावव्याप्ययोः सामानाधिकरण्य इत्यर्थः। न चारूप इति। न चोद्भूतरूपवदवयवसमवेतत्वं द्रव्यचाक्षुषत्वे प्रयोजकम् चित्रावयवारब्धे तदभावात्। न च साक्षात्परम्परासाधारणमवयवत्वम्, समवायिकारणस्यैवावयवत्वात्, आरभ्यारम्भकवादस्य निषेधात्॥

---

रघु० टी०। चित्रत्वविरोधात् नानारूपाणामेव चित्रपदार्थत्वात्। एकावयवीति। युगपदेकत्रानेकरूपाणामवृत्तेः, अन्यथैकजातीयरूपारब्धेऽप्यनेकरूपवृत्तिप्रसङ्गात्। बलवद्बाधकान्तरमाह। न चानेकमिति। चाक्षुषत्वेति। न च रूपवत्समवेतत्वं द्रव्यचाक्षुषत्वे तन्त्रम्, चित्रावयवपरम्परारब्धे तस्याप्यसम्भवात्, आरभ्यारम्भकवादस्य निरासात्, नीलाद्यनेकस्वभावे लाघवेन रूपवत्त्वस्यैव प्रयोजकत्वेन कल्पनात्॥

---

चित्रत्वं हि नानात्वं वा मिथोविरुद्धनानाजातिसमवायं वाऽभिप्रेत्य यदि एकत्वाभ्युपगमे विरोध उद्भाव्यते, तदैवमेतत्, न तु तथाऽभ्युपगमः। न खल्वनेकत्वं चित्रत्वम्, शुक्लेष्वप्यनेकेषु चित्रप्रत्ययप्रसङ्गात्, नाप्येकस्मिन् विरुद्धानेकजातिसमवायः, विरोधेनैव निराकृतत्वात्। अपि तु नीलत्वादिवच्चित्रत्वमपि जातिविशेष एव, स चावयववृत्तिविजातीयरूपसमा-

द्वाराभिव्यञ्जत्वान्नैकरूपावयवसहितस्यावयविन उपलम्भेऽप्युपलभ्यते। अत एव त्र्यणुके चित्रेपि चित्रप्रत्ययो न कदापि। तथाप्यचित्रे पार्श्वे चित्रप्रत्ययो मा भूत्, धवलप्रत्ययस्तु कुत इति चेत्, अवयवरूपसञ्चारेणावयविनोपि तथा प्रत्ययात्। अत एव यत्रावयवरूपं न प्रत्यक्षं तत्र त्रसरेणावेतदपि नास्ति, दृश्यमेव (वा)ह्यालोकरूपमारोप्य पिञ्जरस्त्रसरेणुरालोक्यते।

शङ्क० टी०। चित्रः पट इति प्रतीतिर्न नानारूपावलम्बना, न वा नीलत्वपीतत्वविरुद्धनानाजात्याश्रयैकरूपालम्बना, किन्तु तच्चित्रत्वजातिमदेकचित्ररूपवदवयव्यालम्बनेति न विरोधगन्धोपीति परिहरति। चित्रत्वं चेति। एवं तर्हि धवलैकपार्श्वावच्छेदेनोपलम्भेपि पटे चित्रप्रत्ययः स्यादित्यत आह। स चेति। अत एवेति। तत्रावयवरूपस्य व्यञ्जकस्याग्रहादित्यर्थः। तर्हि तत्र पार्श्वे धवलप्रत्ययः कथम्, न हि तद्धवलं रूपमपि तु चित्रमिति शङ्कते। तथापीति। तत्रावयविरूपं न गृह्यत एव, किं त्ववयवरूपमात्रमिति परिहरति। अवयवेति। अत्रापि त्रसरेणुरूपं दृष्टान्तमाह। अत एवेति। एतदपि नास्तीति। धवलादिप्रत्ययोपि नास्तीत्यर्थः। कीदृशी तर्हि त्रसरेणौ रूपप्रतिपत्तिरित्यत आह। दृश्यमेवेति॥

---

भगी० टी० । अनभ्युपगमबीजमाह । न खल्विति । अपि त्विति । यथा नीलाद्याकारानुगतव्यवहाराश्नीलत्वं जातिः, तथा कर्बुराकारानुगतव्यवहाराश्चित्रत्वमपि जातिरित्यर्थः। तर्हि नील-रूपवद्भागावरणे शुक्लरूपवदवयवसहितेऽवयविनि गृह्यमाणेपि चित्रधीः स्यादित्यत आह । स चेति ।

ननु सर्वैश्चित्रतन्तुभिर्यत्र पट आरभ्यते तत्रावयवरूपाणामेक-जातीयत्वात् कथं चित्रं रूपम्। अथ तदारम्भकपरम्पराकपत्वेनैव कारणत्वं, तदा परम्परया रूपवदवयवसमवेतत्वस्यैव चाक्षुष(त्व-प्रयोजक)त्वापत्तेर्नीरूप एवावयव्यस्तु ।

अत्राहुः। तत्रान्यैव रूपोत्पत्तिसामग्री, साक्षादवयवरूपाणा-मिव परम्परावयवरूपाणामपि कारणताग्राहकमानतौल्यात् । नन्वेवं चित्रत्रसरेणुरूपे चित्रत्वग्रहो न स्यात्, तदवयवरूपस्या-तीन्द्रियत्वादित्यत आह । अत एवेति । इष्टापत्तिरेवेत्यर्थः । तथापीति । अवयविनि धवलरूपाभावादित्यर्थः । अवयवेति । अवयवसमवेतं धवलरूपमवयविन्यारोप्यत इत्यर्थः । तत्रेति । चित्रत्रसरेणोरवयवरूपमवयविनि नारोप्यते, अवयवरूपस्यैवाग्रहा-दित्यर्थः । कथं तर्हि चित्रत्रसरेणौ पिञ्जरत्वग्रहः, रूपत्वव्याप्य-जातेरग्रहादित्यत आह । दृश्यमिति ॥

---

रघु० टी०। स चेति। अवयवत्वमिह साक्षात्परम्परासाधारणं विवक्षितम्, तेन चित्रारब्धे न चित्रप्रत्ययानुपपत्तिः। अथ चित्र-रूपोत्पाद एव तत्र कथम्, अवयवे विजातीयरूपविरहादिति

चेत्। साचात्परम्परासाधारणावयववृत्ति-मूलभूतपरमाणुवृत्तेर्वा विजातीयरूपस्य चित्ररूपनिमित्तकारणत्वादिति केचित्।

नीलधवलारम्भात् पीतरक्तारम्भमिव नीलाद्यारम्भाद्विजातीयमेव चित्रारब्धं चित्रम्, चित्रमात्रे त्ववयवरूपमेव प्रयोजकम्, विशेषसामग्रीणां नियामकत्वाच्च न सर्वत्र चित्रोत्पाद इत्यपरे।

एकदेशिनस्तु विजातीयानेकरूपसमाहार एव चित्रप्रत्ययालम्बनम्, सेनावनादिवच्चैकत्वप्रत्ययः, नीलादेरनीलाद्यनारम्भकत्वात्, नीलाद्यारम्भे बाधकाभावाच्च, समवाय्यनुत्पादादना[१]रम्भवताप्यनेकेन तदुत्पादे आरम्भसम्भवात्, अनीलादिसमवलनस्य प्रतिबन्धकत्वे मानाभावात्, स्वाधिकरणावयवावच्छेदेन च नीलाद्यारम्भात् तदव्याप्यवृत्तिनीलादिमात्रावयवारब्धे तु तत्तत्सामग्रीसमाजाज्जायमानमेकं व्यापकम्, संयोगतदभाववच्चैकत्राप्यव्याप्यवृत्तित्वात्प्रकारभेदेनाविरोध इति वदन्ति।

अवयवरूपेति। अवयविनि चित्ररूपाग्रहेऽवयवरूपसमारोपस्यावयविरूपे वा चित्रत्वाग्रहेऽवयवरूपजात्यारोपस्येत्यर्थः तत्॥

---

स्यादेतत्। यदि चित्रत्वं नाम जातिविशेषः, कथं तर्हि विरुद्धजातीयरूपसमाहारमात्रे [२]चित्रत्वप्रत्यय इति चेत्, न वै नीलधवलारुणेषु पटेषु क्वचिदपि

(१) रनारम्भवताऽप्येकेन इति २ पु० पा०।

(२) चित्रप्रत्यय इति २ पु० पा०।

(१)कार्बुरार्थश्चित्रप्रत्ययः (२)कस्यापि, वैधर्म्यनिमित्तस्तु केन वार्यते? चित्रशब्दस्याक्षादिपदवदनेकार्थत्वात्। नीलपीतादिषु मिथः संसृष्टेष्वनारब्धद्रव्येष्वपि कर्बुरप्रत्ययो भवतीति चेत्, सत्यम्, द्रव्यान्तरोत्पादाभिमानात् स्थौल्यातिशयप्रत्ययवदुपपत्तेरिति।

शङ्क० टी०। अनारब्धद्रव्येषु नीलधवलादितन्तुषु कथं न चित्रप्रत्यय इति शङ्कते। यदि चित्रत्वमिति। तत्र चित्रत्वजातिनिबन्धनो न चित्रप्रत्ययः, किन्तु वैधर्म्यं यद्वैलक्षण्यं वैचित्र्यमिति यावत्, तन्निबन्धनमिति परिहरति। न वै इति। तर्हि तत्र चित्रशब्दप्रयोगः कथमत आह। चित्रशब्दस्येति। चित्रशब्दस्तावदनेकार्थो भवतु कर्बुरप्रत्ययशब्दौ कथमनारब्धद्रव्यस्थले समर्थनीयावित्याशङ्कते। नीलेति। यथाऽनारब्धद्रव्ये धान्यराशौ स्थौल्यप्रत्ययशब्दौ द्रव्यान्तरारम्भभ्रमेण, तथा प्रकृतेपि कर्बुरप्रत्ययशब्दाविति परिहरति। सत्यमिति॥

---

भगी० टी०। यदीति। विजातीयरूपेषु पटेषु द्रव्यान्तरानुपपत्तेः कथं चित्रधीरित्यर्थः। यदि कर्बुरविषया चित्रधीस्तर्ह्यसिद्धिरेवेत्याह। न वै इति। अथ वैधर्म्यविषया सा धीस्तदा तत्र नानुपपत्तिरित्याह। वैधर्म्येति। असिद्धौ बाधकमाह। नीलेति। भ्रान्तत्वाच्च कर्बुरप्रत्ययो यथार्थस्य च तत्रा-

(१) कार्ये वार्य इति ३ पु० पा०।
(२) कस्यचिदपि इति २ पु० पा०।

सिद्धिरुक्तेत्याह । द्रव्यान्तरेति । अत्रानुरूपं निदर्शनमाह । स्थौल्येति । एकपटग्रहे यादृशं स्थौल्यं दृश्यते ततोतिशयितमन्योन्य-संसृष्टपटेषु भासते, तद्यथाऽऽरोपितं तथैतदपीत्यर्थः ॥

---

रघु० टी० । वैधर्म्यं वैलक्षण्यम् ॥

---

अस्तु तर्हि परमाणुनिवृत्तेः सर्वविलोपः । तथाहि । बहुभिः परमाणुभिः संसृज्यमानः परमाणुः प्रत्येकं किमेकदेशेन संयुज्यते कार्त्स्न्येन वा, प्रकारान्तरा-भावात् । न प्रथमः, तस्यैकदेशाभावात्, भावे वा परमाणुत्वव्याघातात् । न द्वितीयः, परमाण्वन्तरेणा-संसर्गप्रसङ्गात्, न ह्यस्ति सम्भवः, एकत्रैव परिसमाप्त-वृत्तिरन्यत्रापि वर्त्तत इति ।

शङ्क० टी० । नन्ववयवी तदा भवेद्यदि तन्मूलकारणं परमाणुः स्यात्, स एव तु नास्तीति शङ्कते । अस्त्विति । सर्वविलोप इति । बाह्यसर्वविलोप इत्यर्थः । विज्ञानवादी परमाणुनिराकरणयुक्तिमाह । तथाहीति । विज्ञानवादिना पर-माणुनिराकरणायोक्ता युक्तिरवयवनिराकरणेऽपीति भावः ॥

---

भगी० टी० । ननु परमाणुप्रतिबन्धा वृत्तिविकल्पः समा-धेयः, सोपि मा भूदत एव दोषादित्याह । अस्त्विति । तथा च बाह्यमात्रनिरासात् सिद्धो विज्ञानवाद इति भावः ॥

---

न। बुद्ध्या समानयोगक्षेमत्वात्। तथाहि। बुद्धिरपि सन्तमसन्तं वाऽनेकं विषयमालम्बमानाऽऽकारं वा बिभ्रती कार्त्स्न्येन वा एकदेशेन वा। न प्रथमः, पीतादिविषयाकारविलोपप्रसङ्गात्। न ह्यस्ति सम्भवो नील एव विषय आकारे वा परिसमाप्तात्मा पीतादिसम्पृक्तात्मा चेति। न द्वितीयः, तदभावात्। एवमनाकारत्वमविषयत्वं च बुद्धेरिष्यत एवेति चेत्, तत् किं यत् प्रतिभासते तदसत् आहोस्वित् न प्रतिभासत एव किञ्चित्। नाद्यः, असत्यपि नीलपीतादौ ज्ञानवृत्तिविकल्पस्य तदवस्थत्वात्। न हि कृत्स्नमेव विज्ञानं नीलोल्लेखि, पीताद्यनु(१)ल्लेखप्रसङ्गात्। नापि तदेकदेशः, तदभावादित्युक्तत्वात्। न द्वितीयः, बाह्येपि वृत्तिविकल्पस्यानुपपत्तेरिति।

शङ्क० टी०। सिद्धान्ती युक्तिमिमां विज्ञाननिराकरणेऽप्यतिदिशति। न बुद्ध्येति। मतभेदेनाह। सन्तमसन्तमिति। मतान्तरमाह। स्वाकारं वेति। पीतादीति। पीतादिविषयाकारयोर्विलोपप्रसङ्गादित्यर्थः। तदभावादिति। बुद्धावेकदेशाभावादित्यर्थः। अत्र निराकारबुद्धिवादीष्टापत्तिमाह। एवमिति। सविषयत्वं बुद्धेर्द्रढयितुमाह। तत्किमिति। असज्ज्ञानेपि विज्ञाने कार्त्स्न्यैकदेशविकल्पस्यापरीहारादित्याह। असत्यपीति।

---

(१) नुल्लेखित्व इति ३ पु० पा०।

वृत्तिविकल्पमेव विघटयति। न चेति। बाह्योपीति। न चेत् कश्चित् प्रतिभासते तदा बाह्यं नास्त्येव, कुत्र वृत्तिविकल्पः स्यादित्यर्थः॥

---

भगी० टी०। बाह्योपीति। यदि न भासत एव किञ्चित् तदा बुद्धेरविषयत्वे बाह्येपि वृत्तिविकल्प आश्रयासिद्ध इत्यर्थः॥

---

रघु० टी०। बाह्ये वृत्तिविकल्पस्यानुपपत्तिर्बाह्यस्यैवासिद्धत्वात्॥

---

स्यादेतत्। निःशेषसमुदायी कृत्स्नशब्दस्यार्थः, समुदाये कश्चिदेव समुदाय्येकदेशपदार्थः, न च बुद्धिः समुदायस्वभावा, तस्या एकरूपत्वात्, [1]तत् कुतः कृत्स्नैकदेशविकल्पोत्थानम्, कथं तर्हि तद्विषयिणी तदाकारवती वा? प्रकारान्तराभावादिति यदि, तदा स्वरूपेणेति ब्रूम इति चेत्। स्फुटं निरटङ्कि तार्किकवेदिकाविटङ्केन केवलमसभ्यमभ्यसूयता दूरङ्गत्वेति।

शङ्क० टी०। अवयविनि वृत्तिविकल्पं निराकर्त्तुं बुद्धौ परस्य तन्निराकरणं शङ्कते। स्यादेतदिति। एकस्या बुद्धेर्न समुदायत्वं न चैकदेशत्वमिति कुतस्तद्घटितो वृत्तिविकल्पोऽवकाशमासादयतीत्यर्थः। कथं तर्हीति। तद्विषयत्वं तदाकारत्वं

(१) तदेतत् इति २ पु० पा०।

वा कार्त्स्न्यैकदेशयोरन्यतरेण सम्भाव्यते तच्चेन्नास्ति तदानुपपत्ति-रित्याशङ्कार्थः। बौद्ध एव समाधत्ते। स्वरूपेणेति ब्रूम इति। तदेतत्तुल्यन्यायतया परिहरति। स्फुटमिति। तार्किकवेदिका तार्किकाध्यापनस्थानं तत्र विटङ्को धूर्त्तः। दूरं गत्वा स्वदोष-समाधानावसरे॥

भगी० टी०। निःशेष इत्यादिना कार्त्स्न्येन विकल्पा-सम्भव उक्तः। समुदाय इत्यादिनैकदेशविकल्पाभावो दर्शितः। स्फुटमित्यादिनाऽवयविनोऽप्यवयवेषु स्वरूपेण वृत्तिरस्त्वित्यभि-प्रेत्योपहसितम्॥

रघु० टी०। तद्विषयिणीत्यादौ तच्छब्दः समुदायपरामर्शः। तार्किकवेदिका तार्किकाणां संमिलनस्थानं तत्र विटङ्को धूर्त्तः। सुदूरं गत्वा स्वपक्षदूषणनिरसनावसरमासाद्य॥

एतेन तदतद्देशत्वं निरस्तम्। तथाहि। बुद्धे-र्नीलाकारतां परिच्छिन्दद्ध्यक्षं तदभावव्यवच्छेद-मुखेन तदविनाभूतां पीताद्याकारतामपि व्यवच्छि-न्द्यात्, तथा च कथमेका बुद्धिर्नीलपीताद्याकारा स्यादिति तुल्योऽनुयोगः। भवेदेवं यदि नीलाद्या-कारतायाः पीताद्याकारत्वाभावाविनाभावः स्यात्, स एव तु कुतः, नीलपीताद्याकाराया बुद्धेरैकात्म्येनैव

निश्चयात्। प्रत्याकारनियतत्वे चित्रप्रतिपत्तेरप्यनुपपत्तिरिति चेत्, तदेतत् तुल्यं परमाण्ववयव्यादिष्वपि। न हि तत्राप्यनेकपरमाणुसंसृष्टस्य परमाणोरनेकावयवसंसृष्टस्यावयविनो वा नैकात्मताऽनुभूयते, तथात्वे वा एकस्यानेकसंसर्गप्रतिपत्तिः कदापि न स्यादिति तुल्यैवार्थगतिः। वाचि वैचित्र्यं तु क्वोपयुज्यत इति।

शङ्क० टी०। एतेनेति। बुद्धिप्रतिबन्दिद्वारेणेत्यर्थः। प्रतिबन्दिमेव स्फुटयति। तथाहीति। परसमाधिं स्वमतसमाधानाय विशदयति। भवेदप्येवमिति। यथाऽनेकविषयत्वमनेकाकारत्वं वा बुद्धौ स्फुटसिद्धं न दोषमावहति, तथाऽनेकावयवाश्रितत्वमवयविनि बहुसंयोगित्वं च परमाणौ न दोषमावहतीत्याह। तदेतदिति। तुल्यमिति। बौद्धकोटितुल्यतामेवाह। न हीति॥

भगी० टी०। चित्रप्रतिपत्तेः अनेकविषयकज्ञानस्येत्यर्थः। तुल्यैवेति। एकस्या बुद्धेरनेकसंसर्गविरोधित्वे लिङ्गलिङ्गिसामानाधिकरण्यानुपपत्तौ व्याप्तिग्रहात् कथकत्वव्याघात इति भावः॥

---

रघु० टी०। एतेन बुद्धिप्रतिबन्दिग्रहेण। तदविनाभूतां नीलाकारत्वाभावव्याप्याम्। चित्रप्रतिपत्तेः नीलाद्यनेकाकारालम्बनप्रतिपत्तेः। एकं हि विज्ञानं यद्याकारद्वयं नालम्बते न

तर्हि तयोर्विरोधसिद्धिः । आलम्बते चेत्, तस्यैव तदाकार-द्दयाकारत्वाद्विरुद्धमेकस्योभयाकारत्वम्, तदालम्बनतायास्तदा-कारत्वानतिरेकादिति । कदापि न स्यादिति । तथा चैकस्य साधनवत्त्वाद्यग्रहणात्मानुमानादि-वार्त्तेति ॥

---

## संयोगव्यवस्थापनेनैव षट्केन युगपद्योगात् दिग्देश-भेदाच्छायावृत्तिभ्यामित्यादयो निरस्ताः ।

शङ्क० टी० । परमाणौ बौद्धैर्यद्वाधकमुपन्यस्तं तद्दूषयितु-मुपन्यस्यति । संयोगेति ।

"षट्केन युगपद्योगात् परमाणोः षडंशता ।
दिग्देशभेदतश्छायावृत्तिभ्यां चापि सांशता ॥"

इति। बौद्धकारिकार्थस्तु एकस्य परमाणोर्दिक्चतुष्टयवर्त्तिन-श्चत्वारः परमाणव उपर्यधश्च द्वौ परमाणू, तदेवं षट्केन युगपत् एककालं योगात् षडवयवाः परमाणोः प्राप्ताः, न हि यदवच्छेदे-नैकपरमाणुसंयोगस्तदवच्छेदेनैवापरपरमाणुसंयोगो मूर्त्तानां समान-देशताविरोधात् । किं च प्राच्यः परमाणुः प्रतीच्यः परमाणु-रिति व्यपदेशोऽस्ति । स च सावयवानामेव दृष्टः । किं च पर-माणुना च्छायाऽवश्यं जननीया, किं चावरणं जननीयम्। तदुभयं सावयवानामेव दृष्टमतः परमाणुः सावयव इति सिद्धम् ।

तदेतदनुपपन्नम्, संयोगस्तत्तद्दिगवच्छेदेन, न तु परमाण्व-वच्छेदेन, प्रमाणाभावात्, अव्याप्यवृत्तितापि तत्तद्दिगवच्छिन्नात्य-न्ताभावसामानाधिकरण्यादेव दिग्देशभेदोऽप्येतद्दिग्वर्त्तिताधीनः,

न तु सावयवत्वाधीनः, छायाजनकत्वमावरकत्वं च मूर्त्तत्वप्रयुक्तं, न तु सावयवत्वप्रयुक्तम्, वस्तुतस्तूभयत्र प्रमाणाभाव एवेति भावः ॥

---

भगी॰ टी॰ ।

षट्केन युगपद्योगात् परमाणोः षडंशता ।
दिग्देशभेदाच्छायावृत्तिभ्यां चापि सांशता ॥

इति बौद्धकारिका । तस्या अयमाशयः । एकः परमाणुरुपर्यधश्चतुर्दिक्क्रमेण षड्भिः परमाणुभिरेकदा संयुज्यते, ततः परमाणोः षडंशता साध्या घटादिवत् । तथा दिग्देशभेदामूर्त्तत्वेन छायाजनकत्वादावरकत्वाच्च साध्येति, तदेतन्निरस्यति । संयोगेति । बुद्धिवत् स्वरूपेणैवैकस्यानेकसंसर्गव्यवस्थापनेनेत्यर्थः ॥

---

रघु॰ टी॰ । स्थूलद्रव्यान्तरवर्त्तिनः परमाणोरुपर्यधः प्राच्यादिदिक्चतुष्टये च परमाणुषट्कसंयोगात्षडंशता, अंशभेदं विना युगपदेकत्रानेकमूर्त्तसंयोगासम्भवात्, तथा प्राच्यः परमाणुरित्यादिव्यपदेशस्य मूर्त्तत्वात् सिद्धयोश्च छायावरणयोः सावयवत्वं विनाऽनुपपत्तेस्तस्य सावयवत्वम्, भवतां निरवयवे विज्ञाने सामान्ये च तदभावात् । तदुक्तम् ।

'षट्केन युगपद्योगात्परमाणोः षडंशता ।
दिग्देशभेदतश्छायावृत्तिभ्यां चास्य सांशता' ॥

इति । तदेतन्निरस्यति । संयोगेति । स्वरूपनिबन्धनं संयोगित्वं नांशमपेक्षते, युगपदनेकमूर्तसंयोगित्वं चानेकदिगव-

च्छेदेनाविरुद्धम्, प्राच्यादिव्यपदेशोपि प्रतीच्याद्यसंयोगित्वे सति प्राच्यादिसंयोगित्वात्, सावयवे च (१)दीर्घपिण्डादौ मध्यवर्त्तिनमपेक्ष्य प्राच्यादिव्यवहारविरहात्। छाया च यदि प्रामाणिकी तदा तेजोगतिप्रतिबन्धकसंयोगभेदात्। एतेनावरणं व्याख्यातम्॥

---

परमाणुसिद्ध्यसिद्धिभ्यामेव मूर्त्तत्वादयो निरवकाशिताः।

शङ्क० टी०। ननु परमाणवः सावयवाः मूर्त्तत्वादवयवत्वाद्रूपवत्त्वात् स्पर्शवत्त्वादित्यादौ को दोष इत्यत आह। परमाण्विति। न त्वारोप एवेत्यर्थः॥

---

भगी० टी०। ननु मूर्त्तत्वस्पर्शवत्त्वादिना परमाणोः सांशता स्यादित्यत आह। परमाण्विति। परमाणोरसिद्धा आश्रयासिद्धिः, सिद्धौ च लाघवादवयवानवस्थारूपप्रतिकूलतर्काच्च स निरवयव एव सिद्ध इति धर्मिग्राहकमानबाध इत्यर्थः। यद्यपि व्याप्यत्वासिद्धिरप्यत्र, तथाप्ययोगव्यवच्छेद एवकारार्थः। अत्यन्तोद्भटापराधत्वाच्च विरोध एवोद्भावितः॥

---

रघु० टी०। परमाण्विति। लाघवादनवस्थाप्रसङ्गाच्च निरवयवस्य परमाणोः (२)सिद्धा धर्मिग्राहकमानबाधः, असिद्धौ

---

(१) दीर्घदण्डादौ इति २ पु० पा०।
(२) सिद्धौ इति २ पु० पा०।

चाश्रयासिद्धिः। एवकारेण दूषणान्तरापेक्षाविरहः सूचितः। आदिपदात् सांशत्वादिपरिग्रहः॥

आकाशव्यतिभेदादयस्त्वसम्भाविता एव।

शङ्क० टी०। नन्वाकाशं परमाणुमध्ये वर्त्तते न वा आद्ये सावयवत्वं परमाणोः सिद्धम्। अन्त्ये चाकाशस्य सर्वगतत्वमसिद्धमत आह। आकाशेति। मध्याभावादेव तदनुपपत्तिरित्यर्थः। आदिपद ग्रहणात्सत्त्वादयः सङ्गृहीताः॥

भगी० टी०। नन्वाकाशस्य सर्वगतत्वेन परमाणोरभ्यन्तराकाशेन सम्बन्धो भविष्यति, ततः सावयवत्वं स्यादित्यत आह- आकाशेति। परमाण्वभ्यन्तरे आकाशेन सम्बन्धो व्यतिभेदः, परमाणोरभ्यन्तराभावादेव न तत्राकाशसम्बन्ध इत्यर्थः। अनेनांशपदयाथ्यमुक्तम्॥

रघु० टी०। आकाशेन परमाणोर्व्यतिभेदोऽभ्यन्तरे संयोगोऽभ्यन्तराभावादेवासम्भवी, सर्वगतत्वं तु विभूनां सर्वमूर्त्तसंयोगितामात्रम्॥

सर्वत्र चात्र हेतुदशायां प्रतिज्ञापदयोर्व्याघातः, कालात्ययापदेशश्च। प्रसङ्गदशायामाश्रयासिद्धिर्व्याप्त्यसिद्धिश्च, दृष्टान्तासिद्धेः, अनवस्थालक्षणविप-

रीततर्कस्य तदुपष्टम्भकतया त्रुटेरमेयत्वप्रसङ्गस्य च विद्यमानत्वात् ।

शङ्क० टी० । सर्वत्रेति । निरवयवद्रव्यत्वं परमाणुत्वम्, तच्च सावयवत्वेन व्याहतम् । धर्मिग्राहकमानबाधमाह । कालेति । ननु यदि परमाणुर्निरवयवः स्यात् मूर्त्तो न स्यात्, षड्केन युगपद्युक्तो न स्यात्, आवरको न स्यादित्यादौ किं दूषणमत आह । प्रसङ्गेति । कुतो व्याप्तिसिद्धिरत आह । दृष्टान्तेति । परमाणुनिवृत्तौ सर्वविलोपस्य त्वयैवोक्तत्वेनान्वयिनो व्यतिरेकिणो वा दृष्टान्तस्यासिद्धेः कुत्र व्याप्तिग्रह इत्यर्थः । यद्वा मूर्त्तश्चासौ नस्मान्न निरवयव इत्युपसंहारस्थानस्य दृष्टान्तस्याभावाद्विपर्यया-ासानमवयविनस्त्वयाऽनभ्युपगमादिति द्वयम् । परमाण्ववयव-ाायामनवस्था, अनन्तावयवारब्धत्वेन मेरुसर्षपयोस्तुल्यपरि-स्यात्लापत्तिरित्याह । अनवस्थेति । त्रुटिस्त्रसरेणुः, तस्यामेयत्वं रिदृश्यमानपरिमाणरहितत्वं तदधिकपरिमाणवत्त्वं वा तदवयव-ापि महत्त्वं तदवयवस्य प्रत्यक्षत्वं वा अनन्तावयवारब्धत्वेन रुपरिमाणतुल्यपरिमाणवत्त्वं वाऽऽपाद्यम् ॥

---

भगी० टी० । सर्वत्रेति । हेतौ परमाणुः सावयव इति ्रतिज्ञापदयोर्व्याघातः, परमाणुपदस्य निरवयववाचकत्वादित्यर्थः । दृष्टान्तेति । रूपादीनामपि परैः परमाणुत्वाङ्गीकारात् । पक्षत्वमिति । मूर्त्तत्वमसिद्धव्याप्तिकम् । यद्वा सावयवत्वासिद्धौ साध्यव्यतिरेकासिद्धेरन्वयव्यतिरेकित्वं न मूर्त्तत्वस्य, बौद्धैरन्वय-

व्यतिरेकिण एव गमकत्वाभ्युपगमादित्यर्थः। न च बुद्धिरेव दृष्टान्तः, असत्ख्यातिनयानुसाराद्बुद्धावेव निरवयवत्वसिद्धेश्च स्यादिति वाच्यम्। आद्ये बुद्धेर्मूर्त्तत्वाभावेन साधनविकलत्वात्। अन्त्ये प्रतीत्यनादरे तु प्रत्यक्षबाध एवेति भावः। अनवस्थेति। मूर्त्तत्वात् परमाण्ववयवादीनां सर्वेषां सावयवत्वसिद्धेरित्यर्थः। त्रुटेरिति। त्र्यणुकावयवो यद्यवयवपरम्परारभ्यः स्यात् प्रत्यक्षः स्यादित्यमेयत्वापादनार्थः॥

---

रघु॰ टी॰। निरवयवस्याणोः परमाणुशब्दार्थत्वात् परमाणुः सावयव इति प्रतिज्ञापदयोर्व्याघातः। प्रसङ्गेति। निरवयवत्वेन मूर्त्तत्वाद्यभावप्रसञ्जने आश्रयासिद्धिः, विज्ञानवादिनां ग्राह्यासिद्धेर्व्याप्यसिद्धिः, सावयवत्वस्य क्वचिदप्यप्रसिद्धा तदभावस्याप्यप्रसिद्धावन्वयतो व्यतिरेकतश्च दृष्टान्ताभावात्। अवयवपरम्पराया आनन्त्ये अवयवानामपि महत्तरतमभावात्तदारब्धस्य त्रसरेणोरपकृष्टतमं महत्त्वं न स्यात्, स्यात्तु प्रकृष्टतममिति॥

---

न च प्रलयः, परमाणोः, असत्त्वसाधकस्य प्रमाणस्याभावात्, सावयवत्वापादकानां च हेतूनामनवस्थोत्थापकत्वादिति। तदन्य एवायं परमाणू रक्तबीजो यस्य [1]भागा युक्तिचामुण्डोदरमपि भित्वा निष्पतन्तीति।

---

(१) भेदा इति २ पु॰ पा॰।

शङ्क० टी० । ननु परमाणोरपि विनाश एवास्तु, तथापि त्वदभ्युपगतहानिरित्यत आह । न चेति । असत्त्वसाधकस्य ध्वंससाधकस्य समवाय्यसमवायिनाशरूपस्य प्रमाणस्याभावादित्यर्थः । ननु परमाणोः सावयवत्वादेव तद्विनाशकौ स्वीक्रियेतामत आह । सावयवत्वादेवेति । तदन्य एवेति । परमाणोः सावयवत्वसाधिका युक्तिरेव चामुण्डा, तथा च यथा यथा तदवयवसाधनं तथा तथा परमाणुसिद्धिरित्यर्थः ॥

---

भगी० टी० । नापि मूर्त्तत्वात् परमाणोर्ध्वंसः स्यादित्याह । न चेति । द्रव्यनाशकस्य समवाय्यसमवायिनाशस्य परमाणावसम्भवादित्यर्थः । ननु परमाणोः सावयवत्वेन तत्र तौ सम्भविष्यत इत्यत आह । सावयवत्वेति । तदन्य एवेति । यथा युक्त्या परमाणोरवयवः कल्प्यः सैव चामुण्डा तस्या उदरं नाशकसमवधानं तस्य भेदः परमाण्ववयवस्यैव परमाणुत्वापत्तिरित्यर्थः ॥

---

रघु० टी० । विनाशिद्रव्यत्वात् परमाणोः सावयवत्वं साध्यमत आह । न चेति । प्रलयोऽसत्त्वं च विनाशः । सावयवत्वसाधकत्वेनोपन्यस्ता मूर्त्तत्वादय एव प्रमाणमत आह । सावयवत्वेति । समवाय्यसमवायिनाशं विना द्रव्यनाशासम्भवात्समवायिकल्पने चानवस्थानाच्चिरवयवस्यैव नित्यस्य परमाणोः सिद्धिः । तदन्य एवेति । परमाणोरवयवत्वेन कल्पनीयस्यैव परमाणुत्वापातात् ॥

---

न च कल्पिताश्रयाः कल्पितप्रतिबन्धाश्च प्रसङ्गा भविष्यन्तीति युक्तम्। (स्वे)च्छाकल्पितेन व्यवहारेण सर्वविधिनिषेध[1]व्यवहारविलोपप्रसङ्गात्। लोकव्यवस्थापेक्षणे तु तद्विरोधेनोत्तरस्य निषेध(क)स्यात्मलाभाभावादित्यसकृदावेदितत्वात्।

शङ्क० टी०। नन्वमत्ख्यात्युपनीतपरमाण्वाश्रया एव प्रसङ्गाः सावयवत्वसाधकाः स्युरित्यत आह। न चेति। तथा सति किमपि न सिद्ध्येदित्यत आह। इच्छेति। ननु न विधिनिषेधव्यवहारविलोपो यथालोकव्यवहारं तयोरिष्यमाणत्वादित्यत आह। लोकेति। एवं सत्यवयविसंयोगादिनिषेधकं यत्तत्त्वं जात्युत्तरमतः स्वव्याघातकत्वात्तस्यात्मलाभ एव नास्तीत्यर्थः॥

---

भगी० टी०। इच्छेति। तथा च त्वदनिष्टस्य विधिस्त्वदिष्टस्य निषेधः साधयितुं शक्य इत्यर्थः॥

---

अन्यथा सर्वमेतद्बुद्धावपि समानम्। सापि हि षट्केन युगपद्योगादिभिः सावयवा प्रसज्येत। तस्यामसिद्धास्त इति चेन्न। अनुमानसिद्धत्वात्। तथाहि बुद्धिः षट्केन युगपद्योगिनी मूर्त्तिमती च, सत्त्वाद्यव-

(१) व्यवहारविलोप इति १ पुस्तके नास्ति।

हर्त्तव्यत्वाद्वा, बोध्यवदिति शक्यते। विपर्ययस्यापि धर्मिग्राहकमानसाधितत्वादनवकाशमिदमिति चेत्, एवमन्यत्रापि प्रतिसन्दधीथा इत्येषा दिक्।

शङ्क० टी०। अन्यथेति। यदि जात्युत्तरमपि प्रतिषेधकमित्यर्थः। उत्तराभासत्वमेव दर्शयति। सापि हौति। बोध्यवदिति। अवयव्यादिवदित्यर्थः। विपर्ययस्येति। बुद्धौ षड्कयोगित्वविपर्ययस्य मूर्त्तिमत्त्वविपर्ययस्य चेत्यर्थः॥

---

भगौ० टौ०। अनुमानेत्युपलक्षणम्। षड्कसमूहालम्बनाया बुद्धेरनुव्यवसायसाचिकत्वादित्यपि द्रष्टव्यम्। विपर्ययस्येति। निरवयवत्वस्येत्यर्थः॥

---

अन्यस्तु चक्षुषी निमौल्य निर्भयीभवितुमिच्छन्नाह, अस्तु तर्हि बुद्धेरपि विलोप इति।

शङ्क० टौ०। निर्भयीभवितुमिति। बुद्धिप्रतिबन्द्या वृत्तिविकल्पादिकं परेणोद्भियते, बुद्धेरनभ्युपगमे मम कुतो भयमित्यर्थः॥

---

भगौ० टौ०। सम्प्रति परमाणवादौ वृत्तिविकल्पो बुद्धिप्रतिबन्द्या समाधेयः, तर्हि तत एव बुद्धिरपि मा भूदिति माध्यमिकमतमुत्थापयति। अन्यस्त्विति। अभिष्टसाधनताज्ञानाद्वयं ज्ञानाभावे तु तन्नास्तीत्युपहासः॥

रघु० टी०। बुद्धेर्विलोप इति। तथा च न बुद्धिप्रतिबन्द्या [1]बोध्यबोधकनिराकरणमिति भावः॥

---

अत्र तु किं वक्तव्यं यत्र हेत्वादिव्यवहारो नास्ति। अस्तु परं साम्वृत इति चेत्, भवेदेवं यदि सम्वृतिरपि परमार्थसती स्यात्। अन्यथा तु यथा न वास्तवस्तथा न साम्वृतोपि। सम्वृतिरपि सम्वृतिसतीति चेत्, अस्या अप्यसत्त्वे न किञ्चिदधिकमुक्तम्। परसम्वृतेस्तु परमार्थसत्त्वस्वीकारे सैव बुद्धिरपरिहेयेति। सती च बाधकवती चेति सम्वृतिसती चेति चेत्, सत्येव यदि तत् कथं बाधकम्, तथा चेत् कथं तदालीढस्य सत्त्वमिति।

शङ्क० टी०। हेत्वादिव्यवहार इति। व्यवहारस्य बुद्ध्यधीनत्वेन बुद्धेरभावे हेतुपक्षदृष्टान्तादीनामभावाद्बुद्धिविलोपः कथं साध्य इत्यर्थः। पारमार्थिको हेत्वादिव्यवहारो जगतः शून्यतां विहन्ति, न तु साम्वृतोपीत्याह। अस्त्विति। साम्वृतत्वमपि सत्या सम्वृत्या निर्वहेन्न त्वसत्येत्याह। भवेदिति। परसम्वृतेरिति। चरमा सम्वृतिर्यदि परमार्थसती तदापि न शून्यता तस्या एव बुद्धेः सत्त्वात्। ननु चरमापि बुद्धिः सती, परं तु विविच्यमाना सापि बाध्येत्याह। सती चेति। तदालीढस्येति। बाधकाक्रान्तस्येत्यर्थः॥

---

(१) बोध्यबाधक इति २ पु० पा०

भगी० टी०। यच्चेति। तथा च साधकाभावाच्छून्यतापि न सिद्ध्येदित्यर्थः। ननु पारमार्थिकहेलाद्यभावेपि ज्ञानविषयमात्रा-त्तस्माच्छून्यता सिद्ध्येदित्याह। अस्त्विति। सम्वृतिरपि सती न वा। आद्ये क्व शून्यता, सम्वृतेरेव बुद्धिरूपायाः सत्त्वात्। अन्त्ये तु क्व साम्वृतोपि हेलादिरित्याह। भवेदेवमिति। ननु सम्वृतिर्न स्वरूपसती किन्तु सम्वृत्यन्तरसतीत्याह। सम्वृतिरपीति। सम्वृत्यन्तरस्यापि सदसत्त्वयोः पूर्वदोषानिवृत्तिरित्याह। तस्या इति। द्वितीयसम्वृतेरित्यर्थः। तस्या अपि साम्वृतत्वेऽनवस्थाया-मन्तिमबुद्धेरसाम्वृतत्वे तद्विषयस्य सिद्धेरवश्यं तत्सत्त्वमङ्गीकार्य-मित्याह। परेति॥

---

रघु० टी०। तथा साम्वृतोपि। सम्वृतेरसत्त्वे साम्वृतत्वा-नुपपत्तेः। अस्याः द्वितीयसम्वृतेः। तस्या अपि सम्वृत्यन्तरमेवं तस्या अपीति चेत् तत्राह। परेति। अनवस्थित एव सम्वृति-सन्तान इति चेत्, कस्याश्चित् सम्वृतेः सत्त्वाभ्युपगमे कथं सर्वशून्यता। अन्यथा तु कथं हेलादिव्यवस्था। अपि च सम्वृतिविषयत्वं सम्वृति-रूपसत्ताशालित्वं सम्वृतिविषयसत्ताकत्वं सम्वृतिजन्यव्यवहार-विषयत्वं वा, यत्किञ्चित्साम्वृतत्वमभिधीयते, तद्यदि वास्तवमुपेयते तदा क्व नाम सर्वशून्यता, नो चेदन्तरेण हेलादिकं शून्यतैव कथं सिद्ध्येत्, तथात्वे वा किमपराद्धं पूर्णतयेति दिक्॥

दृश्यते तावदेवमिति चेत्, सत्त्वैकार्थसमवायिनो बाधकत्वमेव तर्हि हेयम्। बाधकैकार्थसमवायिनः सत्त्वमेव किन्न हीयत इति चेन्न। बाधकस्यापि त्यागप्रसङ्गात्। उभयमप्यवर्जनीयमेव तर्हि। एवमेतत्। मिथो विरोधस्तु हेयः। न हि विरुद्धयोरेकार्थसमवायस्तथाभूतयोर्वा विरोधः शक्य उपपादयितुमृते स्वसमयात्, न च विचारावसरे स्वसमयावतार इति। यथा यथा च बुद्धिनिवारणाय यत्नस्तथा तथोज्ज्वलः प्रकाशः, तन्निवारणमपि बोद्धव्यमेवेति। तदेतदायातं प्रदीपान्तरेण प्रदीपं निर्वाप्य तिमिरापादनमिति।

शङ्क० टी०। दृश्यत इति। आपाततो यच्च बाधकं नोदेति तदपि सत्त्वेन व्यवह्रियत इत्यर्थः। यदि सत्त्वं तदा क्रमेणापि स्फुरद्बाधकं बाधकाभासमेवेत्याह। सत्त्वैकार्थेति। वैपरीत्यमेव किन्न स्यादित्यत आह। बाधकैकार्थेति। बाधकेति। सर्वसत्त्वत्यागे बाधकसत्तापि न भवेदित्यायाता पूर्णतेत्यर्थः। उभयमपीति। सत्त्वं बाधकवत्त्वं चेत्यर्थः। मिथो विरोध इति। असमावेशो हेय इत्यर्थः। समयः परिभाषा। नन्वस्मत्परिभाषयैव सत्त्वबाधकवत्त्वयोः समावेशः स्यादित्यत आह। न हीति। बुद्धिनिराकरणस्यापि बोद्धव्यतया कथं बुद्धिनिरास इत्यर्थः॥

भगी० टी० । ननु सत्त्वासत्त्वयोरुभयत्रापि बाधकादन्यतरदवधारयितुं न शक्यमित्याह । दृश्यत इति । मिथो विरुद्धयोः सत्त्वबाधकयोरेकत्रासम्भवादन्यतरदवश्यं ह्येयम्, तद्यदि बाधकमेव ह्येयम्, तदा सत्त्वमेव पर्यवस्यतीत्याह । सत्त्वैकेति । विनिगमकाभावात् सत्त्वमेव ज्ञातव्यमित्याह । बाधकेति । तर्हि बाधकं सदसद्वा । आद्ये क्व शून्यता, अन्त्ये क्व तदधीनमसत्त्वमित्याह । बाधकस्येति । यद्येकार्थसमवायित्वं बाधकसत्त्वयोस्तदा न विरोधः, तथाभूतस्य च बाधकेति नाम परिभाषितं स्यादित्याह । तथाभूतयोरिति । अज्ञायमानस्य बुद्धिनिवारणमिति तन्निवारकमपि बोद्धव्यमेवेति तन्निरासोऽशक्य एवेत्याह । यथेति ॥

रघु० टी० । दृश्यत इति । सत्त्वबाधकवत्त्वयोरुभयोरपि दर्शनान्नैकतरावधारणमिति भावः । बाधकस्यापीति । तस्य सत्त्वे शून्यत्वायोगात्, असत्त्वे तु न तद्बलादन्यासत्त्वसिद्धिरिति भावः । निराकरणस्यासत्त्वेन ज्ञानस्य ज्ञापनस्य वा बाधकज्ञानाधीनत्वात् ज्ञानरूपत्वात् ज्ञानघटितमूर्तिकत्वाद्वा निराकरणं न शक्यमित्याह । यथायथेति ॥

---

एतेन हेतुफलभावानुपपत्तेः सर्वविलोप इति निरस्तम् । तन्निराकरणप्रयासस्य साफल्यवैफल्याभ्यां तन्निराकरणानुपपत्तेः, सत्कार्यदूषणस्येष्टत्वात्, अस-

त्कार्यदूषणस्य च प्रत्यक्षबाधितत्वात्, तत्प्रतिपादनस्यासत एवोत्पत्तावनैकान्तिकत्वात् सत्त्वे वा प्रयासवै[1]फल्यादिति।

शङ्क० टी०। एतेनेति। बुद्धिनिराकरणव्यवस्थापनेनेत्यर्थः। हेतुफलभावे सत्यवयविनः कार्यत्वस्य तन्मूलकारणपरमाणोश्च सिद्धिः स्यात्, स एव तु नास्ति, एवं च कारणाधीनोत्पत्तिका बुद्धिरपि नास्तीति सर्वविलोप इत्यर्थः। तन्निराकरणेति। हेतुफलभावनिराकरणं यदि सफलं तदा सिद्ध एव हेतुफलभावः, अथ निष्फलं तदा तन्निराकरणप्रयासो विफल एवेत्यर्थः। ननु सत एव घटादेर्नोत्पत्तिः सत्त्वादेवेति यदि हेतुफलभावो दूष्यते तदाऽस्मदभिमतमेव, अथासन्नपि घटादिर्नोत्पद्यते, असत्त्वाविशेषेण घट एव दण्डादेरुत्पद्यते न तु पट इति तन्नियमानुपपत्तिरिति हेतुफलभावं दूषयसि, तदा प्रत्यक्षबाधः, न हि घटोत्पत्तेः पूर्वं केनापि घट उपलभ्यते, नियमस्तु कारणस्वाभाव्याधीनो न नियोक्तुं पर्यनुयोक्तुमर्हतीत्यर्थः। किञ्च घटो नोत्पद्यते ऽसत्त्वादिति दूषणप्रतिपादने हेतुफलभावनिराकरणप्रतिपादने चानैकान्तिकमित्याह। तत्प्रतिपादनस्येति। यदि च तत्प्रतिपादनमपि पूर्वं सदेव तदा तदर्थं तवायं प्रयासो विफल इत्यर्थः॥

---

(१) वैयर्थ्यादिति ३ पु० पा०।

भगी० टी०। ननु हेतुफलभावानुपपत्त्या ज्ञानं न सत्तदसत्त्वे च तदधीनसिद्धिकमपि नेति नित्यानित्याभावे शून्यता स्यादित्यत आह। एतेनेति। ननु सन्न कार्यं सत्त्वात्, असन्नपि (न) कार्यमतिप्रसङ्गादित्यत्राह। सत्कार्येति॥

---

रघु० टी०। स्यादेतत्। ज्ञानं ज्ञेयं वा घटादिकं कारणजन्यमजन्यं वा, अजन्यत्वे कादाचित्कत्वानुपपत्तिः, जन्यत्वं चेदसतो जन्यत्वेऽतिप्रसङ्गः, सतश्च जन्यत्वे सत्त्वाविशेषाज्जन्यजनकभावनियमानुपपत्तिः, न च जन्यत्वाजन्यत्वाभ्यामन्यःप्रकारः सम्भवतीत्यवयविप्रभृतेरनित्यवर्गस्य विलयः, विलीने च तस्मिंस्तदधीनसिद्धीनां परमाण्वादीनां नित्यानामपि विलय इति सर्वविलोप इति, तदेतन्मतं निरस्यति। एतेनेति। बाध्यबाधकबाधादिज्ञानानामवश्योपेयत्वेनासतो जन्यत्वे स्वभावनियमान्नातिप्रसङ्ग इति भावः॥

---

स्यादेतत्। मा भूवन्नेतानि [१]दूषणान्यवयविनि, अनुपलम्भस्तु स्यात्, न हि परमाणुसञ्चयादपरं किञ्चिदुपलभ्यत इति चेत्, वैलक्ष्यवि[२]ष्टम्भिकेयम्, स्थूलैकानुभवस्य सर्वजनसिद्धत्वात्।

(१) बाधकान्यवयविनि इति १ पु० पा०।
(२) विष्टम्भिकेयमिति १ पु० पा०।

शङ्क० टी०। वैलक्ष्येति। पराजयेन लज्जितस्य तव जृम्भणमित्यर्थः। इदमेकं स्थूलमित्यनन्यथासिद्धेन प्रत्यक्षेणैवा-वयविन उपलम्भात् क्वानुपलम्भ इत्याह। स्थूलैकेति॥

---

भगी० टी०। स्थूलैकेति। एकस्य परमाणोरस्थूलत्वात्ताव-द्देशाव्यापकत्वात्तावद्देशव्यापकानां च परमाणूनामनेकत्वादेकः स्थूल इति बाधरहितं प्रत्यक्षमवयविनि मानमित्यर्थः॥

---

विकल्पमात्रं तदिति चेन्न। स्पष्टप्रतिभासत्वात्। औपाधिकमस्य स्पष्टत्वमिति चेत्, तथाभूतानुभवमन्त-रेणोपाधेरप्यभावात्। अन्यथा नीलादिविकल्पाना-मपि तथैव स्पष्टत्वोपपत्तौ सर्वप्रत्यक्षोच्छेदप्रसङ्गात्, गृहीतनिश्चित एवार्थे [१]प्रत्यक्षप्रामाण्यात्, निश्चयो-पप्लवे तस्याप्युपप्लवादिति।

शङ्क० टी०। विकल्पमात्रमिति। सविकल्पकं तत्, तच्च प्रमाणम्, निर्विकल्पकं च तथा नास्तीत्यर्थः। स्पष्टेति। साक्षा-त्कारित्वादित्यर्थः। औपाधिकमिति। अतो न त(त्त)दधीना वस्तुव्यवस्थितिरित्यर्थः। तत्रोपाधिरपि निर्विकल्पकमेव, तथा च सिद्धं तत्प्रामाण्यमित्याह। तथाभूतेति। अनुभवो निर्विकल्पकम्। विपक्षे दण्डमाह। अन्यथेति। गृहीतनिश्चिते निर्विकल्पक-

(१) प्रत्यक्षस्य इति १ पु० पा०।

सविकल्पकविषये । तस्यापीति । [१]निर्विकल्पकस्यापीत्यर्थः । निश्चयमात्रप्रमाणकत्वात्तस्येति भावः ॥

---

भगी० टी० । विकल्पमात्रमिति । मात्रपदेनार्थसत्त्वं निवारयति । स्पष्टेति । साक्षात्कारित्वेन तदनुभवात्तस्य निर्विकल्पकतया मानत्वादित्यर्थः । औपाधिकमिति । तत्र विकल्पे निर्विकल्पकधर्मः साक्षात्त्वमनुभूयत इत्यर्थः । किमवयविविषयकस्यैव तथात्वमुपाधिरन्यविषयकस्य वा । आद्येऽनुभवविषयतयाऽवयवी प्रामाणिक एवेत्याह । तथाविधेति । अन्त्ये नीलादिविकल्पेष्वपि न समाश्वास इत्याह । अन्यथेति । ग्रहणं निर्विकल्पकम् । तस्यापीति । निर्विकल्पस्यापीत्यर्थः । तत्प्रामाण्योपपादकसविकल्पकस्योपपन्नत्वादिति भावः ॥

---

रघु० टी० । विकल्पेति । तत् एकः स्थूल इति ज्ञानं नानुभवोऽपि तु विकल्पः स च न प्रमाणमित्यर्थः । मात्रशब्देन विषयसत्त्वं व्यावर्त्तयतीति तु कश्चित् । स्पष्टत्वं साक्षात्त्वम् । औपाधिकमनुभवौपाधिकम् । अस्य स्थूलैकविकल्पस्य समानाकारोऽनुभव उपाधिर्भिन्नाकारो वा । आद्ये तथाभूतेति । तथाभूतं समानाकारमनुभवं निर्विकल्पकम्, तदभ्युपगमे तु तत एव स्थूलैकसिद्धिरिति भावः । द्वितीये अन्यथेति । ग्रहणं निर्विकल्पकम् । निश्चयो

---

(१) सविकल्पेति २ पु० पा० ।

विकल्पः। निश्चयस्योपप्लवे परम्परयापि विषयानधीनत्वे। तस्य निर्विकल्पकस्य उपप्लवान्नियतविषयत्वासिद्धेः॥

---

न च परमाणव एव स्थूलाः, तत्त्वव्याघातात्। न च तत्समुदायस्तथा, तस्य समुदितस्थानस्य त्वयाऽनभ्युपगमात्, अभ्युपगमे वाऽवयविना किमपराद्धम्। न च समुदिता एव तथा प्रतिभासितुमर्हन्ति, तेषां[१] प्रत्येकमस्थूलत्वात्। न च नानादिग्देशव्यापितैव स्थौल्यम्, परमाणुषु प्रत्येकमसम्भवात्। न च नानात्वैकार्थसमवायिन्येव सा स्थौल्यमिति साम्प्रतम्, स्थूल एक इति प्रत्ययनियमात्।

शङ्क० टी०। तत्त्वव्याघातात् परमाणुत्वव्याघातादित्यर्थः। अभ्युपगम इति। समुदायस्यैव व्यासज्यवृत्तिताभ्युपगमादित्यर्थः। समुदिता एवेति। परमाणव इत्यर्थः। ननु स्थौल्यं न परिमाणविशेषः, किन्तु परमाणूनामेव नानादिग्देशव्यापिता सैव स्थौल्यमित्यत आह। न चेति। सापि प्रत्येकं परमाणूनां न सम्भवतीत्यर्थः। सेति। नानादिग्देशव्यापितेत्यर्थः। स्थूल इति। तथा सत्येकत्वसामानाधिकरण्यानुपपत्तिरित्यर्थः॥

---

(१) तेषामस्थूलत्वादिति १ पु० पा०।

भगी० टी०। तथा स्थूल इत्यर्थः। समुदायः समुदायिभिन्नो न वा। आद्ये तस्येति। समुदायस्य अनेकवृत्तेरेकस्य त्वयाऽनङ्गीकारात्, अङ्गीकारे वा स एवावयवीत्यर्थः। अन्त्ये न चेति। परमाणूनां प्रत्येकमिव समुदायस्याप्यस्थूलत्वादित्यर्थः। नन्वन्योन्यसम्बन्धे सति परमाणूनामेव तावद्देशव्यापिता स्थौल्यं स्यादित्याह। न चेति। परमाणूनां प्रत्येकं तस्याप्यसम्भवः, भिन्नानां च नैकत्वमित्येकः स्थूल इति प्रत्यक्षमेतावतापि नोपपादितं प्रत्युत नाना स्थूल इति धीः स्यादित्यर्थः॥

---

रघु० टी०। तथा स्थूलः। तस्य समुदायस्य। समुदितस्थानस्य समुदिताः स्थानमाश्रयो यस्य तस्य। समुदिताः परमाणव एव। तथा स्थूलत्वेन। न च निरन्तराणां परमाणूनां नानादिग्देशव्यापितैव स्थौल्यमिति। सा नानादिग्देशव्यापिता॥

---

न च भागेष्वेवारोपितेनैकत्वेनेदमुपपत्तिमत्, तदसम्भवात्। न हि करचरणचिबुकनासिकादिपरमाणूनामैक्यं कश्चित् (१)क्वचिदारोपयति। न च(२) तेषु भेदेन प्रथमानेषु न स्थूलप्रत्ययः। न च तत्त्वे (३)स्फुरत्येव तद्विपरीतातत्त्वसमारोपसम्भवः।

(१) कश्चिदारोपयेत् इति १ पु० पा०।
(२) न च तेष्वभेदेन प्रथमानेषु स्थूलप्रत्ययः इति २ पु० पा०।
(३) परिस्फुरत्येव इति १ पु० पा०।

गङ्गा॰ टी॰ । भागेषु परमाणुषु । इदमिति । एकत्व-सामानाधिकरण्यमित्यर्थः । अवयवेषु भिन्नतयाऽनुभूयमानेष्वेक-त्वारोपो न सम्भवतीत्याह । न हीति । ननु यदि तत्र नैकत्वा-रोपस्तदा स्थूलप्रत्ययोऽपि न तत्रेत्यत आह । न चेति । ननु करचरणादीनामनेकत्वेन ज्ञानेऽप्येकत्वमारोप्यतां को दोष इत्यत आह । न चेति ॥

---

रघु॰ टी॰ । भागेषु परमाणुषु । इदं स्थूलं एकं इति प्रतिभानम् ॥

---

अपि चैवमेकपरमाण्वात्मना परमाणुकोटिरप्या-रोपिता परमाणुमात्रतयैव परिस्फुरेत्, न स्थूलतया । न च नानादिग्देशव्यापित्वस्यैव महिमेति साम्प्रतम्, विरोधात् । यदि हि नानादिक्काः परमाणवो देश-तयाऽवभासेरन् नैकतया देशितया चारोप्येरन्, तथा च कस्य नानादिग्देशव्यापिता, देशिनोऽपरिस्फूर्त्तेः । अथ तथात्वेनारोप्येरन्? न नानात्वेन देशत्वेन वाऽवभासेरन्, तथा च कस्य नानादिग्देशव्यापिता, [1]देशिनोऽपरिस्फूर्त्तेः । तस्मादेकत्वारोपे [2]परमाणु-मात्रावभास एव स्यादिति ।

(१) देशानामपरि इति २ पु॰ पा॰ ।
(२) परमाणुमात्रत्वावभास इति २ पु॰ पा॰ ।

शङ्क० टी०। किञ्चान्यत्रानुभूतं स्थौल्यं परमाणुषु कथमारोप्यतामित्यत आह। अपि चेति। ननूक्तं स्थौल्यं न परिमाणभेदोऽपि तु नानादिग्देशव्यापितैव तदित्यत आह। न चेति। एष महिमेति। स्थौल्यप्रतीतिविषयत्वमहिमेत्यर्थः। विरोधमेव स्फुटयति। यदि हीति। परमाणूनामाधारतया स्फुरणे सति नाधेयतया स्फुरणम्। आधेयतयैव स्फुरणे नाधारतया स्फुरणं स्यात्, तथा चैकत्वं स्थौल्यं च कुत्रारोप्येत, आरोपविषयानुपस्थितेरित्यर्थः। परमाणुमात्रतावभास एव स्यान्न तु स्थौल्यावभास इति शेषः॥

---

भगी० टी०। ननु नानादिग्देशसम्बन्धमाहात्म्यादेकात्मतया स्फुरणे स्थूलात्मतया स्फुरणं स्यादित्यत आह। न चेति। एकत्वनानात्वयोर्विरोधान्नारोप इत्यर्थः। विरोधं स्फुटयति। यदि हीति। परमाणुसमूहो यद्यारोपविषयस्तदा नारोप्यस्यैकत्वस्योपस्थितिरथ नानादिग्देशव्यापित्वमारोप्यं तदारोपविषयज्ञानं नास्तीत्युभयथाप्यारोपानुपपत्तिरित्यर्थः॥

---

रघु० टी०। एष महिमा यत् परमाणुत्वेनास्फुरणं स्फुरणं च स्थूलत्वेनेति। विरोधमेव विवृणोति। यदि हीति। अयमर्थः। नानादिग्देशव्यापित्वमेव स्थौल्यं परिमाणभेदो वा। नाद्यः, दिग्देशा हि भवतां परमाणव एव, ते यदि नानात्वेन देशत्वेन च दृश्यन्ते, न तर्हि तेष्वेकत्वस्य देशित्वस्य वाऽऽरोपो, न चान्यस्य

देशिनो ग्रहणमस्तीति कस्य नानादिग्देशव्यापिता प्रत्याय्या, अथ ते एकत्वेन देशित्वेन चारोप्यन्ते, न तर्हि तेषां नानात्वेन देशत्वेन च ग्रहणम्, न चान्येषां देशानां ग्रहणमस्तीति कथं नानादिग्देशव्यापिता प्रतीयताम्। न च घटादिपरमाणवो देशिनो देशाश्च भूतलादिपरमाणव इति वाच्यम्। भूतलादावप्येकत्वस्थूलत्वप्रत्ययात्। न च देशदेशिभावापन्नानन्तपरमाणुसमूह[1]सन्तानः प्रत्ययगोचर इति, देशान्तराग्रहणेपि चान्धकारे करपरामर्शेनैकः स्थूलो घट इति प्रत्ययात्। द्वितीये त्वेकैकपरमाणौ तदसम्भवेन सिद्धस्तदाश्रयोऽवयवी। परमाणुषु व्यासज्यवृत्तेस्तस्याभ्युपगमे तु किमपराद्धमवयविना। एतौ द्वौ घटौ संयुक्ताविति वदेते परमाणवः स्थूला इति प्रत्ययप्रसङ्गश्च॥

---

एवं तर्ह्यनारब्धद्रव्यराशिषु का वार्त्तेति चेत्, न [2]तावद्देशव्याप्तिसाम्येन तावत्परिमाणद्रव्य[3]त्वारोपः। न चेहापि तथा स्यात्, अन्यथाप्यसिद्धेः। न चासन्नेवैकः स्थूलः परिस्फुरति, बाधकानामपास्तत्वात्।

प्रक्र० टी०। एवं तर्हीति। यद्यनेकेषु न स्थौल्यारोप इत्यर्थः। तावद्देशेति। अन्यत्र प्रतीतस्य स्थौल्यस्य प्रत्यक्षे सम्भवत्यारोपो न तत् त्वत्पक्ष इत्यर्थः। इहापीति। त्वत्पक्षेपीत्यर्थः।

---

(१) समूहपरम्परा प्र इति १ पु० पा०।
(२) तावद्देशव्यापित्वसाम्येन इति २ पु० पा०।
(३) द्रव्यवत्त्वारोप इति २ पु० पा०।

नन्वसत्ख्यात्युपनीतमेकत्वं स्थौल्यं च भासतामत आह । न त्विति । बाधकानामिति । अवयविनि बाधकानां रक्तारक्तविरोधानामपास्तत्वादित्यर्थः ॥

---

भगी० टी० । का वार्त्ता, एकः स्थूल इत्यनुभवस्येति शेषः । इहापि परमाणुष्वपीत्यर्थः । तथा स्यात् । एकस्थूलद्रव्यारोपः स्यादित्यर्थः ॥

---

रघु० टी० । एवं तर्हीति । यद्यनेकेषु नैकत्वस्थूलत्वारोपस्तर्हित्यर्थः । तावदिति । एकजन्मानुभूतस्यापि तादृशद्रव्यस्य जन्मान्तरानुभूतस्य दैवादिवशात् स्मरणादारोप इति भावः । इहापि । परमाणुष्वपि । तथा तावत्परिमाणद्रव्यवत्त्वारोपः । बाधकानामिति । असत्ख्यातिनिरासाच्चेत्यपि द्रष्टव्यम् ॥

---

**एतेन प्रतिभासधर्मोऽपि निरस्तः । सोऽपि ह्यसन् बौद्धो वास्तवो वेति त्रयीं गतिं नातिवर्त्तत इति ।**

शङ्क० टी० । एतेनेति । अवयविनि बाधकनिरासेनैवेत्यर्थः । प्रतिभासधर्म इति । प्रतिभास एवानेकधर्मगोचरः स्थूलाकार उत्पद्यत इत्यर्थः । सोऽपीति । प्रतिभासाकारो ह्यसन् कथं भासेत, बुद्ध्यन्तराधीनश्चेदनवस्था, वास्तवश्चेत्तदा विषयस्य तादृप्यमन्तरेण तादृशज्ञानाकारानुपपत्त्या सिद्धं स्थौल्यमित्यर्थः । अन्यथा नीलादिकमपि प्रतिभासधर्म एव स्यादिति भावः ॥

---

भगी० टी० । प्रतिभासधर्मः स्थौल्यं बाह्ये भासत इत्यपि नास्ति, बाह्यवृत्तितयाऽनुभूयमाने तत्र बाधकाभावादित्याह । एतेनेति । न चैकार्थक्रियाकारित्वौपाधिकमेकत्वम्, तदज्ञानेऽप्येकप्रतीतेः ॥

---

रघु० टी० । विकल्पेनोल्लिखितं स्थौल्यादि परमाणुष्वारोप्यत इत्यपि बाधकाभावादिना निरस्तमित्याह । एतेनेति । बौद्धो बुद्धिधर्मः । वास्तवो बाह्यान्तरधर्मः । बौद्धः सांवृत इत्यन्ये ॥

---

अतीन्द्रियाश्च प्रत्येकमणवः कथं मिलिता अपि दृश्येरन्, अतीन्द्रियसमूहस्याप्यतीन्द्रियत्वात् । विशिष्टोत्पादादैन्द्रियकत्वमिति चेत्, किमद्यापि स्वप्ने हस्तं प्रसारयसि ।

शङ्क० टी० । पूर्वं परमाणुसमूहस्य प्रत्यक्षतामुपगम्योक्तमिदानीं तदपि नास्तीत्याह । अतीन्द्रिया इति । विशिष्टोत्पादादिति । इन्द्रियग्रहणयोग्योत्पादादित्यर्थः । विशिष्टोत्पादे क्षणभङ्गो मूलम्, स च निराकृत एवेत्याह । किमद्यापीति ॥

---

भगी० टी० । दूषणान्तरमाह । अतीन्द्रियाश्चेति । अन्यमिलितानामपि तेषामतीन्द्रियत्वे केषाञ्चित्साक्षाद्विषयीभूयो-

त्पादात् प्रत्यक्षत्वं स्यादित्याह । विशिष्टेति । क्षणभङ्गस्तन्मूलम्, स च निरस्त एवेत्याह । किमद्यापीति ॥

रघु० टी० । तथोत्पादो न विना क्षणभङ्गम्, स च प्रागेव निराकृत इत्याह । किमद्यापीति ॥

**अस्तु वैवम्, तथापि क्षणभेदाज्जातिभेदो निराकृतः, जातिसङ्करप्रसङ्गात्। (१)तदभेदेन तूत्पादेऽपि तदा तादृग्वेति तत्त्वदृशा न कश्चिद्विशेषः।**

शङ्क० टी० । तथा चोत्पादमङ्गीकृत्याह । अस्तु वेति । ऐन्द्रियकत्वावच्छेदिका परमाणुषु कुर्वद्रूपत्वं जातिस्तावन्नास्ति, जातिसङ्करापादनेन पूर्वमेव निराकरणात्, जात्यभेदे तु य एव परमाणवः पूर्वमतीन्द्रिया आसन् त एवाग्रे ऐन्द्रियकाः स्युरन्ये वा न कश्चिद्विशेषः, तथा च मञ्चितानामप्यतीन्द्रियत्वमसञ्चितानामपि कचिदैन्द्रियकत्वमित्यनियमः स्यादिति भावः ॥

भगी० टी० । क्षणभङ्गेऽपि परमाणुसमूहस्यातीन्द्रियत्वाद्विशिष्टस्य कुर्वद्रूपत्वजातिमतः किमुत्पादः, अतथाभूतस्य वा, आद्यस्तज्जातिनिरासादेव निरस्तोऽन्त्ये तदा तादृग्वेति न्यायात्स्याप्यतीन्द्रियत्वमेवेति न विशेष इत्याह । तथापीति ॥

(१) तदभेदेऽपि तत्त्वदृष्ट्या न कश्चिद्विशेष इति २ पु० पा० ।

रघु० टी०। क्षणभङ्गेपि हि विशिष्टस्याजनकाद्व्यावृत्तस्योत्पादो वक्तव्यः, व्यावृत्तिश्च जातिभेदरूपो जातिसङ्करप्रसङ्गादेवासम्भवी, व्यक्तिभेदरूपस्तु नानुगतकार्यप्रयोजक इत्याह। भवतु वेति॥

भवतु वा जातिविशेषोपि, तथापि स्थूलत्वमेवैन्द्रियकत्वं प्रति [1]प्रयोजकं मन्तव्यम्। अन्यथा स्थूलतामनाप्नुवन्नेकोऽपि परमाणुः कदापि तथोत्पन्नः प्रत्यक्षतामियात्। नियमेन तु तद्विपरीतस्य प्रत्यक्षता [2]तथाविधस्याप्रत्यक्षतायामेव विश्राम्यति, अन्वयव्यतिरेक[3]फलत्वाद्धेतुफलभावस्य।

शङ्क० टी०। ननु वैजात्यमेव तथोत्पादप्रयोजकमिति कुतोऽयमनियम इत्यत आह। भवतु वेति। अन्वयव्यतिरेकाभ्यां स्थौल्यस्य परिमाणविशेषस्य प्रत्यक्षज्ञानकारणत्वावधारणादिति मिश्रितानामपि क्वचित्प्रत्यक्षत्वं न स्यादित्यर्थः॥

भगी० टी०। सत्यपि जातिविशेषे अन्वयव्यतिरेकाभ्यां स्थौल्यमेव तन्त्रम, तच्च न परमाणुषु प्रत्येकं मिलितेषु वेति कथं प्रत्यक्षत्वमित्याह। भवतु वेति। अन्वयव्यतिरेकावेवाह। अन्यथेति। यदि कुर्वद्रूपत्वमेव तत्प्रयोजकमित्यर्थः॥

(१) प्रयोजकमास्थेयम् इति १ पु० पा०।
(२) तथाविधस्य प्रत्यक्षतामिति १ पु० पा०।
(३) अन्वयव्यतिरेकगम्यत्वाद्धेतुफलभावस्येति १ पु० पा०।

रघु० टी०। जातिविशेषाभ्युपगमेऽप्यन्वयव्यतिरेकाभ्यां स्थौल्य-मेव प्रत्यक्षप्रयोजकमित्याह। भवतु वेति। स्थूलत्वं महत्त्वम्॥

---

न च सञ्चिता अपि स्थूलतयोत्पन्नाः। न च बहुत्वमेव स्थौल्यं तद्विपर्यय एव सूक्ष्मता, विततदेशा-नामपि प्रत्यक्षत्वप्रसङ्गात्। नैरन्तर्यमपि विवक्षित-मिति चेन्न। तस्य प्रकृतेऽप्यसम्भवात्, रूपपरमाणूनां रसादिपरमाणुभिरन्तरितत्वात्। न चारोप्यते नैर-न्तर्यम्, इतरेतराश्रयप्रसङ्गात्, नैरन्तर्यारोपे तेषां स्थूलानां ग्रहणं तद्ग्रहणे च सति नैरन्तर्यारोप इति। तस्मादैन्द्रियकत्वे स्थूलतायाः प्रयोजकत्वात् अप्रयोज-कत्वे विततदेशानामपि प्रत्यक्षत्वप्रसङ्गात् तेषां च प्रत्येकमस्थूलत्वादतीन्द्रिया एव परमाणवः, तथा च सर्वाग्रहणमवयव्यसिद्धेरिति।

शङ्क० टी०। नैरन्तर्यमपीति। निरन्तरा बहवः परमाणव एव स्थूलप्रत्ययविषया इत्यर्थः। रूपेति। लन्मते रूपरसगन्ध-स्पर्शपरमाणुभिरन्तरिताः पृथिव्यप्तेजोवायुपरमाणव एव एकं द्रव्य-मेवाष्टद्रव्यकोऽणवः शब्द इति सिद्धान्तादित्यर्थः। ननु परमाणुषु नैरन्तर्यमारोप्य स्थौल्यारोपः स्यात्, को दोष इत्यत आह। न चेति। अन्योन्याश्रयमेव स्फुटयति। नैरन्तर्येति। स्थौल्यस्य प्रत्यक्षकारणत्वमुपसंहरति। तस्मादिति। पारमर्षेण सूत्रेण

स्वोक्तां युक्तिं द्रढयति । तथा चेति । सर्वाग्रहणमवयव्यसिद्धेरिति । सूत्रमिति शेषः ॥

---

भगी० टी० । अतिरोहितार्थमन्यत् ॥

---

रघु० टी० । न च बहुत्वमेव स्थौल्यं प्रत्यक्षप्रयोजकम् । अथ मा भूद्वास्तवं नैरन्तर्यं प्रयोजकमारोपितं तु स्यादत आह । न चेति ॥

---

अस्तु तर्हि क्षणमात्रस्थायी स्थूलोऽर्थ इति चेन्न । भागभागिनोर्युगपदुपलम्भबाधितत्वात्, घटपटादिभङ्गे तन्तुकपालादीनामुत्पादे समानोपादानतया सप्रतिघत्वव्याघाताच्चेति ।

शङ्क० टी० । निराकृतमपि पक्षान्तरमभिधातुं प्रस्तौति । अस्त्विति । भागभागिनोरिति । स्वोपादानसमानकालीनतया ऽवयविन उपलम्भः स क्षणिकताबाधक इत्यर्थः । दूषणान्तरमाह । घटपटादीति । उत्पत्त्यग्रिमक्षण एव यो घटो नष्टस्तं प्रति कपालमाला तावदुपादानम्, तत्र विभागसन्तानस्य त्वयाऽभ्युपगमात्, सैव च कपालमाला अग्रिमकपालमालां प्रत्युपादानकारणं, तत्र सभागसन्तानस्य त्वयाऽभ्युपगमात्, तथा चैकैव कपालमाला घटं कपालमालां चाग्रेतनीं प्रत्युपादानमिति मूर्त्तानां समानदेशताविरोध इत्यर्थः । घटपटादिभङ्गाभिधानं

तन्तुकपालसमाख्योरणार्थम् । स्थैर्यपक्षे तु सभागसन्तानव्यवस्थैव नास्तीति नायं दोष इति भावः । [१]अपव्याख्यानमन्यत् ॥

---

भगी० टी० । भागेति । क्षणभङ्गे कारणानामवयवानां कार्यान्वयविलक्षणे नाशात्तयोरेकदा ग्रहणं न स्यादित्यर्थः । नन्ववयविमात्रं क्षणिकमवयवास्त्वक्षणिका इति नोक्तदोष इत्यत आह । घटपटादीति । तथा सति घटपटयोरेकदा नाशेऽनन्तरं तन्तुकपालयोरुत्पादे पुञ्जात् पुञ्जोत्पत्तिरिति न्यायेनोभयस्योभयोपादेयसप्रतिघयोः समानदेशत्वापत्तिः, स्थिर एवावयवे द्रव्यान्तरोत्पादादित्यर्थः ॥

---

रघु० टी० । अथ घटपटाद्युत्पाददशायां न सन्त्येव तत्र तन्तुकपालादयस्तत्प्रत्ययस्तु भ्रान्तः, सन्तु वा, न तु ते घटपटाद्युपादानं सहोत्पन्नत्वादत आह । घटपटादिभङ्ग इति । न सन्ति चेदुत्तरतन्त्वादयो नोत्पद्येरन्, पूर्वतन्त्वादीनामेवोत्तरतन्त्वाद्युपादानत्वस्य त्वयाऽभ्युपगमात् । अथ सन्ति, किं तन्ये, तदैकतन्तूपादानयोस्तन्तुपटयोः सप्रतिघत्वं व्याहन्येतेत्यर्थः । सप्रतिघत्वं मूर्तत्वं तुल्यकालयोर्द्वयोरेव वा एकानुपादानकत्वम् । अथ तन्तोः पट इव पटादपि कश्चित्तन्तुरुत्पद्यत इति मतम्, तथापि धामधरणिसलिलबीजेभ्यो जायमानानामुत्तरोत्तरधामाद्यङ्कुराणामेकोपादानकत्वप्रसङ्गः । उत्तरधामादीनामेव धामादय उपादानमङ्कुरस्य

(१) क्षतव्याख्यानमन्यदिति २ पु० पा० ।

तु बीजमिति चेत्, तदेतत् कुतो विशेषात्, कार्यसमवायित्व-स्यानभ्युपगमात्, कारणत्वस्य चाविशिष्टत्वात्। साम्यावसायात् प्रकृतिविकारभावाच्च। यथोक्तम्।

'अभ्रान्तसमतैकावसाय: प्रकृतिविक्रिये।
ततो हेतुफलस्योपादानोपादेयलक्षणमिति॥'

इति चेन्न। परस्परव्यभिचारेणानयोरनियामकत्वात्। का चेयं प्रकृति:। विजातीयं कारणमिति चेत्, तत् किमङ्कुर-सजातीया एव धरणिधामादय:। उच्छिन्नजातीयं कारणमिति चेत्, पटदशायां तन्तुजातीयानुच्छेदस्य सर्वानुभवसिद्धत्वात्तन्तो: पटानुपादानत्वप्रसङ्ग:॥

## सोऽयमधिकरणसिद्धान्तन्यायेन स्थूलत्वसिद्धौ क्षण-भङ्गभङ्ग:।

शङ्क० टी०। सोऽयमिति। स्थौल्यं सिद्धत् स्थैर्यमादायैव सिद्धति, अवयवावयविनोर्युगपदुपलम्भे स्थौल्योपलम्भ एव स्थैर्योप-लम्भपर्यवसन्न इत्यर्थ:। ननु पक्षधर्मताबललभ्योऽर्थोऽधिकरण सिद्धान्त:, प्रकृते च स्थौल्यप्रत्यक्ष (१) व्यवस्थापितमत आह। अधिकरणसिद्धान्तन्यायेनेति। यत्सिद्धावन्यसिद्धिरेतावता तुल्य-न्यायेनेति (२) भाव:॥

(१) प्रत्यक्षसिद्धमिति २ पु० पा०।
(२) तुल्यन्यायताऽस्तीति २ पु० पा०।

भगी० टी० । सोयमिति । अधिक्रियमाणोर्थोऽवयवी यमर्थं स्थैर्यमादायैव सिद्ध्यति सोऽधिकरणसिद्धान्त इत्यर्थः। यद्यपि पक्षधर्मताबललभ्योर्थस्तथा, इह चावयविसाधकतया प्रत्यक्षमुपन्यस्तमिति न तदवतारः, तथापि घटारम्भकोऽवयवः स्वजन्यसमानकालीनः, समवायिकारणत्वादित्यनुमानादन्योद्देशप्रवृत्तादेव तत् सिद्धावधिकरणसिद्धान्ताविरोधः ॥

---

रघु० टी० । अधिकरणेति । अभ्युपगतवाक्यार्थसिद्धिनान्तरीयकसिद्धिकोऽर्थोऽधिकरणसिद्धान्तः । वार्त्तिकम्— वाक्यार्थसिद्धौ तदनुषङ्गी योऽन्योऽर्थः सोऽधिकरणसिद्धान्त इति । येन केनापि प्रमाणेन वाक्यार्थसिद्धौ जन्यमानायां योऽन्योऽर्थः सिद्ध्यति स तथेत्यर्थः। टीका – हेतुरीदृशः पक्षस्य वाक्यार्थ इति । उपलक्षणमेतत् । उदाहरणं भाष्ये, इन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति । अत्र हेतुः प्रतिसन्धानं सिद्ध्यत् स्वानुषङ्गिगुणव्यतिरिक्तद्रव्यादिलक्षणार्थान्तरान्वितमेव सिद्ध्यतीति । टीकायामुत्पत्तिमत्त्वेन चित्यादेरुपलब्धिमत्पूर्वकत्वं साध्यमानं स्वसिद्ध्यन्तर्गतानुषङ्गिसर्वज्ञत्वाद्यन्वितमेव सिद्ध्यतीति ।

केचित्तु पक्षधर्मताबललभ्योर्थोऽधिकरणसिद्धान्तः, प्रकृते च क्षौल्यपाक्षिप्रत्यक्षगम्यं स्थैर्यमत उक्तं तन्न्यायेनेति प्राहुः ॥

---

एतेन यत् सत् तन्निरवयवं यथा विज्ञानं संश्च विवादास्पदीभूतो घटादिरिति निरस्तम् । विपर्यये

बाधकाभावेन व्याप्यसिद्धेः। यत्सत् तत्सावयवं यथा घटः सच्च विज्ञानमिति चार्वाकपरिवर्त्तस्याप्यवकाशाच्च। समो वा समाधिः।

शङ्क० टी०। एतेनेति। स्थौल्यव्यवस्थापनेनेत्यर्थः। विपर्य्यय इति। सदपि स्यान्न तु निरवयवमित्यत्र बाधकं नास्तीत्यर्थः। समो वेति। एतस्यासाधकत्वे त्वदनुमानमपि न साधकम्, उभयत्राप्यनुकूलतर्काभावादित्यर्थः॥

---

भगी० टी०। एतेनेति। एकः स्थूल इति प्रत्यक्षबाधेनेत्यर्थः। विपर्य्यय इति। विरुद्धधर्माध्यासस्य प्रागेव निरासादित्यर्थः॥

---

ननु निरवयवमेव विज्ञानं स्वसम्विदितरूपं, घटस्य च सावयवतायामद्यापि विवाद एव, तत् कथं परिवर्त्तः कथं वा समः समाधिरिति चेत्, शुष्कविवादस्य विज्ञानेऽपि दुर्वारत्वात्। न हि कश्चित् कण्ठौष्ठपार्श्वजठरादिपरिहीनं पिठरमनुभवति। अस्तु वा सत्त्वात् सप्रतिघत्वसिद्धिर्बुद्धावप्रतिघत्वं वा घटादाविति।

शङ्क० टी०। ननु सत्त्वस्य सावयवत्वसाधकस्य विज्ञान एव व्यभिचार इति कुतः साम्यमिति शङ्कते। सम्विदिति। त्वदभिमतस्य निरवयवत्वसाधकस्य सत्त्वस्यापि घट एव व्यभिचार इत्यभिप्रायेणाह। शुष्केति। परानुमाने बाधमाह। न हि कश्चि-

दिति। प्रकृतेऽप्रयोजकतां दर्शयितुमप्रयोजकान्तरं दर्शयति। अस्तु वेति। अप्रतिघत्त्वं मूर्तत्त्वम् ॥

---

भगी० टी०। स्वमस्विदितरूपमिति। तथा च तत्र साश्रयत्वसाधने बाध इत्यर्थः। प्रतीतेर्यद्यनादरस्तदा ज्ञानेपि वादः सम्भवति, तदादरे त्ववयविन्यपि न तत्सम्भव इत्याह। शुष्केति ॥

---

रघु० टी०। अप्रतिघत्वसिद्धिरिति। बुद्धाविति। पूर्वकालयविज्ञानोपादानकत्वस्योत्तरालयविज्ञान-प्रवृत्तिविज्ञानयोर्भवद्भिरुपगमात् ॥

---

अपि च स्वतन्त्रसाधनमिदं प्रसङ्गो वा। न प्रथमः, घटादिशब्देन स्थूलेतराणां रूपादीनां परमाणूनां वा पक्षीकरणे सिद्धसाधनात्, स्थूलमेकमभ्युपगम्य पक्षविधौ कालात्ययापदेशात्, अनभ्युपगमे त्वाश्रयासिद्धेरिति। ननु प्रामाणिकेऽभ्युपगमे बाधः स्यात्, सर्वथाऽनभ्युपगमे चाश्रयासिद्धिः स्यात्, न चैवमचेति चेत्, तदेतन्नभःस्थलकमलपरिमलसाधनस्यापि साश्रयतामापादयदाश्रयासिद्धिदोषमोपायेत्यलमनेन।

शङ्क० टी०। स्वतन्त्रसाधनमिति। घटो निरवयवः सत्त्वात्, विज्ञानवदिति साधनमित्यर्थः। प्रसङ्गो वेति। यदीदं सत्स्यान्निरवयवं स्यादिति तर्क इत्यर्थः। अत्र परमाणुपक्षत्वे

सिद्धसाधनमनयविपचत्वे बाधः स्थूलास्तौकारे त्वाश्रयासिद्धि-रित्याह। घटादीति। स्थूलत्वेनाभ्युपगतस्यैव पचत्वम्, न च बाधः, तस्य सावयवत्वेन प्रमाविरहात्, न चाश्रयासिद्धिराश्रयस्याभ्युपगत-त्वादित्याशङ्कते। नन्विति। तर्हि गगनारविन्दं सुरभीत्यत्रा-प्याश्रयासिद्धिर्न स्यात्, असत्ख्यात्याऽन्यथाख्यात्या वा तदुपस्थिते-रित्याह। तदेतदिति॥

---

भगी० टी०। प्रसङ्गो वेति। यदीदं सत्याश्निरवयवत्वं स्यादिति तर्क इत्यर्थः। तदेतदिति। गगनकमलस्याप्रामाणिका-भ्युपगमसम्भवादित्यर्थः॥

---

रघु० टी०। त्वतन्त्रसाधनमनुमानम। इदं यत्सत्तन्निर-वयवमित्यादिकम॥

---

पर्वतादिवल्लोकप्रतीतिसिद्धान् घटादीनुपादाय निरवयवत्वानुमानं स्यात्, अन्यथा ब्रह्मविवर्त्तादि-विप्रतिपत्तिविहततया दहनानुमानमपि पर्वतादौ न स्यादिति चेन्नैवम्। अविरोधात्। न हि ब्रह्मविव-र्त्तादिसिद्धावप्याश्रयादयोऽन्यप्रकाराः [१]सम्भवन्ति, तथाहि, सर्वत्र स्वप्नपर्वते स्वप्नधूमेन स्वप्नवह्निरेव साध्यते, केवलं सांवृतेपि व्यवहारे सत्यानृतव्यवस्था-

(१) सन्ति इति १ पु० पा०।

ऽस्तीति तस्यां निर्भरः कर्त्तव्यः। इह तु घटादिव्यपदेशेन स्थूल एव यदि पक्षीकृतः, कथं निरवयवत्वेन साध्येन न विरोधः।

शङ्क० टी०। ननु पर्वतोऽग्निमानित्यादावपि पर्वतपदार्थापरिच्छेदनिबन्धना दोषाः प्रसज्येरन्नित्याशङ्कते। पर्वतादिवदिति। ब्रह्मपरिणामपक्षो वा विवर्त्तपक्षो वा। सर्वत्र पर्वतस्तद्रूप एव न त्वपर्वत इति तत्र नाश्रयासिद्धिरित्याह। नैवमिति। पर्वते ब्रह्मविवर्त्ते तादृशेनैव धूमेन तादृश एव वह्निः साध्यत इति न विरोध इत्यर्थः। अत्रानुरूपमुदाहरति। स्वप्नेति। प्रकृते वैषम्यमित्याह। इह त्विति। घट इति पदं स्थूलवाचकं परमाणुवाचकं वेति विकल्पतः कथं बाधसिद्धसाधने न स्यातामित्यर्थः॥

---

भगी० टी०। इह त्विति। ननु यथा निर्वह्नेः पर्वतस्य पक्षत्वे वह्न्यनुमाने बाधः स्यादिति वस्तुतो यः सवह्निः पर्वतवत् तत्त्वेनाज्ञायमानः पर्वतत्वेन ज्ञायमानः स पक्षः, तथा वस्तुतः परमाणुपुञ्ज एव तत्त्वेनाज्ञायमानो घटत्वेन ज्ञायमानः पक्षः स्यादिति न विरोधः, घटत्वञ्च जातिर्व्यावृत्तित्वं वेत्यन्यदेतत्, न वा यत्र शब्दादुपस्थितिस्तत्र सावयवत्वेन भानं, तस्याशक्यत्वात्। अत्राह। बाधस्यैवायं प्रसङ्गः॥

---

रघु० टी०। इह त्विति। न च यथा वह्निमतः पक्षत्वे सिद्धसाधनं निर्वह्नेश्च तत्त्वे बाध इति न दूषणम्, तदौदासीन्येन

पर्वतत्वमात्रेण पक्षत्वात्, तथेहापि परमाणुत्वस्थूलत्वौदास्येन घटत्व-मात्रेण पक्षत्वान्न दोष इति वाच्यम्। परमाणुस्थूलसाधारणस्य घटत्वस्यैकस्याभावात्, अतद्व्यावृत्तेरपि तदर्थभेदेन भेदात्, घट-पदवाच्यत्वस्यापि व्यवहारादिना स्थूल एव निर्णीतत्वात्, स्थूल-प्रत्ययविषयत्वस्य च परमाणावसम्भवात्। सावयवत्वं च यदि (१)प्रसिद्धं तदा तत्रैव सत्त्वमनैकान्तिकम्, अप्रसिद्धं चेत्तन्निषेधा-नुपपत्तिः साध्येन विरोधः पक्षस्य तदभाववत्त्वम्॥

---

अथ (२)परमाणुरेव, कथं न सिद्धसाधनम्। विप्रति-पन्नं प्रति न तथेति चेत्, न वै कश्चित् परमाणूनां निरवयवत्वं विप्रतिपद्यते। लोकव्यामोहनिवर्त्तनाय साधनमिति चेत्, तथापि यं लोकः स्थूलमेकमुप-लब्धवान् तस्य पक्षत्वे विरोध एव, ततोऽन्यस्य पक्षत्वे सिद्धसाधनमेव। एकः स्थूलोऽयमिति मिथ्येति चेत्, एतदेव तर्हि साध्यताम्, किमनेनाजागलस्तन-कल्पेन सत्त्वेन। न च तत्रैवेदं शक्यमुपसंहर्त्तुम्, व्यधि-करणत्वात्, तस्माद्येन रूपेण यस्य पक्षत्वं विवक्षितम्, तेन सिषाधयिषितधर्मविरोधविवादाभ्यां तत्रानु-मानप्रवृत्तिर्नातोऽन्यथेति।

(१) क्वचित्प्रत्यक्षमिति १ पु० पा०।

(२) परमाणवादिरेव इति १ पु० पा०।

शङ्क० टी०। घटपदवाच्यस्य सावयवत्वे यो विप्रतिपद्यते तं प्रति सिद्धसाधनमभिधातुमयुक्तमित्याशङ्कते। विप्रतिपन्नमिति। परीक्षकाणामविप्रतिपत्तावपि लौकिकानां विप्रतिपत्तिरस्त्येवेति न सिद्धसाधनमित्याशङ्कते। लोकेति। लोका नाणुदर्शिनः, किन्तु स्थूलमात्रदर्शिनः, तेषां निरवयवत्वे साध्ये बाधावतार एवेति परिहरति। तथापीति। बाधो हि विपरीतप्रमा, एकः स्थूल इति धीस्तु भ्रम इति न तथा बाध इति शङ्कते। एक इति। तर्हि स्थूलप्रत्ययस्य मिथ्यात्वसाधनमेव तवेष्टमस्मदनिष्टं च निरवयवत्वसाधनमप्रयोजकमिति परिहरति। एतदेवेति। ननु स्थूलप्रत्ययो मिथ्या सत्त्वादित्येव मया साधनीयमित्यत आह। न चेति। व्यधिकरणत्वादिति। त्वदभिमतप्रामाण्ये निर्विकल्पके व्यभिचारादित्यर्थः। नन्वेवं प्रसिद्धानुमानेपि वह्निमतः पर्वतस्य पक्षत्वे सिद्धसाधनं निर्वह्नेः पक्षत्वे बाध इति सकलानुमानोच्छेद इति चेन्न। तत्र च वह्निमत्त्वनिर्वह्नित्वकोट्योः प्रसिद्धतया सन्दिग्धस्य पक्षता यथा न तथा प्रकृते, त्वन्मते सावयवत्वस्य क्वचिदप्यप्रसिद्धेः। यद्वा प्रत्यक्षबाधप्रपञ्च एवायम्, अत एव तथैवोपसंहरति। तस्मादिति। पक्षतावच्छेदकधर्मावच्छेदेन यत्र न साध्यबाधः संशयस्तु तत्रानुमानप्रवृत्तिरित्यर्थः॥

---

भगी० टी०। व्यधिकरणत्वादिति। एकः स्थूलोऽयमिति धीविषयस्य मिथ्यात्वे साध्ये सत्त्वं हेतुर्विरुद्धः, तादृशबुद्धेरयथार्थत्वे च साध्ये अर्थान्तरत्वम्, मूर्तत्वं परमाणुभिन्नवृत्ति न वेति

संशये कथारम्भादित्यर्थः । तस्मादिति । अत्र तु तद्वैपरीत्यमुक्तमिति भावः ॥

---

रघु० टी० । एतदेव तर्हि साध्यताम्—तर्हि एतत्साधकमेवोपन्यस्यताम्, किं सत्त्वेनोपन्यस्तेन । तच्चैव मिथ्यात्व एव । इदम् सत्त्वम् । व्यधिकरणत्वादिति । यदि स्थूलस्य मिथ्यात्वमलीकत्वं साध्यते, तदा व्यधिकरणत्वं विरुद्धत्वम्, सत्त्वस्य वास्तवधर्मत्वात् । अथ स्थूलप्रत्ययस्य मिथ्यात्वं भ्रमत्वम्, तदा व्यधिकरणत्वं साध्यानधिकरणवृत्तित्वम्, भ्रमभिन्नस्य स्वलक्षणस्य निर्विकल्पकस्य च सत्त्वात् । अविरोधो बाधविरहः । विवादेन सिद्धसाधनव्युदासः ॥

---

नापि द्वितीयः, विपर्ययापर्यवसानात्, न च विवादविषयो निरवयवस्तस्मान्न सन्निति विपर्ययः, न चैवं सावयवत्वं पक्षस्यानिच्छता प्रवर्त्तयितुं शक्यते, न च तत् त्वयेष्यते, न च तस्येष्टौ तेनासत्त्वं शक्यसाधनम्, आश्रयासिद्धेर्विरोधादसाधारण्याद्वा, न च विपर्ययोपि परेच्छया प्रवर्त्तत इति ।

शङ्क० टी० । प्रसङ्गो वेति पक्षं दूषयति । नापीति । यदि घटः सन् स्यात् निरवयवः स्यात्, न च निरवयवस्तस्मान्न सन्निति प्रसङ्गविपर्ययनिष्ठा, तच्च न च निरवयव इति सावयवत्वमित्यर्थः, स च त्वया नेष्यत इत्यर्थः । ननु अयं सावयवः

स्यात् असन् स्यादिति प्रसङ्गः स्यादिति चेन्न। आपादका-प्रसिद्धा व्याप्तेरसिद्धेः। तेनेति। सावयवत्वेनेत्यर्थः। स्वाश्रयेति। घटादिरसन् सावयवत्वादिति हि विपर्ययः, तत्र सावयवत्वस्य हेतोस्त्वयाऽऽश्रय एव न स्वीक्रियत इत्याश्रयासिद्धिः, स्वीकारे वा विरोधः। सावयवत्वस्य शशशृङ्गादेरसतः सपक्षादिव विज्ञान-परमाण्वादेर्विपक्षादपि व्यावृत्तेरसाधारण्यमित्यर्थः। ननु त्वया सावयवत्वाश्रयः स्वीक्रियत एव, तथा च त्वदभ्युपगममाश्रित्यैव विपर्ययः स्यादित्यत आह। न चेति। विपर्ययस्यानुमानतया स्वाभ्युपगममात्राधीनप्रवृत्तिकत्वादित्यर्थः॥

---

भगी॰ टी॰। विपर्ययमाह। न चेति। तस्य सावयवत्व-स्येत्यर्थः। तेन सावयवत्वेनेत्यर्थः। आश्रयेति। एकः स्थूल इति धीविषयस्यालीकस्य पक्षतायामाश्रयासिद्धिः, अबाधित-तादृशप्रत्यक्षाच्च तत्सत्त्वसिद्धेरसत्त्वसाधने विरोधः, सावयवत्वादिति हेतोर्निरवयवत्वादलीकाज्ज्ञानाच्च व्यावृत्तेरसाधारणानैकान्तिकत्वं चेत्यर्थः। न चेति। यथा प्रसङ्गः पराभ्युपगतेनापादकेन प्रवर्त्तते न तथा विपर्ययः, तस्यानुमानतया स्वतोऽसिद्धापत्तेरित्यर्थः॥

---

रघु॰ टी॰। यत् सत् तन्निरवयवं यथा विज्ञानं, न च निरवयवो घटादिरिति विपर्ययः। तस्मान्न सन्निति तु स्वमता-वष्टम्भेन सावयवत्वस्य हेतुतायाः स्पष्टत्वार्थम्, परेण निगमनस्य न्यायाङ्गत्वानङ्गीकारात्। सावयवत्वमिति। निरवयवत्वाभावस्य

सावयवत्वरूपत्वात्। तत् सावयवत्वम्। तस्य सावयवत्वस्य। तेन सावयवत्वेन। घटादेरसिद्धावाश्रयासिद्धिः, सिद्धौ धर्मिग्राहक-प्रत्यक्षबाधः, विपक्षादिज्ञानादेः सपक्षाच्च शशविषाणादेर्व्यावृत्त-त्वादसाधारण्यम्। परमतेनेदम्॥

---

कः पुनरवयविनि न्यायः। तत् किं प्रत्यक्षान्न्यायो गरीयान्। यद्येवम्, [1]बुद्धावेव कोऽसौ। तस्माद-सारमेतत्।

शङ्क० टी०। प्रत्यक्षमन्यथासिद्धिशङ्काकलङ्कितमतोऽनुमानं पृच्छति। कः पुनरिति। अनन्यथासिद्धरूपपादनादाह। तत् किमिति। बुद्धावपीति। तस्यास्त्वया स्वसंवेद्यत्वेनानुमान-मन्तरेणैवाभ्युपगमादिति भावः॥

---

भगी० टी०। एतावताऽवयविनि प्रत्यक्षोपदर्शनेपि तत्र न्यायं विना न परितुष्यन् पृच्छति। क इति। न्यायानुपन्यासेपि तत्साधकं साधनमुपन्यस्तमेव, न्यायस्यापि व्याप्तिग्राहकं प्रत्यक्षमेव मूलमित्याशयेनोत्तरम्, तत् किमिति। यद्येवमिति। न्याया-भावेपि बुद्धेः प्रकाश्यसिद्धताया भवतोपगमादित्यर्थः॥

---

तथापि यन्निरस्तसमस्तविरुद्धधर्माध्यासं तदेकमेव व्यवहर्त्तव्यं यथा विज्ञानम्, तथा च विवादाध्यासित

(१) बुद्धावपि कोऽसौ इति २ पु० पा०

एकस्थूलोऽनुभवगोचर इति स्वभावहेतुः, तावन्मात्रानुबन्धित्वादेकताव्यवहारस्य। न ह्ययमेकव्यवहारो निर्निमित्तोऽनियमप्रसङ्गात्, नाप्यन्यनिमित्तः, द्रवकठिनशीतोष्णादावपि तथाव्यवहारप्रसङ्गात्।

शङ्क० टी०। पिशाचः पिशाचभाषयैव बोधितो[१] भवतीति परितुष्ट्यैवानुमानमाह। यश्चिरस्लेति। विवादाध्यासित इति। [२]माषादिराशिव्यवच्छेदार्थं व्याप्तिं द्रढयति। तावन्मात्रेति। अन्यथासिद्धिं निरस्यति। न हीति। द्रवकठिनशीतोष्णरूपेति परेषां पृथिव्यप्तेजोवायूनां परिभाषा॥

---

भगी० टी०। न्यायेनापि परितोषयति। तथापीति। द्रवेति। विरुद्धधर्माध्यासेऽप्यन्यस्मादेकव्यवहारे द्रवकठिनादावपि तदापत्तेरवश्यमेकव्यवहारो विरुद्धधर्मानध्यासनिमित्तोऽभ्युपेतव्य इत्यर्थः॥

---

अस्तु तर्हि बाह्येष्वर्थेषु नित्यसन्देहः, तथ्यातथ्यविभागस्याशक्यत्वादिति चेत्, न तावत् सर्वस्य यथार्थत्वादेव विभागोऽनुपपन्नः, उत्तरविरोधात्। तथाहि विपरीतमवगतं मयेति लौकिकी प्रतिपत्तिः अन्यथा-

(१) बाध्यो इति २ पु० पा०.
(२) मेषादि इति ३ पु० पा०.

**ख्यातिरिति च वैनयिकी यथार्था[१] न वा, उभयथा-प्युत्तरेण न सर्वयाथार्थ्यसिद्धिः ।**

शङ्क० टी० । नीलादिप्रत्ययानामप्यन्यथासिद्धिशङ्काकल-ङ्कितत्वादाह । अस्तु तर्हीति । तथ्यातथ्ये याथार्थ्यायाथार्थ्ये प्रामाण्याप्रामाण्ये इति यावत् । उत्तरविरोधादिति । यस्मात् प्रष्टव्यं तदुत्तरत एव विभागः सेत्स्यतीत्यर्थः । उत्तरं विधेयं[२] पृच्छति । विपरीतमिति । विनयः शास्त्राधीनो विवेकः तत्र व्यवस्थिता वैनयिकी यथार्था चेदियं धीस्तदा [३]विषयोऽस्या भ्रमोऽयायथार्था स्यात्तदास्या एवाऽयाथार्थ्यमित्युभयथा न सर्वायाथार्थ्यं नापि सर्वयाथार्थ्यमित्यर्थः ॥

भगी० टी० । सम्प्रति बाधकानुपपत्तावपि सर्वेषां साधकत्वाभिमतानां विकल्पनामादिभागोऽशक्य इत्याह । अस्त्विति । न तावत् सर्वत्र निश्चयाभावादेव सोऽशक्यः, अस्यैव साध्यसाधनभावस्य निश्चयेन विरोधादिति ज्ञाने सर्वत्र याथार्थ्यनिश्चयात्तथ्यातथ्यविभागाशक्यत्वं वाच्यम्, तत्राह । न तावदिति । उत्तरेति । विपरीतमवगतं मयेति ज्ञानं प्रमा न वेति प्रश्ने उत्तरकरणे सर्वथा विरोध एवेत्यर्थः । विरोधमाह । तथाहीति ।

(१) न्यथा वा इति १ पु० पा०

(२) विषयमिति २ पु० पा०

(३) विषयभूतायाधियोऽयाथार्थ्यं अन्यथा तस्यायाथार्थ्यमित्यभयाथार्थ्यमिति ३ पु० पाठः

विनयो विवेकः, तत्र व्यवस्थितेत्यर्थः। उभयथेति। तादृश-बुद्धेर्यथार्थत्वे तद्विषयो भ्रमः सिद्ध एव नेतिपक्षे सैव बुद्धिर्भ्रम इति सिद्धमित्यर्थः॥

---

रघु० टी०। तथ्यातथ्येति। ज्ञानस्य तथ्यातथ्यत्वे प्रमाणत्वा-प्रमाणत्वे, अर्थस्य तु प्रामाणिकत्वाप्रामाणिकत्वे इति। उत्तरेति। याथार्थ्यायाथार्थ्यप्रश्ने यदुत्तरं तद्विरोधादित्यर्थः। विरोधं विवृणोति। तथाहीति। विनयः शास्त्रार्थज्ञानम्, तदधीना [४]प्रवृत्तिर्वैनयिकी। उभयथा यथार्थत्वेनायथार्थत्वेन चोत्तरेण। इयमन्यथाख्यातिरिति प्रतीतेर्यथार्थत्वे तद्विषयस्य ख्यातेर्न यथार्थत्वसिद्धिः, अन्यथा त्वस्या एवेति।

---

**शब्दसंलापमात्रमेतन्न प्रतीतिरिति चेन्न। विवादा-नुपपत्तेः, न हि व्यवहारमात्रे परीक्षकाणां विवादः, न च नायमस्तीति। शब्दार्थे विवाद इति चेत्, एवं सत्यप्रतीतस्य निषेद्धुमशक्यत्वात् पराभिप्रायनिषे-धार्थत्वाच्च विवादस्य, अभ्युपगन्तृप्रतिषेद्धोः प्रतिषेध्य-प्रतीतिः कथं नास्तीति।**

शङ्क० टी०। शब्देति। विपरीतं मयाऽवगतमिति वाङ्मात्र-मित्यर्थः। विवादेति। ख्यातिपञ्चकमधिकृत्य परीक्षकाणां विवादानुपपत्तेरित्यर्थः। विवादानुपपत्तिमेवाह। न हीति।

(१) प्रतिपत्तिरिति ३ पु० पा०।

व्यवहारः सर्वजनसिद्धस्तत्र विवादो न सम्भवतीत्यर्थः। ननु विवाद एव नास्ति, तदनुरोधेन विपरीतख्यातिरपि कथं कल्पनीयेत्यत आह। न च नायमिति। ननु विवाद एवात्र नास्तीति नेत्यर्थः। शब्दार्थ इति। अन्यथाख्यातिशब्दस्य योऽर्थस्तत्र विवाद इत्यर्थः। केचित्तद्विशिष्टज्ञानं मन्यते केचित्तु तदगृहीतभेदं ज्ञानद्वयमिति तदर्थे विवादस्तथा च विशिष्टज्ञानं भ्रमरूपं यत् प्रतिषिध्यते तदभ्युपगच्छता नैयायिकेन प्रतिषेद्धा मीमांसकेन चावश्यं प्रत्येतव्यमित्यत आह। एवमिति॥

---

भगी० टी०। शब्देति। मात्रपदं नार्थनैरपेक्ष्यं प्रतीतेरुक्तम्। न चेति। अयं व्यवहारो नास्तीति नेत्यर्थः। तथा च तन्मात्रे विवादासम्भव इति भावः। शब्दार्थ इति। अन्यथाख्यातिपदस्य गृहीतभेदज्ञा-- -----ज्ञाने विशेष इति विवाद इत्यर्थः। एवं मतीति। निषेध्यप्रतीतिं विना न निषेधप्रतीतिरित्युभयोरप्युपगन्तृनिषेद्धोः प्रतीतियथार्थत्वे क विवाद इत्यर्थः॥

---

रघु० टी०। शब्देति। इयमन्यथाख्यातिरिति वाक्यमात्रमित्यर्थः। न हीति। व्यवहारस्योभयवादिसम्प्रतिपन्नत्वान्न विवाद इत्यर्थः। न चायं विवादो नास्तीति। शब्दार्थेति। तादृशवाक्यस्यार्थे पुरोवर्त्तिज्ञानस्यान्यथाख्यातित्वे प्रतिषेध्यस्यान्यथा-

ख्यातित्वस्य प्रतीतिः कथं नास्तीति । तथा चोभयवादिसिद्धत्वान्न विवादावसर इत्यर्थः ॥

---

न चान्यज्ञानादन्यत्र प्रवृत्तिसम्भवोऽतिप्रसङ्गात् । न च तज्ज्ञानसान्निध्यं नियामकमतिप्रसङ्गादेव । न च तत्सहितो भेदाग्रहः, अग्रहप्राधान्ये भेदाविवक्षायां निवृत्तेरपि प्रसङ्गात्, तद्धेतोरभेदाग्रहस्यापि विद्यमानत्वात् । नासौ निवर्त्तकः, अपि तु भेदग्रह इति चेन्न, रजत एव नेदं रजतमिति कृत्वा न निवर्त्तेत, भेदग्रहस्य तत्कारणस्याभावात्, भावे वा विपरीतख्यातिरभिन्ने भेदप्रत्ययात्, तस्मात् प्रवर्त्तकवन्निवर्त्तकोप्यग्रह एव तेषां स्वीकर्त्तुमुचितः, तथा च स दोषस्तदवस्थ एव ।

शङ्क० टी० । इदानीमिदं रजतमिति विशिष्टज्ञानमिति साधयति । न चेति । रजतज्ञानाच्छुक्तौ प्रवृत्तिर्विशिष्टज्ञानमन्तरेणानुपपन्नेत्यर्थः । ननु शुक्तिज्ञानसन्निहितमेव रजतज्ञानमिति कृत्वा रजतार्थी शुक्तौ प्रवर्त्तत इत्यत आह । न चेति । नन्वगृहीतभेदं ज्ञानद्वयं प्रवर्त्तकमतो नातिप्रसङ्ग इत्यत आह । न चेति । तत्सहित इष्टज्ञानसहितः । तथा चेष्टभेदाग्रहः प्रवर्त्तक इत्यर्थः । अग्रहप्राधान्य इति । इष्टभेदो वस्तुगत्याऽस्तु मा वा, परन्त्विष्टभेदाग्रहः प्रवर्त्तक इति चेदुच्यते तदानिष्टभेदोऽस्तु मा वा तदग्रहः शुक्तौ निवर्त्तकोपि स्यादिति युगपत्प्रवृत्तिनिवृत्ती

स्यातामित्यर्थः। एतदेवाह। तद्धेतोरिति। नन्विष्टाभेदाग्रहो न निवर्त्तकः, किन्त्विष्टभेदग्रह इति, स च प्रकृते नास्तीति न निवर्त्तत इति शङ्कते। नाभाविति। तत्कारणस्येति। निवृत्ति-कारणस्येत्यर्थः। ननु तत्रापि रजतभेदग्रहोऽस्त्येवेत्यत आह। भावे वेति। स दोष इति। युगपत्प्रवृत्तिनिवृत्तिप्रसङ्गरूपो दोष इत्यर्थः॥

---

भगी० टी०। ननु प्रत्यक्षेणेदमिति शुक्तिर्गृह्यते, दोषात्तत्र शुक्तित्वं न गृह्यते, तद्वृत्तितया गृहीतेन शुक्लभास्वरत्वेन रजतं स्मर्यते, दोषादेव तयोर्भेदो न गृह्यते, एतावता रजतार्थिप्रवृत्ति-र्जायते, सत्येव रजतेऽपि प्रवृत्तौ रजतेन भेदाग्रहोऽस्त्येव, परं तत्रा-विद्यमानतया भेदो न गृह्यते, शुक्तिरजतयोस्तु सन्नपि दोषादि-त्येवमुपपत्तौ विशिष्टज्ञाने मानाभाव इत्यत आह। न चेति। रजतज्ञानस्य शुक्त्यविषयत्वे तत्र प्रवर्त्तकत्वं न स्यात्, तद्विषयतां विना तद्विषयप्रवृत्त्यजनकत्वात्, ज्ञानप्रवृत्त्योः समानविषयतया हेतुहेतुमद्भावनिश्चयात्, प्रवृत्तौ वा घटेऽपि प्रवृत्तिप्रसङ्ग इत्यर्थः। ननु शुक्तिज्ञानसन्निहितरजतज्ञानं शुक्त्यविषयकमपि तत्र प्रवर्त्तकं स्यादित्यत आह। न च तज्ज्ञानेति। तथापि कदापि घटज्ञान-सान्निध्यात्तत्रापि प्रवर्त्तकं स्यादित्यर्थः। न चेति। पुरोवर्त्ति-रजतज्ञानसहितो भेदाग्रहः प्रवृत्तिनियामक इत्यपि नेत्यर्थः। भेदाग्रहस्य प्रवर्त्तकत्वे किमग्रहो विशेष्यः, अगृह्यमाणो भेद इति भेदो वा विशेष्यः, आद्ये सत्यरजतेऽपि प्रवृत्तेरग्रहमात्रं वा प्रवर्त्तकं

भेदविषयकग्रहाभावो वा, आद्ये निवृत्तेरपीति। अत्र हेतुः, तद्धेतोरिति। शुक्तौ नेदं रजतमिति ज्ञाने रजताभेदाग्रहस्य निवर्त्तकस्य दर्शनाच्छुक्तौ रजतभ्रमे प्रवर्त्तकभेदाग्रहवन्निवर्त्तक-रजताभेदाग्रहस्यापि सत्त्वान्निवृत्तिरपि स्यादित्यर्थः। द्वितीयं शङ्कते। नासाविति। रजतभेदाग्रहस्य प्रवर्त्तकत्वे तदभावो रजतभेदग्रहो निवर्त्तकः, स चात्र नास्तीति न निवृत्तिरित्यर्थः। तस्यानिवर्त्तकत्वे नेदं रजतमिति ज्ञानान्निवर्त्तेत, रजते रजत-भेदग्रहेऽन्यथाख्यात्यापत्ते रजते रजताभेदाग्रहान्निवृत्तिर्वाच्या, तथा च शुक्काविदं रजतमिति ज्ञानेपि रजताभेदाग्रहान्निवृत्तिः स्यादित्याह। तर्हीति॥

---

रघु० टी०। अथ अन्यथात्वं व्यधिकरणप्रकारकत्व ख्यातौ निषिद्ध्यते, तच्चेच्छादौ प्रतीतम्। न च निषेधाधिकरणं निषेध्य-प्रतीतिरप्यङ्गम्, मानाभावात्। शुक्त्यादौ रजतत्वादिप्रकारकज्ञाना-भावे कथं तत्र रजतार्थिप्रवृत्तिरिति चेत्, रजतादिगोचरात् प्रमुष्टतत्तांशकाद्रजतमित्यादिस्मरणात्। अत्राह। न चेत्यादि। न च प्रवृत्तिविषयस्य ज्ञानं नियामकम्, तत्र रजतादिभेदग्रहेपि प्रवृत्त्यापत्तेरित्याह। न चेति। तत्सहितः प्रवृत्तिविषयतज्ज्ञान-सहितः। स्वतन्त्रोपस्थितस्येष्टस्य भेदाग्रहः। भेदाग्रह इति यत्र कचित्ततो भेदस्य प्रवृत्तिविषयेऽग्रहो वा तत्रागृह्यमाणस्तन्निष्ठो भेदो वा। आद्ये अग्रहेति। यद्यपि प्रवृत्तौ भेदस्य विवक्षायाम-विवक्षायां च समानमेव निवृत्तावभिधास्यमानं दूषणम्, तथापि

विवक्षापक्षे दोषान्तरमभिधातुं विकल्पः। (१)इष्टाभेदस्याग्रहो वा निवर्त्तक इष्टभेदग्रहो वा। आद्ये निवृत्तेरपीति। अन्यं शङ्कते। नासाविति। निरस्यति। रजत एवेति। उपसंहरति। तस्मादिति॥

अथ भेदः प्रधानम्, अङ्गमग्रहः, तदा सत्यरजतज्ञानाद्रजते न प्रवर्त्तेत, इदमंशरजतांशयोर्भेदाभावादिति स्वयमूहनीयम्।

शङ्क० टी०। ननु पुरोवर्त्तिरजतयोर्यत्र वास्तवो भेदो भवति तत्र भेदाग्रहात्प्रवृत्तिः, प्रकृते च पुरोवर्त्तिरजतयोरस्ति भेद इति तदग्रहात्प्रवर्त्तत इति शङ्कते। अथेति। भेदस्य प्राधान्य प्रवृत्तिविषयनिष्ठत्वम्। परिहारमाह। तदा सत्येति। तत्र पुरोवर्त्तिरजतयोर्वास्तवभेदाभावादित्यर्थः॥

भगी० टी०। अगृह्यमाणो भेदो रजतपुरोवर्त्तिज्ञानसहितः प्रवर्त्तक इति कल्पमाशङ्क्य निराकरोति। अथेति। येन केनापि भेदग्रहस्य प्रवर्त्तकत्वेऽतिप्रसङ्गादिष्टेन समं भेदाग्रहो वाच्यः, सोपि न यस्य कस्यचिदतिप्रसङ्गादेव. अपि तु प्रवृत्तिविषयस्येति वाच्यम्, तथा चेष्टेन समं पुरोवर्त्तिना भेदस्याग्रहे सत्येव रजते प्रवृत्तिर्न स्यात्, न हि तत्रेष्टप्रतियोगिको भेदोऽस्ति यस्याग्रहः प्रवर्त्तयेदित्यर्थः॥

(१) अनिष्टभेदस्याग्रहो इति ३ पु० पा०।

रघु० टी० । द्वितीयमाशङ्क्य निराकरोति । अथेति । अथोपस्थिते धर्मिणि स्वतन्त्रोपस्थितयोरिष्टानिष्टयोर्भेदाग्रहो प्रवृत्तिनिवृत्तिहेतू इति चेत्, रजतयोरङ्गरजतयोर्वा इमे रजतारजते इति ग्रहादेकत्र युगपत्प्रवृत्तिनिवृत्त्यापत्तिः । अथ यद्धर्मिणाकाङ्क्षा इष्टस्योपस्थितिस्तत्र प्रवर्त्तते यद्धर्मिणाकाङ्क्षा चानिष्टस्य सा तत्र निवर्त्तते, आकाङ्क्षा चोपस्थितिवृत्तिधर्मान्तरं यद्वशादुपस्थितस्य विशेषणस्योपस्थितेषु विशेष्येषु क्वचिदेव (भवतां) विशिष्टबुद्धिरिति चेत्, अतिरिक्ताकाङ्क्षायां मानाभावात्, यथायथं व्याप्यपरामर्शादिरन्ततो भवतां तन्नियामकत्वाभिमतादेव विशिष्टबुद्ध्युत्पादनिय[1]मसम्भवात् ॥

---

प्रवृत्तिवत् प्रतिपत्तावप्युभयाग्रहस्तुल्य इति चेन्न । अग्रहस्याविवक्षितत्वात्, सामग्रीविशेषादेव तत्सिद्धेः । तत्त्वेऽपरिस्फुरतीति तु नियमः । न च क्वचिदपि भेदाभेदावुभावपि तत्त्वं यतस्तथा स्यादित्येषा दिक् ।

शङ्क० टी० । ननु भ्रमोत्पत्तेः पूर्वं शुक्तिरजतभेदाग्रहवत्तदुभयाभेदाग्रहोऽप्यस्त्येव, तथा च भेदाग्रहादभेदारोपवदभेदाग्रहाद्भेदज्ञानमेव किं न स्यादित्याशङ्कते । प्रवृत्तिवदिति । अभेदारोपे दोषस्य भेदज्ञाने च दोषाभावस्य कारणतया न यौगपद्यापत्तिः, न हि दोषतदभावयोर्यौगपद्यमिति परिहरति । सामग्रीति । नन्वेवं भेदग्रहे सत्यपि क्वचिदभेदारोपः

(१) नियमादनियमसम्भवात् इति १ पु० पा० ।

स्यादित्यत आह । तत्त्व इति । भेदस्य तत्र सत्त्वात्तदग्रहाद-भेदारोपो भवत्यभेदस्तत्र नास्तीति तदग्र(हा)(हे सत्यपि कचि)द्भेदग्रहः प्रसज्यत इत्याह । न चेति । ननूपस्थितेष्टभेदाग्रहः प्रवर्त्तकः, उपस्थितानिष्टभेदाग्रहश्च निवर्त्तकः, तत्र यद्यपीदंत्वेना-निष्टोपस्थितिस्तथापि नानिष्टतावच्छेदकप्रकारेण, तथा च कथं तत्र निवृत्तिः स्यादिति चेन्न । इदं रजतं न शुक्तिरिति भ्रमान्निवृत्तिप्रसङ्गात्, तत्र शुक्तित्वेनैवानिष्टग्रहात् । न च स्वतन्त्रोपस्थितानिष्टभेदाग्रहो निवृत्तिहेतुरत्र त्वभावप्रतियोगि-त्वेनानिष्टोपस्थितेर्न निवर्त्तत इति वाच्यम् । वणिग्वीथ्यभाव-प्रतियोगीदं रजतं इति भ्रमान्न तर्हि प्रवर्त्तेत, इष्टस्याभाव-प्रतियोगित्वेनैव भानात् । किं च इमे रङ्गरजते इत्यत्र विपरीतारोपे युगपत्प्रवृत्तिनिवृत्ती स्यातामुभयकारणसत्त्वादिति (दिगीति) दिगर्थः ॥

---

भगी० टी० । नन्वेवमारोपनियमोपि न स्यात्, अभेदा-रोपहेतुभेदाग्रहवद्भेदज्ञानहेतोरभेदाग्रहस्यापि भावादित्याह । प्रवृत्तिवदिति । अभेदारोपे भेदाग्रहस्य हेतुत्वेऽन्यतरकोटि-प्रकारकतायां ज्ञानस्य न तन्नियामकं, किन्तु सामग्रीविशेषः, न चान्यकार्यसामग्री अन्यकार्यनियामिका, कार्ययोरभेदापत्तेः, एवं चारोपेऽदृष्टविशेषादेव सामग्रीसम्प्रतिष्ठान्नियम इत्याह । अग्रहस्येति । नन्वेवमभेदाग्रहो हेतुरपि न स्यादित्यत आह । तत्त्व इति ।

ननु सत्यरजते न प्रतियोग्यप्रसिद्धिः, पुरोवर्त्तिनि भेदे रजतप्रतियोगित्वज्ञानविषयत्वाभावस्य पुरोवर्त्तिनीष्टभिन्नत्वप्रकारकज्ञानविषयत्वाभावस्य वा हेतुत्वात् । अत्राहुः । इदं रजतमित्यत्र पुरोवर्त्तिनानिष्टभेदग्रहेऽन्यथाख्यातिः, तदग्रहे चानिष्टभेदाग्रहान्निवृत्तिरपि स्यात् । अथानिष्टतावच्छेदकरूपेणोपस्थितादनिष्टभेदाग्रहान्निवृत्तिर्न चेदन्त्वमनिष्टतावच्छेदकम्, एवमपीदं रजतं न शुक्तिरित्यत्रानिष्टतावच्छेदकशुक्तित्वेनोपस्थितानिष्टभेदाग्रहान्निवर्त्तेत । अथ स्वातन्त्र्योपस्थितानिष्टभेदाग्रहात् प्रवृत्तिनिवृत्तौ, अभावविशेषणत्वेनानुपस्थितिश्च स्वातन्त्र्यम्, अनिष्टं च तत्राभावविशेषणत्वेनोपस्थितमिति न निवृत्तिरत एव नेदं रजतमिति ज्ञानाद्रजते न प्रवृत्तिः, अभावासंसर्गाग्रह एव नकारार्थ इति नान्यथाख्यातिः । नन्वभावविशेषणत्वेनोपस्थितावपि पूर्वं प्रतियोगिनः स्वातन्त्र्येणोपस्थिते शुक्तौ वणिग्वीथीस्थाभावप्रतियोगीदं रजतमिति भ्रमज्ञानादप्रवृत्त्यापत्तेश्च । किं च रजतरङ्गयोरिमे रजते इति भ्रमादिष्टानिष्टतावच्छेदकरूपेण स्वातन्त्र्योभयभेदाग्रहात्प्रवृत्तिनिवृत्तिसाङ्कर्यापत्तिः । न चैवंविधभ्रमे मानाभावः । तथाविधसत्यज्ञानवत्प्रत्येकभ्रमसामग्र्योरेकदा सत्त्वेन तादृशभ्रमस्यानुभविकत्वात् । अथ रजतरङ्गयो रजतरङ्गरजतभेदाग्रहान्न युगपत् प्रवृत्तिनिवृत्तौ । न चान्यथाख्यातिः, दोषवशात् पुरोवर्त्तिनं विहाय स्मृतरङ्गरजताभ्यां पुरोवर्त्तिनि भेदासंसर्गाग्रहात् । न । एकरङ्गरजतमात्रज्ञानानन्तरं तयोरेव यमजयोर्विपरीतभ्रमेऽतिप्रसङ्गात् । अन्यथाख्यातेश्च । रजते

रजतभेदासंसर्गासंसर्गस्यासंसर्गाग्रहान्निवृत्तिरिति चेन्न। भेदासंसर्गासंसर्गस्य भेदसंसर्गरूपत्वे रजतभेदासंसर्गाग्रहाद्रङ्गे निवृत्तिप्रसङ्गात्, रजतभेदसंसर्गग्रहे चान्यथाख्यातिः, रजतवृत्तितयोपस्थितभेदे रजतभेदेन सह भेदाग्रहः प्रवृत्तिप्रतिबन्धकः, एवं रङ्गे निवृत्तावपीति चेन्न। शब्दाभासात् युगपत्प्रवृत्तिनिवृत्त्यापत्तेः, प्रवृत्तिनिवृत्तिविषयरजतरङ्गभेदयोश्च शब्दादनुपस्थित्याऽप्रतिबन्धकत्वात्। अथ रजते नेदं रजतमिति ज्ञानं रजतत्वासंसर्गासंसर्गाग्रहरूपं वा प्रतिबन्धकमिति चेन्न। अन्यवृत्तितयोपस्थितस्य रजतत्वासंसर्गासंसर्गाग्रहस्य रजतभेदस्य च रङ्गे असंसर्गाग्रहान्निवृत्तिप्रसङ्गात्। मामं त्वन्यथाख्यातौ ज्ञानत्वं विशेष्यावृत्तिप्रकारावच्छिन्नविषयताप्रतियोगिवृत्ति, प्रवृत्तिहेतुप्रत्यक्षात्मविशेषगुणत्वात्, इच्छात्ववत्, भेदाग्रहकारितायां रजतत्वेन पुरोवर्त्तिनमिच्छामीत्यवच्छायां विशेष्यावृत्तिना रजतत्वेनावच्छेदादिति सामान्यतः। विशिष्य तु रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकं रजतप्रकारकं ज्ञानं शुक्तिविषयकम्, शुक्तिविषयकप्रवृत्तिहेतुविज्ञानत्वात्, शुक्त्यर्थिन इयं शुक्तिरिति ज्ञानवत्, तादृशमिदं ज्ञानं वा रजतत्वप्रकारकं, रजतेच्छाजन्यप्रवृत्तिहेतुज्ञानत्वात्, रजत इदं रजतमिति ज्ञानवत्। न च ग्रहणस्मरणयोर्विशिष्टज्ञानस्य वा पक्षत्वे बाध आश्रयासिद्धिर्वा। उभयसिद्धेन शुक्तिविषयप्रवृत्तिहेतुत्वेन पक्षत्वात्। अन्यथा साध्यतदभावावादाय पक्षे विकल्पेऽनुमानमात्रोच्छेदापत्तेः। न च विसम्वादिप्रवृत्त्यजनकत्वमुपाधिः, त्वन्मते तथाविध इदं ज्ञाने रजतज्ञाने च साध्याव्यापकत्वात्।

नापि नोऽजन्यत्वम्, परस्य ज्ञानमात्रे तथात्वात्, अन्यथा तयोरेव माध्यस्थ्यापत्तेस्तत्त्वात्। न चाप्रयोजकत्वम्, इष्टपुरोवर्त्तिविशिष्टज्ञानस्य प्रवृत्तिहेतुत्वात्। उक्तरीत्या भेदाग्रहस्याप्रवर्त्तकत्वात्। ननु तत्र हेत्वभावः, शब्दस्याप्तोक्तस्य निर्दोषस्य वाऽहेतुत्वात्, न च शब्दाभासस्तद्धेतुः, योग्यताविशिष्टस्य शब्दस्य हेतुत्वात्, नापि लिङ्गाभासः, लिङ्गविशिष्टपक्षज्ञानस्यानुमितिहेतुत्वात्, आभासे च तत्संसर्गाग्रहात्, इन्द्रियस्य सम्बद्धग्राहकत्वात्। नैवम्। संस्कारेन्द्रियाभ्यां विशिष्टधीसम्भवात्, तस्य ज्ञानद्वयत्वेऽभेदोच्छेदापत्तेः, तस्य तदेकमानत्वात्। न चैकविषयत्वेन तयोः सहकारिता, गौरवात्। न चातिप्रसङ्गः, भेदाग्रहस्यापि तद्धेतुत्वात्, प्रत्यभिज्ञायास्तत्त्वांशे व्यभिचाराच्चेति सङ्क्षेपः॥

---

रघु० टी०। भेदाभेदाग्रहयोः कारणयोः सत्त्वात्कार्ययोरभेदभेदग्रहयोर्युगपदुत्पत्तिप्रसङ्ग इत्याशङ्कते। प्रवृत्तिवदिति। अग्रहस्य अग्रहमात्रस्य। तन्नियामकमाह। सामग्रीति। अथैवं यदा कदाचित्पुरुषत्वादिग्रहेपि स्थाणुत्वाद्यारोपप्रसङ्ग इत्यत आह। तस्य इति॥

---

नापि सर्वस्यायथार्थत्वात्, तद्ग्राहकस्य यथार्थत्वायथार्थत्वाभ्यामुत्तरविरोधात्। तत् किञ्चित् प्रमाणं किञ्चिदप्रमाणमिति विभाग एव वस्तुगतिः। न चासौ प्रतीतिगतिमवधूय व्यवहारगोचरः।

प्रक्ष० टी०। नापि सर्वायाथार्थ्यादिति। विभागानुपपत्ति-रित्यावर्त्तनीयम्। तद्ग्राहकस्येति। अन्यथाख्यातिरियमिति ज्ञानस्य याथार्थ्ये क्व सर्वायाथार्थ्यमयाथार्थ्ये च विषयीभूतज्ञानस्यैव याथार्थ्यमिति क्व सर्वायाथार्थ्यमित्यर्थः। उपसंहरति। तस्मा-दिति। ननु तथ्यातथ्यविभागस्य व्यवहारः सिद्ध्यतु, न तु प्रतीतिरपीत्यत आह। न चेति। असाविति। प्रामाण्या-प्रामाण्य[1]व्यवहार इत्यर्थः॥

---

भगी० टी०। नापीति। विभागोऽनुपपन्न इत्यनुषज्यते। तद्ग्राहकस्येति। अयाथार्थ्यग्राहकस्य याथार्थ्ये तदैव यथार्थमयाथार्थ्ये च तद्विषययाथार्थ्यसिद्धौ अर्थात् याथार्थ्यसिद्धिरित्युत्तरविरोध इत्यर्थः। तथापि तथ्यातथ्यविभागनिश्चायकाभावे तन्निश्चयोऽनुप-पन्न इत्यत आह। न चासाविति। असौ तथ्यातथ्यविभागः। तद्व्यवहारेण कार्येण कारणस्य ज्ञानस्य कल्पनादित्यर्थः।

---

रघु० टी०। नापीति। विभागोऽनुपपन्न इत्यनुषज्यते। न चासाविति। असौ प्रमाणाप्रमाणविभागः। व्यवहारस्य व्यवहर्त्तव्यज्ञानसाध्यत्वादित्यर्थः॥

---

कथन्ता तु निरूप्यते स्वतः परतो वेति। आद्येपि स्वयं [2]स्वग्राहकेणेति वा। तत्र न प्रथमः स्वसम्वेद-

(१) ण्यविभाग इत्यर्थ इति ३ पु० पा०।

(२) स्वग्राहकेण वेति १ पु० पा०।

नस्यासिद्धेः, प्रकाशत्वस्यासाधारणत्वात्, शब्दसाम्येनानुमानाप्रवृत्तेः। न चाध्यक्षमेवात्र प्रमाणम्, सन्दिग्धभेदत्वात्। अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति, परेण परवेदनेऽनवस्था स्यात्, न च क्रिया स्वजातीयक्रियाकर्मभावमश्नुते च्छिदावदितितर्कपुरस्कारान्नैष दोष इति चेन्न।

शङ्क० टी०। नन्वेतावता प्रामाण्यं गृह्यत इत्यायातम्, कथं गृह्यत इत्यमाधितमेवेत्याह। कथन्त्विति। केनोपायेन गृह्यत इति निरूप्यत इत्यर्थः। निरूपणं विचारः, स च संशयाधीनः, संशयस्तु प्रकृते विप्रतिपत्तिजन्या, ततो विप्रतिपत्तिमाह। स्वत इति।

तत्र भट्टगुरुमिश्रसाधारणी स्वतस्त्वविप्रतिपत्तिः ज्ञानं प्रामाण्याविषयकप्रतीत्यविषयो न वा, यावती ज्ञानग्राहिका सामग्री सा प्रामाण्यग्राहकसामग्र्यभिन्ना न वा, ज्ञानविषयता प्रामाण्यविषयताव्याप्या न वा, ज्ञानज्ञानत्वं प्रामाण्यज्ञानत्वं च प्रामाण्यज्ञानत्वान्यूनानतिरिक्तवृत्ति न वा। प्रसिद्धिस्तु सर्वत्र स्वयमूहनीया। प्रामाण्याप्रामाण्यग्राहकसामग्र्यामभेदेन व्याप्यव्यापकभावाङ्गीकारे (प्रामाण्यज्ञानत्वे) च यथासङ्ख्यमन्वयकोटिप्रसिद्धिः। व्यतिरेककोटिस्तु सर्वत्र सुगमैव। यदि च ज्ञानपदजनितज्ञानेन निर्विकल्पके वाऽप्रामाण्योल्लेखिना च ज्ञानेन स्मरणेन च प्रामाण्यं न गृह्यते इत्युपदर्शितविप्रतिपत्तिषु केषाञ्चिद्विप्रतिपत्तिः, तदा प्रामाण्यं अप्रामाण्यानुल्लेखिसप्रकारक-

सविषयकयावदनुभवग्राहकानुभव[1]ग्राह्यं न वा तज्ज्ञानप्रामाण्यं तज्ज्ञानविषयकजन्यज्ञानाजन्यजन्यज्ञानग्राह्यं न वेत्याद्यूह्यमित्यल-मतिपाण्डित्येन।

विभिद्य तु घटोयमितिज्ञानप्रामाण्यमेतज्ज्ञानानुभवविषयता-व्यापकानुभवविषयताश्रयो न वा: एतज्ज्ञानप्रामाण्यमेतज्ज्ञान-विषयो न वा, अनुभवानुव्यवसायत्वं प्रामाण्यविषयताव्याप्यं न वा, तज्ज्ञानप्रामाण्यं तज्ज्ञानभिन्नसाक्षात्कारग्राह्यं न वा, तज्ज्ञान-प्रामाण्यं तज्ज्ञानविषयकज्ञानाजन्यानुमितिग्राह्यं न वेति वा।

स्वसंवेदनस्येति। ज्ञानं स्वात्मानमेव न गृह्णाति दूरे स्वधर्मप्रामाण्यग्रहणमित्यर्थः। धर्मधर्मिणोरभेदे चाप्रामाण्यमपि स्वत एव गृह्येतेति भावः। ज्ञानं स्वव्यवहारे प्रकाशान्तराना-पेक्षम्, प्रकाशत्वात्, प्रदीपवदिति शङ्कते। प्रकाशत्वस्येति। प्रकाशत्वं यदि तेजस्त्वं तदा स्वरूपासिद्धिर्यदि ज्ञानत्वं (चेत्) तदा साधनविकलो दृष्टान्तः, प्रकाशशब्दवाच्यत्वं चेत्, तदा गोपदवाच्यतया वागादीनामपि विषाणित्वप्रसङ्ग इत्याह। असाधारणत्वादिति। ननु जानामीति प्रत्यक्षमेव स्वप्रकाशे प्रमाणमित्यत आह। न चेति। ग्राह्यज्ञानभिन्नं ज्ञानं तदेव वा ज्ञानमिति सन्दिग्धभेदत्वान्न प्रकाशे प्रमाणमित्यर्थः। इति चेदित्यन्तं शङ्कते। अप्रत्यक्षेति। यदि ज्ञानं प्रत्यक्षं न भवे-त्तदार्थदृष्टिरेव न सिद्ध्येत् ज्ञानमेव न सिद्ध्येदित्यर्थः। ननु ज्ञानान्तरेणैव ज्ञानं गृह्यतामत आह। परेणेति। ज्ञानान्तरेण

(१) अनुभवविषयताश्रयो न वा इति इ पु० पा०।

ग्रहणे दोषान्तरमाह । न चेति । नैष दोष इति । न सन्दिग्धभेदत्वं दोष इत्यर्थः । तथा च परिशेषात् स्वमेव स्वस्मिन् प्रमाणम्, तच्च स्वप्रकाशमन्तरेण न स्यादिति भावः ॥

---

भगी० टी० । कथन्तेति । तद्ग्रहणोपाय इत्यर्थः । स्वत इति । यद्यपि ज्ञानत्वनिश्चायकयावन्निश्चयत्वं स्वतस्त्वं, अप्रामाण्यनिश्चायकेन तदनिश्चयात् । नाप्यप्रामाण्याग्राहकज्ञानग्राहकयावन्निश्चयत्वम्, ज्ञानादिपदेन ज्ञातिप्रवृत्तिनिमित्तकेन विषयानुव्यवसायेनाप्रामाण्यग्राहकेण प्रामाण्यानिश्चयात्, तथाप्यप्रामाण्योत्सिस्वामाधारणहेतुरहितमविषयज्ञानग्राहकयावद्ग्राह्यत्वं स्वतस्त्वम् । ज्ञानादिपदेन च न विषयग्रहः । तज्ज्ञानविषयकज्ञानाजन्यमप्रकारकज्ञानग्राह्यत्वं वा । एवञ्च स्वेन तदनुव्यवसायेन ज्ञाततानुपपत्तिकल्पनया वा ग्राह्यत्वं सङ्गृहीतम् । विशिष्येव वा घटोऽयमिति ज्ञानप्रामाण्यमेतद्विषयविशिष्टेतद्ग्राहकमात्रग्राह्यत्वं स्वतोग्राह्यत्वं तदन्यथाग्राह्यत्वं च परतस्त्वम् । तच्च स्वात्मना यदि स्वं गृह्येत तदा स्वधर्मः प्रामाण्यं गृह्येत, धर्म्यग्रहे धर्मस्याग्रहात्, तदेव त्वसिद्धमित्याह । स्वसम्वेदनस्येति । स्वप्रकाशेपि स्वमात्रग्राहिणः स्वधर्मग्राहकत्वमसम्भवि, धर्मधर्मिणोरभेदे चाप्रामाण्यस्यापि स्व(तो)ग्राह्यत्वप्रसङ्ग इति भावः । ननु ज्ञानं स्वव्यवहारे सजातीयान्तरानपेक्षम्, प्रकाशत्वात्, दीपवदिति स्वप्रकाशे मानमित्यत आह । प्रकाशत्वस्येति । प्रकाशत्वं यदि तेजस्त्वं तदाऽसिद्धिः, ज्ञानत्वं चेत्तदा दीपादपि व्यावृत्तेरसाधारण्यमित्यर्थः ।

ननु स्वप्रकाशशब्दवाच्यत्वं हेतुः स्यादित्यत आह। शब्देति। मा भूद्गोशब्दवाच्यत्वेन वाचोऽपि विषाणित्वापत्तिरित्यर्थः। ननु ज्ञानस्य प्रकाशत्वे प्रत्यक्षमेव मानम्, जानामीति प्रत्यक्षेण स्वस्य विषयीकरणादित्यत आह। नापीति। किमेतद्व्यवसायरूपं किञ्चेदमिति व्यवसायस्तदुत्तरमिदमहं जानामीत्यनुव्यवसायो मानम इति सन्दिग्धं सत् कथं तत्र मानमित्यर्थः। वस्तुतो न सन्देहः, अर्थनिश्चयेन हि प्रवृत्त्यादिदर्शनाद्व्यवसायस्यार्थविषयत्वमात्रमनुभूयते न तु स्वविषयत्वमपि, स्वविषयत्वस्य प्रवृत्त्याद्य हेतुत्वात्, गौरवात्। एवं स्वव्यवहारे सजातीयान्तरानपेक्षत्वं प्रकाशत्वमुक्तमिदानीं स्वविषयत्वं तदुच्यत इति विरोधश्चेति भावः। प्रत्यक्षेति। उपलम्भो यस्य मते स्वात्मन्यप्रत्यक्षः, तस्य मानाभावादर्थदृष्टिरदर्शज्ञानं न सिद्धेदित्यर्थः। ननु तद्विषयकज्ञानान्तरात्तत्सिद्धिः स्यादित्यत आह। परेणेति। तदपि ज्ञानान्तराधीनसिद्धिकमित्यनवस्थानाद्धर्मिग्राहकमानसिद्धमेव स्वप्रकाशत्वमित्यर्थः। न चेति। यदीयं ज्ञानक्रिया सजातीयक्रियानिरूपितकर्म स्यात् एतत्कर्मतानिरूपकक्रियासजातीया न स्यात्, छिदावदिति तर्कादनुव्यवसायत्वं बाधकादिदमहं जानामीत्यनुभवस्य व्यवसायत्वं निश्चीयत इति भावः॥

---

रघु॰ टी॰। कथन्ता केन प्रकारेण प्रामाण्यविशिष्टप्रतीतिरिति। निरूप्यते विचार्यते। स्वसम्वेदनस्येति। धर्म्यपक्षे विशिष्टग्रहानुपपत्तेरिति भावः। ज्ञानं स्वप्रकाशं प्रकाशत्वात्

प्रदीपवदिति तत्सिद्धिरिति चेत्, प्रकाशत्वं यदि तेजस्त्वादिकं तदा स्वरूपाऽसिद्धिः, अथ ज्ञानत्वं तत्राह । प्रकाशत्वस्येति । [१](ननु प्रकाशत्वस्य तेजस्यपि वृत्तेर्न पक्षमात्रवृत्तित्वनिबन्धनमसाधारण्यमित्यत आह ।) शब्देति । शब्दाभेदेऽपि हेतोरर्थस्य भेदात् । न च तच्छब्दवाच्यत्वमेव हेतुरप्रयोजकत्वात् । अन्यथा गोशब्दवाच्यत्वेन बाणादीनां पशुत्वाद्यापत्तिरिति । स्वप्रकाशत्वं च न स्वविषयकप्रकाशजनकत्वं सिद्धसाधनात् । नापि स्वात्मकप्रकाशविषयत्वम्, दृष्टान्तस्य साध्यविकलत्वात्, नापि सजातीयान्तरानपेक्षव्यवहारगोचरत्वम्, प्रदीपव्यवहारस्यापि प्रदीपेतरसदादिजातीयज्ञानजातीयापेक्षित्वात्, तेजोजातीयान्तरानपेक्षव्यवहारगोचरत्वस्य च ज्ञानेऽभिमतत्वात् । अथास्मदादिज्ञानं स्वविषयकम्, प्रत्यक्षत्वात्, योगिप्रत्यक्षवत्, योगितत्प्रत्यक्षतत्स्वप्रकाशत्वादीनामुभयवादिसिद्धत्वात्, चैत्रज्ञानं वा तथा ज्ञानत्वात् भवतामीश्वरज्ञानवदस्माकं मैत्रज्ञानवत्, उभयसिद्धस्य दृष्टान्त(त्वस्य)स्य(तऽ) तन्त्रत्वादिति चेन्न । अप्रयोजकत्वात्, इन्द्रियप्रत्यासत्तिमन्तरेण प्रत्यक्षासम्भवात्, स्वत्वस्याननुगतत्वाच्चेत्यादि । न चेत्यादि । अत्र स्वसम्वेदने घटं जानामीत्यादिकमध्यक्षं स्वसम्वेदनं विनाऽनुपपद्यमानं प्रमाणम् । यदि हि नयनादिसन्निकर्षादुत्पद्यमानं घटं जानामीत्याद्याकारं घटज्ञानं घटज्ञानान्तराग्राहकं स्वात्मानं न गृह्णीयात्तु गृह्णीयादेवात्मनो घटज्ञानवत्त्वमिति । घटज्ञानं जानामीति प्रत्यक्षमित्यर्थ इत्यपरे । सन्दिग्धेति । घटज्ञान-

(१) कुण्डलितीग्रन्थः १ पुस्तके नास्ति ।

तज्ज्ञानयोरभेदस्यासिद्धत्वादित्यर्थः। शङ्कते। अप्रत्यक्षेति। अनवस्था(ना)दिना परेणावेद्याया वित्तेः स्वतोऽप्यवेद्यत्वेऽवेद्यत्वमेव स्यादित्यर्थः। नैवम्। न सन्दिग्धभेदत्वम्॥

---

उपलम्भापरपर्यायाया दृष्टेः सिद्धिर्निष्पत्तिर्वा स्यात् प्रतीतिर्वा। आद्येऽनागतोपलम्भवेदनप्रसङ्गः, अनुपलब्धस्यानिष्पत्तेः। न चाविद्यमानेनाविद्यमानस्यो(१)पलम्भ इति स्वसम्वित्तावसम्वित्तिरेवेति।

शङ्क० टी०। उपलम्भेति। अर्थदृष्टिरर्थोपलम्भस्तस्य यदि निष्पत्तिरेव तदुपलब्धौ सत्यां स्यात्, तथा चानागतवेदनप्रसङ्गः कुत इत्यपेक्षायामाह। अनुपलब्धस्येति। त्वया तथाभ्युपगमात्। नन्वनागतमेव ज्ञानं ज्ञातं सदुत्पद्यतां को दोष इत्यत आह। न चेति। अनागतस्यापि वेदनं वेदने सत्येवोत्पद्येतेत्येवं तत्तदपीति किमपि वेदनं न निष्पद्येतेत्यर्थः॥

---

भगी० टी०। ननु घटादेरिवानागतस्याप्युपलम्भस्य वेदनं स्यादित्यत आह। न चेति। अनागतो य उपलम्भः स प्रागसन् कथमात्मानमुपलभेतेत्यर्थः॥

---

रघु० टी०। अस्त्वनागतस्यैव ज्ञानस्य वेदनमिति चेत्, किं ज्ञानान्तरेण तेनैव वा। आद्येऽनवस्था, अज्ञातस्यानुत्पत्तेः।

(१) वेदनमिति असम्वित्तावित्ति २ पु० पा०।

द्वितीये त्वाह। न चाविद्यमानेन स्वेनाविद्यमानस्य स्वस्य सम्वेदनमिति ॥

---

द्वितीये तु सिद्धसाधनम्, न ह्यनुपलब्ध उपलब्धो भवति। न चैवं सत्यर्थोऽपि नोपलभ्येत, न ह्युपलम्भ-प्रतीतिरर्थवेदनमपि तूपलम्भनिष्पत्तिः। उपलम्भा-दृष्टावुपलम्भनिष्पत्तिरित्येव व्यवहारः कुत इति चेत्, मा भूत्, न ह्यव्यवहारादेव निष्पन्नस्य वस्तुनो निवृत्तिः। तथा च तन्निबन्धनोऽर्थव्यवहारो दुर्वार एव[1]। न चानवस्था, अवश्यवेद्यत्वानभ्युपगमात्, निश्चयवत्, अन्यथा त्वनिश्चितनिश्चयस्यार्थनिश्चयोऽपि न सिद्ध्येत्, न चासौ स्वात्मन्यपि निश्चय इति। तदिदं वधूमापमापनवृत्तान्तमनुहरति।

शङ्क० टी०। उपलम्भेति। यावदुपलम्भो न प्रतीयते तावदुपलम्भप्रतीतिर्न भवतीति मयाप्यभ्युपगम्यत इत्याह। द्वितीये त्विति। ननु चोपलम्भेनोपलब्धिरर्थदृष्टिरिति च त्वयाप्य-भ्युपगम्यते तदा सिद्धं स्वप्रकाशत्वमित्यत आह। न चैवमिति। अनुपलब्धाऽप्युपलब्धिरर्थदृष्टिर्भवत्येवेत्याह। न हीति। नन्वनुप-लब्धावर्थदृष्टिरपि कथं व्यवह्रियतामित्याह। उपलम्भेति। निष्पन्नार्थदृष्टिर्ज्ञाता सती व्यवह्रियत इति को दोष इत्याह। न हीति। अर्थदृष्टावज्ञातायामर्थव्यवहारोऽप्येवं सति न स्यादि-

(१) इतिं इति २ पु० पा०।

त्याह। तथा चेति। स्वरूपसतो ज्ञानादेवार्थव्यवहारसिद्धिरित्यर्थः। न च ज्ञातमेव ज्ञानमर्थव्यवहारक्षममिति वाच्यम्। प्रमाणाभावात्। भावे वा ईश्वरज्ञानेनैवान्यथासिद्धिरिति भावः। ननूक्तं परेण परवेदनेऽनवस्थेत्यत आह। तथा चेति। स्वरूपसतो न चेति। ननु संयुक्तसमवायप्रत्यासत्तेः सत्त्वात् कथं नावश्यवेद्यत्वमिति चेन्न। सुखादिसामग्र्या बलवत्या प्रतिबन्धात्। अन्यथा सुखाद्यनुभवो न स्यात्। (१)परमं ज्ञानमनुद्भूतमेवोत्पद्यते विशेषगुणत्वेनैवोद्भवानुद्भवकल्पनादिति भावः। निश्चयवदिति। विशेषदर्शनानन्तरं यो निश्चयो जायते स निश्चयत्वेनापि न स्वयं गृह्यते, स्वप्रकाशत्वेऽपि तत्रासामर्थ्यात्, तथा च निश्चयत्वेनागृह्यमाणो निश्चयोऽर्थनिश्चयो न स्यादित्यर्थः। यदि च स्वधर्मतया निश्चयत्वं गृह्णीयात्तदाऽप्रामाण्यमपि गृह्णीयादित्युक्तत्वादिति भावः।

केचित्तु स्वप्रकाशत्ववदिति व्याचक्षते, न हि स्वप्रकाशत्वानुमितिरप्यात्मनः स्वप्रकाशत्वं गृह्णाति, तथा च तत्राप्यनवस्था तुल्यत्यर्थमाहुः। तच्चिन्त्यम्। प्रकृतासम्पर्शात्। अन्यथात्वनिश्चितनिश्चयस्येत्याद्यसमञ्जसं स्यात्। तथा च निश्चयत्वमवधारणात्मकत्वं परव्यवच्छेदमुखेन जायमानत्वं तच्च न स्वप्रकाशगम्यमित्येवार्थः। तदिदमिति। मासमापनव्याकुला वधूः स्वगृह्यसम्वरणं यथा न करोति तथा त्वयापि स्वदोषो न समाहित इत्यर्थः॥

---

(१) नन्वसंज्ञानमिति ३ पु० पा०।

भगी० टी० । ननु यद्युपलम्भो नोपलभ्येत तदाऽर्थोपलम्भस्याप्यभावः स्यात् । न च स्वप्रकाशतया तदेव तत्र मानमित्यत आह । न चैवमिति । ग्राह्यज्ञानभिन्नस्य ग्राहकज्ञानस्यासत्त्वात् कथं पूर्वप्रत्यक्षमित्यर्थः । उपलम्भादृष्टाविति । निष्पद्यमानाज्ज्ञाने निष्पत्तेरज्ञानादित्यर्थः । मा भूदिति । ज्ञानस्याव्यवहारेपि स्वरूपसतो ज्ञानादेवार्थस्य व्यवहारो भविष्यतीत्यर्थः । वस्तुतस्तत्र स्वज्ञानाभावेपीश्वरज्ञानमस्त्येवेति भावः । अवश्यवेद्येति । ननु संयुक्तसमवायेन मनोवेद्यत्वादपेक्षणीयान्तराभावाच्चोत्पन्नैव कुतो नावश्यवेद्या स्यात् । नैवम् । सुखादितद्बुद्ध्यादिसामग्र्या प्रतिबन्धात् विषयान्तरसञ्चारदर्शनेन तस्या बलवत्त्वात् । ज्ञानेपि विशेषगुणत्वेनोद्भवत्वमिति तदभावाद्वा । अन्यथा स्वप्रकाशत्वानुमितेरपि स्वप्रकाशत्वमनुमित्यन्तरगम्यमिति स्वप्रकाशत्वानुमितिपरम्परयाऽनवस्था तत्रापि स्यात् । अथ या वित्तिर्न मानान्तरवेद्या सा प्रमाणाभावादसतीति तदधीनसत्त्वस्य विषयपर्यन्तस्यासत्त्वं स्यात् । न । कासाञ्चिद्बुद्धीनां स्मरणादिना लिङ्गेन विशेषतः कासाञ्चित्तु ज्ञानत्वेन सामान्यलक्षणया प्रत्यासत्त्या ज्ञानात् प्रमेयमित्यादिवेदने च भानाच्चेति भावः ॥

---

रघु० टी० । न चैवम् । न चोपलम्भस्यानुपलम्भे परेणेत्यादिनाऽऽपादितमनवस्थानं निरस्यति । न चेति । अवश्येति । वित्तिः लौकिकः साक्षात्कारः । सत्यपीन्द्रियसन्निकर्षादौ ज्ञानस्य कस्यचिदग्रहणं विषयान्तरसञ्चारादिना प्रतिरोधादरूपादिवदनु-

ङ्गतत्वादेति। निश्चयवदिति। यथा संशयव्यावृत्तेन निश्चयत्वेनानिश्चितोपि निश्चयो निश्चयकार्यं करोति, तादृशस्य यदा कादाचित्कज्ञानान्तरसिद्धतया वास्तवत्वात्, तथोपलम्भोपि तथात्वेनाज्ञातः स्वकार्यं कुर्यादेवेत्यर्थः। स्वात्मनि निश्चयत्वविशिष्टे स्वस्मिन् ॥

---

च्छिदादिवदिति तु दृष्टान्तमात्रेण नास्मदवधानम्। ज्ञानं न ज्ञानान्तरकर्म, तज्जातीयक्रियात्वात्, या यज्जातीया क्रिया नासौ तत्क्रियाकर्म, यथा च्छिदा च्छिदान्तरस्येति तु न्यायविप्लवः। छिदावत् सर्वथा सजातीयाकर्मत्वे साध्ये बाधितविषयत्वात्, पुरुषान्तरज्ञानस्य च पुरुषान्तरज्ञानवेद्यत्वात्, स्वयमपि स्मृत्यादिगोचरत्वाच्च। स्वकर्मत्वे साध्ये दृष्टान्तस्य साध्यविकलतया हेतोर्विरुद्धत्वादिति।

शङ्क० टी०। दृष्टान्तमात्र इति। हेतुविनाकृतस्य तस्यातन्त्रत्वादित्यर्थः। हेतूपन्यत[1]माशङ्क्य निराचष्टे। ज्ञानमिति। अत्र बाधमाह। न्यायविप्लव इति। तदेव स्फुटयति। सर्वथेति। सजातीयाकर्मत्वं सजातीयाविषयत्वम्। पूर्वकर्मपि कर्मपदं विषयपरम्। ननु तज्ज्ञानं तज्ज्ञानविषयः, क्रियात्वात्, च्छिदावदित्यनुमानं स्यादित्यत आह। स्वकर्मत्व

(१) हेतूपक्रममाशङ्केति २ पु० पा०।

इति । विरुद्धत्वादिति । सर्वत्र क्रियात्वस्य स्वाविषयत्वेनैव दृष्टत्वादित्यर्थः ॥

भगी० टी० । न चासाविति । स्वविषयत्वेपि न स्वप्रकाशतेत्यर्थः । दृष्टान्तेति । मात्रपदेन हेत्वभाव उक्तः । न चोक्ततर्कविपर्ययानुमानात्तत्सिद्धिरित्याह । ज्ञानमिति । ननु वर्त्तमानं स्वज्ञानं परोक्षत्यानुमानं स्यादित्यत आह । स्वकर्मत्व इति । अन्ये वानुमानस्य ज्ञानान्तराकर्मत्वे व्याघातश्चेति भावः ।

रघु० टी० । या यज्जातीयेति । क्रिया न सजातीयक्रियाकर्मत्यर्थः । साजात्यं च भेदगर्भमतो न स्वप्रकाशत्वविरोधः । न्यायेति । (ज्ञाने ज्ञानान्तरकर्मत्वाभावज्ञानस्य ज्ञानान्तरस्य विषयताया अवर्जनीयत्वात्) ज्ञानान्तरकर्मत्वाभावस्यानुमितिः स्वात्मन्येव तं गृह्णाति ज्ञानान्तरे वा। आद्ये कुतो घटादिज्ञानानां पराप्रकाश्यत्वसिद्धिः। द्वितीये तु परप्रकाश्यत्वमप्रत्यूहमिति भावः। अन्यदाह। व्यवहारवदिति। अथ व्यवहारस्य व्यवहर्त्तव्यज्ञानसाध्यत्वाद्व्यवहारानुरोधात्तदेव ज्ञानं तद्विषयकं कल्प्यते, ज्ञानान्तरकल्पने गौरवात्, तदेव च जानामीत्याद्याकारम्, तच्च बाह्ये यथायथं प्रत्यक्षादिरूपमात्मनि स्वात्मनि च प्रत्यक्षमेव । अथास्तु मनोयोगजन्यत्वादात्मनि तत् प्रत्यक्षं, स्वात्मनि तु कथम । मनःसंयुक्तात्मसमवायेन जन्यत्वादिति चेन्न । समवेतनिरपेक्षस्य प्रत्यासत्तित्वेऽतीतानागतज्ञानग्रहणप्रसङ्गादिति चेत् । तद्विषयत्वे

ज्ञानानपेक्षत्वात्, यद्विषयत्वे यज्ज्ञानं ज्ञानानपेक्षं तस्य तत्रैव साक्षात्त्वात्। द्वित्वादिप्रत्यक्षं च धर्मीन्द्रियसन्निकर्षादिजन्यं तद्धेतोरेव तदस्त्विति न्यायात्। स्वविषयत्वं च ज्ञानस्य ज्ञानत्वमिव स्वाभाविकमुत्पादकसामग्रीनियम्यं, तत्तद्विषयत्वं तु न तथानुगतकारणनियम्यम्, अस्माकं तु सम्भवेदपि, एक शक्तिमत्त्वेन हेतुत्वोपगमादिति।

अत्राहुः। प्रत्यक्षत्वं हि न ज्ञानानपेक्षविषयताशालित्वम्, तदप्रतिसन्धानेपि साक्षात्करोमीति प्रत्ययात्, परं तु जातिः, जन्ये च ज्ञाने तन्नियामकमिन्द्रियसन्निकर्षजन्यत्वमेव, जातेश्च नांशिकत्वमतो नानुमित्यादेरात्मनि स्वात्मनि च प्रत्यक्षत्वम्। अत एव प्रत्यभिज्ञापि न ग्रहणस्मरणात्मिकेति।

---

## नापि स्वग्राहकेण, विवेचनानुपपत्तेः। न हि प्रमाणग्रहणं यथार्थत्वैकनियतम्, अप्रमाणेपि प्रमाणाभिमानात्। अन्यथा विपर्ययज्ञानादप्रवृत्तिप्रसङ्गाच्च।

शङ्क० टी०। ननु जडत्वेन घटादीनां स्वव्यवहाराजनकत्वेपि ज्ञानं स्वयमेव स्वव्यवहारजनकमस्तु, स्वस्मिन् सति स्वव्यवहारादसति तु तदभावात्, स्वव्यवहारजनकत्वमेव स्वविषयकत्वं पारिभाषिकमिति चेन्न। व्यवहारस्य व्यवहर्त्तव्यगोचरज्ञानजन्यत्वनियमात्, तच्च स्वविषयतायां स्वभिन्नज्ञानविषयतायां वा सत्यामेव, तत्र स्वजनकेन्द्रियप्रत्यासत्त्यनधिकरणत्वादेव न स्वविषयत्व-

मतो ज्ञानान्तरविषयतयैव तस्य व्यवहर्त्तव्यत्वोपपत्तेः। स्वग्राहकेण वेति द्वितीयं पक्षं दूषयति। नापीति। स्वग्राहकेणानुव्यवसायेन प्राकट्यलिङ्गेन वेत्यर्थः। विवेचनेति। अप्रामाण्यव्यावृत्तप्रामाण्यग्रहानुपपत्तेरित्यर्थः। अप्रामाण्यशङ्काकलङ्काभावो वा विवेचनम्। तथा च प्राकट्येन लिङ्गेनानुव्यवसायेन वा ज्ञायमानं निष्कम्पप्रवृत्तिजनकं न स्यादित्यर्थः। ननु प्रामाण्योपहितज्ञानग्रहः प्रमाणमेव, तथा च कथं न समाश्वास इत्यत आह। न हीति। गृहीतप्रामाण्यमेव ज्ञानं प्रवर्त्तकमित्यभिप्रेत्याह। अन्यथेति॥

---

भगी० टी०। ननु वर्त्तमानं स्वज्ञानं न मानसम्, किन्तु स्वयमेव स्वव्यवहारजनकम्, स्वस्मिन् सत्येव स्वव्यवहारात्, न तु ज्ञानान्तरमपेक्षते, तदन्वयव्यतिरेकानुविधानात्, ज्ञानान्तराभावदशायां स्वभावादेव स्वव्यवहाराभावात्, स्वत एव स्वव्यवहारोपपत्तौ ज्ञानान्तरकल्पने गौरवाच्च, इच्छादिव्यवहारे ज्ञानान्तरापेक्षाऽस्तु, व्यवहारस्य ज्ञानजन्यत्वात्। न च ज्ञानमात्रं न ज्ञानव्यवहारहेतुरपि तु व्यवहर्त्तव्यविषयमिति ज्ञानव्यवहारोऽपि तद्विषयकज्ञानान्तरादिति वाच्यम्। स्वस्यैव स्वविषयकत्वात्, यद्व्यवहारानुकूलशक्तियुक्तं यज्ज्ञानं तस्यैव तद्विषयकत्वात्। न च व्यवहर्त्तव्यभिन्नज्ञानत्वेन व्यवहारहेतुत्वं, गौरवादिति।

नैवम्। स्वजनकेन्द्रियप्रत्यासत्त्यनाश्रयत्वेन स्वस्य स्वानाश्रयात्, विषयत्वनियामकस्येन्द्रियसन्निकर्षादेरभावे स्वविषयत्वानुपपत्तेः, कारणं विना कार्यानुत्पादात्, प्रत्यक्षाजन्यस्य प्रत्यक्षविषयत्वा-

नुपपत्तेः, आत्मधर्मप्रत्यासत्त्याश्रये प्रत्यक्षविषयताया जनकत्व-व्याप्तत्वात्। ज्ञानस्य प्रत्यक्षत्वेनेन्द्रियसन्निकर्षाश्रयत्वात्, ततश्च मानसत्वात्, तस्माद्विवादपदमिन्द्रियजन्यं ज्ञानं नैतज्ज्ञानविषयः, एतज्जनकेन्द्रियप्रत्यासत्त्यनाश्रयत्वादेतद्जनकत्वाद्वा, असन्निकृष्टवत्, ज्ञानं प्रमेयमिति व्याप्तिज्ञानं ज्ञानत्वसामान्यप्रत्यासत्त्या स्वविषय-मीश्वरज्ञानमहेतुकत्वात् सर्वविषयमिति स्वप्रकाशमेवेति सङ्क्षेपः।

स्वग्राहकेण ज्ञाततानुपपत्त्या ज्ञानकल्पनेत्यर्थः। विवेचनम् अप्रमाव्यावृत्तज्ञानं प्रामाण्यज्ञानमिति यावत्, तस्य विशेष-दर्शनजन्यज्ञानत्वात्। ननु ज्ञानकल्पकेन प्रमात्वेनैव ज्ञानस्य ग्रहणं विशेषदर्शनं स्यादित्यत आह। न हीति। वस्तुतो ज्ञानमात्र-लिङ्गस्य ज्ञाततादेः प्रामाण्यव्यभिचाराच्च ततस्तद्ग्रहः। न च प्रमाहितज्ञातताविशेषात्, तस्य प्रथमं दुर्निरूपत्वात्, अन्यथा-ऽप्रमाहितज्ञाततविशेषादप्रामाण्यस्यापि स्वतो ग्रहापत्तेरिति भावः॥

---

रघु० टी०। विवेचनेति। प्रमाणमेवेत्यवधारणात्मनो विवे-चनस्य विना विशेषदर्शनमनुत्पत्तेः। अथ प्रामाण्यग्रहविषयत्व-रूपविशेषदर्शनात्तद्भविष्यतीत्यत आह। न हीति। अन्यथेति। यद्यप्रमायां न प्रामाण्यग्रहस्तदा प्रामाण्यसंशय इव प्रामाण्य-निश्चयेऽपि भ्रमाभिप्रक्त्या प्रवृत्तिर्न स्यात्, प्रामाण्यग्रहेण भ्रमा-संस्पर्शादित्यर्थः॥

---

ततो यदि प्रामाण्यमापाततः स्फुरेदपि, तथापि नियमहेतोरभावात् प्रमाणमेवेदमिति निश्चयः कुतः, स च मृग्यते, पारलौकिकव्यवहाराङ्गत्वात्(१)। शङ्कानिवर्त्तनेन तदप्रत्यूहं निश्चितमेवेति चेत्, तन्निवृत्तिरेव कुतः। प्रमाणान्तरादिति चेत्, तदपि निश्चयफलमन्यथा वेति। अन्यथात्वे न शङ्काविच्छेदो निश्चयसाध्यत्वात्तस्य। निश्चयफलत्वे तु यो मृग्यते नासौ स्वत इति।

शङ्क० टी०। दोषं स्पष्टयति। तत इति। ननु सन्देहादपि प्रवृत्तेः किं प्रामाण्यनिश्चयेनेत्यत आह। पारलौकिकेति। ऐहिकी प्रवृत्तिरस्तु यथा तथा, पारलौकिकी तु प्रवृत्तिर्बहुवित्तव्ययायासफला प्रामाण्यनिश्चयं विना न स्यादेवेत्यर्थः। ननु स्वग्राहकादेव प्रामाण्यग्रहोऽप्रामाण्यशङ्का तु कुतश्चिन्निवर्त्यतेत्याह। शङ्केति। तदपीति। शङ्कानिवर्तकं प्रमाणमित्यर्थः। अन्यथात्वे अनिश्चयफलत्वे। निश्चयफलत्व इति। येन प्रमाणेन शङ्कापरिभवक्षमः प्रामाण्यनिश्चयो जननीयो न तदनुव्यवसायरूपं प्राकट्यलिङ्गरूपं वेत्यर्थः॥

---

भगी० टी०। स चेति। यद्यपि प्रवृत्तिमात्रे प्रामाण्यग्रहो नाङ्गम्, तथापि बहुव्ययायाससाध्यनिष्कम्पप्रवृत्तौ तथेति भावः। ननु ग्राहकसामग्र्या तत्प्रामाण्यनिश्चयेपि अप्रामाण्यशङ्का-

(१) ङ्गत्वाच्च इति २ पु० पा०।

निवृत्तिमात्रं विशेषदर्शनेन क्रियत इत्याह। शङ्केति। निश्चितमेव प्रामाण्यं शङ्कानिवर्त्तनेनाप्रत्यूहं निष्कम्पप्रवृत्तिजनकं क्रियत इति योजना। अन्यथात्व इति। तथाभूतस्य प्रामाण्यत्वमित्यपि मन्तव्यम्। निश्चयेति। असौ प्रामाण्यनिश्चयः। यदि ज्ञानग्राहकेणैव प्रामाण्यग्रहस्तदा निश्चिते नाप्रामाण्यशङ्का, अतस्तदनुरोधादन्यदेव प्रामाण्यग्राहकमेषितव्यमित्यर्थः॥

---

रघु० टी०। स्फुरेदपीत्यपिना स्वाभिप्रेतं पारमार्थिकमस्फुरणं सूचितम्। शङ्केत्यादि। तत् प्रामाण्यम्। विपरीतकोटिशङ्काशून्यं प्रामाण्यज्ञानमेव तन्निश्चय इत्यर्थः। निश्चयफलं प्रामाण्यनिश्चयस्य जनकम्। अन्यथा तस्याजनकम्। असौ प्रामाण्यनिश्चयः।

---

स्फुरणमात्रमपि तावदस्तु स्वत इति चेत्, किं तेन। न चैतदपि, अननुसंहितोपाधेरुपहितप्रत्ययायोगात्। न च विषयोपधानमात्रं प्रामाण्यम्, तदाभाससाधारण्यात्। अपि त्वनुभवस्य सतो भूतार्थानुसन्धानम्। न चार्थानुसन्धानेपि तस्य भूतत्वमनुसन्धीयते, आरोपितत्वव्यावर्त्तकविशेषणाननुसन्धानात्। अननुसंहितस्य चारोपसाधारण्यात्। क्वचिद्विशेषोप्यनुसन्धीयत इति चेत्, न क्वापि प्राथमिकेन। अन्यथाऽनभ्यासदशायां तत्रापि संशयो न स्यात्। अभ्यास-

# दशोत्पन्ने तु अनुसन्धानं व्याप्तिग्रहजनितसंस्कार-समुद्भवस्मरणबलेन भवत् प्रमाणान्तरशरीर एव प्रविशतीति परत एवावशिष्यते ।

---

शङ्क० टी० । ताभ्यां प्रामाण्यस्फुरणं तावदस्तीत्यतः स्वतस्त्वं सिद्धमेवेत्याह । स्फुरणमात्रमिति । ततो निष्कम्पा प्रवृत्तिश्चेन्न भवति तदा किं तेन प्रामाण्यस्फुरणेनेत्याह । किं तेनेति । ननु तथापि त्वदभिमतं परतस्त्वं भग्नमेवेत्यत आह । न चेति । विशेष्यावृत्त्यप्रकारत्वात्मकस्य स्वप्रामाण्यस्य तत्रास्फुरणादित्यर्थः । प्रामाण्यघटकोपाध्यननुसन्धाने प्रामाण्योपहितप्रत्ययासम्भवादित्यर्थः । ननु घटविषयत्वमेव घटज्ञानस्य प्रामाण्यम्, तच्च ज्ञानग्राहकग्राह्यमेवेत्यत आह । न चेति । घटभ्रमेपि घटविषयकत्वसम्भवादित्यर्थः । तर्हि किं तत् प्रामाण्यं यत् स्वतो ग्रहीतुमशक्यमित्यत आह । अपि त्विति । यथार्थानुभवत्वमित्यर्थः । यथार्थत्वञ्च विषयतासमानाधिकरणप्रकारावच्छिन्नत्वं विषयताव्यधिकरणप्रकारानवच्छिन्नत्वं वेत्यर्थः । तर्हि तदेव स्वतो निश्चीयतामत आह । न चेति । अर्थविषयकत्वग्रहेपि तत्त्वस्य ग्रहीतुमशक्यत्वादित्यर्थः । आरोपितत्वव्यावर्त्तकं विशेषणं विशेष्यावृत्त्यप्रकारकत्वादि । तदननुसन्धानञ्च पूर्वं तदनुपस्थितत्वेनेत्याह । आरोपितेति । अननुसंहितस्येति । तद्विषयकत्वमात्रस्येत्यर्थः । कश्चिदिति । घट एवायमितीतरव्यवच्छेदमुखेन जायमानज्ञान इत्यर्थः । प्राथमिकेनेति । प्रथमं ज्ञानग्राहिणा

अनुव्यवसायेन ज्ञाततालिङ्गकानुमानेन वेत्यर्थः। कथं नेत्यत आह। अन्यथेति। अयं वह्निरेवेत्यपरिचितवह्नेरपि शब्दादिना जायमाने ज्ञाने प्रामाण्यस्य स्वयं ग्रहणापत्तेः, तथा च प्रामाण्याप्रामाण्यकोटिकः संशयो न स्यादित्यर्थः। ननु क्वचिदित्यभ्यासदशापन्नमेव ज्ञानं भ्रमः, तच्च स्वतो गृह्यताम्, न हि तत्रापि संशयोऽस्तीत्यत आह। अभ्यासदशेति। तत्रापि तज्जातीयत्वेन लिङ्गेनैव प्रामाण्यं गृह्यते। तथाहि। अयं पृथिवीत्वेनानुभवः पृथिवीत्ववति पृथिवीत्वप्रकारकः, गन्धवद्विशेष्यकपृथिवीत्वप्रकारकनिश्चयत्वात् पूर्वपृथिवीत्वप्रकारकनिश्चयवत्। एवमयं शरीरत्वेनानुभवः शरीरत्ववत्येव शरीरत्वप्रकारकः, करचरणादिमद्विशेष्यकशरीरत्वप्रकारकानुभवत्वादित्याद्यूह्यम्। तज्जातीयत्वं लक्षणवद्विशेष्यकलक्ष्यज्ञानत्वं द्रष्टव्यम्। व्याप्तीति। यो गन्धवद्विशेष्यकः पृथिवीत्वप्रकारकानुभवः स पृथिवीत्ववत्येव पृथिवीत्व प्रकारक इत्यादिप्रकारेण यद्व्याप्तिग्रहणं तज्जनितो यः संस्कारस्तत्प्रभवं यत्स्मरणमित्यर्थः। प्रमाणान्तरमनुमानम्, तत्रैवान्तर्भवतीत्यर्थः॥

---

भगी० टी०। ननु क्वचिद्दशे संशयाभावात् पूर्वं प्रामाण्यनिश्चयो भवत्येव, मायालिङ्गिनि सति झटिति परिव्राजकबुद्धिवदित्याह। स्फुरणमात्रमपीति। तादृशस्य प्रामाण्यग्रहस्य विशेषदर्शनाजन्यस्याप्रमाणसाधारणतया न निष्कम्पप्रवृत्त्यङ्गत्वमित्याह। किं तेनेति। विशेष्यावृत्त्यप्रकारकत्वं न ज्ञानमात्रग्राहिणा ग्रहीतुं

शक्यमित्याह । अननुसंहितेति । विशेषो विशेष्यावृत्त्यप्रकारक-त्वम् । अननुसंहितस्येति । तद्विषयज्ञानत्वमात्रस्य चेत्यर्थः । क्वचिदिति । करतलज्ञानादावभ्यासदशापन्न इत्यर्थः । प्राथमिकेन ज्ञानग्राहकेणेत्यर्थः । अन्यथेति । यद्यनभ्यासदशापन्नधर्म्येव न गृहीतः, कुतः संशयः, धर्मिज्ञानस्य तद्धेतुत्वात्, तद्ग्रहे तु तत्प्रा-माण्यस्यापि निश्चयादिति कुतः संशयः । अभ्यासेति । झटिति लिङ्गानुसन्धानप्रभवत्वेनाप्युपपद्यमानं न स्वतस्त्वमाक्षिपतीत्यर्थः । परत एवेति ।

ननु स्वग्राह्यत्वेपि कदाचित् परग्राह्यत्वात् स्वस्याप्यन्या-पेक्षया परत्वात् भट्टमते परग्राह्यत्वाच्च सिद्धसाधनम् । न च ग्राह्यप्रामाण्यापेक्षया परत्वं प्रामाण्यग्राहकस्यापि ग्राह्यप्रामाण्यतया तदपेक्षया परत्वाभावात् अग्राह्यप्रामाण्यापेक्षया परत्वे ग्राह्यप्रामाण्य-स्याप्रामाण्योपपत्तेः । किञ्च प्रामाण्यं परतो ज्ञायते, अनभ्यास-दशायां सांशयिकत्वादित्यनुमानमनैकान्तिकं, ज्ञाने निश्चितेऽपि प्रामाण्यसंशयाहितसंशयविषयत्वात् । न च ज्ञानधर्मत्वेन हेतु-र्विशेषणीयः, तथा सति यत्र ज्ञानविषयप्रामाण्यसन्देहे निश्चित-स्यापि ज्ञानधर्मस्य संशयितत्वं तत्रानैकान्तिकम्, अनभ्यासदशाया-मिति विशेषणमसिद्धिवारकत्वाद्व्यर्थम् ।

नैवम् । अनभ्यासदशापन्नज्ञानप्रामाण्यं न स्वाश्रयग्राह्यम्, स्वाश्रये सत्यपि तदुत्तरतृतीयक्षणवर्त्तिसंशयविषयत्वात्, अप्रामाण्य-संशयाजन्यसंशयविषयत्वाद्वा, अप्रामाण्यवत्, अर्थे निश्चितेऽपि न निश्चयानन्तरतृतीयक्षणेऽर्थसंशयो न वा प्रामाण्यसंशयं

विनेति न व्यभिचार इत्यर्थात् । न च स्वपदस्य प्रामाण्यमात्रपरत्वात्तद्ग्राह्यत्वे बाधः, स्वपदस्य सम्बन्धिशब्दत्वेन समभिव्याहृतपरत्वात्, अन्यथा परस्यापि स्वत्वात् स्वस्यापि परत्वात् स्वतः परतो वेति संशयो न स्यात् । विस्तरस्त्वन्यत्र ॥

---

रघु० टी० । किं तेनेति । विना विपरीतशङ्कानिरासं प्रामाण्यज्ञानमात्रस्य निष्कम्पप्रवृत्त्यङ्गत्वादित्यर्थः । घटो ज्ञात इति प्रत्यक्षं न ज्ञानस्य वैशिष्ट्यमवगाहते, नयनादेरात्मगुणाग्राहकत्वात्, मनसश्च बहिरस्वातन्त्र्यात्, अतीन्द्रियत्वाच्च ज्ञानस्य, परन्त्वतिरिक्ताया एव ज्ञाततायाः, सा च विशेषणप्रकारिका विशेष्यवृत्तिरयं घटत्वेन ज्ञात इत्यनुभवात् । जन्यते च समानप्रकारकेण स्वाश्रयविशेष्यकेण ज्ञानेन । तया चानुमीयमाने ज्ञाने[१] प्रमात्वमेव सिद्ध्यति । तथा हि । इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या, घटनिष्ठघटत्वप्रकारकज्ञाततात्वात्, या यन्निष्ठा यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानजन्या, यथा पटनिष्ठा पटत्वप्रकारिका ज्ञातता पटविशेष्यकपटत्वप्रकारकज्ञानजन्येति सामान्यतो, विशेषतो वा यथा घटान्तरे घटत्वप्रकारिका ज्ञाततेति, अवगाहते चेन्द्रियसन्निकर्षादिवशात प्राथमिकमिव ज्ञाततावगाह्यपि प्रत्यक्षं धर्मिणो विशेषणवत्ताम् । अत एव चायं घटो घटत्वेन ज्ञात इत्यनुभवः । अत एव चाप्रमापि प्रमेत्येव

---

(१) ज्ञानं प्रमात्वेनैव सिद्ध्यति १ पु० पा० ।

गृह्यते दोषवशात् प्राथमिकस्येव चरमस्यापि प्रत्यक्षस्य धर्मिण्यस-द्विशेषणवैशिष्ट्यावगाहित्वेन विभ्रमादिति भाट्टाः।

तदसत्। अतिरिक्तायां ज्ञाततायां प्रमाणाभावात्। अयं मया ज्ञात इति कर्त्तुरिव क्रियाया अप्युनयबलेनैव भानसम्भवात्, अन्यथाख्यातिवादिनामुपनीतभानस्यावश्यकत्वात्। अत एवायमिष्ट इत्यादिरनुभवः। न च ज्ञानमतीन्द्रियं, मानाभावात्, घटमिच्छामीतिवद्घटं जानामीति प्रत्यक्षस्य सर्वानुभवसिद्धत्वादित्यन्यत्र विस्तृतम्। सामान्यतो व्याप्तिश्च यत्तदर्थयोरनुगतयोरभावेनासम्भविनी। विशेषतो व्याप्तिश्च सादिपदार्थप्रमायां दुरवधारणेति।

अनुव्यवसायेन व्यवसाये गृह्यमाणे तदुपनीतं यथोपस्थितमेव विशेष्यं विशेष्यत्वेन विशेषणं च प्रकारत्वेन तत्र विशेषणीभूय भासते, उपस्थिते च विशिष्टे विशेषणपरित्यागे हेत्वभावात्। विशेष्यत्वप्रकारत्वयोश्च पूर्वानुपस्थितयोरेव प्रकारतया उभयवादिसिद्धत्वात्। अत एवेमं घटत्वेन पर्वतं वह्निमत्त्वेन जानामीत्यादिकोऽनुभवो लोकानाम्। तथा च तद्वदेव घटं घटत्वेन जानामीत्यनुव्यवसायाद्घटविशेष्यकत्वावच्छिन्नं घटत्वप्रकारकत्वं प्रामाण्यं तेन गृह्यत इति मिश्राः।

अत्र वदन्ति। अनभ्यासदशायामनुव्यवसायानन्तरं प्रामाण्यसन्देहस्य सर्वानुभवसिद्धत्वादिना च प्रामाण्यसन्देहं निश्चिते सन्देहस्य सर्वथैवानुपपत्तेस्तद्धर्मविशिष्टविशेष्यकत्वावच्छेदेन तत्प्रकारकत्वमनुव्यवसायेन न गृह्यत इत्येव (फलबलात्) कल्प्यते, अनन्यगतिकत्वात्। गृह्यते च विशेष्यतावच्छेदकविशिष्टविशेष्य-

कत्वावच्छेदेन विशेषणप्रकारकत्वम्। तेनेमं घटत्वेन जानामी-त्यनुभवो न विरुध्यते। प्रमुष्टतत्तांशकस्य च स्मरणस्य घटं स्मरामि घटत्वेन वा स्मरामीत्यादिकोनुभवो न तु घटं घटत्वेने-त्यादिकः, तद्विशेष्यकत्वतत्प्रकारकत्वयोरनुपस्थितयोः प्रकारत्वा-योगात् सम्बन्धविधयैवानुव्यवसाये भानम्, तेन तत्प्रकारकः प्रामाण्यसन्देहो न विरुध्यते। कोटिद्वयस्मारकं च घटत्वज्ञान-त्वादिसाधारणधर्मदर्शनमित्यपि केचित्॥

---

तत्राप्यनवस्थेति चेत्, न तावदसौ दृष्टान्तद्वारिका, प्रागेव तन्निश्चयात्। फलद्वारिका तु स्यादपि, यदि प्रामाण्यमवश्यनिश्चेयमभ्युपेयते। अज्ञातप्रामाण्येन कथं परप्रामाण्यवेदनमिति चेत्, यथा विषयसंवे-दनम्। अस्तु तर्हि धर्मिलिङ्गद्वारिका, ताभ्या-मनिश्चिताभ्यामननुमानात् तन्निश्चयस्य च प्रामाण्य-निश्चयमन्तरेणानुपपत्तेः। न। द्वैताभावात्। यत्र हि लिङ्गज्ञाने धर्मिज्ञाने वा तथ्यातथ्यभावेन द्वैतमुप-लभ्यते तत्र तथ्यत्वानिश्चये लिङ्गाभासशङ्काक्रान्त-तया न निश्चीयते, यत्र तु तज्ज्ञानं तदेकनियतं तत्र तावतैव लिङ्गनिश्चयः, तदाभासशङ्कानुत्थानात्। एककोटिनियतो ह्यनुभवो निश्चयः। ज्ञानतद्धर्मग्राहिणि च ज्ञाने न द्वैतमिति व्यवस्थितिरेव। प्रामाण्य-

निश्चयस्तु तस्यापि परत एवेति न्यायसम्प्रदायः। इत एव विशेषात्तादृशस्य स्वत एवेति तात्पर्याचार्याः।

शङ्क० टी०। तत्रापीति। तज्जातीयत्वेन लिङ्गेन प्रामाण्यग्रहेऽपीत्यर्थः। न तावदिति। दृष्टान्तीभूतं यत्प्राक्तनं पृथिवीत्वप्रकारकं ज्ञानं तस्यापीदानीमेव प्रामाण्यं ग्राह्यमेवं तत्र तत्रापीत्यनवस्था तावन्न भवति, प्रागेव तत्प्रामाण्यग्रहादित्यर्थः। ननु तज्जातीयत्वादिना लिङ्गेन याऽनुमितिरिदानीमुत्पद्यते सापि गृहीतप्रामाण्या परप्रामाण्यं निश्चाययत्येव, सापि सापीति फलद्वारिकाऽनवस्था स्यादित्यत आह। फलद्वारिकेति। प्रामाण्यस्यावश्यज्ञेयत्वानभ्युपगमादेव नेयमनवस्थेत्यर्थः। यथेति। न हि गृहीतप्रामाण्यमेव ज्ञानमर्थनिश्चायकम्, तथा सति प्रथममर्थनिश्चयोपि न स्यादिति भावः। धर्मीति। पक्षज्ञानलिङ्गज्ञानद्वारिकेत्यर्थः। अनवस्थामेव स्फोरयति। ताभ्यामिति। द्वैताभावादिति। प्रामाण्यानुमितौ धर्मि तावज्ज्ञानमेव, तद्विषयं च ज्ञानमनुव्यवसायरूपं, तत्र च द्वैतं प्रामाण्याप्रामाण्योभयरूपत्वं तच्च नास्ति, अनुव्यवसायस्य प्रामाण्यैकनियतत्वात्तत्राप्रामाण्यशङ्कानुदयान्न तत्रापि प्रामाण्यग्रहापेक्षेत्यर्थः। तर्हि धर्मिज्ञानं लिङ्गज्ञानं वा न क्वापि परीक्ष्येतेत्यत आह। यत्र हीति। तदेकनियतम् प्रामाण्यैकनियतम्। तावतैव अगृहीतप्रामाण्यज्ञानमात्रेणैव। कुत एतदित्यत आह। तदाभासेति। द्वैताभावादिति सङ्क्षिप्तव्याख्यानमुपसंहरति। एककोटीति। नन्वेवमनुव्यवसायप्रामाण्ये स्वतस्त्वं समायातमित्यपसिद्धान्त इत्यत आह।

प्रामाण्येति। यदि व्यभिचरितया तत्र प्रामाण्यमनुमीयते तदा तत्प्रामाण्यमनुमानादेव गृह्यते न्यायनये प्रामाण्यस्य नित्यानुमेयत्वादित्यर्थः। नन्वनुमानस्य निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यमिति कथं टीका, कथं वा तत्रापि तत्र तादृशमेव व्याख्यानमत आह। इत एवेति। तत्रापि स्वतः प्रामाण्यमप्रामाण्यशङ्कानास्पदत्वं टीकाकृत्तात्पर्यविषयो ममापि तदभिप्रायकमेव तत्र तथा व्याख्यानमित्यर्थः॥

---

भगी० टी०। ननु यदि प्रामाण्यं परतो ज्ञायेत तदा प्रामाण्यानुमितेरपि प्रामाण्यनिश्चयार्थं तत्प्रामाण्यानुमानपारम्पर्यात् फलमुख्यनवस्था व्याप्तिपक्षलिङ्गज्ञाने स्वविषयनिश्चयार्थं प्रामाण्यानुमानपारम्पर्याच्च कारणमुखी मा स्यादित्यत आह। अनवस्थेति। तत्र व्याप्तिनिश्चये दृष्टान्तदारिकामनवस्थां निराकरोति। न तावदिति। व्याप्तिग्रहविषयदृष्टान्तज्ञानस्य पूर्वमेव दृष्टान्तान्तरेण निश्चितं प्रामाण्यमन्यथानुमितिरेव न स्यादेवं तत्र तत्रापीत्यनादित्वेन तत्र परिहार इत्यर्थः। फलदारिकां तामपाकरोति। फलेति। फलं प्रामाण्यानुमितिः। अगृहीतप्रामाण्यैव प्रामाण्यानुमितिः स्वविषयं प्रामाण्यं निश्चाययतीति न तत्प्रामाण्यानुसरणमित्यर्थः। अज्ञातेति। अन्यथा व्यवसायोऽप्यगृहीतप्रामाण्य एव स्वविषयं निश्चाययति, किं विषयनिश्चयार्थं प्रामाण्यग्रहेणेति भावः। यथेति। यथा व्यवसायादगृहीतप्रामाण्यादपि विषयनिश्चय इत्यर्थः। न ब्रूमो ज्ञानप्रामाण्या-

देवार्थनिश्चयः, किन्तु यत्राप्रामाण्यशङ्का नास्ति करतलादिज्ञाने, तत्र तत एवार्थनिश्चये निष्कम्पप्रवृत्तिः, यत्र तु प्रामाण्ये ज्ञानेऽप्रामाण्यशङ्का तत्र तत्प्रामाण्यनिश्चयादेव प्रामाण्यनिश्चयः, एवं यावदप्रामाण्याशङ्कं प्रामाण्यानुमितिः । न चैवमनवस्था, चरमप्रामाण्यज्ञानस्य ज्ञानाभावे प्रामाण्यसंशयानवस्थाभावादिति तु सारम् । पत्रादिसुखीं तामुत्थापयति । अस्त्विति । द्वैतेति । यत्र विशेषदर्शनग्रन्थोपस्थितोऽप्रामाण्यशङ्काया अभावस्तत्र व्यवसायादेवार्थनिश्चयः, धर्मिज्ञाने साध्यव्याप्यतयाऽवधृतज्ञाने च नाप्रामाण्यशङ्केत्यर्थः । ज्ञानेति । न ह्यजानन्नेव जानामीत्यनुव्यवस्यति, न वा साक्षात्कारि ज्ञानमनुमिनोमीत्यनुव्यवस्यतीत्यनुव्यवसाये शङ्काया अभावान्न तत्प्रामाण्यानुसरणमिति नानवस्थेत्यर्थः । एवमप्रामाण्यशङ्काया अभावात्तत एव यद्यपि निष्कम्पा प्रवृत्तिस्तथापि प्रामाण्यं तत्रानुमानगम्यमेव, तस्य नित्यानुमेयत्वादित्यत आह प्रामाण्येति । अनुमानस्य निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यमिति टीकाविरोधं परिहरति । इत एवेति । धूमवति वह्निज्ञानत्वमनुमितेः प्रामाण्यनियतमनुव्यवसायेनोपनीतम् । स्वतो विशेषदर्शनान्न तत्राप्रामाण्यशङ्केति । प्रामाण्यनिश्चयादिवाऽप्रामाण्यशङ्काविरहादर्थं निश्चित्य निष्कम्पः प्रवर्त्तत इत्यभिप्रायस्तस्येत्यर्थः ॥

---

रघु० टी० । प्रागेवेति । दृष्टान्ते च क्वचिद्दृष्टान्तान्तरेण क्वचिच्च प्रकारव्याप्यवद्विशेष्यत्वेनोपस्थिते ज्ञाने सत्त्वमेव प्रामाण्य

परिच्छिद्यते। अप्रामाण्यमिव प्रकाराभाववद्ग्राह्यवद्विशेष्यकत्वेनोपस्थिते विज्ञान इति। यथेति। धर्मिणि विपरीतकोट्यनुल्लेखि विज्ञानं निश्चयः, स चाप्रामाण्यग्रहाभावात्तत्कार्यमर्जयति, कश्चिच्चाप्रामाण्यशङ्कोत्सारकत्वेन प्रामाण्यनिश्चय उपयुज्यते, न तु तेन विना। तस्य स्वविषयनिश्चयत्वमेवार्पेति, अन्यथा प्रामाण्यनिश्चयस्यापि तथात्वार्थं प्रामाण्यनिश्चयानुसरणेऽनवस्थाप्रसङ्गादिति भावः। धर्मीति। धर्मी पक्षः। प्रामाण्यनिश्चयमिति। अप्रामाण्यशङ्काकलङ्कितत्वादिति भावः। शङ्कोत्पादासम्भवेन निराकुरुते। न द्वैताभावादिति। ज्ञानतद्धर्मग्राहिणि च ज्ञान इति जागरसाक्षात्कारमधिकृत्य। नन्वेवमनुमानस्य निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यमिति टीकाविरोध इत्यत आह। इत एवेति। विशेषदर्शनशस्तत्वेनाप्रामाण्यशङ्कानुदयात्स्वत एवेति तत्तात्पर्यमित्यर्थः। विशेषश्च व्याप्यत्वे व्यापकज्ञानत्वम्, तच्च लिङ्गोपहितलैङ्गिकभानादनुव्यवसायगम्यमिति॥

---

स्यान्मतम्। एतदेव तु कथं निश्चेयं यदेवम्भूतमेककोटिनियतमेव यावता तत्राप्यनवस्थितिरिति चेन्न। व्याप्तिज्ञानस्य साक्षादात्मन्यप्रवृत्तावपि सर्वोपसंहारेण यमुपाधिमादाय प्रवृत्तिस्तद्धर्मवत्त्वात् तज्जातीयत्वं हि तत्रोपाधिस्तच्च तत्राप्यविशिष्टमनुव्यवसायत्वात्। न च सामान्यतो नियमनिश्चये तदालिङ्गिते विशेषे द्वैतशङ्कावकाशः। यथा वाचकः शब्द इति स्वात्मनो

वाचकत्वं न साक्षाद्विधत्ते वृत्तिविरोधात्, तथापि सामान्येन यमुपाधिमधिकृत्य प्रवृत्तः शब्दस्तद्वत्त्वात् शब्दशब्दो वाचको न वेति शङ्कया न परिभूयते नाप्यनवस्थेत्येवमिहापीति ।

शङ्क० टी० । नन्वनुव्यवसायः प्रामाण्यैकनियत इत्यपि निश्चयः कथं स्यात्तत्राप्यनुमित्यपेक्षायां पुनरनवस्थैवेति शङ्कते । स्यान्मतमिति । यो योऽनुव्यवसायः स सर्वः प्रमाणमेवेत्यनुव्यवसायत्वावच्छेदेन गृहीता व्याप्तिः प्रकृतानुव्यवसायस्याप्यनुव्यवसायत्वेनैव तज्जातीयत्वेन लिङ्गेनानुव्यवसायप्रामाण्यानुमानमित्यर्थः । नन्वेवं सर्वत्रानुव्यवसाये प्रामाण्यानुमितिरायातेत्यनवस्थैव पुनरित्यत आह । न चेति । अत्राप्रामाण्यशङ्कैव नोदेति यत्र त्वनुमितीच्छा तत्रायं प्रकार इत्यर्थः । अत्रानुरूपमुदाहरणमाह । यथा चेति । शब्दत्वावच्छेदेनैव वाचकत्वग्रहे शब्दशब्दस्यापि वाचकत्वं परिच्छिद्यत एवातस्तत्र यथा न शङ्का तथा प्रकृतेऽपीत्यर्थः ॥

---

भगी० टी० । व्याप्तिज्ञानमुखीमनवस्थामुत्थापयति । स्यान्मतमिति । साध्यलिङ्गयोर्व्याप्तिज्ञानप्रामाण्यानुमितिपरम्परायामनवस्थेत्यर्थः । साक्षादिति । यद्यपि व्याप्तिज्ञानमसाधारणतद्व्यक्तित्वादिरूपपुरस्कारेण न स्वविषयम्, तथापि साधारणरूपपुरस्कारेण तथेत्यर्थः । तत्रापीति । व्याप्तिज्ञानग्राहिणि ज्ञानेऽप्यनुव्यवसायत्वं साधारणमेवेत्यर्थः । न चेति । यत्सामान्ये

यन्निश्चयस्तद्दति विशेषे न तत्संशयः, व्याप्यतावच्छेदकरूपवत्तया ज्ञानस्यैव संशयप्रतिबन्धकत्वादित्यर्थः। एतदेवानुरूपदृष्टान्तेन स्पष्टयति। यथा चेति॥

---

रघु॰ टी॰। ननु धर्मिज्ञानादौ कुतो न प्रामाण्यसंशयः, किं साधारणधर्मविरहादुत विशेषदर्शनात्, नाद्यः, ज्ञानत्वादेरेव सत्त्वात्, विशेषश्च प्रामाण्यं तस्य दर्शनं चानुमितिः, सा च पक्षादिज्ञानसापेक्षा, तत्राप्यप्रामाण्यशङ्कानिरासस्तत्प्रामाण्यानुमितेरित्येवमनवस्थेति शङ्कते। स्यान्मतमिति। न केवलं कोटिनिश्चय एव विपरीतशङ्काप्रतिबन्धकोऽपि तु व्याप्यादिदर्शनमपीत्याशयेन निराकुरुते। न व्याप्नोति। साक्षात् विषिय्य। आत्मनि विशेषात्मनि। प्रकृते अनुव्यवसायधर्मिज्ञानादौ। तद्धर्मवत्त्वात् प्रवृत्तिरिति यावत्। अनुव्यवसायत्वेति। धर्मिज्ञानत्वव्याप्यवद्विशेष्यक-व्यापक-ज्ञानत्वयोरप्युपलक्षकम्। सामान्यतः प्रामाण्यनिश्चयेपि विशेषतः कथं न तत्संशय इत्यत आह। न चेति। यथा धूमत्वावच्छेदेन वह्निव्याप्यत्वनिश्चयेऽयं धूमो वह्निव्याप्यो न वेति यथा वा करचरणादिकं स्थाणुत्वाभावव्याप्यमिति निश्चयेऽयं करचरणादिमानिति पश्चेऽयं स्थाणुर्न वेति न संशय इति। विस्तृतं चेदमन्यत्र। बाधकः शङ्कः शब्दोऽर्थप्रत्यायकः॥

---

तर्काश्चात्र भवन्ति। यदि धर्मिज्ञानं व्यभिचरेत्, निरालम्बनमसदालम्बनं वा भवेत्, निषिद्धं च तत्।

यद्यनुव्यवसायो व्यभिचरेत्, तदार्थकर्मकोपि न स्यात्, ज्ञानेतरस्यार्थप्रावण्याभावात्। यदि तज्जातीयं व्यभिचरेत् अव्यभिचारो न क्वचिद्व्यवतिष्ठेत। तदव्यवस्थितौ व्यभिचारोपि न स्यात्, अन्यथाख्यातिरूपत्वात्तस्य, तत्त्वस्थितौ चान्यथात्वं स्यात्, तदवधिकत्वात्।

शङ्क० टी०। अत्रेति। धर्मिज्ञानं प्रमाणमेव, अनुव्यवसायः प्रमाणमेव, लक्षणवल्लक्ष्यज्ञानमव्यभिचार्येवेत्यादौ। प्रथमव्याप्तौ तर्कमाह। यदीति। द्वितीयव्याप्तावाह। यद्यनुव्यवसाय इति। व्यभिचरेत् व्यवसायमन्तरेण स्यादेवेत्यर्थः। अर्थकर्मको न भवेदिति। अर्थं बाह्यं कर्मतया नोल्लिखेत्, व्यवसायमन्तरेण मनसस्तत्रासामर्थ्यात्। एतदेवाह। ज्ञानेतरस्येति। अर्थप्रवणं ज्ञानं विषयीकुर्वत एव तस्यार्थकर्मत्वोपपत्तेः। तृतीयव्याप्तावाह। यदि तज्जातीयमिति। तदवधित्वादिति। तत्त्वसापेक्षत्वादन्यथात्वस्येत्यर्थः॥

---

भगी० टी०। तर्कास्त्वत्रेति। इदं ज्ञानं यदि विशेष्यावृत्त्यप्रकारकं न स्यादज्ञानं विशेष्यावृत्तिप्रकारकं वा स्यात्, अनुव्यवसायो यदि व्यभिचरेत् ज्ञानविषयकः साक्षात्कारो (वा) न स्यात्, अनर्थप्रवणस्यार्थप्रवणतया साक्षात्कारासम्भवात्, सामग्रीविरोधात्, गन्धवति पृथिवीज्ञानत्वं यदि गन्धविषयवृत्ति न स्यात्, ज्ञानवृत्ति न स्यादिति क्रमेणापादनार्थः। तदव्यवस्थिताविति। पृथिवी-

ज्ञानत्वं यद्यव्यभिचारिवृत्ति न स्यात् ज्ञानमात्रनिरूपितविषयत्वे सति व्यभिचारिवृत्ति न स्यादित्यर्थः ॥

रघु० टी० । व्यभिचरेत् मद्विषयकं न स्यात् । निरालम्बनमिति स्वमतेन । असदालम्बनमिति बौद्धनयेन । अत्रापादके ज्ञानत्वे सतीति द्रष्टव्यम् । अन्यतरत्वेनापाद्यता इत्यपि कश्चित् । व्यभिचरेत् ज्ञानविषयको न स्यात् । अर्थकर्मकः अर्थप्रवणकर्मकः । इच्छादेरप्यर्थप्रवणत्वमते तु इच्छाद्यविषयत्वेनापादकं विशेषणीयम् । तज्जातीयं व्याप्यवति व्यापकज्ञानम् । गन्धवति पृथिवीत्वप्रकारकं ज्ञानं यदि पृथिव्यां पृथिवीत्वप्रकारकं न स्यात् गन्धवति पृथिवीत्वप्रकारकं न स्यात् यदि पृथिवीमात्रविशेष्यकं न स्यात् गन्धवन्मात्रविशेष्यकं न स्यात् यदि पृथिवीविशेष्यकं न स्यात् गन्धवद्विशेष्यकं न स्यादित्यादि । पृथिवीत्वव्याप्यवद्विशेष्यकस्यापि पृथिव्यविशेष्यकत्वे पृथिवीप्रमामात्रविलोपे पृथिव्यसिद्धा पृथिवी-भिन्नासिद्धौ पृथिवीभिन्ने पृथिवीत्वप्रकारकत्वमप्रामाण्यमपि न सिद्ध्येत् । एवमन्यत्रापीति ॥

एतेन स्वप्नजागरावस्थयोरविशेष इति निरस्तम् । असत्ख्यातेरात्मख्यातेश्च [1] निराकृतत्वात्, अन्यथा-ख्यातेश्च तत्त्वख्यातिव्यवस्थामन्तरेणानुपपत्तेरिति । सा च जागरेपि यदि न स्यात्, न स्याद्देवेति ।

(१) प्रतिषेधात् इति १ पु० पा० ।

शङ्क० टी० । एतेनेति । तथ्यातथ्यविभागव्यवस्थापने-नेत्यर्थः । यद्वा भ्रमस्यान्यथाख्यातित्वव्यवस्थापनेनेत्यर्थः । तथा च जागरज्ञानं न प्रमा ज्ञानत्वात् स्वप्नज्ञानवदित्यादौनामनवकाश इति भावः । स्वप्नज्ञानानामप्रामाण्यमन्यथाख्यातिरूपतयैव वाच्यम् । सा च तत्त्वख्यातिपूर्विकैव, तत्त्वख्यातिश्च जागरावस्थज्ञानविशेष एवेत्याह । भ्रमख्यातेरिति ॥

---

भगी० टी० । जागरज्ञानमप्रमा ज्ञानत्वादित्यप्रमासाधकं प्रमात्वोपस्थितौ न सम्भवतीत्याह । एतेनेति ॥

---

रघु० टी० । जागरप्रत्ययो भ्रान्तः, प्रत्ययत्वात्, स्वप्न-प्रत्ययवदिति मतं निरस्यति । एतेनेति । यत्किञ्चिज्जागर-प्रत्ययस्य भ्रान्तत्वे साध्ये सिद्धसाधनम्, यावतां तथात्वे चैतदनु-मितिप्रामाण्याप्रामाण्याभ्यां व्याघात इति ॥

---

तथापि कथमनयोरवस्थयोर्विभागः कर्त्तव्य इति चेन्न । लोकसिद्धत्वात् । किमनयोर्लक्षणमिति चेत्, कर्तृकर्मकरणदेशकालप्रबन्धबाधः काकतालीयसम्वाद-वान् स्वप्नस्य, प्रबन्धे काकतालीयः कस्यचिदेव विषयस्य बाधो जागरस्येति । एतेन बाध्यप्रबन्धो-ऽवस्थाविशेषः स्वप्नः प्रबन्धबाधकादिर्बाध्यमान-प्रबन्धान्तो जागरितमित्यपि द्रष्टव्यमित्येषा दिक् ।

प्रश्न० टी० । भवेदेवं यदि लक्षणभेदोऽनयोरवस्थयोः स्यादित्यत आह । तथापीति । ननु लोकस्यापि भेदव्यवस्थिति-र्लक्षणाधीनेत्याह । किमिति । अहं धवलगृहे मध्याह्ने हस्तेन पायसं भुञ्ज इत्यत्र कर्त्रादीनां सर्वेषां बाधः । ननु सर्वबाधे कथं ज्ञानं निरालम्बनं कथं वाऽन्यथाख्यातिः कुत्र वाऽऽरोपः कथं वा जागरानन्तरमपि क्वचिदपि सम्वाद इत्यत आह । काकतालीयेति । अन्यथानुपपत्त्यैवारोपविषयाणामन्ततो बहि-रर्थादीनां मन्दतरतमादिभावेन शब्दाद्युपलम्भादिति भावः । स्वप्नस्येति । लक्षणमित्यनुवर्त्तनीयम् । एवं जागरस्येत्यत्रापि । एतेनेति । लक्षणान्तरेण विभागव्यवस्थापनेनेत्यर्थः । अवस्था-विशेष इति । निद्रोपसृतान्तःकरणावस्थाविशेषः, तथा स्वप्न-वहनाडीविशेषसंयोगजं ज्ञानं स्वप्नः । तदितरज्ज्ञानं जागरः । स्वप्नत्वजागरत्वे जातिविशेषौ वा । न चानुमितित्वादिना परा-परभावानुपपत्तिः, सर्वस्वप्नानां साक्षात्का(र्य)रिस्वभावरूपत्वात् । अत एव न स्मृतित्वसाङ्कर्यमपीति भावः ॥

---

भगी० टी० । बाध्यः प्रबन्धो यस्येत्यर्थः । प्रबन्धस्य स्वप्नस्यैव यद्बाधकं तदादौ यस्य, बाध्यः प्रबन्धः स्वप्न एवान्ते यस्य तत्तयेत्यर्थः । यद्यप्येतद्यथाश्रुतमव्यापकमतिव्यापकं च, तथापि स्वप्नवहनाडीसंयोगजं ज्ञानं स्वप्नः, तदन्यज्ज्ञानं जागरः । जातिविशेषो वा । न चानुमितित्वेन परापरभावानुपपत्तिः,

स्वप्नेऽनुमित्यसिद्धेः, निद्रासहकारिणा मनसा सर्वत्र विषये साचात्कारित्वस्यैवोत्पादात् ॥

---

रघु० टी० । लोकप्रसिद्धस्यापि विना लक्षणं विभागोऽ-[1]नुपपन्न इत्याशयेन पृच्छति । किमिति । स्वप्नवहनाडीमनः-संयोगजन्यं तन्नाडीसंयुक्तमनोजन्यं वा ज्ञानं स्वप्नः । स्वप्नवहत्वं तु नाडीगतो जातिविशेषः । स्वप्नत्वं मानसत्वव्याप्यो जातिविशेषो विनैव च स्मरणमदृष्टोद्बुद्धसंस्कारसहितान्मनसस्तादृशं ज्ञान-मुत्पद्यते । चाक्षुषत्वादिवदनुमितित्वादिकमपि संस्कारवशात्तत्रा-रोप्यत इत्यन्ये । स्वप्नभिन्नं ज्ञानं जागर इति ॥

---

तस्मात्तथ्यमेव विश्वं, मन्दप्रयोजनत्वात्तु सत्वरै-र्मुमुक्षुभिरुपेक्षितमिति युक्तमुत्पश्यामः । तर्हि नैयायिकानां जगत्परिरक्षणे कोऽयमभिनिवेशातिशय इति चेत्, सहसैव तदुपेक्षायां न्यायाभासावकाशे [2]प्रमाणमात्रविप्लवो भवेत्, तथा च न्यायरुचिः प्रेक्षावान्न तत्त्वमधिगच्छेदिति भियेति ।

शङ्क० टी० । प्रकृतमुपसंहरति । तस्मादिति । तर्हि वेदान्तिनां प्रपञ्चमिथ्यात्वप्रवादः किन्निबन्धन इत्यत आह ।

(१) ऽशक्य इति २ पु० पा० ।
(२) न्यायमार्गविप्लवो इति १ पु० पा० ।

मन्दप्रयोजनत्वादिति । उपनिषद्भ्यामजनितात्मसाक्षात्कारा वेदान्तिनो मोक्षाय त्वरमाणाः प्रपञ्चविचारे प्रयोजनाभाव-माकलयन्तस्तत्रोदासत इत्यर्थः । तर्हि नैयायिका अपि मुमुक्षव-स्तेषां कथमत्राग्रह इत्यत आह । तर्हीति । श्रवणानन्तरं यन्मननं तत्रान्वीक्षिकीप्रवृत्तिस्तत्र मनने हेतुदृष्टान्तपक्षव्याप्त्यादि-ज्ञानं प्रमारूपं प्रयोजकं, प्रमा च यथार्थानुभवरूपेति प्रपञ्चसत्यत्वे परं तदुपपद्यत इति तदर्थोऽभिनिवेश इत्यर्थः ॥

---

भगी० टी० । प्रकृतमुपसंहरति । तस्मादिति । सम्प्रति लोकोऽलोको यज्ञोऽयज्ञ इत्यादि श्रुतिविरोधं परिहरति । मन्देति । उत्पन्नतत्त्वसाक्षात्कारस्य लोकोपजीवनमफलमिति श्रुतेस्तात्पर्यमित्यर्थः । नन्वेवं तत्त्वसाक्षात्कारात् प्राक् किमर्थं तस्य लोकोपजीवनमित्यत आह । तर्हीति । लोकसिद्धप्रामाण्य-न्यायेनात्मनि मननाच्छङ्काकलङ्कापगमात् ध्यानादौ बह्वायास-साध्ये प्रवृत्तिरिति ततः प्राक् तदुपजीवनमित्याह । महर्मिवेति ॥

## ॥ इति बाह्यार्थभङ्गवादः ॥

# गुणगुणिभेदभङ्गवादप्रारम्भः।



अस्तु तर्हि गुणगुणिनोरभेदान्नैरात्म्यम्, क्षणिकज्ञानमात्रपरिशेषादिति चेत्, उच्यते। अस्ति तावदिह दर्शनस्पर्शनाभ्यामेकार्थानुसन्धानम्। तदिदमेकैकविषयं वा स्यात्, समुदायविषयं वा, तदतिरिक्तविषयं वा, वस्त्वननुरोध्याकारविषयं वा, अलीकविषयं वा।

शङ्क० टी०। आत्मनि तृतीयं बाधकं दूषयितुमुपन्यस्यति अस्तु तर्हीति। ज्ञानभिन्न आत्मा नास्तीत्येव हि नैरात्म्यपक्षः स च ज्ञानात्मनोरभेदादेव पर्यवसन्न इत्यर्थः। आत्मा ज्ञानाभिन्नः, तदविषयकप्रतीत्यविषयत्वात्, ज्ञानं वा आत्माभिन्नं, तदविषयकप्रतीत्यविषयत्वादिति विशेषतो गुणिनं पक्षयित्वा गुणाभेदो गुणं वा पक्षयित्वा गुण्यभेदसाधन वा सामान्यत एव वेति। गुणभिन्नं गुणिनं साधयितुमुपक्रमते। अस्तीति। यमहमद्राक्षं तमहं स्पृशामि यं वाऽस्प्राक्षं तं पश्यामीत्येक एवार्थ इन्द्रियाभ्यां गृह्यते। तेन गुणभिन्न एव गुणी सिद्ध्यतीत्यर्थः। प्रतिसन्धानस्यान्यथासिद्धिमाशङ्क्य निराकरोति। तदिदमिति। एकैकविषयमिति

रूपमात्रविषयं स्पर्शमात्रविषयं वेत्यर्थः । समुदायेति । रूपस्पर्श-समुदायविषयमित्यर्थः । तदतिरिक्तेति । अवयविविषयं वेत्यर्थः । आकारेति । ज्ञानाकार एव तयोरभिव्यत इत्यर्थः ॥

---

भगी० टी० । तृतीयमात्मनि बाधकं दूषयितुमुपन्यस्यति । अस्त्विति । नैरात्म्यं ज्ञानभिन्नात्माभावः । गुणित्वेनाभिमतं न तद्गुणभिन्नं, तदविषयकज्ञानाविषयत्वात्, तद्गुणवत्, यद्वा तद्गुण-स्तद्गुण्यभिन्नः, तद्गुणत्वादिति व्यतिरेकौ, तथा चाद्युविनाशि-ज्ञानमते नात्मेति सिद्धम् । चणिकपदं द्विचिचणावस्थायिपरम् । विज्ञानमात्रेत्यनेन न विज्ञानवादाभ्युपगमः, रूपाद्यभिन्नघटादे-र्बाह्यत्वस्याभ्युपगमात्, तथा च शुक्लः पट इति सामानाधिकरण्य-धीरपि सङ्गच्छते । अत्र प्रत्यचबाधमाह । अस्तीति । यमहम-द्राक्षं तमहं स्पृशामीत्येवंरूपम् । तदिदमिति । रूपमात्रस्पर्श-मात्रविषयमित्यर्थः । समुदायो रूपस्पर्शयोः । तस्त्वननुरोधी ज्ञानाकारः शशशटङ्गज्ञानस्येव ॥

---

रघु० टी० । तृतीयमात्मनि बाधकं निराकर्त्तुमुपन्यस्यति । अस्तु तर्हीति । गुणगुणिनोरभेदात् गुणातिरिक्तस्य गुणिनो-ऽभावात् । नैरात्म्यं ज्ञानातिरिक्तात्मव्यतिरेकः । अस्तु तर्हि नित्यं विज्ञानमेवात्मेत्यत आह । चणिकेति । स्वसम्वेदनसम्विदितेभ्यः चणिकनीलादिविज्ञानेभ्योऽतिरिक्ते नित्ये ज्ञाने मानाभावादिति भावः । एकार्थानुसन्धानं एकार्थग्रहणम्, यमद्राक्षं तं स्पृशामी-

त्यनुभवबलात्। तदिदं चाक्षुषं स्पार्शनं च प्रत्यक्षं रूपमात्रविषयं स्पर्शमात्रविषयं वा। समुदायो रूपस्पर्शयोः॥

न तावदाद्यः, न हि यदेव रूपं स एव स्पर्श इति। न च रूपं त्वगिन्द्रियग्राह्यम्, अन्धस्यापि नीलादिप्रत्ययप्रसङ्गात्। न चैकमेव वस्तु करणभेदेनान्यथा प्रथत इति युक्तम्, अनात्मकत्वप्रसङ्गात्, भेदाभेदव्यवस्थानुपपत्तेश्च।

शङ्क० टी०। रूपमात्रविषयत्वे दोषमाह। न हीति। स्पर्शमात्रविषयत्वे तु तद्वैपरीत्येनापादनम्। दोषान्तरमाह। न चेति। रूपस्य त्वगिन्द्रियग्राह्यत्वे दोषमाह। अन्धस्येति। ननु रूपमेव त्वचा स्पर्शत्वेन गृह्यत इत्यत आह। न चेति। इन्द्रियभेदेन जनिते ज्ञाने प्रकारभेदानुपलब्धेः रूपत्वस्पर्शत्वे जातौ परं भिन्नेन्द्रियवेद्ये न तु जातिमदपि तथेति यदि तदा तद्वस्तु न रूपं स्यान्न वा स्पर्शः स्यात्, विरुद्धत्वात् इत्याह। अनात्मकत्वेति। भेदाभेदेति। अभिन्नस्यैव करणभेदेन विभिन्नप्रकारकप्रथासम्भवादित्यर्थः॥

भगी० टी०। ननु रूपस्पर्शयोरभेदेऽपि रूपस्पर्शत्वे जाती भिन्ने, तच्च रूपत्वेन तद्वस्त्वाक्षुषः, स्पर्शत्वेन तु स्पार्शन इत्याशङ्कां निराकरोति। न चैकमेवेति। अनात्मकत्वेति। व्यक्तियोग्यतयैव जातेर्योग्यत्वादेकेन्द्रियग्राह्यत्वे रूपस्पर्शयो रूपत्वस्पर्शत्वयोरपि

तथात्वप्रसङ्गाच्च रूपस्पर्शात्मकमित्यर्थः। ननु तथाप्येकमेव वस्तु रूपाश्रयत्वेन चक्षुषा स्पर्शाश्रयत्वेन त्वचोपलभ्येतेत्यभ्युपगमः। न च तद्रूपमविरुद्धम्, रूपत्वादिकं तु विरुद्धमिति वाच्यम्। रूपत्व-स्पर्शत्वयोरविरोधात्, प्रतीतेरविरोधात्। न चैवमन्धोऽपि नीला-दिकमुपलभेत, नीलत्वादिव्यावृत्तिविशेषाज्ञानेनान्धत्वसम्भवात्. न हि नीलमेव नीलत्वम्।

अत्राहुः। अन्यूनानतिरिक्तप्रतियोगित्वेन व्यावृत्त्योर्न भेदः स्यात्। नीलपृथिवीशब्दयोश्चैवं पर्यायतापत्तिः, तथा सत्यन्यतर-पदश्रवणेनान्यतरपदसन्देहो न स्यात्, पृथिव्यभिन्नजातीयस्य कथं तोयतेजसोरभेदः स्यात्। किञ्च विरुद्धधर्माध्यासेऽप्यभेदे भेदोच्छेदः स्यादित्याह। भेदेति॥

---

रघु० टी०। रूपस्पर्शयोर्भेदाच्चाक्षुषे चेतसि स्पर्शस्य स्पार्शने च रूपस्य भानानुपपत्तिरित्याह। न चेति। अथ चक्षुषा त्वचा रूपं स्पर्शो वा गृह्यतामित्यत आह। न हि रूपं स्पर्शो वा त्वगिन्द्रियग्राह्यमिति। अन्धस्यापीति। पुरोवर्त्तिनि शुक्लादि-वदुष्णत्वादेरपि ग्रहणप्रसङ्गादित्यपि द्रष्टव्यम्। एकमेव वस्तु नयनेन रूपत्वेन त्वचा च स्पर्शत्वेन गृह्यत इति च न युक्तम्, विरुद्धयोरेकत्र वृत्त्यसम्भवात्, एकतरवत्तायां च नियामकाभावा दस्तुन उभयरूपशून्यत्वप्रसङ्गात्, विरुद्धयोश्चैकत्र वृत्तौ धर्मिणो भेद-प्रसङ्गात्, तथापि चाभेदे भेदमात्रोच्छेदे भेदाभेदव्यवस्थाऽनुपपत्ति-रित्याह। न चैकमेवेत्यादिना। अथ रूपत्वस्पर्शत्वे एकत्रैव वर्त्तेते,

विरोधे मानाभावात्। न चैवमेकतरग्रहेऽन्यतरग्रहापत्तिः, जाते-र्योग्यव्यक्तिवृत्तित्वेनैव योग्यत्वादिति वाच्यम्। भवतां रूपादी-नामिवास्माकं रूपत्वादीनां स्वयोग्यतयैव वेदनेन प्रतिनियतेन्द्रिय-वेद्यत्वोपपत्तेरिति चेत्, तदिदमान्तरालिकगुणखण्डनम्, द्रव्यस्य घटादेरुपलम्भात्। न चैतदपि, पवनमणिप्रभादौ मिथो व्यभि-चारिणोः स्पर्शत्वरूपत्वयोः पृथिव्यादौ सङ्करप्रसङ्गात्, प्रभायां स्पर्शत्वस्य योग्यानुपलम्भबाधितत्वात्। एवं नीलत्वघटत्वादीनां सङ्करप्रसङ्गो-नुसन्धेयः। अपि च घटे पाकेन श्यामस्य नाशे रक्तस्य चोत्पादो दृश्यते, न च तौ जात्योरेव, कालान्तरेपि तयोरुपलम्भात्। नापि घटस्य, स एवायं घट इति प्रत्यभिज्ञानात्। अवच्छेदभेदेन च भावाभावयोरेकत्र वृत्तेः व्यवस्थापितत्वात्, पूर्वं घटमद्राक्षमिदानीं स्पृशामीत्यनुभवात् स्पर्शो न रूपं रूपं न स्पर्श इत्यबाधिता-नुभवाच्चेति ॥

---

नापि द्वितीयः, स हि एकदेशतया वा एककाल-तया वा एककार्यतया वा एककारणतया वेति।

शङ्क० टी०। स हीति। रूपस्पर्शयोः समुदाय इत्यर्थः। अत्र सर्वत्र बहुव्रीहिः॥

---

रघु० टी०। यद्यपि समुदायस्य समुदायिघटितमूर्त्तिक-त्वात् समुदायिनोश्च रूपस्पर्शयोरेकेन्द्रियावेद्यत्वादनुसन्धानासम्भव-

स्तद्वस्थ एव, तथापि प्रकृते समुदाय एव न सम्भवतीति प्रतिपादयति। नापीत्यादिना। सः समुदायः। एकेत्यादौ चतुष्के बहुव्रीहिः। एकदेशत्वादिविशिष्टौ रूपस्पर्शौ समुदाय इत्यर्थः॥

---

न तावदुपादानरूपैकदेशसम्भवः, तयोः प्रतिनियतोपादानत्वात्, सम्भवे वा तदेव द्रव्यमिति पर्यवमितं विवादेन। नाप्यधिकरणीभूतभूतलाद्याधारतया तत्सम्भवः, चक्षुषा ह्युपलभ्यमाने भूतले रूपविशेषे घटोपि चक्षुषैवोपलभ्यमानो रूपविशेषस्तदाधार इति शक्यते निश्चेतुम्, तयोरधरोत्तरभावेनैकज्ञानसंसर्गित्वात्, तदधिकरणाः स्पर्शादयोपीति तु कस्य प्रमाणस्य विषयः। न हि स्पर्शादयश्चाक्षुषे चेतसि चकासति। त्वचोऽयं व्यापार इत्यपि नास्ति, तयापि भूतलघटस्पर्शयोराधाराधेयभावप्रतीतेः, न च समुदाययोस्तत्सम्भवः, परस्पराश्रयत्वप्रसङ्गात्, एकाधारतायां हि समुदायानुसन्धानं समुदायानुसन्धाने चैकाधारतानुसन्धानसम्भव इति। अनवस्थाप्रसङ्गाच्च, भूतलस्यापि समुदायत्वं किङ्कृतमित्यनुयोगानिवृत्तेः।

शङ्क० टी०। आद्यं दूषयति। न तावदिति। लभ्यते रूपस्येव रूपोपादानत्वादित्यर्थः। सम्भव इति। रूपस्पर्शयोर्यदेकमुपादानं स एव गुणीत्यर्थः। भूतले रूपात्मके घटस्य रूपा-

त्मकस्याधाराधेयभावः परं गृह्यते न तु स्पर्शरूपयोरपीति नैक-देशता, तत्रापि स्पर्शयोरेवाधाराधेयभावो गृह्यते न रूपस्पर्शयो-रित्याह। चक्षुषा हीति। ननु रूपादिसमुदाये भूतले रूपादि-समुदायो घट उपलभ्यत एवेति कथं नाधाराधेयभाव इत्यत आह। न चेति। रूपस्पर्शादीनामेकाधारतानुसन्धानाधीनं समुदायानुसन्धानं चेत् तदाऽन्योन्याश्रय इत्यर्थः। अनवस्थेति। भूतलस्यापि समुदायत्वमेकाधारतयैव स्यादेवं तत्र तत्रापीत्यर्थः॥

---

भगी० टी०। तयोरिति। रूपस्पर्शयोस्त्वन्मते रूपस्पर्शो-पादानकत्वादित्यर्थः। तत्सम्भवः एकदेशतासम्भवः। चक्षुषा हीति। त्वक्चक्षुषोरेकविषयतया रूपस्पर्शयोरेकाधिकरणत्वेना-ग्रहात्, न ह्याधेयाग्रहे अधिकरणत्वेन ग्रहसम्भव इत्यर्थः। समुदाययोरिति। भूतलात्मकरूपस्पर्शसमुदायघटात्मकरूपस्पर्श-समुदाययोरित्यर्थः। परस्परेति। रूपस्पर्शयोः समुदायत्वमेका-धारत्वेन स्यात्, तेनैव चैकाधारतेत्यर्थः। तयोरिति। एकेने-न्द्रियेणोभयाज्ञानादित्यर्थः॥

---

रघु० टी०। तयोः रूपस्पर्शयोः। तन्मते रूपस्य रूपमेव स्पर्शस्य स्पर्श एवोपादानम्। भिन्नकालयोर्देशदेशिभावासम्भवोपि द्रष्टव्यः। तदधिकरणाः रूपात्मकभूतलाधिकरणाः। स्पर्शादय इत्यादिपदं गन्धादिसमुदायो घटादिरितिमतानुसारेण। भूतल-घटस्पर्शयोः स्पर्शात्मकभूतलघटयोः। समुदाययोरिति। एको

रूपस्पर्शसमुदाय आधारोऽन्यस्त्वाधेय इति। परस्परेति। रूप-स्पर्शयोस्तन्मते वास्तवस्यैकदेशवृत्तित्वस्यासम्भवाद्वैज्ञानिकं तदाश्रम. तथा चैकदेशवृत्तितायां ज्ञातायां समुदायप्रतिसन्धानं प्रतिसंहिते च समुदाये एकदेशवृत्तित्वज्ञानमित्यर्थः। समुदायस्याधारत्वे दोषान्तरमाह। अनवस्थेति। यद्वा आधारस्य समुदायस्य समुदायत्वमेकसमुदायाश्रयतया एकसमुदायवृत्तितया वा, आद्ये परस्पराश्रयो द्वितीयेऽनवस्थेत्याह। परस्परेत्यादि॥

---

## अत एव नैककालतयापि, तयोरेककालतायां प्रमाणाभावात्, भावे वा रासभकरभयोरप्येककाल-तया समुदायत्वप्रसङ्गः, भेदाग्रहस्य प्रकृतेप्यसम्भवात्।

शङ्क० टी०। अत एवेति। समुदायमित्यनुवृत्तेन सम्बन्धः। रूपरसादीनामेकेन्द्रियग्राह्यत्वादेवेत्यर्थः। प्रमाणाभावमुक्त्वाऽति-प्रसङ्गमाह। भावे वेति। ननु रासभकरभयोरेककालतायामपि भेदग्रहादेव न समुदायव्यवहार इत्यत आह। भेदेति। रूप-रसादीनामपि भेदेनैव ग्रहादित्यर्थः॥

---

भगी० टी०। भावे वेति। तथा च य एव रासभः स एव करभ इति प्रतिसन्धानं स्यादित्यर्थः। न च समुदायत्वेपि भेदग्रहात्तत्र न प्रतिसन्धानमित्याह। भेदेति। रूपस्पर्शयोरपि भेदाग्रहादित्यर्थः॥

---

रघु० टी०। सत्यपि समुदायत्वे भेदग्रहात् करभरासभयोर्न प्रतिसन्धानं तत्राह। भेदाग्रहस्येत्यादि। रूपस्पर्शयोरपि भेदग्रहादित्यर्थः॥

---

अत एव नैककार्यतयापि, उपादेयरूपस्यैककार्यस्याभावात्। एकोदकाहरणलक्षणार्थक्रियेत्याद्यपि न युक्तम्, रूपाद्यतिरिक्तस्योदकस्यानभ्युपगमात्, एकैकस्यानेकाहार्यत्वे प्रमाणाभावात्, समुदायस्य चासिद्धेः।

शङ्क० टी०। अत एवेति। रूपरसादीनामेकस्य कार्यस्याननुभवादित्यर्थः। उपादेयेति। न हि रूपादिभिरेकं कार्यमुपादीयत इति तव मम वाऽभ्युपगम इत्यर्थः। ननु रूपादिभिरेकं कार्यं नोपादीयते, तथापि निमित्तमुदकाहरणादेर्भवन्त्येवेत्यत आह। एकेति। उदकमपि लभ्यते रूपाद्येवेत्यर्थः। ननु तथापि रूपाद्यात्मकमेव तत् सर्वेषां कार्यं स्यादित्यत आह। एकैकस्येति। रूपजन्ये स्पर्शजन्यतायां प्रमाणाभावात्। तथापि रूपादिसमुदायजन्यमेव तज्जलाहरणमत आह। समुदायस्येति। तदर्थमेवैककार्यत्वस्यानुसरणात् तत्र च प्रमाणाभावादित्यर्थः॥

---

रघु० टी०। रूपाद्येकैकात्मकमुदकं नानेकरूपाद्याहार्यं मानाभावात्, समुदायाभावाच्च न समुदायस्य समुदायाहार्यत्वमित्याह। एकैकस्येति॥

---

अत एव नैककारणतयापीति । निमित्तमन्तरेण तु समुदायव्यवहारेऽतिप्रसङ्गः ।

शङ्क० टी० । अत एवेति । चतुर्णां रूपादीनामेकं कारणमत्र प्रमाणाभावादित्यर्थः । अतिप्रसङ्ग इति । भिन्नकालभिन्नदेशानामपि समुदायव्यवहारः स्यादित्यर्थः ॥

---

भगी० टी० । निमित्तमिति । एकमुपाधिमित्यर्थः ॥

---

तृतीये न विवादः ।

शङ्क० टी० । तृतीये त्विति । प्रतिसन्धानस्य रूपाद्यतिरिक्तवस्तुविषयत्व इत्यर्थः ॥

---

नापि चतुर्थः, स हि विज्ञाननयमाश्रित्य वा स्यात् द्विचन्द्रादिवद्विसम्वादाद्वा ।

शङ्क० टी० । वस्तुनन्तरोध्याकारविषयत्वेति दूषयति । नापीति । स हीति ॥

---

आद्ये तु रूपादिषु कः पक्षपातः ।

शङ्क० टी० । यदि विज्ञानवादमाश्रित्योच्यते तदा रूपादीनामपि विज्ञव एवेत्याह । आद्य इति ॥

---

प्राप्तेरर्थक्रियास्थितेश्च न द्वितीयोपि। ते द्वे रूपादीनामिति चेत्, न तेषाम्, किन्तु तस्यैवेति किं न स्यात्। बाधकादिति चेत्, न तावत्क्रमयौगपद्यविरोधो रक्तारक्तविरोधो वा बाधकं, निषिद्धत्वात्, क्षणिकपरमाणुरूपद्रव्येणाक्रान्तेश्च। सम्बन्धाभाव इति चेत्, असम्बन्धस्तावदस्तु। कथं तद्वत् प्रतीयत इति चेत्, तेषां तथोत्पादादिति परिहारोऽस्तु तवैव यथा शरीरं चेतनावदिति। रूपादिभिरेव समस्तार्थक्रियासिद्धेः किं तदतिरिक्तद्रव्यकल्पनयेति चेन्न। तावन्मात्रेणैव समस्तार्थक्रियासिद्धेः किं रूपादिकल्पनयेत्यस्यापि वाचाटवचसोऽवकाशप्रसङ्गात्। प्रतीयमानत्वादिति चेत्, तुल्यम्।

शङ्क० टी०। नन्वेकं स्थूलमित्यवयविगोचरं ज्ञानम्, तच्च द्विचन्द्रादिज्ञानवद्विसम्वादीति नावयविनि प्रमाणमित्यत आह। प्राप्तेरिति। अत्रान्यथासिद्धिमाह। ते द्वे इति। प्राप्त्यर्थक्रिये इत्यर्थः। अत्र विनिगमनाविरहं तावदाह। न तेषामिति। तस्यैवेति। अवयविन इत्यर्थः। बाधकादिति। यदि गुणी स्थिरः स्यान्न क्रमेण कुर्यान्न वा युगपत्, यदि चावयवी पटादिः स्यात्तदा रक्तारक्तविरोधः स्यादिति गुणिनि बाधकमित्यर्थः। एतद्द्वयबाधकं पूर्वमेव परिहृतमित्याह। निषिद्धत्वादिति। किञ्च क्षणिके परमाणुरूपे च गुणिनि नैतद्द्वयं बाधकमित्याह। क्षणिकेति। सम्बन्धाभाव इति। गुणिनि बाधकमित्यनुषञ्ज-

नीयम्। गुणसमवायाद्धि गुणी भवेत्, स एव तु नास्तीत्यर्थः। सम्बन्धाभावे रूपविशिष्टप्रतीतिः कथमित्याह। कथमिति। तेषामिति। रूपादीनां तथैवोत्पादात् सम्बन्धं विनैव विशिष्टबुद्धिजनकत्वेनोत्पादादित्यर्थः। तवैवेति। ज्ञानचेतनिकस्येत्यर्थः। रूपादीनामुभयसिद्धत्वात्सन्धः क्लृप्तपरिग्रह इति किं गुणिनेत्याह। रूपादिभिरेवेति। ननु रूपाद्यनभ्युपगमे तवापसिद्धान्त इत्यत आह। वाचाटेति। प्रतीयमानत्वादिति। रूपाद्यभ्युपगम इति शेषः। प्रतीतिर्द्रव्येऽपि तुल्येत्याह। तुल्यमिति॥

---

भगी० टी०। ते द्वे इति। प्राप्त्यर्थक्रिये इत्यर्थः। तस्यैव गुणिन इत्यर्थः। क्षणिकेति। उक्तबाधकयोः स्थैर्यावयविनोरेव सम्भवात्न तु गुणभिन्ने गुणिनीत्यर्थः। सम्बन्धाभावो बाधकमित्यर्थः। अतिरिक्तसम्बन्धे बाधकादित्यर्थः। कथमिति। रूपादिभिरसम्बन्धे रूपादिमत्तया ज्ञायेतेत्यर्थः॥

---

रघु० टी०। (ते द्वे प्राप्त्यर्थक्रिये।) क्रमयौगपद्यविरोधस्य स्थिरे रक्तत्वारक्तत्वादिविरोधस्य चावयविनि बाधकत्वं सम्भाव्येत, न तु क्षणिके परमाणौ रूपादिमतीत्याह। क्षणिकेति। सम्बन्धाभाव इति। बाधकमित्यनुषज्यते॥

---

## एतेनालीकविषयतापि निरस्ता।

शङ्क० टी०। एतेनेति। रूपादीनामप्यलीकत्वप्रसङ्गेनेत्यर्थः॥

---

अभेदसाधनं बाधकमिति चेत्, किं तत्। सहोपलम्भनियम इति चेन्न। समसहोपलम्भनियमस्यासिद्धेः, पीतशङ्खोपलम्भादौ श्वैत्यानुपलम्भेपि शङ्खोपलम्भात्।

शङ्क० टी०। गुणी गुणाभिन्नः सहोपलम्भनियमादिति बाधकं शङ्कते। अभेदेति। समसहोपलम्भस्येति। परस्पराविषयकप्रतीत्यविषयत्वस्येति। व्यभिचारमाह। पीतेति। श्वैत्याविषयकप्रतीत्यविषयत्वस्य शङ्खेऽसिद्धेरित्यर्थः॥

---

भगी० टी०। सहेति। परस्पराविषयकप्रतीत्यविषयत्वात् गुणगुणिनोरभेदः साध्य इत्यर्थः। समेति। तथात्वे वा श्वैत्यशङ्खयोरभेदो न स्यादित्यर्थः। श्वैत्यानुपलम्भ इति। ननु रूपाविषयप्रतीत्यविषयत्वादिति हेतुः कृतः, न चास्याऽसिद्धिः, न हि तदीयरूपविशेषाग्रहे सत्यग्रहो हेतुः, किन्तु यत्किञ्चिद्रूपाग्रहे, स च सिद्ध एव। किञ्च शङ्खरूपवृत्तिरूपत्वव्याप्यजातिस्तत्र न गृह्यते, न तु रूपमपि, तथा चोपक्रान्तो गुणगुणिनोरभेदः सिद्ध एव।

अत्राहुः। असिद्धिपदेन नात्र स्वरूपासिद्धिरभिमता, किन्तु सन्दिग्धासिद्धिः, हेतोरन्यथोपपत्तेः। यदा पीतः शङ्ख इत्यत्र शङ्खे पीतगुणवत्ता भाष्यते, दोषवशाच्छङ्खरूपं न भासत एव, पीतगुणारोपेणैवोपपत्तौ भ्रमान्तरकल्पनायां मानाभावात्, कदाचिदेवंविधोपि भ्रमः सम्भवतीति तत्परोऽयं ग्रन्थः॥

---

रघु॰ टी॰ । शङ्कते । अभेदसाधनं गुणगुणिनोर्भेदे बाधकमिति । यद्यपि रूपाग्रहे त्वचा शङ्खग्रहान्न सहोपलम्भनियमो न चासावन्य एव स्पर्शात्मकः शङ्खो दर्शनस्पर्शनाभ्यामेकार्थानुसन्धानस्य प्रतिपादितत्वात्, निराकृतं च रूपत्वस्पर्शत्वयोरेकाधिकरण्यम्, तदग्रहे गृह्यमाणत्वस्य च विना भेदमनुपपत्तेः, सामग्रीसाजात्येनापाद्यमानो नायनोपलम्भनियमोऽकिञ्चित्कर एव, तथापि दोषान्तरमाह[१] । ममेति । परस्पराविषयकप्रतीत्यविषयत्वस्येत्यर्थः । पीतेत्यादि । न च तत्र शङ्खस्य रूपं गृह्यत एव, शुक्लत्वं तु तत्र न गृह्यते दोषात्, तत्र च पीतत्वमारोप्य तादृशवैशिष्ट्यं शङ्खे गृह्यते, जातिव्यक्त्योर्भेदसिद्धिस्तु न गुणगुणिनोरभेदसिद्धौ बाधिकेति वाच्यम् । तादृशकल्पनायां मानाभावात्, आहत्यैव शङ्खे पीतिमारोपसम्भवात् । न च तदीये रूपे गृह्यमाण एव चक्षुषा द्रव्यग्रहः, मानाभावात्, शुक्लत्वादौ गृह्यमाण एव शुक्लादिरूपग्रह इत्यस्यापि सुवचत्वात् सन्दिग्धासिद्धेर्दुर्वारत्वाच्च । न च रूपाग्रहे नियमेनागृह्यमाणत्वेन रूपाभेदः साध्यः, रूपत्वे व्यभिचारात् । अतिरिक्तरूपत्वानभ्युपगमे तत्तद्रूपग्रहेऽगृह्यमाणत्वस्य स्वरूपासिद्धत्वात् ॥

---

नासौ शङ्खः, किन्तु शङ्ख इव, तैमिरिककेशवदिति चेत्, अहो गुणवद्विद्वेषः, यत् तैमिरिककेशाः करतलपरामर्शप्रतिनियतार्थक्रिययोरपायान्न सम्भवन्तीति

(१) तथाऽपि सोपि नास्तीत्याह । इति १ पु॰ पा॰ ।

व्यवस्थापयति, इह तु तत्सम्भवेपि शुभ्रतामात्रानुपलम्भादिति।

शङ्क० टी०। नासाविति। यत्र पीतत्वेनोपलभ्यत इत्यर्थः। तैमिरिककेशानां यथा करपरामर्शस्य केशनियतार्थक्रियाविरहस्य चाभावादसत्त्वं स्यादिह तु तदुभयमस्तीति कथं शङ्खश्वैत्यमित्याह। अहो इति॥

---

व्यापकत्वादिति चेत्, वस्तुनोर्व्याप्तिरुपलम्भयोर्वा। आद्ये न विप्रतिपत्तिः। न च व्यापकानुपलब्धिमात्रेण व्याप्यतदुपलब्धी निवर्त्तेते, दहनानुपलब्धौ धूमतदुपलब्ध्योरपि निवृत्तिप्रसङ्गात्। तत्रापि वा किं न परिकल्पयसि धूम इवासौ न धूम इति, पावकवत्तानुपलब्धेरिति। तस्मान्न व्यापकानुपलब्धेर्व्याप्यनिवृत्तिः, किन्तु व्यापकनिवृत्तेः, सा चात्रासिद्धेति वाच्यम्, तदेतत् तुल्यं प्रकृतेपि। उपलब्धेस्तु व्याप्तिरिहैव भग्ना, श्वैत्यानुपलम्भेपि शङ्खोपलम्भादित्युक्तम्।

शङ्क० टी०। ननु शुभ्रता शङ्खव्यापिका, तथा च प्रकृते तदुपलम्भनिवृत्तौ कथं शङ्खनिवृत्तिर्न स्यादित्याह। व्यापकत्वादिति। शुभ्रतायाः शङ्खस्येति शेषः। न चेति। शुभ्रताया व्यापकत्वेपि तदुपलब्धिनिवृत्तौ न शङ्खनिवृत्तिः, न वा शङ्खोपलम्भनिवृत्तिः, न हि वह्न्युपलम्भनिवृत्तौ धूमनिवृत्तिर्धूमोपलम्भ-

निवृत्तिर्वेत्यर्थः। उपलभतीति। तत्रापि वेति। धूमं दृष्ट्वाग्नौ कृत्य शङ्क्वेऽपतिदिश्यति। तदेतदिति। दृष्टैवेति। पीतः शङ्ख इत्य-चैवेत्यर्थः। कथं भग्नेत्याह। श्वैत्येति॥

---

भगी० टी०। किं शङ्खस्य शुक्लत्वं व्यापकं शङ्खोपलब्धेर्वा शुक्लोपलब्धिर्व्यापिकेत्याह। वस्तुनोरिति। प्रकृत इति। पीतः शङ्ख इत्यत्रापि भ्रमः॥

---

रघु० टी०। वस्तुनोः शङ्खश्वैत्ययोः। तथा च व्यापकस्य श्वैत्यस्यानुपलम्भाद्व्याप्यस्य शङ्खस्य तदुपलब्धेश्च निवृत्तिरिति। उप-लब्ध्योः श्वैत्यशङ्खयोरुपलब्ध्योः। तथा च व्यापिकायाः श्वैत्योप-लब्धेर्निवृत्त्या व्याप्यायाः शङ्खोपलब्धेर्निवृत्तिरिति॥

---

स्यादेतत्। पीत एव शङ्ख उत्पन्न इति चेन्न। पुरुषान्तरेण श्वैत्यस्यैवोपलब्धेः।

शङ्क० टी०। वैनाशिकः शङ्कते। पीत एवेति॥

---

रघु० टी०। शङ्कते। पीत एवेति। सर्वभावानां क्षणिक-त्वात्, तथा च भिन्नः सहोपलम्भनियम इत्यर्थः॥

---

नाप्यसम एव सहोपलम्भनियमो हेतुः अनैका-न्तात्, अभास्वरं रूपं भास्वरेण सह नियमेनोप-

लभ्यते भिन्नं चेति। देशाविच्छेद इति चेन्न। असिद्धेः, देहदेहिभ्यामनैकान्ताच्च। न तयोरविच्छेदस्तदनुपलम्भेऽप्युपलम्भादिति चेत्, तुल्यम्, रूपाद्यनुपलम्भेऽपि तद्वतामुपलब्धेः। तथापि न विपर्ययः कदापीति चेत्, तुल्यम्। न हि देहाद्यनुपलम्भे देह्यनुपलम्भवद्देह्यनुपलम्भेऽपि देहस्योपलम्भमसम्भवस्तव दर्शने। प्रतिपत्तिनिष्पत्तिसामग्रीसाहित्यनियमेन सहोपलम्भो वा देशाविच्छेदो वा स्यात् नियमेन विरुद्धधर्माध्यासाद्भेदश्चेति को विरोधः। धर्मविरोध एव कोऽचेति चेत्, तदुपलम्भेऽप्यनुपलम्भः तदभिधानेऽप्यनभिधानं तन्निषेधेऽप्यनिषेध इत्यादि। नीलमुत्पलं चलतीत्यादौ च व्यावृत्तिभेदनिराकरणे पूर्वक एव न्यायोऽनुसन्धेयः, अन्यत्रोपाधिभेदात्।

शङ्क॰ टी॰। नापीति। गुणेन सहैव गुणिनोऽनुपलम्भेऽपि गुणिना सहैव गुणोपलम्भ इत्यसमसहोपलम्भो गुणगुणिनोरभेदसाधकोऽस्त्विति शङ्कार्थः। अत्रानैकान्तिकतामाह। अभास्वरेति। घटरूपमालोकरूपेण सहैवोपलभ्यते न च तयोरभेद इत्यर्थः। तयोर्घटरूपालोकरूपयोर्भिन्नदेशत्वमतः सहोपलम्भेऽपि नाभेद इह तु देशाविच्छेद इति गुणगुणिनोरभेदः स्यादित्याह। देशाविच्छेद इति। पूर्वहेतुविशेषणम्। स्वतन्त्रो वा हेतुःउभयमपि गुणगुणिनोरसिद्धमित्याह। नासिद्धेरिति। रूपस्य शङ्खदेशत्वात् शङ्खस्य च स्वावयवदेशत्वादित्यर्थः। देहेति। देही तन्मते ज्ञानविशेषः।

तथा च देहदेहिनः स्वप्रकाशज्ञानस्याहमित्युपलम्भादित्यर्थः । देहदेहिनोर्देशाविच्छेदेन प्रतीतावपि नाभेद इत्यनैकान्त इत्यर्थः । अनैकान्तिकत्वं परिहरति । न तयोरिति । (अ)देहदेहिनोर्देशाविच्छेदः कुत इत्यत आह । देहानुपलम्भेति । देहिनः स्वप्रकाशज्ञानस्याहमित्युपलम्भादित्यर्थः । तुल्यमिति— रूपानुपलम्भेपि शङ्खस्योपलम्भमाह ; गुणगुणिनोरपि देशाविच्छेदाभावादित्यर्थः । तथापीति । यद्यपि गुणानुपलम्भे गुण्युपलम्भोऽस्ति, तथापि गुण्यनुपलम्भे गुणोपलम्भो नास्तीत्यर्थः । तुल्य इत्येव दर्शयति । न हीति । देहानुपलम्भेपि देहिनो ज्ञानस्योपलम्भो न पुनर्ज्ञानस्यानुपलम्भे देहस्योपलम्भस्तद्दर्शने त्वया देहोपलम्भस्य देहिनः स्वप्रकाशकत्वेनोपलम्भनियमस्वीकारादित्यर्थः । सहोपलम्भनियमं देशाविच्छेदं च हेतुद्वयमभ्युपगम्यान्यथासिद्धिमाह । प्रतीतीति । भेदे सत्यपि देहसत्त्वमन्यथोपपन्नमित्यर्थः । तदुपलम्भ इति । रूपाग्रहणेपि शङ्खग्रहणं शङ्खाभिधानेपि तद्रूपाद्यनभिधानं शङ्खनिषेधेपि तद्रूपाद्यनिषेध इति भेदे सत्येवोपपद्यत इत्यर्थः । ननु यत्र यत्र गुणानुपलम्भे गुण्युपलम्भस्त्वयोच्यते तत्र गुणी शङ्खो न भासत एव, किं नाम ? अशङ्खव्यावृत्तिमात्रमन्यच्च तु सहोपलम्भनियम एवातो न गुणगुणिनोर्भेद इत्यत आह । नीलमिति । पूर्वक इति । विधिरूपगुणस्यापोहवादनिराकरणावसरे समर्थितत्वादित्यर्थः । यद्वा नीलमुत्पलं चलतीति गुणजातिक्रियासामानाधिकरण्यं प्रतीयते, तच्च समानाधिकरणं द्रव्यमेव, न चात्रानीलादिव्यावृत्तिमात्र-

स्फुरणमपोहनिराकरणेन तन्निराकरणादित्याह । नीलमिति । तत् किं सर्वत्र जातिगुणक्रियानिबन्धन एव विशिष्टप्रत्ययस्तथा च नित्यत्वानित्यत्वादिविशिष्टप्रत्ययाः कथं स्युरित्यत आह। अन्यत्रेति। क्वचिदुपाधिकृतोपि विशिष्टप्रत्यय इत्यर्थः । यद्वा ननु सर्वत्र विशिष्टप्रत्यये यदि व्यावृत्तिभेदनिराकरणं तदा नाश्वोऽयमगौरय-मित्यादिविशिष्टप्रत्ययाः कथमत आह । अन्यत्रेति ॥

---

भगी० टी० । नापीति । एकस्यैवान्यतराविषयकप्रतीत्य-विषयत्वं न तूभयोः, तथा च शङ्खग्रहे श्वैत्यानुपलम्भोस्ति, तस्य च भेदेऽनुपपत्त्याऽभेदकल्पना स्यादित्यपि नास्तीत्यर्थः । कल्पनायां कल्प्यकल्पकयोरविनाभावः, स चात्र नास्ति, आलोकं विना घटस्वरूपस्याभानेपि तयोर्भेदादित्याह । अनेकान्तादिति । देशाविच्छेदे सतीति हेतुविशेषणं वा साधनान्तरमेव वा देशाविच्छेदः, तदुभयमप्यसिद्धम्, शङ्खस्य स्वाश्रयवृत्तित्वाद्रूपस्य च शङ्खवृत्तित्वादित्याह । नासिद्धेरिति । नन्ववयवभिन्नो नास्त्यवयवीति न तयोर्भिन्नदेशत्वम्, तत्राह । देहेति । बौद्धानां देही आत्मा ज्ञानमेव, तथा च देहज्ञानं स्वप्रकाशं स्वमादायैव देहं गोचरयति, न च तयोरभेद इत्यनैकान्त इत्यर्थः । ननु तयोर्न देशाविच्छेदः, तस्यैकाधारावृत्तित्वात्, देहानुपलम्भेपि देहिन उपलम्भादित्याह । न तयोरिति । गुणगुणिनोरपि नाविच्छेदो रूपाज्ञानेपि शङ्खादीनां ज्ञानादित्याह । तुल्यमिति । विपर्ययः शङ्खाग्रहेपि रूपादिग्रह इत्यर्थः । न हीति । यथा

देहाप्रतीतौ देह्यप्रतीतिस्तथा न देह्यप्रतीतौ देहप्रतीतिस्तद्दर्शन इत्यनेकान्त इत्यर्थः। हेतोरन्यथासिद्धिमाह। प्रतिपत्तीति। घटपटयोः प्रतीत्युत्पत्तिसामग्र्योः क्वचित्साहित्यनियमेप्यभेदाभावादित्यर्थः। ननु व्यावृत्तावेवायं विरोधो न तु धर्मिण्यत एव नीलमुत्पलं चलतीत्यादावपौनरुक्त्यं भवतीत्यत आह। नीलमिति। पूर्वकोऽपोहनिराकृतावुक्तः। अपोहनिराकरणाद्यथा पारमार्थिकजातिव्यक्त्योर्भेदेपि सहोपलम्भनियमस्तथा गुणगुणिनोरपि स्यात्। अथ तयोर्नित्यत्वानित्यत्वादिविरुद्धधर्माध्यासाद्भेदस्तुल्योयं गुणगुणिनोरपि, पाकेन घटस्यानाशेपि रूपादेर्नाशादिति भावः॥

---

रघु॰ टी॰। अमम एवेति। तस्मिन् गृह्यमाण एव गृह्यमाणत्वम्। अस्ति च गुणिनि गृह्यमाण एव गुणस्य गृह्यमाणत्वमिति। देशाविच्छेद इति। देशाविच्छेदोऽभिन्नदेशत्वम्। अभेदसाधनमित्यनुषज्यते। असिद्धेरिति। गुणस्य द्रव्यवृत्तित्वाद्द्रव्यस्य च अन्यस्य स्वावयववृत्तित्वात्। अतिरिक्तस्य चावयविनोऽसाधितत्वात्। देहेति। परेषां देहि विज्ञानम्। तयोरपि देशविच्छेदानुपलम्भादिति भावः। अविच्छेदो देशाविच्छेदः। तदिति। देहानुपलम्भेपि देहिनो विज्ञानस्योपलम्भात् देशाविच्छेदे च सहोपलम्भनियमस्यावश्यकत्वात् तत्रैकत्वपरिमाणयोरिवेति। न विपर्ययः न रूपादिमतामनुपलम्भेपि रूपा(द्यनु)द्युपलम्भः। तत्र दर्शन इति। देहविज्ञानस्य स्वप्रकाशत्वेनावश्यमुपलम्भात्। क्षणिकं देहविशेषमधिकृत्य चेदम्, तेन पुरुषान्तरेण देहिनोऽनुपलम्भेपि

न क्षतिः। अत एवास्वरसाद्वा हेत्वोरन्यथासिद्धिमाह। प्रतिपत्तीति। अत एव देशदेशिनोर्नैरन्तर्यमेव देशाविच्छेद इति परास्तम्। उपर्यधोभावापन्ननीलादिमन्तानद्वयेनानैकान्ताच्च। ननूपलम्भानुपलम्भादिकं न धर्मिणः, परं त्वतद्व्यावृत्तिभेदानामित्यत आह। नीलमित्यादि। पूर्वक एवेति। वास्तवमुत्पन्नत्वादिकमनादृत्यानुत्पन्नत्वादिव्यावृत्तेर्द्वैवचलम्। ननु यदि जातिगुणक्रियानिबन्धन एव विशिष्टव्यवहारो न पुनरतद्व्यावृत्तिनिबन्धनो विलीनं तर्हि कार्यत्वनित्यत्वादिविशिष्टव्यवहारेणेत्यत आह। अन्यत्रेति॥

---

अभेदे च धर्मधर्मिणोर्दूरादूरतया ग्रहणे पटुपटुनी कुतः। न च पुरुषभेदेन तथैवान्यस्योत्पादः, एकस्य द्वैरूप्याभावात्। न चान्यान्य एवासौ, एकदेशतया तत्त्वेन प्रतिसन्धानात्। न च सा भ्रान्ता, भिन्नदेशस्य तथाभूतस्य प्रत्यासीदताप्यनुपलम्भात्। न च निरालम्ब एव तदुपलम्भो वृक्षादिदेशप्रतिनियमानुपपत्तेः।

शङ्क॰ टी॰। दूषणान्तरमाह। अभेदे चेति। दूरग्रहणे अपाटवं अल्पविषयत्वं अदूरग्रहणे च पाटवं बहुविषयत्वं न स्यादित्यर्थः। ननु तथोत्पादादेव ते स्यातामित्यत आह। न चेति। एवं सति तदस्तु द्विरूपमापद्येतेत्यर्थः। नन्वन्यः पटुग्रहणविषयोऽन्यश्चापटुग्रहणविषय इति कुतो वस्तुद्वैरूप्यमित्यत आह।

न चेति। य एव दूरादृष्टः स एवायं वृक्ष इति निकटस्थेन प्रत्यभिज्ञानादित्यर्थः। न च सेति। सा एकदेशता भ्रान्ता भ्रमविषय इत्यर्थः। प्रत्यासीदतोपि पुरुषस्य तत्र बाधानवताराच्च भ्रान्तेत्याह। भिन्नदेशस्येति। ननु तैमिरिककेशोपलम्भवन्निरालम्बन एव पट्वपटुग्रह इत्यत आह। न चेति। एवं सति वृक्षादिस्तद्विषयतया नोल्लिख्येतेत्यर्थः॥

---

भगौ॰ टी॰। किञ्च धर्मिणो यावद्धर्म्यं तदा कथं धर्मज्ञाने सत्येव कस्यचिद्धर्मस्याग्रहः कस्यचिद्धर्मस्य ग्रह इत्याह। अभेदे चेति। बहुतरधर्मग्राहकत्वं पटुत्वम्, अन्यतरतद्ग्राहकत्वमपटुत्वम्। पट्वपटुज्ञानभेदात् पुरुषभेदः। तथैवेति। पटुज्ञानपुरुषापेक्षया पटुरपटुज्ञानपुरुषापेक्षया त्वपटुरर्थ एवोपेयत इत्यर्थः। द्वैरूप्यं मिथोविरुद्धधर्मद्वयम्। ननु पटुत्वादपटुरर्थोऽन्य एवेति न दोष इत्याशङ्क्य निराकरोति। न चान्येति। तत्त्वेनाभेदेनेत्यर्थः। सा एकदेशता। तथाभूतस्यैकदेशत्वेन प्रत्यभिज्ञायमानस्येत्यर्थः। निरालम्बनः पारमार्थिकाविषयः। प्रतिनियमः प्रवृत्तिनियमः प्रतीतिनियमो वा॥

---

रघु॰ टी॰। यत्र जात्यादेरसम्भवस्तत्र दूषणान्तरमाह। अभेदे चेति। दूरत्वेनापटुग्रहणमदूरत्वेन च पटुग्रहणम्। बहुतरधर्मग्राहित्वं पटुत्वमन्यधर्मग्राहित्वं चापटुत्वम्। धर्मिग्रहे च तदभिन्नानां सर्वेषामेव ग्रहात्तथात्वामसम्भव इत्यर्थः। अथ पटुत्वमपटुत्वं च विषयधर्मस्तद्ग्राहितया च ग्रहणे पटुत्वापटुत्वव्यवहारः,

एक एव चार्थो नेदीयांसं पुरुषं प्रति पटुत्वेनोत्पद्यत इति तेन पटुत्वेन गृह्यते, दवीयांसं प्रति चापटुत्वेनेति तेनापटुत्वेनेत्याशङ्का निराकरोति। न चेति। द्वैरूप्यं विरुद्धोभयरूप(व)त्व(त्त्व)म्। धर्मधर्मिणोरभेदे धर्मिग्राहिणाप्येकेन पटुत्वमेवान्येन चापटुत्वमेव गृह्यत इत्येवामम्बद्धमित्यपि द्रष्टव्यम्। अन्यान्य इति। एकः पटुरपटुश्चान्य इत्यर्थः। तत्त्वेन अभिन्नत्वेन। सा एकदेशता। भ्रान्ता भ्रमविषयः। एवं तत्त्वमपि भ्रान्तमिति द्रष्टव्यम्। तथाभूतस्य पट्वपटुरूपस्य। निरालम्बनः सदनालम्बनः। तदुपलम्भः पटुत्वापटुत्वोपलम्भः। देशप्रतिनियमः प्रतिनियतदेशविषयत्वम्। अयं हि पट्वादिप्रत्ययो नियते वृक्षादौ, निरालम्बनस्तु शशविषाणादिप्रत्ययो न तथेति॥

---

न चाधिपतिप्रत्ययत्वात्तस्येति युक्तम्, अनुभवानां तद्देशोल्लेखाननुरोधात्, उल्लेखे वा स एवालम्बनप्रत्ययः, तावन्मात्रानुबन्धित्वादवलम्बनव्यवहारस्य। न च देशोऽस्त्वालम्बनं न तु वृक्षादिरिति साम्प्रतम्, अनुपलब्धविशेषतया देशदेशिनोरविशेषात्। न च दवीयांसोपि विशेषाः स्फुरन्त्येव, न तु निश्चीयन्त इति युक्तम्, न हि योगविमलाञ्जनधौतदृष्टेरन्यस्य ताराव्यूहगतयः प्रतिभान्तीति शक्यं प्रतिपादयितुम्।

शङ्क० टी०। ननु वृक्षादिदेशप्रतिनियतोऽप्युपलम्भः स्पष्टास्पष्टरूपोऽनादिवासनाप्रभव एवेत्यत आह। न चाधिपतीति।

अधिपतिरनादिवासना, यदधीनाः स्थूलादिविकल्पाः सा प्रत्ययः कारणं यस्येत्यर्थः । वासनाया निरपेक्षायाः कारणत्वाभ्युपगमेऽति-प्रसङ्ग इति तदुद्बोधकोऽनुभवो वाच्यः, स च न देशमुल्लिखतीति तदुद्बोधिता वासनापि न तदुल्लिखेदित्याह । अनुभवानामिति । निर्विकल्पकानामित्यर्थः । नन्वननुभवेनापि देश उल्लिख्यता-मत आह । उल्लेख इति । तर्हि सिद्ध एव वृक्षादिर्देशस्तच्च च स्पष्टास्पष्टग्रहणं च सिद्धमित्यर्थः । नन्वनुभवविषयत्वेपि वृक्षादिः कथं सालम्बन इत्यत आह । तावन्मात्रेति । ननु स्पष्टास्पष्टग्रहण-विषयो न वृक्षः, किन्तु तद्देश इत्यत आह । न चेति । स्पष्टास्पष्ट-ग्रहणयोर्यथा देशिनि वृक्षे विरोधापादकत्वं तथा देशे भूतला-दावपि तदा स्यात्तत्रापि हि दूरादावविशेषानुपलम्भस्याविशेषा-दित्यर्थः । ननु स्पष्टग्रहणं नास्त्येव येन विरोधः स्यात्, किन्तु ग्रहणानि निर्विकल्पकानि सर्वत्र स्पष्टान्येव, सविकल्पकं तु सर्व-विशेषविषयं यत्र नोत्पद्यते तदस्पष्टग्रहणमिष्यत इति कुतो विरोध इत्यत आह । न च दवीयांस इति । योगविमलाञ्जन दृष्टिर्योगी, तदन्योऽस्मदादिस्तस्यापि तारावृक्षस्य दवीयांसो गतयः प्रतिभान्तीति न शक्यं वक्तुमतो यदुक्तं दवीयांसोपि विशेषाः स्फुरन्ति न तु निश्चीयन्त इति, तन्न युक्तमित्यर्थः ॥

---

भगी० टी० । ननु कारणीभूतज्ञानविषयतया वृक्षादि-देशस्य प्रतिनियमः स्यादित्यत आह । न चेति । अधिपति-प्रत्ययत्वं निर्विकल्पकत्वम् । त्वया देशस्य निर्विकल्पकविषयत्वं

नाङ्गीक्रियते, अङ्गीकारे वा स एव पारमार्थिको विषय इत्यर्थः । तावन्मात्रमुल्लेखमात्रम् । न चेति । देशो भूतलादिस्तत्र पारमार्थिको विषयो न तु प्रतिनियमविषयो वृक्षादिरित्यर्थः । देशदेशिनोर्धर्मधर्मिभावादभेदे यथा दूरत्वाद्देशस्य विशेषा नोपलभ्यन्ते तथा वृक्षादेरपीति विशेषो नास्तीत्याह । अविशेषादिति । ननु धर्मधर्मिणोरभेदो धर्मिग्रहणं निर्विकल्पकरूपं सर्वधर्मविषयमेव, सविकल्पकं तु बह्वन्यव्यावृत्तिविषयतया पट्वपटुग्रहणरूपमित्याशङ्कां निराकरोति । न चेति । स्फुरणं निर्विकल्पकम् । निश्चयः सविकल्पकः । निर्विकल्पकस्य सविकल्पकोन्नेयत्वात्तदभावे तत्सत्त्वमशक्यनिश्चयमित्यर्थः ॥

---

रघु० टी० । कारणीभूतस्य निर्विकल्पकस्य प्रतिनियतविषयकत्वात् कार्यभूतस्य सविकल्पकस्यापि तथात्वं न पुनरनादिवासनासमुत्थानां शशविषाणादिविकल्पानामित्याद्याशङ्क्य निराकरोति । न चेति । स्वसमानाकारग्रहणजनकत्वं विषयस्याऽऽधिपत्यम् ग्रहणस्य च स्वसमानाकारविषयव्यवस्थापकत्वम्, अनुभवस्य कादाचित्कनीलाद्याकारान्यथानुपपत्त्या नीलाद्याकारविषयसिद्धेः, तथा च तथाविधस्य तथाविधो वा प्रत्ययोऽधिपतिप्रत्ययः । नियतविषयं निर्विकल्पकम्, तस्मात् तदधीनत्वात् सविकल्पकस्य विषयनियमोपपत्तेः ।

अधिपतिर्निर्विकल्पकं प्रत्ययः कारणं यस्य तस्मादित्यपि कश्चित् ।

नियताकारसविकल्पकजननसामर्थ्यं निर्विकल्पकस्याधिपत्यम्, तथा च तस्य सविकल्पकजनकनिर्विकल्पकस्य तथात्वात् सविकल्पके विषयप्रतिनियम इत्यर्थः इत्यन्ये ।

यदि निर्विकल्पकं वृक्षादिदेशमुल्लिखेत् तदा तदनुरूपस्तानो विकल्पोऽपि वृक्षादिविषयकः स्यात् । न च भवतामपि (असतो) वृक्षादेरवयविनो निर्विकल्पकविषयत्वस्य सम्भवोऽन्यविषयकाच्च निर्विकल्पकादन्यविषयकविकल्पोत्पादे नीलनिर्विकल्पकात् पीत-सविकल्पकोत्पादप्रसङ्ग इत्युत्तरतात्पर्याभ्यामाह । अनुभवानामिति । आलम्बते विषयतामात्रेणाश्रयते असन्तमर्थमित्यालम्बनप्रत्ययः सविकल्पकं विज्ञानम्, तथा च तस्यैव कुतो विषयनियमः । तावन्मात्रं असदर्थोल्लेखमात्रम् । आकारे क्वचिद्विषयीभूतायां प्रतीतावालम्बनप्रत्ययव्यवहारः । देशो भूतलादिः । आलम्बनं विषयः । अनुपलब्धेति । पटपटप्रत्ययस्य देशिवद्देशस्यापि विशेषानुपलब्ध्या दवीयसोऽपटुर्नेदीयसश्च तदुपलब्ध्या पटुर्नान्यथेत्यर्थः । स्फुरन्ति निर्विकल्पकेन गृह्यन्ते । न तु निश्चीयन्ते न तु सविकल्पकेन विषयीक्रियन्ते ॥

---

अनिश्चयानुपपत्तेश्च । अनुभूतो ह्यात्मा न निश्चीयत इत्यत्र हेतुर्वाच्यः । वासनानुद्भव इति चेन्न । निःशेषविशेषवन्तं धर्मिणमुपलभ्य विदूरवर्त्तिनस्तदखिलस्मरणेऽपि अनुभवव्यापारानुसारिनिश्चयानुदयात् ।

शङ्क॰ टी॰ । किञ्च निर्विकल्पकगृहीतः सविकल्पकेन न विषयीक्रियत इत्यप्ययुक्तमित्याह । अनिश्चयेति । ननु निर्विकल्पकानन्तरं यत्र संज्ञास्मरणं भवति तत्र तद्विशिष्टज्ञानमुत्पद्यते न तु सर्वत्रेत्याह । वासनेति । अनुभवव्यापारेति । अनुभवव्यापारः साक्षात्त्वम्, तेन निकटे गृहीतसकलविशेषस्य धर्मिणो दूरेऽपि तदनुभवबलात् साक्षात्कारि ज्ञानं स्यात्, तथा च चक्षुषः प्राप्यकारित्वानभ्युपगमात् सामग्र्यन्तरस्य सद्भावादित्यर्थः ॥

---

भगी॰ टी॰ । किञ्च तद्विषयकनिर्विकल्पकसत्त्वे तत्कार्यं सविकल्पकं स्यादेवेत्याह । अनिश्चयेति । वासनेति । संस्कारसहकारिराहित्यर्थः । तदखिलस्मरण इति संस्कारोद्बोधद्योतनार्थम् । यत्रास्याखिलविशेषस्मरणाभावस्तत्रापि तावद्धर्मिविशिष्टधर्म्यनुभव एव संस्कारोद्बोधक इति भावः ॥

---

रघु॰ टी॰ । इति हेतुः इत्यत्र हेतुः । तदखिलेति । स्मर्यतेऽनेनेति स्मरणं, तदखिलगोचरवासनोद्बोधेपीत्यर्थः । अनुभवस्य व्यापारो धर्मोऽशेषविशेषविषयत्वम्, तदनुसारी तद्वान् ॥

---

तथापि चानुभवकल्पनायां सर्वः सर्वदा सर्वं जानाति न तु निश्चिनोतीति किं न स्यात् । भ्रान्तिवशात् तद्विपरीतविशेषनिश्चयेऽनुभूतविशेषानिश्चय इति चेन्न । अनुभववैपरीत्ये निश्चयस्य सर्वथा-

**नाश्वासप्रसङ्गात्। यत्र च विपरीतस्याप्यनिश्चयस्तत्र का वार्त्ता, यथा पराचीनैर्भागैरर्वाचीनानां संयोग-विभागयोरिति।**

शङ्क० टी०। तथापीति। अनिश्चितेप्यर्थं इत्यर्थः। ननु रजतभ्रमेणान्तरिते शुक्तिनिर्विकल्पके शुक्तिनिश्चयो न भवति, तथा च कुतोऽयं नियमो यदनुभूतं निश्चीयत एवेत्याशङ्कते। भ्रान्तीति। अनुभवेति। अनुभवानन्तरं विपरीतनिश्चयश्चेत्तदाऽनुभवमात्रप्रामाण्यवादिनः क्वापि समाश्वासो न स्यात्, शुक्तौ तु निर्विकल्पकं न भवत्येव, किन्तु स्मृतरजतस्य धर्मीन्द्रियसन्निकर्षाद्विपरीतनिश्चय एवोत्पद्यत इति भावः। किञ्च परभागार्वाग्भागयोः संयोगविभागौ प्रत्यक्षाप्रत्यक्षवृत्तितया वायुवनस्पति संयोगविभागवदप्रत्यक्षौ तथापि त्वया ग्रहणमभिधीयते, विपर्ययश्च नास्ति, तत् कथं न निश्चीयत इत्याह। यत्र चेति॥

---

भगी० टी०। ननु तावद्विशेषवद्धर्म्यनुभवेपि तद्विरोधिविशेषनिश्चयो भ्रमरूपस्तन्निश्चयप्रतिबन्धक इत्याह। भ्रान्तेति। भ्रान्तिरत्र तत्कारणं विवक्षितम्। यद्यनुभवविसम्वादो निश्चयस्तदा सर्वत्रानुभवेऽनाश्वासस्तस्य स विकल्पकोऽनेयत्वादित्याह। अनुभवेति। यत्र चेति। यत्र विपरीतभ्रमस्तन्निश्चयप्रतिबन्धको नेत्यर्थः। यथेति। संयोगविभागौ नातिरिक्तौ, किन्तु धर्मिण उत्पादविशेषाविति तयो धर्मिणोऽनुभवेन विशेषदर्शनाद्विपरीतानिश्चये यत्र निश्चयस्तत्रोकरीत्यभाव इत्यर्थः॥

---

रघु॰ टी॰ । जानाति अनुभवति । भ्रान्तिवशात् भ्रान्तिजनकदोषवशात् । ननु निश्चितेर्थे यत्र बाधकमवतरति तत्रैव निश्चयस्यानुभववैपरीत्यं कल्प्यते न सर्वत्रेति नानाश्वासो भवतामपि रजतभ्रमस्यार्थव्यभिचारात् सर्वत्रानाश्वासप्रसङ्ग इत्यत आह । यत्र चेति । न च नियतविषयानादिवासनापरिपाकवशान्नियतविषयविकल्पोत्पाद इति वाच्यम् । अवयविजात्यादेर्वास्तवत्वव्यवस्थापनात् । विकल्पेऽनुभूयमाने साक्षात्त्वे बाधकाभावात् सर्वानुभवसिद्धे च गुणगुणिनोर्भेदे न किञ्चिदपि बाधकमिति ॥

इति गुणगुणिभेदभङ्गवादः ॥

# अथ अनुपलम्भवादः ।

अस्तु तर्हि नैरात्म्यम्, अनुपलब्धेरिति चेन्न ।
सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारतः ।

दृश्यत्वविशेषणान्नैवमिति चेन्न । तदसिद्धेः । परोपगमसिद्धेरदोष इति चेन्न । स्वतन्त्रसाधनत्वात् । यदि परः सहसैव नैवमभ्युपगच्छेत्, नूनं साधनमिदं मूर्छेत्, यदि च परादृष्टिमवधूय दृश्यन्तमभ्युपगच्छेत्, एवमपि सम्भवेत्, न चैवं शक्यम्, तस्य तदुपहितरूपत्वादिति सङ्क्षेपः । विस्तरस्त्वसन्तोऽक्षणिका इतिवदूहनीयः ।

शङ्क० टी० । अनुपलम्भो वेति यदात्मनि बाधकं शङ्कितं तन्निरस्यन्नाह । अस्तु तर्हीति । आत्मा नास्ति, अनुपलम्भेः, शशविषाणवदित्यर्थः । अत्र सर्वानुपलब्धिमादाय सन्दिग्धासिद्धिमाह । सर्वेति । पुरुषविशेषानुपलब्धिमादाय व्यभिचारमाह । स्वादृष्टेरिति । ननु योग्यानुपलम्भेन प्रत्यक्षत एवात्माभावो गृह्यत इत्याशङ्क्याह । दृश्यत्वेति । अनुमानपक्षे दोषमाह । तदसिद्धेरिति । त्वयाऽऽत्मनो दृश्यत्वानभ्युपगमात्, अभ्युपगमे वा सिद्धं नः समीहितमित्यर्थः । नैयायिकैस्तावद्दृश्यत्वमङ्गीक्रियते, तथा च

कथं तदसिद्धिरित्याह । परेति । स्वतन्त्रेति । तर्कः पराभ्युपगमाधीनप्रवृत्तिर्न तु स्वतन्त्र(साधन)मनुमानमपीत्यर्थः । ननु कुतो व्यवस्थेयमित्याह । यदि चेति ।

'सोऽपि यावत् परासिद्धः स्वयं सिद्धो विधीयते ।

भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया' ॥

इत्यर्थः । सहस्रेति स्वारसिकानभ्युपगमवारणाय, अन्यथाऽपसिद्धान्तापत्तेः । मूर्छेदिति । स्वरूपासिद्धं स्यादित्यर्थः । नन्वनुमानमपि परसिद्धेन प्रवर्त्तताम्, को दोषः, स्वदनभ्युपगमस्त्वपसिद्धान्तभयादेव वादिना न कर्त्तव्य इत्यत आह । यदि चेति । परोऽपि दर्शने सति दृश्यत्वमभ्युपगच्छेत् न तु तदन्तरेण दृश्यत्वमात्रमित्यर्थः । तस्येति । दृश्यत्वस्य दर्शनोपहितत्वादित्यर्थः । विस्तरस्त्विति । असन्तोऽक्षणिकाः क्रमयौगपद्यरहितत्वादित्यत्राश्रयासिद्धिर्बाधो वा, तथाऽऽत्मा नास्त्यनुपलब्धेरित्यत्रापीत्यर्थः ॥

---

भगी॰ टी॰ । चतुर्थमात्मनि बाधकं दूषयितुमुपन्यस्यति । अस्तु तर्हीति । देहादिभिन्नो नास्त्यात्मा, अनुपलम्भादित्यर्थः । अत्र सर्वथानुपलम्भो विवक्षितः स्वानुपलम्भो वा । आद्ये सर्वत्रेति । यद्यप्यनुपलम्भो ज्ञानमात्राभावः स्वरूपसन्नेव हेतुरिति तत्र सन्देहाभिधानं न युक्तम्, तथाप्यात्मा नास्त्यनुपलम्भादित्यनेनैव शब्देन ज्ञानमात्राभावे विरोध इति भावः । अन्त्ये स्वेति । त्वददृष्टस्यापि वस्तुनः सत्त्वादित्यर्थः । ननु न व्यभिचारः, योग्यतया स्वानुपलम्भस्य विशेषणत्वादित्याह । दृश्यत्वेति । त्वया

तस्य दृश्यत्वानभ्युपगमाद्भ्युपगमे सिद्ध आत्मेत्यत आह । तदसिद्धेरिति । नैयायिकैस्तथाऽभ्युपगमात् परसिद्धेन दृश्यत्वं स्वानुपलम्भो विशेषणमित्याह । परेति । तर्क इवानुमानमपि परसिद्धेन न प्रवर्त्तते, स्वतोऽसिद्धे तु का क्रियेत्याह । स्वतश्चेति । नन्वनुमानमपि परसिद्धेन प्रवर्त्स्यति विशेषाभावादित्यत आह । यदि चेति । परानुमानदूषणार्थं यदि नैयायिको न तथाऽङ्गीकुर्यात्, तदेदं साधनं न स्यादित्यर्थः । यदि चेति । परैरात्मनो दृश्यत्वस्वीकारे अनुपलम्भो नेष्यत इति तथा प्रसिद्धेरेवेत्यर्थः । तस्येति । दृश्यस्य दृश्युपस्थितत्वादित्यर्थः । ननु शशशृङ्गस्येवासत्ख्यात्युपस्थितस्य निषेधः स्यादित्यत आह । विस्तरस्त्विति । असत्ख्यातेर्दूषितत्वात्तत्रापि शशे शृङ्गं नास्तीति निषिध्यते न तु शशशृङ्गम्, नास्त्यात्मा अजातत्वात् शशशृङ्गवदित्यत्राश्रयसिद्ध्यसिद्धिभ्यां व्याघातः, प्रतियोग्यप्रसिद्ध्या शरीरादावपि धर्मिणि तन्निषेधोऽशक्य इत्यर्थः ॥

---

रघु० टी० । तुरीयं बाधकमाशङ्कते । अस्तु तर्हीति । अनुपलब्धिर्न ज्ञानमात्राभावो नास्त्यात्मेत्येव ज्ञानात्, परन्तु साक्षात्काराभावः, तत्राह । सर्वादृष्टेरित्यादि । मन्दत्वादित्यापातत:, व्यतिरेक एव च व्यक्तीभविष्यति । व्यभिचारस्त्वतीन्द्रियानभ्युपगमेन शक्यपरिहारत्वान्नोद्भावितः । नैवम् न स्वादृष्टेर्व्यभिचारः । स्वतश्चेति । प्रसङ्गो हि पराभ्युपगमसिद्धेन हेतुना प्रवर्त्तते, पराभ्युपगमेऽनिष्टप्रसञ्जनरूपत्वात्, नानुमानम्, तदुक्तम् ।

यस्तु हेतुः परासिद्धः स्वतः सिद्धोऽभिधीयते ।
भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया' ॥

इति । सोपहासमाह । यदि चेति । सहसा अपसिद्धान्त-भयविरहेण । येन यद्दृश्यं तदन्येन तस्यादृष्टिरसत्त्वसाधिका तेनैव वा । नाद्यः, वाद्यदृश्यस्य प्रतिवादिबुद्ध्यादेः सत्त्वोपगमात् । द्वितीये तु येनं यद्दृश्यं तद्दृष्टेस्तत्र सत्त्वादसिद्धिरित्याह । यदि चेति । एतेन योग्यानुपलब्ध्या तन्निषेध इत्यपि प्रत्युक्तम् । दृश्यं दृश्यत्वविशिष्टम् । तं आत्मानम् । तस्य दृश्यत्वविशिष्टस्य । इतिवत् इत्यत्रेत्र । यथा स्थिरस्य धर्मिणः सिद्ध्यसिद्ध्योर्बाधाश्रया-सिद्धिभ्यां तत्रासत्त्वसाधनमशक्यं तथाऽऽत्मन्यपीति । किं चासत्त्वं सात्यन्ताभावप्रतियोगित्वम्, सिद्धसाधनात् । नापि सर्वकालाव-च्छेदेन सर्वदेशवृत्तेरत्यन्ताभावस्य प्रतियोगित्वम्, सर्वत्र देशे सर्वस्य कालस्यावच्छेदकत्वासम्भवात्, क्वचिदन्यत्राप्यप्रसिद्धेः, अस-त्ख्यातेर्निरासात्, आत्मनि सिद्धसाधनाच्च । नापि प्रागभावध्वंस-प्रतियोगित्वम्, घटादावविवादात् । आत्मनि च वीतरागजन्मा-दर्शनादित्यादिना न्यायेनानादित्वसिद्ध्याऽनादेश्च भावस्य कारणा-भावाद् ध्वंसासम्भवेन बाधात्, साधकविरहाच्च, सेयत्वद्रव्यत्वादे-रप्रयोजकत्वात् । नापि सत्ताया जातेर्विरहः, घटादाविवात्मन्यपि तत्साधकस्य प्रत्यक्षस्य सम्भवात्, नयात्वेपि च धर्मिणोऽनपायात् । अत एव न देशकालसम्बन्धविरहः, तत्साधकमानबाधितत्वात्, साधकाभावाच्च । अत एव न स्वरूपसत्त्वविरहः, स्वरूपसिद्ध्यसिद्धिभ्यां व्याघाताच्च । अत एव च न प्रमेयत्वाभावः, साध्याप्रसिद्धेश्च ।

नापि प्रमेयत्वव्यापकार्थक्रियाविरहेण तदभावसाधनम्, तथा केवलव्यतिरेकिणो मानत्वानभ्युपगमात्, व्याप्तेः पक्षधर्मतायाश्चासिद्धेः। अस्य च ज्ञानस्य प्रामाण्ये व्याघातोऽप्रामाण्ये तु कुतोऽभिमतसिद्धिरित्यादि स्वयमूहनीयम् ॥

---

अथात्मसद्भावे किं प्रमाणम्। प्रत्यक्षमेव तावत्, अहमिति विकल्पस्य प्राणभृन्मात्रसिद्धत्वात्। न चायमवस्तुकः सन्दिग्धवस्तुको वा, अशाब्दत्वाद-प्रतिक्षेपाच्च। न च लैङ्गिकः, अननुसंहितलिङ्गस्यापि स्वप्रत्ययात्। न च स्मृतिरियम्, अननुभूते तदनुपपत्तेः। अनादिवासनावशादनादिरयमवस्तुको विकल्प इत्यपि न युक्तम्, नीलादिविकल्पसाधारण्यात्। इह वासनामुपादायानाश्वासे प्रमाणान्तरेपि कः समाश्वासो यतो नीलादिविकल्पेषु समाश्वासः स्यात्।

शङ्क० टी०। ननु साधकबाधकमानाभावादात्मनि सन्देहः स्यादतः साधकमाह। प्रत्यक्षमिति। आगमानुमानयोरपि आत्मनि सत्त्वे प्रत्यक्षस्योपजीव्यत्वात्तदेव प्रथममुक्तम्। ननु शशविषाणप्रत्ययवदहमिति प्रत्ययः स्यादित्यत आह। न चेति। बौद्धैः शब्दादिविकल्पानामवस्तुकत्वाभ्युपगमादाह। अशाब्दत्वादिति। सन्दिग्धवस्तुकतायामाह। अप्रतिक्षेपादिति। नायं स्थाणुरितिवन्नाहमिति प्रतिक्षेपाभावादित्यर्थः। न च लैङ्गिक

इति । यद्यपि लैङ्गिकमप्यसत्ख्यातिरूपमेव तन्मते, तथापि हेत्वन्तरमप्याह । अननुसंहितेति । नन्वाधुनिकी वासना-मूलानुभवमपेक्षते नत्वनादिरपीत्याशङ्क्य निराकरोति । अना-दीति । तर्हि नीलाद्यपि पारमार्थिकं न स्यादनादिवासना-वशादेव तेषामपि स्फुरणसम्भवादित्याह । नीलादीति । तदेव स्फुटयति । इहेति । आत्मनीत्यर्थः ॥

---

भगी० टी० । आत्मनि बाधकोद्धारेपि साधकं विना सन्देहः स्यादित्यात्मतत्त्वस्याविवेकस्तदवस्थ एवेत्याह । अथेति । यद्यप्यात्मनि शब्दानुमाने अपि माने स्तस्तथापि तयोः प्रत्यक्षोप-जीवकत्वात् प्रत्यक्षमेव मानमाह । प्रत्यक्षमिति । न च तदसिद्धमित्याह । अहमितीति । नन्वसत्ययं विकल्पः शश-विषाणविकल्पवदवस्तुकस्तथात्वेन सन्दिग्धो वेति न मानमित्याशङ्कां निराकरोति । न चेति । बौद्धनये शब्दादिविकल्पा व्यावृत्तिमात्र-विषयतयाऽलीकविषया यथाऽयं तथेत्यर्थः । अप्रतिक्षेपादबाधा-दित्यर्थः । ननु शाब्दत्वलैङ्गिकत्वाभावेऽप्यनादिवासनाजन्यतया शशविषाणविकल्पव(त्तया)दसत्ख्यातिरूपः स्यादित्याशङ्क्य निरा-करोति । अनादीति । अयमहमिति विकल्पः यदि बाधका-भावेऽपि तथा तदा नीलादिविकल्पानामपि वासनामात्रजन्यत्व-सम्भावनयापि अवस्तुकत्वे का प्रत्याशेत्यर्थः ॥

---

रघु॰ टी॰। प्रत्यक्षमेवेति। तत्रात्मा न तावत्प्रत्यक्षतो गृह्यत इति भाष्यं पुनरापाततो विप्रतिपन्नं प्रति अहमिति प्रत्यक्षं शरीरादिभिन्न आत्मनि प्रमाणयितुं न शक्यत इत्येतत्परम्। अवस्तुको वस्त्वननुरोधी व्यावृत्तिविषयकः। तादृशो हि विकल्पः शब्दाल्लिङ्गात्सादृश्यादेरनादेर्वा वासनातः, न चायं तथेत्याह। अशाब्दत्वादित्यादिना। सत्यपि च शाब्दत्वादौ नावस्तुकत्वमबाधादित्याह। अप्रतिक्षेपादिति। विनापि बाधकमवस्तुकत्वे नीलादिविकल्पानामपि तथात्वप्रसङ्ग इति भावः। अननुभूत इति स्वमते, अज्ञात इति परमते। अयं अहमिति विकल्पः। वासनाविकल्पसन्तानयोरनादित्वाच्च बीजाङ्कुरवत् कार्यकारणभावासम्भव इति भावः। सन्दिग्धवस्तुकत्वं निरस्यति। इष्टेति। यद्यान्तरेऽहमिति विकल्पे वस्त्वननुरोधिवासनासमुत्थत्वसम्भावनया सवस्तुकत्वसन्देहस्तदा बाह्येष्वपि नयनादिसमुत्थेषु विकल्पेषु तथैव तत्सन्देहात्क्वचिदपि विकल्पे सवस्तुकत्वनिर्णयो न स्यादित्यर्थः॥

---

तस्माद्वासनामात्रवादं विहायागन्तुकमपि किञ्चित् कारणं वाच्यम्, तच्चासमानासमशब्दौ वा लिङ्गतदाभासौ वा प्रत्यक्षतदाभासौ वेति। तत्र यथा प्रथममध्यमप्रकाराभावान्नीलविकल्पश्चरमं कल्पमालम्बते तथाऽहमिति विकल्पोऽपि। तत्रायं प्रत्यक्षपृष्ठभावित्वे साक्षादेव सवस्तुकः, तदाभासे तु मूलेऽस्य पारम्पर्यात् सवस्तुतेति।

शङ्क० टी० । तस्मादिति । नीलाद्युपप्लवभयादित्यर्थः । प्रथममभ्युपेति । पूर्वदूषितत्वादित्यर्थः । परममिति । प्रत्यक्ष-तदाभासपक्षमित्यर्थः । प्रत्यक्षाभासमूलतायामपि सवस्तुकतामाह । तत्रेति । अहमिति विकल्पस्य निर्विकल्पकजन्यत्वे नीलादि-विकल्पवत् सवस्तुकता, प्रत्यक्षाभासमूलत्वे तु परम्परया मूलभूतं प्रत्यक्षमभ्युपेयं प्रमापूर्वकत्वादारोपस्येत्यर्थः ॥

---

भगी० टी० । प्रत्यक्षाभासमूलकत्वे सवस्तुकत्वमुपपादयितु-माह । तत्रेति । अहमिति । विकल्पो यदि वस्तुविषया-व्यवहितपूर्ववर्त्तिनिर्विकल्पकसम्बद्धो यदि वा प्रत्यक्षाभासजन्य-स्तथापि परम्परया आरोप्यरजतादिनिर्विकल्पकपूर्वकत्वेनोभयथापि सवस्तुकत्वमस्त्येवेत्यर्थः ॥

---

रघु० टी० । प्रत्यक्षं निर्विकल्पकम् । साक्षात् निर्वि-कल्पकातिरिक्तव्यवधानमन्तरेण । प्रत्यक्षाभासमूलकत्वेपि सवस्तुकत्वं व्यवस्थापयति । तदाभास इति । पारम्पर्याद्वस्तुविषयकनिर्वि-कल्पकपृष्ठभाविसविकल्पकप्रभववासनाप्रभवस्मृतिजन्यत्वात् ॥

न च बाह्यप्रत्यक्षनिवृत्तावेव निर्मूलत्वम्, बुद्धि-विकल्पस्यापि तथात्वप्रसङ्गात् । तत्र स्वसम्वेदनं मूलमिहापि मानसप्रत्यक्षमिति न कश्चिद्विशेषः ।

शङ्क० टी०। ननु यद्यात्मास्ति तदा नीलादिवद्बहिरिन्द्रियवेद्यं स्यादित्यत आह। न चेति। ननु बुद्धिः स्वयमेव स्वस्मिन् प्रमाणं न त्वात्मा तथा, तस्य जडत्वादित्यत आह। तच्चेति। मानसमिति। वेदनमित्यनुषज्यते। तथा च मानसप्रत्यक्षसिद्ध एवात्मेत्यर्थः॥

---

भगी० टी०। ननु प्रत्यक्षस्य बहिःकरणजन्यत्वदर्शनाच्चात्र च तदभावान्न प्रत्यक्षत्वमिति वासनाप्रभवत्वमेव स्यादित्यत आह। न चेति। यथाऽन्यस्य स्वप्रकाशकत्वेऽपि बुद्धिस्त्वन्मते स्वप्रकाशा यथानुव्यवसायोऽन्तःकरणजन्यस्तथाऽऽत्मप्रत्यक्षमपीत्यर्थः॥

---

रघु० टी०। बाह्यं बहिरिन्द्रियजं प्रत्यक्षं निर्विकल्पकम्। निर्मूलत्वम् मूलभूतवस्तुशून्यत्वम्। बुद्धीति। उपलक्षणं चेदम्। सुखादिविकल्पानामपि मानसप्रत्यक्षमूलकानामवस्तुकत्वप्रसङ्गो द्रष्टव्यः। साधितं च सुखादीनां ज्ञानातिरिक्तत्वमाकरे॥

---

शरीरादिवस्तुको भविष्यतीति चेन्न, निरुपाधिशरीरेन्द्रियबुद्धितत्समुदायालम्बनत्वेऽतिप्रसङ्गात्। स्वसम्बन्धिशरीरादावयं स्यादिति वाच्यम्, तत्र कः स्वार्थ इति वचनीयम्। अनन्यत्वं स्वत्वं सर्वभावानाम्, तथा च यदा तेनैव तदनुभूयते तदा प्रत्येतुः प्रत्येतव्यादव्यतिरेकादहमिति स्यात्। अत एव

घटादयो न कदाचिदनन्यानुभवितृका इति न कदाप्यहमास्पदमिति चेत्, एवं तर्हि त्वन्मतेप्यहं प्रत्ययः शरीरादावारोपरूप एव, ततः प्रत्येतुरन्यत्वात् ।

शङ्क० टी० । नन्वयमहं प्रत्ययः शरीर एव स्थौल्यादिसामानाधिकरण्येनाहन्त्वघटादित्याशङ्कते । शरीरेति । एवं सति चैत्रशरीरेपि मैत्रस्याहं प्रत्ययः स्यादिति । स्वसम्बन्धिनीत्यन्तर्भाव्य प्रत्ययशङ्कामाह । निरूपाधीति । बुद्धिचैतनिकतत्समुदायचैतनिकत्वादिनावपि तुल्यन्यायेन प्रत्याख्यातुं तदन्तर्भावेन शङ्कितम् । तत्रेति । स्वपदेनात्मैव वाच्यः, तथा च सिद्धं नः समीहितमिति भावः । अनन्यत्वं अन्योन्याभावात्यन्ताभाववत्त्वमित्यर्थः । एवं सति स एवातिप्रसङ्ग इत्यत आह । तथा चेति । प्रत्येता यत्र प्रत्येतव्यस्तत्राहमिति प्रत्यय इति नातिप्रसङ्ग इत्यर्थः । बुद्धिचैतनिकं प्रत्याह । एवं तर्हीति । शरीरादेः प्रतिपत्तृभिन्नत्वादित्यर्थः ॥

---

भगी० टी० । अतिप्रसङ्गादिति । चैत्रस्यापि मैत्रशरीरेऽहमिति धीः स्यादित्यर्थः । तत्रेति । आत्मानं विहायेति शेषः । अनन्यत्वमिति । यदन्योन्याभावात्यन्ताभाववत्त्वं यस्य तत्त्वं स्वत्वमित्यर्थः । तदेति । प्रतीतेरेवाश्रयो यदा प्रतीयते तदाऽहमिति व्यवहारस्तत्रेत्यर्थः । बुद्ध्यात्मतावादिनं प्रत्याह । एवन्तर्हीति ॥

---

रघु० टी०। कः स्वार्थ इति। यस्यात्मनः सम्बन्धि यच्छरीरं तस्य तत्राहं गौर इत्यादिकः प्रत्यय इति नियमो नातिरिक्तात्मसद्भावं विनेत्यर्थः। यथा भवतां स्वस्मिन्नात्मनि अहं जाने अहं सुखीत्यादिका बुद्धिस्तथाऽस्माकमपि स्वस्मिन्नेव शरीरे चेत्याशङ्कते। अनन्यत्वमिति। यथाश्रुतमनन्यत्वं साधारणमतस्तद्विवेचयति। तथा चेत्यादिना। नैयायिकादीनां सामान्यतोऽहन्त्वमात्मत्वमेव, तत्तदहन्त्वं तु तत्तदात्मत्वम्, स्वाश्रय एव च प्रतीतेरहमास्पदम्, तत्रास्वप्रकाशे स्वाश्रयत्वं स्वरूपसम्बन्धियामकं स्वप्रकाशे तु ज्ञायमानमपीति मन्तव्यम्। ततः प्रत्येतुरिति। अहं प्रत्ययो हि यदि साक्षाद्विषयसमुत्थो यदि वा विषयसविकल्पकपृष्ठभावी उभयथापि पूर्वभाविनं विषयमपेक्षते, न च भवतां तस्य क्षणिकस्योदीच्यप्रत्ययाश्रयत्वम्, नापि तदुपादानत्वम्, अत्यन्तविसदृशस्याप्रकृतेश्च भवतामुपादानत्वासम्भवादिति। न च प्रतीत्याश्रयत्वोपादानत्वाभ्यामन्यत् प्रत्येतृत्वं नामेति॥

---

बुद्धौ मुख्य एवेति चेन्न। तस्याः क्रियात्वेनानुभूयमानाया भिन्नस्य कर्त्तुरहं च्छिनद्मीतिवत् अहं जानामीत्यनुभवात्। नीलादिप्रत्येतव्याकारवत् प्रतिपत्त्याकारोपि प्रतिपत्तेरेवायमात्मा तथा भासत इति चेत्, तर्हि प्रत्येतव्यप्रतिपत्त्याकारयोस्तुल्ययोगक्षेमत्वात् सिद्धं नः समीहितम्। अस्तु स्वोपादानमात्रमिति चेन्न। तत्प्रतिभासने तदाकारस्यापि प्रतिभास-

प्रसङ्गात्, आकारमन्तरेणाकारिणोऽनवभासात्। प्रवृत्तिसन्तानान्यो बुद्धिसन्तानः प्रतिपत्ता, वयं तमालयविज्ञानमाचक्ष्मह इति चेत्, अस्तु तर्हि प्रवृत्तिविज्ञानोपादानमनादिनिधनः प्रतिपत्ता। स किं सन्तन्यमानज्ञानरूपस्तद्विपरीतो वेति चिन्ताऽवशिष्यते, निःशेषिता चासौ प्रागिति।

शङ्क० टी०। बुद्धिस्तत्रोपाधिरित्याह। बुद्धाविति। अहन्त्वाधिकरणे क्रियालेन भासमाना बुद्धिर्नाहङ्कारास्पदं भवितुमर्हतीत्याह। तस्या इति। ननु यथा नीलादिबुद्धौ नीलादिराकारस्तथा प्रतिपत्तेराकारोऽहन्त्वं प्रतिपत्तौ भासत इति शङ्कते। नीलादीति। एवं यथा नीलादिः प्रतीतिभिन्नस्तथा प्रतिपत्तापि प्रतिपत्तिभिन्न एव तस्याकारस्तत्र भासत इति सिद्धं नः समीहितमित्याह। तर्हीति। नन्वहमाकारायाः प्रतिपत्तेर्या प्रतिपत्तिरुपादानभूता सैवाहन्त्वेन भासत इत्याह। अस्त्विति। स्वोपादानमात्रमहं प्रत्ययविषय इति शेषः। स्वोपादानं हि नीलादिविज्ञानं यदि तदा तदुल्लिखद्विज्ञानं नीलाद्युल्लिखेत्, तथा च काहं प्रत्यय इत्याह। तत्प्रतिभासन इति। आकारेति। प्रवृत्तिविज्ञानाकारो नीलादिस्तमन्तरेणाकारिण उपादानस्य नीलादिविज्ञानस्यानवभासनादित्यर्थः। आलयविज्ञानमुपादानपदेनोच्यते तस्य चाहंत्वमात्रमाकार इति न नीलादिभानप्रसङ्ग इत्याह। प्रवृत्तीति। अनादिनिधन इति। सन्तानाभिप्रायम्। प्रागेवेति। क्षणभङ्गप्रकरण एवेत्यर्थः॥

भगी॰ टी॰। न ज्ञानात्मकत्वमहमर्थस्य ज्ञानक्रियाकर्तृत्वेन तस्यानुभूयमानतया ततो भेदादित्याह। तथा इति। ननु यथा नीलादिबुद्धौ नीलाद्याकारत्वं तथा ज्ञानरूपस्यैवात्मनोऽहमिति धीविषयत्वम् इति न ज्ञानभिन्नात्मसिद्धिरित्याह। अस्त्विति। तदहमिति ज्ञाने तदुपादाननीलादिप्रवृत्तिविज्ञानविषयेतिप्रतिपत्तौ प्रतिपत्त्राकारत्वं भासत इत्याह। नीलादीति। तावतापि नीलादिवत्तज्जन्यज्ञानभिन्न आत्मा सिद्ध एवेत्याह। तर्हीति। नन्वयं यस्या बुद्धेर्यदुपादानं स एवात्मा प्रवृत्तिविज्ञानभिन्नानिर्विषयानाद्यनन्तः प्रतिपत्ता सिद्ध एव, स्थैर्यं परं विप्रतिपत्तिस्तच्च साधितमेवेत्याह। अस्त्विति। यद्यप्यालयविज्ञानस्य क्षणिकत्वानादिनिधनत्वम्, तथापि प्रतिपत्तृतावच्छेदकरूपवद्दूषितः कश्चो नास्तीति भावः। प्रागेवेति। क्षणभङ्गनिरासेनेत्यर्थः॥

---

रघु॰ टी॰। मुख्यो यथार्थः। सैव बुद्धिः प्रतिपत्ती तत्पूर्वभाविबुद्ध्यन्तरं वा। तदपि नीलाद्याकारं स्वमात्रसाक्षिकं वा। आद्ये तथा इत्यादि। स्वस्य स्वाश्रयत्वस्वोपादानत्वयोरसम्भवादित्यर्थः। अन्तरा विज्ञानवादी प्रत्यवतिष्ठते। नीलादीति। तथा चाहमाकारोपि ज्ञानस्वरूपमेवेति नातिरिक्तात्मसिद्धिरिति भावः। सिद्धं ज्ञानातिरिक्तविषयव्यवस्थापनात्। द्वितीयं शङ्कते। अस्त्वित्यादि। अहमास्पदमिति शेषः। उपादानं सजातीयं कारणं बुद्ध्यन्तरम्। मात्रपदेन विजातीयं समवायिकारणमतिरिक्तमात्मानं व्यवच्छिनत्ति। आकारमिति। तथा-

काराकारिणोरभेदात् अस्माकं तु विषयविशिष्टस्यैव व्यवसायस्यानुव्यवसाये भासनात्। तृतीयं प्रकृते। प्रवृत्तीति। प्रतिपत्ता प्रतिपत्तेरुपादानम्। अस्तित्यादि। उपादानं परेषां सजातीयं कारणमस्माकं समवायि। अनादिनिधनः समानकालीनानेकावृत्तिसर्वकालसम्बन्धितावच्छेदकरूपवान्। तत्र रूपं परेषां तत्सन्तानत्वम्, अस्माकं तु तत्तदात्मत्वम्। प्रतिपत्ता अहमास्पदं प्रतिपत्त्याश्रयो वा। प्रागेव क्षणभङ्गभङ्गेन॥

---

कः पुनरत्र न्यायः। प्रतिसन्धानम्। तथ्यमिदमित्यसिद्धमतथ्यञ्च विरुद्धम् अविशिष्टमनैकान्तिकमिति चेन्न। हेत्वर्थानवबोधात्। नहि प्रत्यभिज्ञानमात्रमत्र विवक्षितम्। तत् किं कार्यकारणयोरेकसन्तानप्रतिनियमः। सोऽपि विरुद्ध इति चेत्? एषोऽपि न विवक्षितो नः। कस्तर्हि? पूर्वापरधियामेककर्तृतया विनिश्चयः। एषोऽपि तासामुपादानोपादेयभावेनाऽप्युपपद्यत इति चेन्न। स्थैर्यस्थितौ तदभावात्। क्षणिकत्वेऽपि नैकजातीयत्वे सति तदुत्पत्तिरेवोपादानोपादेयभावः। शिष्याचार्यधियामपि तथाभावप्रसङ्गात्।

प्रकृ० टी०। अत्रेति। स्थिरात्मनीत्यर्थः। न्यायरूपिमत्युत्तरमाह। प्रतिसन्धानमिति। वस्तुतः प्रत्यक्षमेव प्रतिसन्धानं स्वैर्ये प्रमाणं, कथायान्तु प्रत्यक्षमप्यनुमानच्छाययैव प्रयोक्तव्यम्,

तथा च प्रयोगः अहमिति प्रत्ययालम्बनं स्थिरं तादूप्येण प्रत्यभिज्ञायमानत्वात् घटादिवत्। प्रमारूपं प्रत्यभिज्ञानं स्वरूपासिद्धं, भ्रमरूपं चेद्विरुद्धं, प्रत्यभिज्ञानमात्रन्तु ज्वालादि-प्रत्यभिज्ञानेऽनैकान्तिकमित्याह। तथ्यमिति। कार्येति। कार्य-कारणयोरनुभवस्मरणयोरेकसन्ताननियमः सन्तानान्तरे तदनुप-पत्तेरित्यर्थः। सोऽपीति। कार्यकारणसन्तानस्य भेदनियतत्वा-दित्यर्थः। आशयमुद्घाटयति। पूर्वापरधियामिति। योऽहं रूपमद्राक्षं सोऽहं स्पर्शं स्पृशामि योऽहं घटमन्वभवं सोऽहं तं स्मरामि इति प्रत्यभिज्ञानमनेककर्तृकाद्व्यावर्तमानमेककर्तृकतायां विश्राम्यतीत्यर्थः। पूर्वं प्रत्यभिज्ञायमानत्वं स्थैर्येऽन्वयप्राधान्येनैव शङ्कितमित्यविरोधः। अन्यथासिद्धिमाह। एषोऽपीति। धिया-मुपादानोपादेयभावव्यतिरेकप्रयुक्तः चैत्रमैत्रयोः प्रतिसन्धान-व्यतिरेको नैककर्तृकव्यतिरेकप्रयुक्त इत्यर्थः। तदभावादिति। धियामुपादानोपादेयभावाभावादित्यर्थः। अभ्युपगमवादेनाह। क्षणिकत्वेऽपीति। साजात्ये सति कार्यकारणभाव एवोपादानो-पादेयभावलक्षणं तच्च धियामस्त्येवेत्यर्थः। अत्रातिव्याप्तिमाह। नैकेति। न च साक्षात्कारणत्वं विवक्षितमिह तु वचनादिद्वारा तदिति वाच्यम्। स्मृत्यनुभवयोस्तदभावात्॥

---

भगी० टी०। यद्यपि कथादशायां प्रत्यक्षमप्यनुमान-च्छाययैव प्रयोजकमिति समयः तथाऽपि न्यायान्तरमाह। प्रति-

सन्धानमिति । स एवाहमिति प्रत्यभिज्ञानं ज्ञातुरभेदसाधकमिति भावः । तथ्यमिति । यथार्थं प्रत्यभिज्ञानमसिद्धमयथार्थं भेदपर्यवसायित्वेनाभेदविरुद्धं तन्मात्रं च ज्वालादावनैकान्तिकमित्यर्थः । कार्यकारणयोः पूर्वापरप्रत्यययोरित्यर्थः । सोऽपीति । तस्य भेद एवोपपत्तेरित्यर्थः । पूर्वेति । योऽहं रूपमुपलब्धवान् सोऽहं स्पृशामीति पूर्वापरयोरेककर्तृकतासाक्षात्कारोऽनेककर्तृकाद्व्यावृत्त एककर्तृकत्वं साधयति । तथा ह्यन्तिमबुद्धिः पूर्वबुद्ध्युपादानोपादेया तावत्काले स्थायिकर्तृका वा एककर्तृकतया प्रत्यक्षविषयधीत्वादिति व्यतिरेकीत्यर्थः । ननु तथा प्रतिसन्धानव्यतिरेके कार्यकारणभावाभाव उपाधिरतः प्रतिसन्धाने कार्यकारणभावः प्रयोजक इत्यन्वयेऽन्यथासिद्धिः, कर्तृभेदेऽपि विलक्षणोत्पादक्रमेणैव प्रतिसन्धानरूपोत्पादादित्याह । एषोऽपीति । स्थैर्यपक्षे भासनं मिथो नोपादानोपादेयभाव इत्याह । स्थैर्येति । ननु सजातीयकारणस्यैवोपादानत्वाद्बुद्धीनां तथात्वे न विरोध इत्याह । क्षणिकत्वेऽपीति । यदि कार्यकारणभावः साक्षाद्विवक्षितस्तदा सामाद्यन्तरितबुद्धीनां प्रतिसन्धानं न स्यादिति परम्परया स वाच्यस्तत्राह । शिष्येति । शिष्याचार्यबुद्ध्योरपि ज्ञानविवक्षाप्रयत्नस्थानाभिघातशब्दोत्पत्तिक्रमेण परम्परया कार्यकारणभावादित्यर्थः । एतच्चोपलक्षणम् । कार्यकारणभावेऽप्यनन्तव्यवहितविशेषणज्ञानजन्यविशिष्टबुद्धौ प्रतिसन्धानाभाव इत्यपि मन्तव्यम् । यद्यप्युपाधेरतिप्रसक्तत्वेऽपि साध्यव्यापकत्वमक्षतमेव

तथाप्यन्वय उपाधौ साध्यसिद्धिप्रसङ्गो व्यतिरेके तु साध्याव्यापकत्वं अप्रतिसन्धाने कार्यकारणभावाभावस्याव्यापकत्वात् ॥

---

रघु० टी० । स्यादेतत् सिद्ध्यतु क्षणभङ्गो मा वा सैत्सीत् स्थिरः पुनरात्मा कुतः सिद्ध इति पृच्छति । कः पुनरिति । यद्यपि स एवाहमिति प्रत्यभिज्ञानं स्थैर्ये प्रत्यक्षमेव प्रमाणं, विना बाधकं धियामौत्सर्गिकस्य प्रामाण्यस्यापवदितुमशक्यत्वात्, तथाऽप्यनुमानमुद्रया तस्य गमकत्वे दोषमाशङ्कते । तथ्यमित्यादि । तथ्यं यथार्थम् । विरुद्धम् । असेदभ्रमस्य भेदव्याप्तत्वात् । अविशिष्टं प्रत्यभिज्ञानसामान्यम् । अनैकान्तिकं ज्ञानादौ । तत्किमित्यादि । किं वितर्के । विवक्षित इति विपरिणतेन शेषेऽन्वयः । कार्यकारणयोः स्मरणानुभवयोः । सोऽपि विरुद्धः सन्तानस्य भेदव्याप्तत्वात्[1] । पूर्वेति । योऽहं घटमद्राक्षं सोऽहमिदानीं तं स्मरामीति पूर्वापरधियामेकाश्रयत्वनिश्चय इत्यर्थः । नन्वयं निश्चयो निश्चेतुः पूर्वापरकालावस्थायित्वे हेतुः पूर्वापरप्रत्ययवतोरभेदे वा, आद्ये ज्ञानमात्रस्य गमकत्वे शेषवैयर्थ्यं, द्वितीये तु असमाधारणोऽयं व्यभिचारी[2], प्रमातृरूपत्वसिद्धः, साक्षात्कारोऽपि चौपनयिकोऽंशेऽलौकिकश्चानेकान्तः सर्वांशे लौकिकत्वसिद्धः इति । सैवम् । परप्रतीतिः पूर्वप्रतीत्याश्रयाश्रिता पूर्वप्रतीत्याश्रये साक्षात्क्रियमाणत्वात् पूर्वप्रतीतिवदित्यर्थात् । न चेदमसिद्धं योऽहमद्राक्षं सोऽहं स्पृशामि योऽहमस्याक्षं सोऽहं स्मरामीति पूर्वप्रतीत्याश्रये

---

(१) भेदनियतत्वादिति २ पु० पा० ।

(२) परेषामसिद्धव्याप्तिकं चेत्यधिकपाठः ३ पु० दृश्यते ।

परप्रत्ययवत्त्वग्रहणात् । साक्षात्कारश्च लौकिको ग्राह्यः । योऽहं घटमद्राक्षं सोऽहं स्पृशामीति प्रतिसन्धानं कर्तृभेदेऽनुपपद्यमानं पूर्वापरप्रतीत्योरेककर्तृकत्वं व्यवस्थापयति प्रत्येतव्यादनन्यस्यैव प्रत्येतुरहमास्पदत्वात् नहि भवति चैत्रोऽहं यमद्राक्षं मैत्रोऽहं तं स्पृशामीति पुनराकरच्छायात्राही पन्थाः ।

पूर्वापरप्रतीतिमतोरभेदप्रतिसन्धानं तयोरभेदसाधकं विरुद्धधर्मसंसर्गविरहिविषयत्वं च विशेषणं ग्रन्थकृदेव दास्यतीत्यपि केचित् ।

यद्वा प्रतिसन्धानेन प्रतिसन्धानप्रयोजकं स्मरणमभिहितम् । अन्यदृष्टस्यान्येन स्मरणेऽतिप्रसङ्गात्, यदुक्तं "नान्यदृष्टं स्मरत्यन्य" इति । न चैवमथवेत्यादिना वक्ष्यमाणाभेद इति वाच्यम् । इहानुभवस्य स्वाश्रये स्मृतिजनकत्वात् स्थिरात्मसाधनं, तत्र च संस्कारस्य तथात्वात्तदिति भेदात् ।

सन्तन्यमानेऽप्यात्मनि एकसन्तानान्तःपातित्वनिबन्धनोऽहमारोपः प्राचीने प्रत्येतरि, तदभेदारोपश्चार्वाचीने, तत्र चोदीच्यज्ञानवत्त्वं गृह्यते इत्यसिद्धो हेतुः वासनापरीपाकप्रभवश्च स्मरणमनुभवितृसन्ताननियतमित्याशङ्कते । एषोऽपीति । व्यतिरेकिणा प्रतिसन्धानेनैककर्तृकत्वे साध्ये व्यतिरेके उपादानोपादेयभावस्योपाधेः सम्भवात् सन्दिग्धव्यतिरेकित्वमित्याशङ्क्याकरे टीकाकृतः ।

अत्र च एकसन्तानान्तःपातिनां ज्ञानानां सत्यप्युपादानोपादेयभावे प्रायशो न प्रतिसन्धानमिति साध्याव्यापकत्वमग्र एव व्यक्तीकरिष्यत इति हृदयम् ।

स्थैर्येति। स्थैर्यवादिनां स्थिरद्रव्यस्योपादानत्वात्। क्षणिकत्वेऽपि। क्षणिकवादिमतेऽपि। तदुत्पत्तिः तस्मादुत्पत्तिः कार्य्यकारणभावः, सा चेत् साक्षाद्विवक्षिता, तदा अन्तरितयोः सान्तानिकयोरतथाभावादप्रतिसन्धानापत्तिः, अथ परम्परासाधारणी तत्राह। शिष्येति। तथा च तत्रापि कदाचित् प्रतिसन्धानं स्यात् वित्रचादीनां व्यवधायकत्वे सान्तानिकानामपि तथात्वं केन वारणीयम्।

---

भेदाग्रहे सतीति चेन्न। प्रकृतेऽपि तदभावात्। शरीरभेदाग्रहस्तावदस्तीति चेन्न। भिन्नजन्मज्ञानाव्याप्तेः। अनुपलब्धपितृकेणापि बालेनातिप्रसङ्गात्। घटकपालक्षणयोरतथाभावप्रसङ्गाच्च। एकाधारतया (१)नियम इति चेन्न। तस्य वास्तवस्य क्षणिकत्वपक्षेऽपि विषमसमयानां क्षणानामभावात्, काल्पनिकस्य त्वतिप्रसञ्जकत्वात्। शरीरबुद्ध्योरपि समानदेशताभिमानात्।

शङ्क० टी०। प्रकृते इति। नीलपीतादिधियां भेदेनैव ग्रहादित्यर्थः। एकबुद्धिसन्ताने शरीरभेदाग्रहोऽस्ति न तु शिष्याचार्यबुद्धिसन्तान इति न तत्रोपादानोपादेयभाव इत्याह। शरीरेति। भिन्नेति। तत्र जातिस्मरत्वानुरोधेनोपादानोपादेयभावस्तथाङ्गीक्रियते न तु शरीरभेदाग्रह इत्यव्याप्तिरित्यर्थः। दोषान्तरमाह।

---

(१) तथा नियम इति २ पु० पा०।

अनुपलम्भेति ।. तत्र शरीरभेदाग्रहोऽस्ति नतूपादानोपादेयभावः, तथात्वे वा पित्रनुभूतस्य पुत्रेण स्मरणप्रसङ्ग इत्यर्थः । घटेति । तदुत्पत्तावपि साजात्याभावात् उपादानोपादेयभावाभावप्रसङ्ग इत्यर्थः ।

बाल्ययौवनभेदेन स्वशरीरभेदग्रहोऽस्त्येवेति तत्रोपादानोपादेयभावाभावात्प्रतिसन्धानं न स्यादित्यपि द्रष्टव्यम् ।

घटकपालयोः स्वबुद्ध्योरेकाधारत्वात् कार्यकारणभावे सत्युपादानोपादेयभाव इत्याह । एकेति । घटकपालयोर्वास्तवैकाधारता न देशकृता, न कालकृता, घटकाले च कपालनाशादेशकालयोश्च चणिकत्वेन भिन्नत्वादित्यर्थः । काल्पनिकस्येति । तन्तुघटयोः कपालपटयोश्च कदाचिदेकाधारताभ्रमसम्भवादित्यर्थः । अतिप्रसङ्गमेवाह । शरीरेति ।

---

भगी० टी० । नन्वभेदाग्रहविशिष्टस्य तस्यैवोपाधित्वं तेन बुद्ध्योर्भेदग्रहे कार्यकारणभावेऽपि शिष्याचार्यबुद्ध्योर्न प्रतिसन्धानमित्याह । भेदाग्रह इति । योऽहमद्राक्षं सोऽहं स्पृशामीति चाक्षुषस्पार्शनबुद्ध्योर्भेदस्य प्रतिसन्धानस्थलेऽपि ग्रहान्नेत्रमित्याह । प्रकृते इति । बुद्धित्वेन तु भेदाग्रहः शिष्याचार्यबुद्ध्योरप्यस्तीति भावः । शरीरेति । शिष्याचार्ययोस्तु शरीरभेदग्रह एवेत्यर्थः । उपस्थितेन शरीरेण भेदाग्रहोऽनुपस्थितेनं वा । आद्ये भिन्नेति । जन्मान्तरशरीरस्यानुपस्थितेन प्रतिसन्धाने बालस्येष्टसाधनतानुमित्यभावादाद्यप्रवृत्तिर्न स्यादित्यर्थः। अन्त्येऽनुपलम्भेति। परस्य

वा कारणपितृशरीरेणानुपस्थितेन बालस्य भेदाग्रहोऽस्त्येवेति पितृ-बुद्धिप्रतिसन्धानापत्तिरित्यर्थः। न च भेदाग्रहमात्रं नियामकं लिङ्गादिना शरीरभेदग्रहेऽपि प्रतिसन्धानादिति भावः। न वा सजातीयं कारणमित्युपादानकारणमतिव्यापकत्वादित्याह। घटेति। एकेति। उपादानोपादेयत्वभाव इत्यनुषज्यते। तस्येति। उपा-दानोपादेययोः समसमयत्वाभावादित्यर्थः। अतिप्रसङ्गमेवाह। शरीरेति।

---

रघु० टी०। उपादानोपादेयभावमात्रं न नियामकमपि तु भेदाग्रहविशिष्टः स इत्याशङ्कते। भेदाग्रह इति। भेदाग्रहः किं पूर्वापरज्ञानयोस्तत् तद्वतोः तत्राप्यालयविज्ञानयोर्ज्ञानावच्छेदक-शरीरयोर्वा, आद्ये प्रकृतेऽपीति। पूर्वापरज्ञानयोर्भेदस्याकलनात्। न द्वितीयः। शिष्याचार्यीयस्थलेऽपि तत्सत्त्वात्। तृतीयं शङ्कते। शरीरेति। तत्रापि व्यक्तिभेदस्याग्रहो वैजात्यस्य वा, द्वितीयेऽपि वस्तुतो वैजात्यस्य वैजात्यत्वेन वा। नाद्यः। बाल्यादिभेदेन भेदे[१] प्रतिसन्धानात्। द्वितीये भिन्नेति। स्मरणप्रतिसन्धानमधिकृत्य चेदम्, तथा च प्राग्भवीयशरीरवैजात्यस्य चैत्रत्वादेरैहिकशरीरे ग्रहणात् पूर्वजन्मानुभूतस्येष्टसाधनतादेः स्मरणं न स्यादित्यर्थः। तृतीयेऽनुपलम्भेति। पितुरनुपस्थित्या तद्वैजात्यत्वस्याग्रहादिति। पितृज्ञानस्यापि परम्परया शरीरद्वारा पुत्रज्ञाननिमित्तत्वादेक-कर्तृकत्वनिश्चयरूपप्रतिसन्धानपत्तेऽपीदं द्रष्टव्यम्।

(१) भेदस्य ग्रहेऽपि इति २ पु० पा०।

केचित्तु जातिस्मरस्य प्राग्जन्मानुभूतप्रतिसन्धानं भवद्भिरप्यु-पेयते तत्र स्यादित्यर्थ इत्याहुः ।

अन्ये तु उपस्थिताच्छरीरादभेदस्याग्रहोऽनुपस्थितादपि वा, आद्ये भिन्नेति । द्वितीयेऽनुपलब्धेतीत्याहुः ।

लक्षणेऽव्याप्तिमप्याह । घटेति । एकेति । नियम उपादानो-पादेयभावस्य । एकाधारत्वे सति कार्यकारणभाव एवोपादानो-पादेयभाव इत्यर्थः। तस्येति। तस्य—एकस्याधारस्य(१)। आधार-स्यापि क्षणिकत्वेन भिन्नकालयोर्नैकदेशत्वं, तुल्यकालयोश्च न कार्यकारणभाव इत्यर्थः । शरीरेति । शरीरावयवे शरीर-बुद्ध्याद्योरभिमानादित्यर्थः ।

यद्वा एकेति। एकस्य कारणस्याधारतया नियम उपादानत्वस्य, तथाचाधाराधेययोर्जनकजन्यभाव इत्येकमन्यच्च प्रागुक्तं लक्षणमिति भावः । तस्य । जनकजन्ययोराधाराधेयभावस्य । इत्यग्रग्रे समानदेशतासादेश्ययोराधाराधेयभावपरत्वम् ।

---

एतेन—

"अभ्रान्तसमतैकावसायः प्रकृतिविक्रिये ।
ततौ हेतुफलस्योपादानोपादेयलक्षणम्" ॥

इति निरस्तम् ।

शङ्क० टी०। अभ्रान्तेति । हेतुफलस्य ततौ सन्तताविति द्वयमुपादानोपादेयलक्षणम् । किन्तदित्याह । अभ्रान्तः समतया

(१) एकाधारस्येति २ पु० पा० ।

एकावसायः एकाकारावसायः सभागसन्तानोपादानोपादेयलक्षणं, विसभागसन्ताने तु प्रकृतिविकारभाव इत्यर्थः।

---

भगी० टी०। एतेनेति। अव्यापकत्वेनातिव्यापकत्वेन च। हेतुफलभावस्य, ततौ सन्ततौ। तथाच कार्यभावे सत्यभ्रान्तः समतया सादृश्येनैकावसायः तत्सदृशज्ञानमेकत्वज्ञानं वेति सभागे लक्षणं, विसभागे तु प्रकृतिविक्रिये, प्रकृतिविकारभावः। अत्र कार्यकारणयोः साम्येऽप्येकत्वावसायस्याभ्रान्तत्वमसम्भवतीति सर्वाव्याप्तिः, एकत्वावसायमात्रमतिव्यापकं मिथो लक्ष्याहत्तित्वेनाननुगतत्वेनेत्यर्थः।

---

रघु० टी०। एतेन। घटकपालाद्यव्यापकत्वेन[१], लक्षणयोः परस्पराक्रान्ताव्यापकत्वेन वा। अभ्रान्तेति। हेतुफलस्य कारणकार्यस्य। ततौ सन्ततौ। अभ्रान्तया समतया साजात्येन एकावसायः एकत्वावसायः कार्यकारणभावे सति एकत्वावसायनिमित्तं साजात्यं तेन घटसन्तानयोर्दण्डघटयोश्च नातिप्रसङ्गः। प्रकृतिविक्रिये प्रकृतिविकारभावः। अन्त्यं विसभागे सन्ताने, सभागे चाद्यं लक्षणम्। [२]पुञ्जात्पुञ्जोत्पत्तेरुपगमान्निरन्तरोत्पन्नयोर्नील-सन्तानयोः परस्परोपादानोपादेयभावप्रसङ्गो निबन्धे दर्शितः।

---

(१) कपालाद्यव्यापकत्वेनेति २ पु० पा०।
(२) तत्र च पुञ्जात्पुञ्जोत्पत्तेरिति २ पु० पा०।

काष्ठस्य तु [१]प्रकृतेर्विकृतिरङ्गार इति कुतो निश्चितं भवता, यावता वह्नेरेवाऽयं विकारः किं न स्यात्? वह्निसम्बन्धिकाष्ठादेव तदुत्पत्तेरिति चेन्न। काष्ठ-सम्बन्धेन वह्नेरेव तदुत्पत्तिरित्यपि किं न कल्प्येत। पार्थिवं पार्थिवोपादानकमिति निश्चयादिति चेत्? कुत एतत्। सभागेषु [२]स्वलक्षणेषु तथादर्शनादिति चेत्? एतदपि कुतः? अभ्रान्तसमतैकावसायादिति चेत्! अथ केयं समता नाम? यदि साजात्यम्? सादृश्यं वा? तत् प्राङ्निरस्तम्। एकसन्तानत्वञ्चे-त्तदपि तदुत्पत्तिमात्रञ्चेत्? निमित्तनैमित्तिकयोरपि तथाभावप्रसङ्गः[३]। उपादानोपादेयभावश्चेत्? कथं तेनैव तद्व्यवस्थाप्येत। ज्ञानेषु तत्प्रतिसन्धानमेवोपा-दानोपादेयलक्षणमिति चेन्न। आत्माश्रयप्रसङ्गात्।

शङ्क० टी०। अत्रानुगमे सत्येव विसभागसन्ताने लक्षणस्य दुरवगमत्वमाह। काष्ठस्येति। पार्थिवमिति। सजातीयमेवोपा-दानकारणं तथा च काष्ठाङ्गारयोः साजात्यं, न तु वह्न्यङ्गारयो-रित्यर्थः। कुत एतदिति। साजात्यं तत्त्वमिति कुत इत्यर्थः। सभागसन्ताने तावदुपादानोपादेयभावं प्रति साजात्यमेव तन्त्रमतो विसभागसन्तानेऽपि तदेव तन्त्रं कल्पनीयमित्यर्थः। एतदपीति।

(१) चेति दीधितिसंमतः पाठः।
(२) लक्षणेषु इति २ पु० पा०।
(३) प्रसङ्गात् इति २ पु० पा०।

सभागसन्तानेऽपि साजात्यमेतदपि कुत इत्यर्थः । अभ्रान्तेति । घटोऽयं घटोऽयमिति यत्समतथा एकावसायोऽनुगतावसायस्तेनाच साजात्यं निश्चितमित्यर्थः । समतैव दुर्निरूपेत्याह । अथेति । साजात्यञ्चेत्तदाऽऽत्माश्रयः साजात्येनैव साजात्यनिरूपणात्, सादृश्यञ्चेत् तदा एकाधारताखण्डनेनैव निरस्तेत्यर्थः । नन्वेकसन्तानत्वमेव साजात्यं तच्च सभागविसभागयोस्तुल्यमित्याह । एकेति । निमित्तेति । पुष्पात् पुष्पोत्पत्तिस्तथा च पूर्वरूपस्य रूपं प्रत्युपादानत्वं रसं प्रति निमित्तत्वमिति त्वदभ्युपगमरीत्या रूपस्यापि रसं प्रत्युपादानत्वं स्यादित्यर्थः । तदुत्पत्तिशब्देनोपादानोपादेयभाव एव विवक्षित इत्यतो नातिप्रसङ्ग इत्यत आह । उपादानेति । तथा आत्माश्रय इत्यर्थः । एककर्तृकत्वव्यावृत्त्या प्रतिसन्धानव्यावृत्तिः सिद्धान्तिनोक्ता । तत्र परेण कार्यकारणभावाभाव एवोपाधिरूपन्यस्तस्तच्च च प्रतिसन्धानाभावो हेतुव्यतिरेकः साध्यव्यतिरेकव्यापको वक्तव्य उपाधिश्च[1] तत्र साध्यव्यापको वक्तव्यस्तच्च शिष्याचार्यधियोः पितापुत्रधियोश्च प्रतिसन्धानाभावोऽस्ति न तु कार्यकारणभावाभाव उपाधिरिति साध्याव्यापकत्वमुपाधौ दूषणमुक्तं, उपादानोपादेयभावलक्षणखण्डनन्तु प्रसक्तानुप्रसक्तिकमित्यवधेयम् ।

---

भगी० टी० । सभागेषु—सजातीयेषु । प्रागिति । एकाधारत्वनिरासेनेत्यर्थः । निमित्तेति । तथा च तत्राप्येककर्तृकतया

(१) उपाधिरस्तु इति ३ पु० पा० ।

प्रतिसन्धानं स्यादित्यर्थः। यद्यपि नात्र घटपटादौ प्रतिसन्धानमुपक्रान्तं, किन्तु पूर्वापरप्रत्यययोरेककर्तृकत्वेन प्रतिसन्धानमुक्तनिबन्धनमित्युपक्रान्तं तथापि लक्षणामात्रदोषत्वेनेदमुक्तम्। आत्माश्रयेति। तस्यैव तल्लक्षणत्वे प्रतिसन्धानमेवोपाधिः स्यादित्यर्थः।

---

रघु० टी०। दूषणान्तरमाह। कार्यस्य चेति। एतदपि सभागे सन्ताने उपादानोपादेयभावावधारणमपि। कुतः। सादृश्यमेकाधारत्वं यथोपवर्णितं प्राक्, शिष्याचार्यबुद्ध्योरतिप्रसङ्गेन, वास्तवसादृश्याभावेन च निरस्तं। प्रतिसन्धाननियामक उपादानोपादेयभावः प्रतिसन्धानमेव च स इत्यात्माश्रयः।

---

तद्योग्यतेति चेत्? सैव केति चिन्त्यम्। शक्तिविशेष इति चेत्? स तावन्न प्रतिक्षणनियतः। यथा हि तेन तत्कर्तव्यं तथा तादृशाऽपि तत्कर्तव्यमित्यपि नियम एव, अन्यथा तेन तत्कृतमित्यपि न निश्चीयेत। क्षणस्य दुरुन्नेयत्वात्। तथा च निरीहं जगज्जायेत, आकस्मिकञ्च कार्यस्य तादृशत्वमापद्येत, तथा च न नियम उपलभ्येत(१)। नापि प्रतिसन्ताननियतः (शक्तिविशेषः) विशेषाभावात्।

(१) उपपद्यते इति १ पु० पा०।

शङ्क० टी०। मैवेति। प्रतिसन्धानयोग्यताया एव विचार्यमाणत्वात्र सैव लक्षणमित्यर्थः। शक्तिविशेष इति। बुद्धीनां स तादृशः शक्तिविशेषो येन प्रतिसन्धाननियमः कार्यकारणभावे सत्युपपद्यते शिष्याचार्यधियोस्तु स नास्तीति न प्रतिसन्धानमित्यर्थः। स तावदिति। शक्तिविशेषो हि कारणत्वमेव तच्च प्रतिव्यक्तिग्राह्यमशक्यत्वादननुगमाच्च[१]। किं च या व्यक्तिस्तु कारणं तज्जातीयाऽपि व्यक्तिः कारणमेवेति नियम एव। न चाकाशः शब्दकारणं नचाकाशजातीयं तत्र जातेरभावादिति वाच्यम्। अन्वयव्यतिरेकग्राह्यकारणताया एवंरूपत्वात्। प्रकृते तु धर्मिग्राहकमानसिद्धत्वदोषात्। अन्यथेति। जातेः कारणतावच्छेदकत्वे। कुत एतदित्यत आह, क्षणस्येति। ननु नोपलम्भे कारणत्वं को दोष इत्यत आह तथा चेति[२]। इष्टसाधनताऽनिष्टसाधनताज्ञानाभावात् प्रवृत्तिनिवृत्तौ न स्यातामित्यर्थः। निरीहं निश्चेष्टं हिताहितप्राप्तिपरिहारलक्षणक्रियाशून्यमित्यर्थः। आकस्मिकञ्चेति। कारणतावच्छेदकरूपं विना कार्यतावच्छेदकरूपं प्रतिनियतं न स्यादित्यर्थः। मा भूत्को दोष इत्यत आह। तथा चेति। धूमजातीयं वह्निजातीयजन्यमिति नियमो नोपपद्येतेत्यर्थः[३]। तथा च बुद्धित्वेनैव कारणता वाच्या प्रतिसन्धानं प्रति, तच्च शिष्याचार्यबुद्ध्योरपीति भावः। प्रतिसन्धाननियत इति।

---

(१) दनुगमरहितत्वाच्चेति ३ पु० पा०।
(२) अन्यथेति २ पु० पा०।
(३) नोपलभ्येतेत्यर्थ इति ३ पु० पा०।

शक्तिविशेष इत्यनुषञ्जनीयम्। विशेषाभावादिति। शिष्याचार्यबुद्धिसन्तानयोर्व्यावर्तकधर्माभावादित्यर्थः।

---

भगी॰ टी॰। तद्योग्यतेति। तथा च प्रतिसन्धानयोग्यतालक्षण उपाधिरित्यर्थः। सैवेति। योग्यतावच्छेदकं रूपमेव नानुगतमित्यर्थः। न तावदिति। प्रतिक्षणनियतस्वरूपत्वेन व्यभिचाराच्च कारणत्वग्रहः, या व्यक्तिर्यद्व्यक्तिजन्या ततस्तज्जातीया व्यक्तिस्तज्जातीयजन्येति व्याप्तेः। न चाकाशजन्यशब्दव्यक्त्या व्यभिचारः आकाशस्यैकत्वादिति वाच्यम्। अन्वयव्यतिरेकग्राह्यकार्यकारणभावे तथा नियमात्। तत्र च धर्मिग्राहकमानस्य तद्ग्राहकत्वादित्यर्थः। यद्येवं न स्यात्तर्ह्येकक्षणिकभावेऽन्वयव्यतिरेकग्रहाशक्यतया कार्यकारणभावाग्रहात् क्वचिदपि प्रवृत्तिनिवृत्ती न स्यातामित्याह। अन्यथेति। तादृशत्वं नियतजातीयत्वम्। विशेषेति। कार्यकारणभावाभावेऽपि शिष्याचार्यबुद्धिव्यावृत्तानुगतनियामकरूपाभावादित्यर्थः।

---

रघु॰ टी॰। शक्तीति। यद्यपि प्रतिसन्धानानुकूला शक्तिः प्रतिसन्धातर्येव, न प्रतिसन्धेये, तस्य चिरातीतत्वेन तत्राप्रयोजकत्वात् तथाऽपि तस्य शक्तिविषयत्वं तथा चानुसन्धेयानुसन्धात्रभाव एवोपादानोपादेयभाव इति भावः। तादृशा तज्जातीयेन कारणेन। तत् तदजन्यं तत् तत्कार्यजातीयम्। तदजन्यं तज्जन्यजातीयं कार्यमवश्यं तत्समानजातीयकारणजन्यमित्यर्थः। तथा चेति।

प्रतिव्यक्ति कार्यकारणभावस्य अनागतकार्यव्यक्तेरनुपस्थित्या ग्रहीतुमशक्यत्वात् सामान्येन रूपेण तदग्रहे इष्टानिष्टोपायताग्रहस्य कारणस्याभावात् क्वचिदपि प्रवृत्तिनिवृत्ती न स्यातामित्यर्थः। तादृशत्वं नियतजातीयत्वम्। नियमः कानिचिदेव कार्याणि किञ्चिज्जातीयानीत्याकारकः।

प्रतिसन्धानशक्तेः प्रतिव्यक्तिविश्रान्तत्वे अप्रतिसन्धेयाप्रतिसन्धात्व्यक्त्योरुपादानोपादेयभावो न स्यात् तत्र तादृशशक्तौ मानाभावादित्यपि द्रष्टव्यम्।

विशेषाभावादिति। विशेषो नियामकः शक्तेः सामर्थ्यस्य नियामकमवच्छेदकं विना नियतद्रव्यवृत्तित्वायोगात् ज्ञानत्वमज्ञानत्वयोश्चातिप्रसक्तत्वात्।

---

अस्तु वैजात्यमिति चेन्न। अनुपलब्धिबाधितत्वात् नहि शिष्याचार्यनीलधियोर्मात्रयाऽपि जातिकृतं विशेषमुपलभामहे। अदृश्यत्वादयमदोष इति चेन्न। दृश्यसमवायिन्या जातेरदृश्यत्वानुपपत्तेः। उपपत्तौ वा धूमादावपि अवकाशप्रसङ्गात्। तथा चावान्तरसत्त्ववदवान्तरधूम एव वह्नेः कार्यः स्यात् इति शङ्काकलङ्कितत्वात् न (च) धूमसामान्यमग्निं गमयेत्। एवमेतत्। आद्यस्यैव तथाभावादिति चेन्न। तत्रापि शङ्कायास्तदवस्थत्वात्। तस्मात् कारणस्य वैजात्ये

प्रमाणसिद्धे कार्यस्य सौसादृश्येऽप्यवान्तरजातिभेदः कल्प्यते, हेतुवैजात्यस्य फलवैजात्यं प्रति प्रयोजकत्वात्, अप्रयोजकत्वे तस्याऽऽकस्मिकत्वप्रसङ्गात्। कारणसाजात्येऽपि कार्यस्य वैजात्यं सहकारिवैजात्ये पर्यवस्यतीति युक्तमुत्पश्यामः। अन्यथा प्रकृते परलोकोऽपि न सिद्ध्येत्। अचेतनोपादानकमपि ज्ञानमवान्तरजातीयं स्यात्, अचेतनमप्यवान्तरजातीयं ज्ञानोपादानं भवेत्, दृश्यजात्यभेदेऽपि किञ्चिदेव निमित्तं भविष्यतीति शङ्कायाः समुत्थापयितुं शक्यत्वाद् इति।

शङ्क० टी०। अदृश्यत्वादिति। एकसन्तानिकबुद्धिष्वेव स विशेषोऽस्ति परन्तु नोपपद्येत इत्यर्थः[१]। व्यक्तियोग्यतानियतत्वाज्जातियोग्यताया अन्यथा वह्निप्रयोज्या काचिज्जातिः पिशाचजन्यधूमाद्विशेषा भविष्यतीत्यपि शङ्क्येतेत्यर्थः। एवमेतदिति। धूमेऽपि वैजात्यशङ्का भवत्येव किन्तु प्रथम एव वह्निप्रभवो धूमो वह्निं गमयतीत्यर्थः। आद्योऽपि धूमः पिशाचादेव किं इति शङ्कायास्तत्रापि सद्भावादित्याह। तत्रापीति। नन्वेवं तृणारणिमणिस्थलेऽपि वह्नौ वैजात्यं न कल्प्येतेत्याशङ्क्योपसंहरति। तस्मादिति। अत्र हेतुमाह। हेतुवैजात्यस्येति। अत्रैव विपक्षदण्डमाह। अहेतुकत्व इति। नन्वात्ममनःसंयोगजन्यमपि ज्ञान-

(१) नोपलभ्येतेत्यर्थ इति ३ पु० पा०।

सुखादि कथं विजातीयमित्यत आह। कारणेति। इन्द्रिया-र्थादिसहकारिवैजात्यप्रयुक्तं तद्वैजात्यमित्यर्थः। वैभाषिकं प्रत्याह। अन्यथेति। यदि कारणवैजात्ये कार्यवैजात्यं न कल्प्येत, कार्य-वैजात्ये कारणवैजात्यं न तन्त्रं, तदा बुद्धिसन्तानमात्रादविशिष्टाद्-विशिष्टसुखदुःखात्मकपरलोकसिद्धिरपि न स्यादित्यर्थः। यद्वा अन्यथेति। एकस्य कर्तुरनभ्युपगम इत्यर्थः। अनियमस्थेत्त्वाह। अचेतनेति। ज्ञानोपादानकात् ज्ञानादज्ञानोपादानकं विजातीय-मेव किञ्चिज्ज्ञानं भवेदित्यर्थः। अचेतनमपीति। घटोऽपि कश्चिद्विजातीयो ज्ञानोपादानकः स्यादित्यर्थः। इत्यजात्यभेद इति। धूमत्वावच्छिन्न एव कश्चिदङ्गेः, कश्चित्पिशाचाद्वर्त्स्यतीति धूमाद्वह्न्यनुमानं न स्यादित्यर्थः।

---

भगी० टी०। वैजात्यमिति। विशेष इत्यनुषञ्जनीयम्। अन्योन्यबुद्धिव्यावृत्तं तत्तद्बुद्धिसन्तान एव वैजात्यम् तल्लक्षणं प्रतिसन्धानप्रयोजकतावच्छेदकमुपाधेरित्यर्थः। आद्यस्यैव धूमाजन्य-धूमस्यैव। तथाभावः वह्निकार्यत्वम्। तत्रापीति। आद्यधूमेऽपि न वह्नित्वेन वह्निः प्रयोजकः, अपि तु तत्प्रयोजकजात्येति शङ्काया इत्यर्थः। नन्वेवं योग्याऽनुपलब्ध्या तार्णत्वादि वह्निगतमपि न वैजात्यं कल्प्येतेत्यत आह। तस्मादिति। न च योग्याऽनुपलब्धिस्तत्राऽपि कारणभेदव्यङ्ग्यत्वात्तज्जातेरित्यर्थः। नन्विहापि प्रतिसन्धानरूप-कार्यवैजात्यात् कारणवैजात्यं कल्प्यतामित्यत आह। कारणेति।

एकाश्रयरूपसहकारिभेदेनैव तदुपपन्नं न कारणवैजात्यकल्पक-मित्यर्थः ।

यद्यपि प्रतिसन्धानान्तरायोग्यतयैव तदपेक्षवैजात्यस्य योग्या-नुपलम्भसिद्धिः, तथापि स्वबुद्धिसन्ताने एव तज्जातेर्योग्यानुप-लम्भोऽत्र विवक्षितः ।

परलोकोऽपीति । परलोके सौगतैरप्यनन्ता ज्ञानधाराऽभ्युप-गम्यते सा न सिद्ध्येत् अचेतन एव कुत्रापि ज्ञानधारोत्पादाभ्युप-गमाद्वैजात्यमाश्रित्य इहैव बुद्धिसन्ततिविरामादित्यर्थः। अचेतनेति। बुद्धेर्बुद्ध्युपादानकत्वेऽपि काचिद्बुद्धिस्तादृशी न स्यादित्यर्थः। अचेतनमिति । अचेतनस्य ज्ञानानुपादानत्वेऽपि किञ्चिदचेतनं ज्ञानोपादानं स्यादित्यर्थः । दृश्येति । तथा च निश्चितकार्य-कारणभावे वह्निधूमादावपि प्रयोजकान्तरसम्भावनया कार्य-कारणभावानिश्चयात् क्वापि प्रवृत्तिर्न स्यादित्यर्थः ।

---

रघु० टी० । अस्ति वैजात्यं सन्तानान्तरव्यावृत्तो जाति-विशेषः, सा जातिर्दृश्या अदृश्या वा, आद्ये अनुपलब्धिबाधितत्वा-दिति । द्वितीयं शङ्कते । अदृश्यत्वादिति । निराकरोति । दृश्येति । दृश्यं समवायि यस्यास्तस्याः । योग्यव्यक्तिवृत्तित्वेनैव जातेर्योग्यत्वादिति भावः । तथाचेति । सन्त्व आत्मा परेषां क्षणिकविज्ञानरूपः। यथा कारणेषु दृश्येषु ज्ञानविशेषेषु प्रति-सन्धानजनकतावच्छेदिका जातिरदृश्या, एवं कार्येष्वपि दृश्येषु धूमविशेषेषु वह्निजन्यतावच्छेदिका जातिरदृश्या स्यादिति शङ्कया

धूमसामान्ये वह्निजन्यत्वाग्रहान्न तेन कार्येण कारणस्य वह्नेरनुमानं स्यादित्यर्थः । तथाभावात् वह्निजन्यत्वात् । तथापीति । आद्योऽपि धूमो न तत्त्वेन वह्निजन्योऽपि तु तद्वान्तरजात्येति शङ्कायाः सम्भवादित्यर्थः । नन्वेवं तृणारण्यादिजन्येऽपि वह्नौ वैजात्यं न स्यादित्यत आह । तस्मादिति । सौसादृश्य इति । आपाततो-ऽनुपलम्भ उपपादितः । तस्य फलवैजात्यस्य । आकस्मिकत्वेति । कारणस्य व्यभिचारेणाकारणत्वप्रसङ्गोऽपि द्रष्टव्यः । नन्वेवं द्रव्य-जातीयोपादानकानां संयोगविभागादीनां आत्मजातीयोपादान-कानाञ्च सुखदुःखादीनां मिथो वैजात्यं न स्यादत आह । कारणेति । अन्यथा यदि विनैव प्रमाणं वैजात्यकल्पनेन कार्य-कारणभावकल्पनं तदा परलोकोऽपि (परो वर्त्तमानादन्योभूतो भावी च लोकोऽपि) न सिद्ध्येत् इहैव [१]ज्ञानसन्तानोपरम-सम्भवात् अनादिनिधनस्य ज्ञानसन्तानो भवद्भिरुपेयते । [२]ननु ज्ञानस्य ज्ञानोपादानकत्वात् ज्ञानसन्तानस्य सादित्वे आद्यज्ञाना-नुत्पत्तौ सन्तानानुत्पत्तिप्रसक्तिरत आह । अचेतनविति । किञ्चि-द्विजातीयं ज्ञानमज्ञानोपादानकमपि स्यादित्यर्थः । अथाज्ञानस्य ज्ञानोपादानत्वे घटादेरपि तथात्वापत्तिः, निमित्ततायाश्चोपा-

(१) ज्ञानसन्तानविश्रामादिति १ पु० पा० ।

(२) उपादानज्ञानसन्तानानुपरमे कथमुपादेयतत्सन्तानोपरम इत्यत आह । अचेतनेति । क्वचिद्विजातीये ज्ञाने विजातीयं ज्ञानं क्वचिच्चाचेतनं तच्चोपादानं स्यात् तथा च तदुपरमादुपादेयसन्तानोपरमः । अचेतनं यदि ज्ञानोपादानं तर्हि घटादिकमपि किं न तथेत्यत आह । अचेतन-मपीति । २ पु० पा० ।

दानत्वव्याप्तत्वात्। अज्ञानस्य च ज्ञानानुपादानकत्वात्, सन्तानस्य सान्तत्वेऽन्तिमस्यार्थक्रियाकारित्वविरहेणासत्त्वात् सन्तानस्यैवासत्त्वप्रसङ्ग इत्याशङ्काद्वयं निरस्यति। अचेतनमित्यादि। ज्ञानस्योपादानमिति तत्पुरुषेणाद्याया ज्ञानमुपादानं यस्येति बहुव्रीहिणा द्वितीयाया आशङ्काया निरासः। नन्वेवं ज्ञानजातीयमाकस्मिकं स्यादभिहितहेतूनां विशेष एव विश्रामात् अत आह। दृश्येति।

---

अस्तु तर्हि सहकारिभेदान्नियम इति चेत्? स एवैकः कर्तेति गीयते। अथैक एव कर्ता न तु तादृक् सहकारिपरम्परेति कुतो विशेषादिति चेत् (न), तत्कर्तृकत्वं भिन्नकर्तृकेभ्यो व्यावर्तते न तु तादृक् [(१)]सहकारित्वमित्यतो विशेषात्। कुतश्चिदेवमपि स्यादिति चेन्ननु स एव विशेषश्चिन्त्यते। [(२)]स च तत्स्वभावत्वं वा, तज्जातीयत्वं वा, तत्सहकारित्वं वा, तादृक् सहकारित्वं वेत्यतो नातिरिच्यते। तत्र प्रथमोऽसम्भवी। द्वितीयोऽतिप्रसञ्जकः। चतुर्थे नियामकाभावः। ततस्तृतीय एव परिशिष्यते गत्यन्तराभावादिति।

शङ्क० टी०। अतिप्रसङ्गापादनेन भग्नः परः प्रतिसन्धाननियामकं शिष्याचार्यबुद्धिविलक्षणं शङ्कते। अस्तु तर्हीति। सिद्धं नः समीहितमिति सिद्धान्त्याह। स एवेति। प्रतिसन्धान-

(१) सहकारित्वपरम्परेति २ पु० पा०।

(२) न च इति १ पु० पा०।

नियामक इत्यर्थः। ननु सिद्धेऽपि प्रतिसन्धातरि तदभेदसिद्धिः कथमिति शङ्कते। अथेति। प्रतिसन्धानबलादेव तदेकत्वं तादृशस्य नियामकत्वे चैत्रदृष्टमपि मैत्रः प्रतिसन्दधीतेति परिहरति। तदिति। एवमपीति। तादृशत्वमपि प्रतिसन्धाननियामकं स्यादित्यर्थः। परिहारमाह। नन्विति। तत्स्वभावत्वमिति। प्रतिक्षणनियतशक्तिभेदात्मकत्वमित्यर्थः। तज्जातीयत्वमिति। बुद्धिसन्तानमात्रजातीयत्वमित्यर्थः। तत्सहकारित्वमिति। बुद्धिसन्तानेऽप्येकस्य सहकारिणः सापेक्षत्वमित्यर्थः। तादृगिति। क्लृप्तसहकारिविजातीयत्वमित्यर्थः। असम्भवीति। क्षणान्तरेऽपि कार्यदर्शनादित्यर्थः। अतिप्रसञ्जक इति। शिष्याचार्यबुद्धिसन्तानेऽपि प्रतिसन्धानप्रसङ्ग इत्यर्थः। नियामकाभाव इति। चैत्रदृष्टेऽपि मैत्रस्मरणप्रसङ्ग इत्यर्थः। तृतीय इति। तदेकसहकारित्वमित्यर्थः।

---

भगी० टी०। स एवैक इति। प्रत्यभिज्ञानविषयः सहकारिभेद इत्यर्थः। नन्वभिन्न एव प्रत्यभिज्ञानविषयः स्यादित्याह। अथेति। भिन्नकर्तृकेभ्यः प्रतिसन्धीयमानेभ्यः एककर्तृकत्वं ज्ञाने निवर्तते न तु परस्परेत्याह। तत्कर्तृकत्वमिति। अन्यनिमित्तकत्वशङ्कां परिशेषेण निराकरोति। नन्विति। तत्स्वभावत्वं तत्कार्यव्यक्तिस्वभावत्वम्। असम्भवीति। कारणमतिपत्य कार्यस्वभावाभावादित्यर्थः। अतिप्रसञ्जक इति। कार्यजातीयत्वस्यापि कारणनियम्यत्वेन तदभावे तदपि न स्यादित्यर्थः। चतुर्थ इति। अतिप्रसङ्गस्येति शेषः।

---

रघु॰ टी॰। गूढाभिसन्धिः शङ्कते। अस्त्विति। निराकरोति। स एव। एकः सहकारी समवायिकारणरूपः कर्तेति गीयते इति। आशयमुद्घाटयति। अथेति। निराकरोति। तदिति। तत्कर्तृत्वं तत्प्रतिसन्धातृत्वं। नन्विति। तादृक् समर्थस्वभावं। तादृशसहकारिसमवधानस्यातिप्रसक्तत्वात्। कुतश्चिदिति। तादृश-सहकारिकत्वं स्वरूपेणातिप्रसक्तमपि कुतश्चिद्विशेषात् नियामकादनतिप्रसक्तं स्यादित्यर्थः। तत्स्वभावत्वं समर्थतज्ज्ञप्तिस्वभावत्वम्। असम्भवी। व्यक्त्यन्तरस्य तज्ज्ञप्तिस्वभावत्वायोगात् तथाच तत्र प्रति-सन्धानं न स्यात्। अतिप्रसञ्जकः। ज्ञानत्वस्यातिप्रसक्तत्वात् प्रति-सन्धाननियतस्य च जातिभेदस्य निराकृतत्वात्। नियामकाभावः। तस्यातिप्रसक्तत्वात्, अभेदे नियम्यनियामकभावानुपपत्तेः।

---

अथवा सम्भवन्नपि नायमुपाधिः। तत्र तावन्मात्र-स्यानिबन्धनत्वात्। तथाहि सर्वज्ञः स्वप्रत्ययानेककर्तृक-तया प्रतिसन्धत्ते न वा? आद्ये तत्प्रतिसन्धानादेव प्रतिसन्धातुरेकत्वं सिद्धं ज्ञानाद्भेदश्च, धियामस्थैर्यस्य सर्वैरेव प्रतीतेः, प्रतिसन्धातुः क्षणिकतायाः सर्वज्ञेना-ऽप्यनाकलनात्। अथ न प्रतिसन्धत्ते? न तर्हि कार्य-कारणभावमात्रनिबन्धनं प्रतिसन्धानम्। न ह्यस्ति सम्भवो यदन्वयेऽपि यस्यानन्वयस्तत्तावन्मात्रनिबन्धन-मिति। प्रतिसन्धत्ते, न तु सत्यं तत्प्रतिसन्धानमतो

न तावन्मात्रा[1]देककर्तृकत्वसिद्धिरिति चेत्? तत् किं सर्वज्ञस्यापि विपर्ययः? आहार्यो न दोषावह इति चेत्। न। निबन्धनाऽभेदेऽपि कथमेक आहार्योऽन्यस्तु स्वरसवाहीति वाच्यम्। भेददर्शनादर्शनाभ्यामिति चेन्न। प्रवृत्तिविज्ञानानां भेदस्यासर्वज्ञैरपि दर्शनात्। विषया एव भिन्नाः प्रतिभान्ति न बुद्धय इति चेन्न। तासामपि भेदनिश्चयात्। विषयभेदाग्रहणेऽपि ज्ञानाऽभ्यासदर्शनात्। यदि च भेदग्रहेऽपि बुद्धिता-मात्रेण तदग्रहोऽभेदारोप उपपद्यते,[2]पार्थिवतया वृक्षात् काष्ठं काष्ठादङ्गारस्ततो [3]भस्माप्यभेदेन प्रति-सन्धीयेत। न चैवम्।

शङ्क० टी० । अयमिति । उपादानोपादेयभाव इत्यर्थः । ज्ञानादिति । योऽहमन्वभवं सोऽहं स्मरामीत्यनुभवस्मरणयोः कर्तृ-भिन्नत्वेनैव स्फुरणादित्यर्थः । ज्ञानभेदे मानमाह । धियामिति । अन्वभवमज्ञासिषमित्यतीतत्वेनैव ज्ञानभानादित्यर्थः । क्षणिक-ताया इति । विनाशित्वस्येत्यर्थः । न तर्हीति । अन्वयव्यभि-चारादित्यर्थः । नन्वेवं दण्डादिरपि न घटादिकारणं स्याद्व्यभि-चारादित्याह । न हीति । एकमात्रकारणस्यान्वयव्यभिचारस्यापि

(१) —न्मात्रादनेककर्तृ इति १ पु० पा० ।
(२) उपयुज्यते इति १ पु० पा० ।
(३) तस्मादिति भगीरथसम्मतः पाठः ।

कारणताखण्डकत्वात् । अतएवोक्तं । तावन्मात्रनिबन्धनमिति । ज्वालादिप्रतिसन्धानवत् प्रतिसन्धानमिदमतन्त्रमिति शङ्कते । प्रतिसन्धत्त इति । दोषाजन्यत्वाद्भेदं भ्रान्तमित्याह । तत्किमिति । खरसवाहिनि विपर्यये दोषः कारणमयन्त्वाहार्य इत्याह। आहार्य इति । निबन्धनाभेद इति । बुद्धीनां कार्यकारणभावो निबन्धनं तच्च सर्वज्ञस्यापीति कथमयमाहार्य इत्यर्थः । मादृशा भेदं बुद्धीनां न पश्यन्ति तेनास्मदादीनां योऽहं सोऽहमित्यभेदोल्लेखिप्रतिसन्धानं खरसवाहि, सर्वज्ञस्तु बुद्धिभेददर्शी तेन तस्याहार्यं प्रतिसन्धानमित्याशङ्कते । भेदेति । अस्मदादीनामपि बुद्धिभेदग्रहोऽस्त्येवेत्याह । प्रवृत्तीति । बुद्धिभेदग्रहो विषयभेदग्रहेणान्यथासिद्ध इति शङ्कते । विषया इति । तासामपीति । बुद्धीनामपीत्यर्थः। धारावहनादौ विषयभेदप्रथनं नास्ति, तथापि बुद्धीनां भेद एव गृह्यत इत्याह । विषयेति । ननु च बुद्धित्वेन बुद्धीनां भेदाग्रहस्तत्राऽप्यस्त्येवेत्यत आह । यदि चेति । एवं सति पार्थिवत्वेन गृह्यमाणानां काष्ठाङ्गाराणामपि भेदो न भासेतेत्यर्थः ।

---

भगी० टी० । अथवेति । अयं कार्यकारणभावः । स हि निरपेक्षः प्रतिसन्धानजनकः, सापेक्षो वा, अन्त्ये गत्यन्तराभावात् स एवैकः कर्तेति सिद्धम् । आद्ये तावन्मात्रस्येति । सर्वज्ञ इति । सर्वज्ञस्य भिन्नकालीनखज्ञानाभावानामेककर्तृकत्वप्रतिसन्धानात् स्थिरः कर्ता सिद्धः तस्य भ्रमाभावादित्यर्थः । ननु क्षणिकज्ञानसन्तान एवाहमास्पदं स्यादित्यत आह । ज्ञानादिति । तथापि

क्षणिक एवात्मा तद्विषयः स्यादित्यत आह । प्रतिसन्धातुरिति । सर्वज्ञस्योपदेष्टृत्वं त्वयाऽभ्युपगम्यते स च तदुपदिश्यस्येष्टसाधनत्वं ज्ञातवानिति य एवेष्टसाधनतामनुभूतवान् स एवोपदेष्टा न वा स्थायिनमननुसन्धायोत्पत्तोऽप्युपदिशतीति सिद्धः स्थिर आत्मा, तज्जातीयत्वे भिन्नत्वस्यानपायादित्यर्थः । न तद्वीति । यस्त्वेक-कर्तृकत्वरहितः कार्यकारणभावः प्रतिसन्धाननिमित्तं तर्हि सर्वज्ञ-स्यापि प्रतिसन्धानापत्तिः तद्बुद्धोरपि तत्सत्त्वादित्यर्थः । न ताव-न्मात्रादिति । सत्यप्रतिसन्धानस्य तत्साधनत्वादित्यर्थः । तत्कि-मिति । विशेषादर्शनस्य तन्निमित्तत्वात्तस्य च सत्त्वे सर्वज्ञत्व-व्याघातादित्यर्थः । आहार्य इति । न विशेषादर्शनजन्य इत्यर्थः । निबन्धनाभेद इति । न चानाहार्ये तत्र नैरात्म्यसाक्षात्काराभाव-विशिष्टः कार्यकारणभावो निबन्धनं तत्साक्षात्कारविशिष्टस्त्वाहार्य इति वाच्यम् । उक्तसाक्षात्कारनिवृत्तौ पुनस्तदापत्तेः, योगिसर्वज्ञ-ज्ञानयोः परस्परकार्यकारणभावतया साजात्ये च प्रतिसन्धाना-पत्तेश्च । प्रवृत्तीति । रूपादिविषयाणां प्रवृत्तिविज्ञानानामह-मिति बुद्धेश्च भेदस्य सर्वानुभवसिद्धत्वादित्यर्थः । नन्वहमज्ञासिषं जानामि ज्ञास्यामीत्यत्र बुद्ध्यो भिन्नतया न भासन्ते अपि तु विषया एवेत्याह । विषया एवेति । प्रतीतिभेदानिश्चये तदतीतत्वानिश्चयादज्ञासिषमित्यादिस्तदाकार एव न स्यादित्याह । तासामपीति । ननु विषयभेदज्ञानाद्बुद्धौ द्वावप्यौपाधिकभेदधीः स्यादित्यत आह । विषयभेदेति । एकत्रापि विषये ज्ञाननाना-त्वानुभवान्न विषयभेदस्तत्रोपाधिरित्यर्थः । ननु बुद्धित्वेन भेदाग्रहः

स्यादित्यत आह। यदि चेति। तस्मादिति। न च सामान्येन द्रव्यत्वादिना तत्रापि प्रतिसन्धानं स्यादिति वाच्यम्, येन हि रूपेण भेदस्याग्रहस्तेन प्रतिसन्धानमिति बुद्धित्वेनैव तदापत्तेः। कर्तृभेदेनापि प्रतिसन्धाने त्वसिद्धेः।

---

रघु० टी०। अथवेति। अपिशब्देन प्रागुक्तमसम्भवं स्मारयति। अयमुपादानोपादेयभावः। उपाधिः प्रयोजकः। स हि निरपेक्षो वा तथा स्यात्, सापेक्षो वा। आद्ये तत्रेति। तत्र प्रतिसन्धाने। तावन्मात्रस्य उपादानोपादेयभावमात्रस्य। तथाहीत्यादि। तत् प्रतिसन्धानं सत्यमसत्यं वा, आद्ये आह इत्यादि। अनाकलनात्। तदाकलने प्रतिसन्धानायोगात्, प्रत्युत पूर्वापरप्रतीत्योरेककर्तृकत्वं प्रतिसन्दधता तेन प्रत्येतुः स्थैर्य्यस्यैवाकलनात्। असत्यतापक्षं शङ्कते। प्रतिसन्धत्त इति। निराकरोति। तत् किमिति। तस्य विशेष-दर्शिने भ्रमायोगादिति भावः। सत्येव विशेषदर्शने आहार्यो भ्रमो जायते इत्याशङ्कते। आहार्य इति। निराकरोति। निबन्धनेति। निबन्धनं बुद्धीनामुपादानोपादेयभावः। निबन्धना-न्तरभेदोपदर्शनव्याजेन सापेक्षतापक्षं शङ्कते। भेदेति। यद्दस्युति आलयभेदाग्रहात् प्रतिसन्धानमिति। तथा च क्लृप्तेन भेदाग्रहे-णैवोपपत्तौ नाक्लृप्तापेक्षणीयात्मसिद्धिरिति भावः। भेदाग्रहः प्रवृत्तिविज्ञानानां वा आलयानां वा। आद्ये प्रवृत्तीति। तासामपीति। रूपमद्राक्षं, जिघ्रामि सौरभं, रसमास्वादयि-ष्यामीत्यादयो हि प्रत्ययाः प्रतीतीनामतीतत्वादिकमवगाहन्ते न

प्रत्येतव्यानां प्रभया यमम्बमिनवं तमेव पश्यामि द्रक्ष्यामि चेत्यादौ तदसंभवाच्चेत्यर्थः। सामान्यतो भेदाग्रहादेव विशेषतोऽभेदारोपो भविष्यतीत्यत आह। यदि चेति। विशेषतो भेदग्रहेऽपि विशेषतोऽभेदाऽऽरोप इति उपादानोपादेयभावस्याभेदाऽऽरोपविरहस्य च प्रदर्शनाय विसभागसन्तानोपादानम्।

---

स्यादेतत् आलयभेदाग्रहात् प्रतिसन्धानमिति चेत्। न। स ह्यहमास्पदं प्रवृत्तिसन्तानादन्य एव वा स्यात्तदन्तःपातिकादाचित्कानेकाहम्प्रत्ययरूपो वा। न तावदाद्यः। न ह्यहमहमिकया मिथः स्वतन्त्रं सन्तानद्वयमनुभूयते, सत्यपि वा परस्परमनुपादानोपादेयभावान्न परस्परं प्रत्याकलितार्थानुसन्धानबन्धः, तथात्वेऽपि वा चैत्रमैत्रादिष्वपि प्रसङ्गः, उभयोर्वा उभयोपादानत्वे एकमप्यनेकाश्रयमिति किमपराद्धमवयविसंयोगादिभिः। न चालयविज्ञानोपात्तं प्रवृत्तिविज्ञानं न किञ्चिदुपादत्त इति युक्तं, तथात्वे निमित्ततामपि न यायात्, उपादानत्वव्याप्तत्वान्निमित्ततायाः। अन्यथा निमित्ततामात्रमुपगम्य एकस्य निवृत्तौ सर्वसन्तानोच्छेदः। अविशेषात्। ओमिति ब्रुवतश्चरमक्षणानामकिञ्चित्करणे शक्तिविरहतेरसत्त्वप्रसङ्गः। तथाच पूर्वक्षणानामपीत्यनेन पर्यायेणाकिञ्चित्करं जगदापद्येत इति साधु कार्यकारणभावः

प्रतिसन्धाननिबन्धनं समर्थितः स्यात्। तस्मादन्यदेव निमित्तं किञ्चिदुपाददीत, तथाच न प्रतिसन्धानमपूर्वानन्तसन्तानप्रवृत्तिश्च प्रसज्येतेति। एवं च—

अशक्तिरनुपादानादन्यादानादनन्तता।
मिथो न प्रतिसन्धिश्च सङ्करेऽनेकसंश्रितिरिति सङ्ग्रहः॥

शङ्क० टी०। ननु प्रवृत्तिविज्ञानानां भेदज्ञानेऽप्यहमित्याकारालयविज्ञानानां भेदाग्रहादभेदाऽऽरोपः स्यादित्याशङ्कते। स्यादेतदिति। आलयविज्ञानसन्तानस्य प्रवृत्तिविज्ञानाद्भेदे दोषमाह। न हीति। अभ्युपगम्याह। सत्यपीति। चैत्रमैत्रबुद्धिसन्तानद्वयाविशेषादिति भावः। उभयोरिति। प्रवृत्तिविज्ञानं समनन्तरप्रवृत्तिविज्ञानं प्रत्युपादानमालयविज्ञानं च तदुपादानमित्युभयमपि व्यामज्यवृत्तीति नातिप्रसङ्ग इत्यर्थः। एवं सत्यवयव्यादौ वृत्तिविकल्पदोषस्तथैवापात इत्याह। [1]किमपीति। ननु प्रवृत्तिविज्ञानमेव प्रवृत्तिविज्ञानोपादानं न त्वालयविज्ञानमपीत्यतो न व्यासज्यवृत्तिता, प्रतिसन्धाननियमस्तु तन्निमित्ततामात्रादित्यत आह। न चेति। उपादानेति। यन्निमित्तं तदुपादानं भवत्येवेत्यर्थः। अत्र विपक्षे दण्डमाह। अन्यथेति। यदि सभागसन्तानं विसभागसन्तानं वा प्रत्युपादानं न स्यात्तन्निमित्तकारणमपि न स्यादित्यर्थः। अत्र हेतुमाह। अविशेषादिति।

(१) एकमपीति १ पु० पा०।

उपादानत्वं प्रति शक्तिविरहे निमित्तत्वं प्रति तद्विरहस्याऽविशेषादित्यर्थः। ननु किञ्चिन्निमित्तमपि मा भूत्को दोष इत्यत आह। शोभिति। तर्हि तस्यार्थक्रियासमर्थस्य सत्त्वस्याभावात्तत्तत्पूर्वपूर्वक्षणानामपि तन्निबन्धनं सत्त्वं न स्यादित्यर्थः। नन्वस्तु शून्यतयैव परम निर्वाणमत आह। माभ्विति। तथाच प्रतिसन्धानाय कार्यकारणभावोऽपि त्वदभिमतो न स्यादित्यर्थः। तस्मादिति। निमित्ततानुरोधेन प्रवृत्तिविज्ञानातिरिक्तमेवालयविज्ञानं किञ्चिदुपाददीत तथाच कथं प्रतिसन्धानं इत्यर्थः। दोषान्तरमाह। अपूर्वेति। सर्वमालयविज्ञानं निमित्ततानुरोधेनान्यदन्यमुपाददीत, तत्तदुपात्तमपि प्रत्येकमन्यदन्यमित्यनन्तसन्तानापत्तिरित्यर्थः। उक्तमर्थं श्लोकेन सङ्गृह्णाति। अशक्तिरिति। यदि न किञ्चिदुपाददीत तदा निमित्तमपि न स्यादशक्तेः। यदि सन्तानान्तरमुपाददीत तदाऽनन्तसन्तानापत्तिः। किञ्च स्वतन्त्रसन्तानद्वये परस्परदृष्टेऽताप्रतिसन्धानं, यदि चालयविज्ञानं प्रवृत्तिविज्ञानाभ्यामेकमुपादेयं तदाऽन्वयस्याद्विस्वीकारापत्तावपसिद्धान्त इत्यर्थः।

---

भगी० टी०। आलयेति। तथाच प्रवृत्तिविज्ञानानां भेदग्रहेऽप्यालयविज्ञानस्याविषयकस्य भेदाग्रहोऽस्तीत्यर्थः। तदन्तःपातीति। अहमित्याकारः प्रवृत्तिविज्ञानविशेष एवालयविज्ञानमात्मेत्यर्थः। न हीति। नन्वहमित्यनुभवस्यैव सन्तानान्तरगोचरत्वात्तदननुभवोऽसिद्धः नह्यतिरिक्तस्वात्मन्यहमित्युल्लेखो न त्वालयविज्ञान इत्यत्र नियामकमस्त्यापि। मैवम्। अहमास्पदस्याति-

रिक्तस्यानुभवेऽपि प्रवृत्तिविज्ञानभिन्नज्ञानत्वं नानुभूयत इत्यर्थात्। यद्वालयाभिमतस्याभेदोल्लेखाद्सतिबाधके स्थिरत्वसिद्धावात्मसिद्धि-रित्यत्र तात्पर्यात्।

यद्यालयविज्ञानं प्रवृत्तिविज्ञानोपादानं न वा, अन्ये परस्परेति। परस्परमालयविज्ञानप्रवृत्तिविज्ञानाभ्यां यत्प्रत्या-कलितं विषयीकृतं तस्यानुसन्धानं प्रतिसन्धानं तस्य बन्ध उत्पत्तिः। यद्वा अनु पश्चात् सन्धानबन्धः सङ्घटनं पूर्वापरप्रत्ययानामेकविषयत्व-ग्रहः स न स्यादित्यर्थः। नन्विष्टापत्तिः। न हि द्वयोरपि प्रवृत्ति-विज्ञानालयविज्ञानयोः प्रतिसन्धायकत्वमपि त्वालयविज्ञानस्य, तथाच विशिष्टव्यतिरेकरीत्याऽभिमतात्मसिद्धिरेव। नैवम्। प्रवृत्ति-विज्ञानविषय आलयविज्ञानेन न प्रतिसन्धेय इत्यत्र तात्पर्यात्।

तथात्वेऽपीति। उपादानोपादेयभावानापन्नयोरपि प्रतिसन्धान इत्यर्थः। आद्ये प्रवृत्तिविज्ञानमपि तदुपादानं न वा, आद्ये उभयोरपीति। तदवयव्यादेरङ्गीकारेऽपसिद्धान्त इत्यर्थः। नन्विदमापादनं शब्दसाम्यमात्रात्। तथाह्येकं विज्ञानं यद्यनेक-जातीयकारणजन्यं स्यात् किमायातमनेकवृत्तेरवयव्यादेः न हि तस्यानेकसजातीयजन्यता अनङ्गीकारनिदानं, किन्तु कार्त्स्न्यैकदेश-विकल्पादिः। नैवम्। कार्यकारणभावस्यापि सम्बन्धविशेषतया तस्याऽप्यनेकवृत्तित्वविरोधापादनात्। यद्वा यदाश्रितं कार्यं जायते तदेवोपादानं आश्रितत्वं च धर्मिविशेषः स्वरूपभेदो वेति नासाम्यम्।

द्वितीयमाशङ्क्य निराचष्टे। न चेति। आलयविज्ञान-

सन्तान एवोपादानं प्रवृत्तिविज्ञानन्तु न कस्याप्युपादानं, किन्तु निमित्तमात्रमिति नानेकोपादेयमेकं कार्यमित्यपि नास्ति, तथा सति प्रवृत्तिविज्ञानं निमित्तकारणमपि न स्याद्यन्निमित्तं तदुपादानमिति बौद्धसिद्धव्याप्तेरित्यर्थः।

ननु नेयं व्याप्तिः न हि यस्य यदीयं निमित्तत्वं तस्य तदीयमुपादानत्वमपि, घटनिमित्तकारणदण्डादौ व्यभिचारात्। अथ यन्निमित्तं तत्कचिदुपादानमितिव्याप्तिः, तर्हि प्रवृत्तिविज्ञाने-नालयविज्ञानविजातीयं सन्तानान्तरमेवोपादीयतामित्यर्थान्तरम्। किञ्चापवर्गे प्रवृत्तिविज्ञानस्योपादानतां विनापि सर्वज्ञविज्ञाना-दिकं प्रति निमित्तत्वं सौगतैरभ्युपगम्यते अन्यथा चरमविज्ञान-स्यापि सजातीयज्ञानान्तरोपादानतायामनिर्मोक्षप्रसङ्गः।

अत्राहुः। यदि विज्ञानेन विजातीयं सन्तानान्तरमेव जननीयं तदालयविज्ञानेन प्रवृत्तिविज्ञानोपादेयं प्रवृत्तिविज्ञानं प्रतिसन्धेयं तदा च न स्वोपादेयस्यैव प्रतिसन्धानं तथा चातिप्रसङ्गः। न च प्रवृत्तिविज्ञानमेव प्रतिसन्धायकं तथा सत्यालयविज्ञान एव माना-भावः। न च व्याप्तौ व्यभिचारः चरमविज्ञानस्यापि योगिज्ञानं प्रत्युपादानत्वात्।

विपक्षबाधकमाह। अन्यथेति। अनुपादानत्वे निमित्तता-मात्रमुपगम्य प्राप्य सभागविसभागयोरप्यनुपादानत्वे सर्वत्र तथा-त्वान्निरुपादानस्य च सन्तानस्याभावात् सर्वत्र सन्तानोच्छेदप्रसङ्ग इत्यर्थः। ओमितीति। अनुपादानस्य निमित्तत्वाभावादसत्त्वप्रसङ्गः, अर्थक्रियाकारिण एव सत्त्वात्, तदसत्त्वे तदुत्पत्तिक्रियाविरहे

तद्रूपस्याप्येवमित्यर्थः। तस्मादिति। एतावता प्रवृत्तिविज्ञानमुपादानमेव न भवतीति दूषितम्। इदानीं विजातीयसन्तानं तदिति निरस्यत इत्यर्थः। न प्रतिसन्धान इति। प्रवृत्तिविज्ञानोपादेयेनान्येन सह विज्ञानस्योपादानोपादेयभावाभावादित्यर्थः। अपूर्वेति। तदुपादानं च तृतीयं सन्तानान्तरं स्यात्, एवं तत्र तत्रापौत्यनवस्थेत्यर्थः। अनुपादानत्वेऽर्थक्रियामात्राभावादसत्त्वप्रसङ्गः अनुपादानस्यानिमित्तत्वादिति भावः। उक्तं सङ्करादिति। अशक्तिरिति। प्रवृत्तिविज्ञानस्यानुपादानतया निमित्ततायाः अप्यभावादर्थक्रियायामशक्तावसत्त्वप्रसङ्गः, अन्यस्य विजातीयसन्तानान्तरस्योपादानादनन्त(र)तया न वास्याप्रसङ्गः आलयविज्ञानेन सह प्रवृत्तिविज्ञानजन्यसन्तानान्तरस्य मिथ उपादानोपादेयभावविरहात् प्रतिसन्धानाभावापत्तिः। सङ्करे आलयविज्ञानप्रवृत्तिविज्ञानयोरुभयोरुपादानत्वे अनेकवृत्तेरेकस्याप्युपगमप्रसङ्ग इत्यर्थः।

---

रघु॰ टी॰। द्वितीयं शङ्कते। स्यादेतदिति। अथानुभूयत एवालयविज्ञानं स्वमात्रसाक्षिणा स्वेन कदाचित् परेणाप्यहं जानामीत्याद्याकारेणात आह। सत्यपि वेति। अतिरिक्तालयविज्ञानसन्तानानुभवे प्रवृत्तिविज्ञानं किमालयविज्ञानस्यानुपादानमनुपादेयं च, किं वा उपादानं चोपादेयं च, उतोपादेयमेव, उपादानं तु न कस्यापि, [१]उपादानं तु स्वसांतानिकस्य संताना-

(१) उतोपादेयमेव नोपादानं तत्रापि कस्यापि नोपादानं अथवा तस्यैवेति १ पु॰ पा॰।

न्तरस्य, अथवा आलयस्योपादानमेव नोपादेयम्। आद्ये परस्परमिति। अनुसंधानस्य प्रतिसंधानस्य। बन्धः सम्बन्धः। तथात्वे उपादानोपादेयभावानापन्नयोरपि प्रतिसंधाने। द्वितीये। उभयोरिति। अनेकाश्रयमिति। न चानेकोपादानकं तत् न पुनरनेकाश्रयं भिन्नकालयोरुपादानोपादेययोराश्रयाश्रयिभावायोगादिति वाच्यम्। अवयविनोपीदृशस्य स्वीकारापत्तेः। अत एव स्वसान्तानिकोपादानत्वमपि निरस्तम्। आलयविज्ञानोपादेयस्य प्रवृत्तिविज्ञानस्य प्रवृत्तिविज्ञानोपादेयत्वे एकस्यानेकोपादेयत्वप्रसङ्गात्। सुषुप्तिषु प्रवृत्तिविज्ञानसन्तानानामुच्छेदादन्तिमानां तथात्वायोगाच्च। तृतीयमाशङ्कते। न चेति। अथोपादानमेव निमित्तमिति न नियमोऽत एवापवर्गे चरमं प्रवृत्तिविज्ञानं न किंचिदप्युपादत्त इति चेदत्राह। अन्यथेति। अविशेषात्। नियामकाभावात्। नहि प्रवृत्तिविज्ञानमेव निमित्तमात्रं न तूपादानजातीयमित्यत्र किञ्चिन्नियामकमस्ति। तथाच यथा प्रवृत्तिविज्ञानस्यानुपादायैव किञ्चिन्निमित्तीभूय विनाशः तथोपादानजातीयस्यापि कस्यचिन्निमित्ततामात्रमुपगम्य प्राप्य निवृत्तिर्विनाशः स्यात्। मात्रशब्देन उपादानत्वं व्यवच्छिनत्ति। तथा च सन्तानान्तरवर्तिनोऽप्रकृतेः सान्तानिकान्तरमविकारं प्रत्यनुपादानत्वान्निरुपादानस्य च कार्योत्पादस्यासम्भवात् सन्तान उच्छिद्येत। एवं सन्तानान्तरमपीति सर्वसन्तानोच्छेदः। चरमेति। सर्वसन्तानोच्छेदादुपादानमन्तरेण कार्यानुत्पादान्निमित्तत्वस्यासम्भवादर्थक्रियाविरहिणोऽन्त्यस्यासत्त्वे उपान्त्यादीनामप्यसत्त्वे क कार्यकारणभावः कस्य वा

नियामक इत्यर्थः। प्रवृत्तिविज्ञानोक्तदोषस्यालये समानत्वादुपादानमेवेति पक्षोऽपि निरस्तः। पक्षमुत्थाप्य निराकुरुते। तस्मादित्यादिना। अन्यत्—आलयप्रवृत्तिविज्ञानभिन्नं किञ्चिज्ज्ञानजातीयं, (ज्ञानस्य) बाह्यानुपादानत्वात्। तथाच तदाकलितस्यालयेन प्रतिसन्धानं न भवेत्, न भवतु अतो दोषान्तरमाह। अपूर्वेति। अनन्तानां प्रवृत्तिविज्ञानव्यक्तीनां प्रत्येकमेकैकसन्तानप्रवर्तनेऽनन्तसन्तानप्रसङ्ग इत्यर्थः।

यत्तु प्रवृत्तिविज्ञानेनैकः सन्तान उपादेयस्तेनान्यस्तेन चान्य इत्यनवस्थेत्यर्थ इति। तदसत्। प्रवृत्तिविज्ञानोपात्ततदुपात्तादीनामेकसन्तानान्तःपात्युपादानत्वेनैव निर्वाहे सन्तानान्तरकल्पकाभावात्।

उक्तमर्थं सङ्गृह्णाति। अग्रक्तीति। उपादानत्वाभावे निमित्तत्वस्याप्यभावादर्थक्रियासामर्थ्यविरहेऽसत्त्वं स्यादित्यर्थः। अन्यादानादन्योपादानात्। मिथ इति। आलयप्रवृत्तिविज्ञानयोः परस्परमनुपादानोपादेयभावे परस्परं परस्पराकलितार्थप्रतिसन्धानं न स्यादित्यर्थः। सङ्करे तयोः परस्परोपादानोपादेयभावे। अनेकसंश्रितिरेकस्यानेकोपादेयत्वम्।

अथालयप्रवृत्तिविज्ञानसन्तानयोः परस्परमनुपादानोपादेयभावे कीदृशं प्रतिसन्धानमनुपपन्नं,(१) न तावत् परस्परानुभूतस्य परस्परं स्मरणं आलयस्यैवानुभवितृत्वात् स्मर्तृत्वाच्च। नापि स्वप्रकाशतया। स्वस्यापि स्वविषयत्वात्। पूर्वापरविज्ञानयोरेककर्तृकत्वनिश्चयः,

(१) तयोरित्यधिकं २ पु० पा०।

आलयविज्ञानयोस्सादृश्यप्रतिसन्धानाभावात्, प्रवृत्तिविज्ञानयोश्च कार्यकारणभावादेव तदुपपत्तेरिति चेदालयविज्ञानभेदाग्रहः किमर्थम्। कर्तृभेदग्रहे एककर्तृकत्वारोपासम्भवादिति चेत् त्यज तर्हि प्रवृत्तिविज्ञानानां कार्यकारणभावग्रहम्। एवमेतदालय-विज्ञानानामेवोपादानोपादेयभावनियामकं सौसादृश्यमभेदारोपो-पयोगितयाऽऽश्रीयत इति चेत् लाघवादालयाभेद एव किमिति नाश्रीयते प्रतिसन्धानयाथार्थ्याय। स्थैर्यबाधकादिति चेत्। न। तस्य प्रागेव निरासात्। विधिस्वरूपं चानुगतं सादृश्यं विना स्थैर्य-मसम्भवि। अतद्व्यावृत्तिरूपं च एकं तदर्थमन्तरेण दुर्निरूपणम्।

एतेन प्रवृत्तिविज्ञानसन्तानान्तःपातिनामहमास्पदानां भेदा-ग्रहादेककर्तृकत्वप्रतिसन्धानमित्यपि परास्तम्।

---

नापि द्वितीयः। तस्यापि भेदाग्रहः स्वरूपतो वा स्यात्, विषयतो वा। आद्ये पूर्वाहमिति प्रत्यय-मात्राद्वा प्रवृत्तिविज्ञानेभ्योऽपि वा। न प्रथमः। अह-मित्यत्रासिषमहमिति जानाम्यहमिति ज्ञास्यामीति त्रैकाल्योल्लेखस्य भेदनिश्चयमन्तरेणानुपपत्तेः। कथ-ञ्चिदुपपत्तौ तदर्थस्यैव प्रतिसन्धिरुचितो न प्रवृत्ति-विज्ञानार्थानामपि न च तेभ्योपि भेदाग्रह इति चोक्त-मेव। नापि विषयतः। स हि आकारो वा, वस्त्वन्तरं वा, अलीकं वेति। नाद्यो दूषितत्वात्। न द्वितीयः।

स्वयमनभ्युपगमात्। योऽप्यभ्युपगच्छेत् सोऽपि विरुद्ध-धर्माध्यासाद्भेदमिच्छेत् तन्निवृत्तौ च तन्निवृत्तिम्।

ग्रन्थ० टी०। नापीति। तदन्तःपातिकादाचित्काहंप्रत्यय-रूपि[१] द्वितीयोऽपि पक्षो नेत्यर्थः। तद्भेदाग्रहस्तावत्प्रतिसन्धान-प्रयोजको वाच्यस्तद्विकल्पयति। स्वरूपत इति। विज्ञानानामेवा-न्योन्यमित्यर्थः। पूर्वाहमिति। आलयविज्ञानमात्राद्भेदग्रह इत्यर्थः। अहमिति। क्रियात्वेन कर्तृत्वेन च भेदस्यैव ग्रहादतीतानागत-त्वादिना चेत्यर्थः। कथञ्चिदिति। यद्भेदाग्रह इत्यर्थः। अह-मिति। क्रियात्वेन कुतस्तस्यैव प्रतिसन्धानं न तु पूर्वं भेदेन गृहीतस्यापि विज्ञानस्य विषयप्रतिसन्धानं दृश्यते तदपीत्यर्थः। न च तेभ्योऽपीति। प्रवृत्तिविज्ञानेभ्योऽपीत्यर्थः। उक्तमेवेति। त्रैकाल्योल्लेखस्य भेदनिश्चयमन्तरेणेत्यादिना। विषयत इति। आलयविज्ञानानां परस्परं विषयतो भेदाग्रहो न प्रतिसन्धानहेतु-रित्यर्थः। सहीति। आलयविज्ञानहेतुरित्यर्थः[२]। स्वयमिति। अहमिति ज्ञानस्य त्वया वस्त्वन्तरविषयत्वानभ्युपगमादभ्युपगमे वा स एवाऽऽत्मेत्यर्थः। ननु त्वया तावदभ्युपगम्यते विषयः स च तावत् नानैव सिद्ध्यतु, न त्वेक इति कुत आत्मसिद्धिरित्यत आह। योऽपीति। तत्र भेदसाधकविरुद्धधर्माध्यासाभावादेकत्वमेवेत्यर्थः।

---

(१) रूपो वेतीति २ पु० पा०।
(२) विषय इत्यर्थ इति २ पु० पा०।

भगी० टी०। द्वितीयः प्रवृत्तिविज्ञानसन्तानान्तःपात्यह-मितिकादाचित्कप्रत्ययरूप इति पक्ष इत्यर्थः। चेकाद्येति। अतीतत्वादिविरुद्धधर्मग्रहस्य भेदावगमकत्वाज्जन्मान्तरीयकत्वा-देत्यर्थः। ननु प्रवृत्तिविज्ञानान्तःपातिनीनामहमितिबुद्धीनां स्वरूपभेदपक्षेऽप्यहन्त्वविषयत्वेन समानोपादेयत्वेन वा भेदाग्रहः स्यादित्यत आह। कथञ्चिदिति। तदर्थस्यैवेति। यद्यपि नात्र प्रवृत्तिविज्ञानविषयघटादौ प्रतिसन्धानमुपक्रान्तं किन्तु बुद्धीना-मेककर्तृत्वेन प्रतिसन्धानमिति पूर्वापरविरोधः, तथापि प्रवृत्ति-विज्ञानान्तःपात्यालयविज्ञानस्य विषयः स्वात्मैव विवक्षितः स्वप्रकाशत्वात् तथाच प्रवृत्तिविज्ञानानुतापि तस्येत्यदोषः। दूषितत्वादिति। भेदनिश्चयेन विज्ञानवादनिराकरणेनेत्यर्थः। तन्निवृत्तौ चेति। तथाच विरुद्धधर्माभावादात्माप्यभिन्नः सिद्ध इत्यर्थः।

---

रघु० टी०। कादाचित्काहम्प्रत्यय एवालय इति पक्षं दूषयति। नापीति। भेदनिश्चयमिति। अतीतत्वादिविरुद्धधर्मग्रहस्यैव भेदग्रहत्वात् तद्ग्रहे कदाचिदप्यभेदाग्रहात् कथञ्चित्, अहमास्पदत्वेन प्रतिसन्धिः, स्मरणं प्रतीत्योरेककर्तृकत्वप्रतिसन्धानं च अहमास्पदस्य ज्ञानस्य विषयान्तरविरहेऽपि स्वप्रकाशतया तस्यैव तदर्थत्वं, तदभिधानं च प्रतिसन्धेरुपपादनाय अज्ञाते तदयोगात्, न तु प्रवृत्तिविज्ञानानामेककर्तृकत्वप्रतिसन्धानं तदर्थानां च स्मरणमिति। अनुपदमेव दर्शितरहस्यमेतत्। तेभ्योपि प्रवृत्तिविज्ञानेभ्योऽपि।

दूषितत्वादित्यस्य विज्ञानवादनिरासेनेत्यादिः। अस्तु तर्हि भवतामिवास्माकमपि वस्त्वन्तरं परन्तु सन्तानरूपमत आह। योऽपीति। सिद्धो ह्यहमास्पदमात्मा विरुद्धधर्माध्यासविरहादभेदप्रतिसन्धानाच्चाभिन्न एव न सन्तन्यमान इत्यर्थः।

---

न तृतीयः। अहमिति विकल्पस्य सवस्तुकतायाः प्रागेव प्रसाधनात्। अवस्तुकत्वेऽपि न तत्र प्रकृतोपयोगिभेदाऽग्रहसम्भवः। सदसदारोपितसत्त्वारोपितासत्त्वव्यधिकरणाव्यपदेश्यभेदेन षड्विधस्याऽपि भेदस्याऽग्रहोऽभेदारोपौपयिकतया तत्र न सम्भवतीत्युक्तत्वादिति।

शङ्क० टी०। प्रागेवेति। प्रत्यक्षदृष्टभावित्वे साक्षादेव सवस्तुक इत्यादिनेत्यर्थः। अभ्युपगम्याह। अवस्तुकत्वेऽपीति। प्रकृतम्, अभिन्नत्वेन प्रतिसन्धानं, तदुपयोगीत्यर्थः। सदसदिति। आलयविज्ञानविषयाणामलीकानां सतोभेदस्याऽग्रहस्तावन्न सम्भवति अलीके तदनभ्युपगमात्। नासतः। अतिप्रसङ्गकत्वात्। नाप्यारोपितसत्त्वस्य भेदस्याग्रहो विरोधात् आरोपे सत्यग्रहानुपपत्तेः। नाप्यारोपितासत्त्वस्य भेदस्याग्रहः, असत्त्वस्यारोपे पारमार्थिकसत्त्वप्रसङ्गात्। व्यधिकरणाव्यपदेश्यभेदाग्रहो यद्यभेदारोपहेतुस्तदा सर्वत्राभेदारोपः स्यादित्यर्थः।

---

अथवा इहानुभवः[1] कालान्तरभाविनीं स्मृतिं जनयेत् तज्जनितो वा संस्कारः, सोऽप्यतीन्द्रियः प्रत्यक्षसिद्धो वा, अतीन्द्रियोऽपि तावत्कालावस्थायी[2] सन्तन्यमानो वा, अध्यक्षसिद्धोऽपि तदुत्तरबुद्धिधारारूपः तदन्यो वा तद्विशेषो वा, विशेषोऽप्यनुभवप्रभवत्वमात्रं वा अनुभवितृसन्तानवैजात्यं वा। तच्च न प्रथमः। अनुत्पन्नानन्वयध्वस्तयोरविशेषात्। नापि दृश्योऽन्यः। तस्यानुपलब्धिबाधितत्वात्। नाप्यनुभवप्रभवत्वमात्रं विशेषः। न हि कर्मकरकरोपनीतमेव बीजं क्षितिमासाद्याङ्कुरं कुरुते न तु प्रमादपतितम्, तथा नीलाद्यनुभवप्रभवसन्तानः[3] पीताद्यनुभवेनैवोपनीयतां नीलाद्यनुभवेनैव वेति न कश्चिद्विशेषः। एवं चाऽननुभूतेऽपि स्मरणप्रसङ्गो न चानुभूतेऽपीति।

शङ्क० टी०। प्रतिसन्धानबलात् प्रत्यक्षतः कर्त्रैक्यं साधयित्वा सम्प्रति स्मृत्यन्यथानुपपत्त्याऽनुभवितृस्मर्त्रोरभेदं साधयितुमुपक्रमते। अथवेति। इह त्वत्पक्षे। द्वितीयविकल्पं[4] विकल्पयति। सोऽपीति। द्वितीयविकल्पस्य प्रथमविकल्पं विकल्पयति। तावत्कालावस्थायीति।

(१) किमिति पाठः।
(२) तत्कालावस्थायी इति पाठः।
(३) नीलाद्यनुभवसन्तानः। इति पाठः।
(४) द्वितीयं विकल्पमिति पाठः।

द्वितीयेऽपि पक्षत्रयमाह। तदुत्तरेत्यादि। अत्रापि तृतीये विकल्पे पक्षद्वयमाह। अनुभवेति। चिरोत्पन्न[१] एव नीलानुभवो ऽनाहित-व्यापारश्चिरेण नीलस्मृतिं जनयतीति न सम्भवतीत्याह। तत्रेति[२]। हेतुमाह। अनुत्पन्नेति। नीलादिविषयतां तिरस्कृत्य[३]बुद्धिधारा-तिरिक्तो नास्तीत्याह। नापीति। ननु नीलानुभवप्रभवोऽनुभव-सन्तान एव नीलस्मृतिं जनयेदित्यत आह। नापीति। नीलादि-विषयतां तिरस्कृत्यानुभवप्रभवत्वमात्रं[४] बीजत्वप्रयोजकमिति मत्वा दूषयति एवं। चेति॥

---

भगी० टी०। इदानीमन्येनानुभूतस्यान्येन स्मरणादनुभवितृ स्मर्त्रोरेकत्वसिद्धिरित्यन्यथा प्रतिसन्धानमुपपादयितुमाह। अथवेति। अनुभव एव व्यापारं विनाऽन्यदा स्मरणं जनयेदित्यर्थः। तदुत्तरेति। अनुभवोत्तरबुद्धिरूप इत्यर्थः। तद्विशेषो वेति। तदुत्तरबुद्धितद-न्ययोर्विशेषो वेत्यर्थः। नापीति। अध्यक्षसिद्धपूर्वानुभवोत्तरबुद्धि-धारातिरिक्तः संस्कारोऽपि व्यापारो नास्ति अनुपलम्भबाधितत्वात्, सौगतैरनभ्युपगमाच्चेत्यर्थः। नन्वध्यक्षसिद्धपूर्वानुभवोत्तरबुद्धिधारा-विशेष एव पूर्वानुभवव्यापारः स्यात् स च विशेषोऽनुभवप्रभवत्वरूप एवेत्यत आह। नाप्यनुभवेति। स्मरणं प्रत्यनुभवप्रभवत्वमात्रस्यैव प्रयोजकत्वे प्रयोजकरूपाविशेषात् सर्वा बुद्धयः स्मरणं जनयेयुः।

(१) अचिरोत्पन्न इति पाठः।
(२) अत्रेति। इति पाठः।
(३) नीलानुभवस्य व्यापारो दृश्य एव इति पाठः।
(४) नीलादिविषयस्मृतौ अनुभव प्रभवत्वमात्रमिति पाठः।

न च तदुत्तरबुद्धिधारायां सर्वा बुद्धयः स्मृतिं जनयन्तीति सौगतस्या-भ्युपगमः अनुभवोत्तरकालं मासादिना स्मरणस्यानुभवादित्यर्थः। एतेन तदन्यविशेषो निराकृतः। ननु विशेषान्तराभावेऽपि तज्जन्यत्व-मात्रमेव विशेषः स्यादित्याशङ्क्याह। नापीति। सन्नपि सोऽप्रयोजकः सामान्यमात्रं प्रयोजकमित्यत्र दृष्टान्तमाह। न हीति। दूषणान्तरं सङ्क्रमयन्नाह। एवञ्चेति। अनुभवप्रभवत्वरूपे विशेषे स्मृत्यनुकूलतयो-च्यमाने य एव रूपरूपत्वानुभवस्वरूपो वा सन्तानो नीलविषयकानु-भवेनाहितः स एव पीतानुभवेनापीत्यननुभूतेऽपि स्मरणप्रसङ्गः, नीलानुभवस्यापि तत्सन्तानत्वेनैव प्रयोजकत्वादित्यर्थः। अप्रयोजकत्वे दोषमाह। न वेति। नन्वनुभवधीसन्तानस्यापि कस्यचित् स्मरणा-जनकतया स्वलक्षणवैजात्यकृतमेव धीसन्तानवैजात्यमस्तु तत एव नाननुभूतेऽपि स्मरणापत्तिः॥

अत्राहुः क्लृप्तकारणानुपपत्तौ कारणान्तरं कल्पयितुमुचितं न तु क्लृप्तस्यैव विशेषकारणत्वं वैजात्यन्यस्यानुपलम्भबाधितत्वात्॥

---

रघु॰ टी॰। अनुभवजन्यसंस्कारस्य स्वाश्रये स्मृतिजनकत्वात् स्थिरमाश्रयमात्मानं साधयति। अथवेत्यादिना। स्मृतिं साक्षा-ज्जनयेत्। तदुत्तरेति। अनुभवोत्तरेत्यर्थः। तद्विशेष इति। तादृश-बुद्धिधाराविशेषः, विशिष्यत इति विशेषो धर्मो। विशेषोऽपीति। विशिष्यतेऽनेनेति विशेषो व्यावर्तको धर्मः। अन्विति। वैजात्यं व्यावृत्तं धर्मान्तरं अनुभवोत्तरतत्सान्तानिकमात्रवृत्ति। अविशेषात्। जनक-त्वासम्भवात्। व्यापाररूपान्वयस्वीकारे तु न साक्षाज्जनकत्वं द्वितीय-पक्षान्तर्भावश्चेति भावः। अनुभवोत्तरबुद्धित्वमात्रस्य प्रयोजकत्वेऽति-

प्रसङ्गो दूषणमतिस्फुटत्वान्नाभिहितम्। एवञ्चेति। नीलाद्यनुभवस्य तत्वेनानुभवत्वेन वा पीतस्मरणप्रयोजकत्वे। अननुभूतेऽपि पीते स्मरणं स्यात्। नियामकरूपाभावात्। अप्रयोजकत्वे च[1] नानुभूते-ऽपीत्यर्थः।

---

शालिप्रभवस्य बीजस्य शालित्व[2]प्रतिसंधानवन्नियम इति चेत्। न। क्षीरजम्बूरसपायिनील-धवलकलरवजनितविपरीतपारावतवदनियमदर्शनेन तस्याप्रयोजकत्वात्। वैजात्यन्तु विशेषो भवेत्, यथा क्षीरावसेकादम्लत्वं परिहृत्य माधुर्यमुपादायानुवर्तमानाऽऽमलकी कालान्तरेऽपि फले माधुर्यमुन्मीलयति, लाक्षारसावसेकाद्वा धवलिमानमपहाय रक्ततामनुवर्तमानं कार्पासबीजं कुसुमेषु रक्तताम्, न चैवं प्रकृते, जपा[3]कुसुमाद्युपधानसन्निधानेऽपि[4] तद्रूपतामनादाय धवलिमानमेव संदधानस्य स्फटिकस्येव विज्ञानस्य विषयोपधानमपगम्य[5] चिद्रूपतामात्रेणानुवृत्तेः। सर्वाकारत्वमेव सर्वज्ञानानां किन्तु कश्चिदाकारः पटुरन्ये त्वपटव इति स्वदर्शन-

(१) त्वेऽपीति १ पु० पा०।
(२) शालि प्रतिसंन्धानवदिति पाठः।
(३) जवाकुसुम इति पाठः।
(४) कुसुमाद्युपधाने इति पाठः।
(५) —मपगमय्य इति पाठः।

अभावतो विरुद्धधर्माध्यासादपि न भीः, न हि स एव पटुरपटुश्चेति संभवति। न च स्वसंविदित-रूपस्यापाटवार्थं पश्यामः।

शङ्क॰ टी॰। नीलादिविषयपुरस्कारेण दूषयितुं शङ्कते। शालीति। शालित्वप्रतिसन्धानवदिति। परम्परया शालिबीजो-त्पादकत्ववदित्यर्थः। नीलधवलपारावतयोर्नीलपारावतप्रभवत्व-धवलपारावतप्रभवत्वमात्रं[1] यथा न तन्त्रं वैपरीत्यस्यापि दर्शनात्तथा नीलानुभवप्रभवत्वादिकमपि न विशेषः स्याद्व्यभिचरेदित्यर्थः[2]। अत्र च पाकजगुणोत्पादवत्तत्रापि कश्चिद्व्यापारोऽवश्यं कल्पनीय इति भावः। वैजात्यं लिति। यत्र सन्ताने नीलानुभवो न वृत्तस्त-द्वैजात्यमित्यर्थः। तथा च माननुभूते स्मरणप्रसङ्ग इति भावः। आमलकीकार्पासयोः पाकजगुणपरम्पराधीनं माधुर्यं रक्तता च यथा, तथा विशेषः कश्चिदिह नास्तीत्यर्थः। ननु नीलानुभव-परम्परयाऽपि[3] नीलविषयतैव तथा च किमन्येन विशेषणेत्यत आह। सर्वाकारेति। एवं सति सर्व एवानुभवो[4] नीलोल्लेखी स्यात् तत्रापाटवं यदि तदा पटुत्वापटुत्वलक्षणविरुद्धधर्माध्यासः स्यादित्यर्थः। ननु नीलपीतादिविषयावच्छेदेनैकत्रैव पटुत्वमपटुत्वं च स्यादित्यत आह। न चेति। लभ्यते ज्ञानं साकारं स्वप्रकाशं च तथा च नीलपीताद्याकारनिकरविशिष्टमेव स्वं प्रकाशेतेत्यर्थः।

---

(१) नीलधवलपारावतप्रभवमात्रमिति पाठः।

(२) व्यभिचारवदित्यर्थ इति पाठः।

(३) परम्परापि इति पाठः।

(४) सर्वत्रानुभवो इति पाठः।

भगी० टी० । शालीति । तत्सन्तानादेव तज्जातीयत्वमिति नियमः स्यादित्यर्थः । यद्यपि सौगतनये बीजत्वेनाङ्कुरप्रयोजकता नास्तीति दृष्टान्तासङ्गतिः, तथाऽप्यभ्युपगमवादोऽयं मन्तव्यः । कारण-साकल्यं कार्यसाजात्यनियतमित्यत्र प्रतिदृष्टान्तमाह । क्षीरेति । अनुभवितृसन्तानवैजात्यं वेति चरमपक्षमुत्थापयति । वैजात्यन्त्विति । वैजात्यं स्वरूपतो विषयतो वा आद्ये यथेति । न चैवमिति । विषयो-परागसम्भवेन ज्ञानमात्रमेवानुभूयते न तु वैजात्यमित्यर्थः । अन्त्ये तु नीलानुभवप्रभवात् पीतानुभवादनन्तरं नीलस्मृतिर्न स्यादिति भावः । ननु विषयोपरागव्यतिरेको नास्ति । किञ्च कारणज्ञानाकारः कार्यकालेऽप्यनुवर्त्तत इति पीतानुभवोऽपि नीलविषयक एवेति नोक्तदोष इत्यत आह । सर्वाकारत्वमिति । एकस्य पाटवापाटव-विरोधादित्यर्थः । न वा ज्ञाने स्वप्रकाशत्वेनापटुत्वं सम्भवतीत्याह । न चेति ।

---

रघु० टी० । शालीति । यथा शालिप्रभवबीजस्य शालित्वं तथा पीतस्मरणजनकपीतानुभवप्रभवस्य नीलानुभवस्यापि पीतस्मरण-जनकत्वमित्यर्थः । क्षीरेति । क्षीरपायिनो नीलात् पारावतात् धवलस्य पारावतस्य, धवलाच्च जम्बूरसपायिनो नीलस्योत्पादेन कारणतारूप्यमतन्त्रमित्यर्थः । गुच्छबीजयोर्वैजात्यनिबन्धनमेव बीज-गुच्छयोर्वैलक्षण्यं, न च पीतानुभवप्रभवनीलानुभवे पीतस्मरणजनन-नियामकं किञ्चिद्वैलक्षण्यमस्तीति भावः ।

अथान्यत्र यथा तथाऽस्तु, प्रकृते पुनरनन्यगतिकतया तत्प्रभवत्वमेव प्रयोजकं कुतश्चिद्बीजादङ्कुरानुत्पादेन तुल्ययोगक्षेमस्य । कुतश्चित्तत्प्रभ-

वात्स्मृत्यनुत्पाद इति। मैवं। तत्प्रभवत्वं हि न तज्जन्यत्वं तदुपादेयत्वं वा, अन्तरितसान्तानिके तदभावात्। नापि तत्प्रयोज्यत्वं, शिष्याचार्यस्थलेऽतिप्रसक्तेः। तत्सान्तानिकत्वे सति तदुत्तरत्वं तदिति चेत्। न अनतिप्रसक्तसन्तानत्वनिर्वचनाशक्यतायाः प्रागेव दर्शितत्वात्। पीतादिस्मरणनियामकं हि वैजात्यं पीतादिविषयत्वं वा स्यात्, पीताद्याकारत्वं वा, अवान्तरजातिभेदो वा। तत्र ज्ञानस्य पीताद्यनुभवप्रभवस्य नीलादिज्ञानस्य पीतादिविषयोपधानमपगमय्य परित्यज्येति द्वयोर्व्युदासः। चिद्रूपतामात्रेणेति चरमस्य। अतएव पीतादिस्मरणकुर्वद्रूपत्वं नियामकमिति परास्तम्। अन्वयव्यतिरेकगृहीताया अनुभवस्य स्मरणजनकताया निर्वाहाय व्यापारकल्पनाया एव न्याय्यत्वात्, जातिविशेषस्य योग्यानुपलम्भबाधितत्वात्, योग्यव्यक्तिवृत्तित्वेनैव जातेर्योग्यत्वात्, रक्तपीतोभयस्मारके नीलानुभवे सङ्करप्रसङ्गात्, तज्जातीयं प्रति जनकत्वेन जात्यन्तरस्य एवं तज्जातीयं प्रत्यपीत्यनवस्थितजातिपरम्पराकल्पनप्रसङ्गाच्च। एतेनाङ्कुरकुर्वद्रूपत्वं व्याख्यातम्।

पूर्वज्ञानाकारः सर्वस्मिन्नुत्तरज्ञानेऽनुवर्तत इति तदाकारताविगमो नास्तीत्याशङ्कते। सर्वाकारत्वमिति। न हीति। तवाकाराकारिणोरभेदादिति भावः।

---

निराकारपक्षेऽपि यावानर्थो बुद्धेर्विषयस्तावति स्फुटैव सा, यत्र चास्फुटा नासौ तस्य विषयः। तथात्वे वा विषयेतरव्यवस्था न स्यात्। सांशे त्वर्थे युक्तमेतदिति दर्शितं प्राक्। तस्मादतीन्द्रियः संस्कारः परिशिष्यते। स च न संतन्यमानः तत्रैव स्मृत्यादिप्रसङ्गे

प्रवृत्तिसंताने फलानवकाशप्रसङ्गात्, अन्यत्र संस्कारेऽन्यत्र फलेऽतिप्रसङ्गात्, परम्परयैकोपादानतया नियमे संस्कारान्तरसन्तानेऽपि स्मृतिप्रसङ्गात्[१]। तस्मात् स्वोपादान एव स्मृतिं करोतीति गत्यन्तराभावादापाततित्क्रमप्युपेयमेव[२] तथा च स्मृतेः कालान्तरसम्बन्धात् संस्कारतदुपादानयोः स्थैर्य्यमयत्नसिद्धमवर्ज्जनीयञ्चेति[३]।

शङ्क० टी०। निराकारपक्षेऽपि पटुत्वापटुत्वे एकत्र न सम्भवत इत्यत आह। निराकारेति। तथात्वे वेति। अस्फुट[४]विषयत्वे सर्वं ज्ञानं सर्वविषयकं स्यादित्यर्थः। नन्वेवं संयोगतदभावावपि नैकत्र स्यातामत आह। सांश इति। तत्राऽवच्छेदभेदस्य दर्शितत्वादिह तु विषयोऽवच्छेदकः स एव विरोधघटक इति भावः। स्वाभिमतमुपसंहरति। तस्मादिति। तत्रैवेति। संस्कारस्मृतिसन्तान एवेत्यर्थः[५]। फलं स्मृतिः प्रत्यभिज्ञानं च, प्रवृत्तिविज्ञानसन्ताने तु [६]फलं दृश्यते गेहे स घट इति स्मरणात् प्रवृत्तेरिति भावः। ननु यत्र नीलानुभवो मूलकारणं तज्जनितः संस्कारसन्तानः[७] फलं

(१) तदुत्पत्तिप्रसङ्गादिति पाठः।
(२) अभ्युपेयमिति पाठः।
(३) चेति पाठः।
(४) अस्फुट इति नास्ति।
(५) स्मृतिसन्तान एवेति पाठः।
(६) प्रवृत्तिविज्ञानसन्तान इति पाठः।
(७) संस्कारस्तत्रेति पाठः।

जनयतीति नोक्तदोष इत्यत आह। परम्परयेति। नीलानुभवानन्तरोत्पन्नपीतानुभवरक्तानुभवादिभिः प्रत्येकं संस्कार(१) एव स्मृतिं जनयतीत्यवश्यमङ्गीकर्तव्यं तथा च पीतानुभवजनितसंस्कारसन्तानेऽपि नीलस्मृतिः स्यादित्यर्थः। स्वोपादान एवेति। संस्कारः स्वसमवायिकारण एव स्मृतिं जनयतीत्यवश्यमङ्गीकर्तव्यमित्यर्थः। ततः किमित्यत आह। तथा॰ चेति। अनुभवानन्तरं संवत्सरानन्तरमपि भवन्ती स्मृतिः संस्कारस्य तदुपादानस्य च आत्मनः स्थैर्यमाक्षिपतीत्यर्थः॥

---

भगी॰ टी॰। यदि ज्ञानविषयो स्फुटः तदा विषयाविषयव्यवस्था न स्यात् घटज्ञानेऽप्यस्फुटः पटोभासत इति सुवचत्वादित्याह। तथात्व इति। एवमेकत्रैव विषये दूरत्वादूरत्वयोः स्फुटत्वास्फुटत्वे समन्वयति। मार्गत्विति। बहुतरान्यतरधर्मविषयज्ञानं तत्प्रयोजकमित्यर्थः। तदुत्तरबुद्धिधारामात्रकल्पस्त्वतिप्रसक्त इत्यभिप्रेत्योपसंहरति। तस्मादिति। सन्तन्यमानोऽस्थायीत्यर्थः। तथात्वे दोषमाह। तत्रैवेति। प्रवृत्तिविज्ञानातिरिक्तसंस्कारसन्तान एव स्मृतिः स्यात् न प्रवृत्तिविज्ञानरूप आत्मनि, तथा चाहं स्मरामीति धीर्न स्यात्, न ह्यन्यत्र संस्कारोऽन्यत्र स्मृतिरित्यर्थः। ननु प्रवृत्तिविज्ञानोत्पादानुभवेन विजातीयः संस्कारोऽपि जनित इति तस्य स्वसन्तान एव स्मृतिजनकत्वान्नातिप्रसङ्ग इत्यत आह। परम्परयेति। सन्तानत्वं यदि पारम्पर्यमात्रं तदातिप्रसङ्गः, उपादानत्वन्तु व्यवहितानुभवस्य न सम्भवतीति पूर्वसंस्कारसन्तान एवोत्तरस्य तस्योपादानं वाच्यं तथा च

(१) प्रत्येकं संस्कारसन्तानो जनितः सर्वत्र च नीलानुभव एव मूलम्। तथा चेति २ पु॰ पा॰।

तत्रैव स्मृतिप्रसङ्ग इत्युक्तमित्यर्थः। अयत्नेति। पक्षधर्मताबलात् सिद्धमित्यर्थः। अवर्जनीयमिति। उपादाननिवृत्तौ कार्यावस्थानाभ्युपगमे व्याघातादित्यर्थः॥

---

रघु० टी०। नन्वेवमेकत्रैव धर्मिणि दूरत्वादूरत्वाभ्यां कथं प्रतीत्योरस्फुटत्वस्फुटत्वे। अत आह। सांश इति। तत्र भूयोऽल्पधर्मग्राहित्वे एव ते इति। तत्रैव संस्कारसन्तान एव। स्मृत्यादीत्यादिपदेन स्मृतिजन्यत्वादिपरिग्रहः[1] फलं संस्कारस्य स्मृत्यादिः। तथा चाहं स्मरामीत्यादिप्रत्ययो न स्यात्, प्रवृत्तिविज्ञानसन्तानान्तःपातिन एव ज्ञानस्याहमास्पदत्वात्। एवमालयविज्ञानवादिनयेऽपि बोध्यम्। ननु संस्कारः परम्परया स्वोपादानोपादानके सन्ताने स्मृतिं जनयति तादृशस्य प्रवृत्तिसन्तानोऽपीति न तत्र स्मरणानुपपत्तिरत आह। परम्परयेति। [2]पीतसंस्कारसन्तानोपादानपीतानुभवसाक्षात्परम्परोपात्तनीलाद्यनुभवजनितनीलादिसंस्कारसन्ताना अपि भवन्ति परम्परया पीतसंस्कारोपादानोपादानका इति तेष्वपि पीतस्मरणप्रसङ्गः, तथा च प्रवृत्तिसन्ताने स्मरणोत्पादकाले सन्तानसहस्रेऽपि[3] स्मरणसहस्रं[4] स्मरणमित्येव च तस्य प्रत्ययः स्यात्, न तु स्मरामीति, संस्कारस्यानहमास्पदत्वात्। न चैकोपादानकविज्ञानसन्ताने स्मृतिजनकत्वं आचार्यीयसंस्कारेण शिष्यविज्ञाने स्मरणप्रसङ्गात्।

(१) स्मृतिजन्येच्छापरिग्रह इति पाठः।

(२) पीतसंस्कारसन्तानोपादानपीतानुभवोपात्तनीलाद्यनुभवेत्यादि १ पु० पाठः।

(३) द्वयेऽपीति १ पु० पा० संस्कारसन्तानसहस्रेऽपीति २ पु० पा०।

(४) द्वयमिति १ पु० पा०।

न चाचार्यीयं ज्ञानं न शिष्यविज्ञानोपादानमिति वाच्यम्। अनुभवितृज्ञानस्याप्यनेकान्तरितस्य स्मर्तृज्ञानानुपादानत्वात्, सन्तानलक्षणप्रतिसङ्क्रमस्य दुर्वचत्वादित्युक्तत्वात्, संस्कारस्य स्वोपादाने स्मृतिजनकताया एव लाघवेन कल्पयितुमुचितत्वाच्च॥

एतेन धर्माधर्मरूपः[१] संस्कारो व्याख्यातः। तथा च यो यः संस्कारः क्वचित् सन्तान आहितः[२] स तत्रैव फलाधानयोग्यो नान्यत्रेत्याद्यपि निरस्तम्। अतिरिक्तसंस्कारपक्षे हेतोर्व्यधिकरणत्वात्, विशेषलक्षणस्य च स्वरूपासिद्धत्वात्, अविशिष्टोत्तरकार्यप्रवाहमात्रस्य च विरुद्धत्वादिति।

शङ्क० टी०। एवं च यागहिंसादिजनितौ धर्माधर्मावपि स्वस्य स्वोपादानस्य च स्थैर्यमन्तरेण कालान्तरभाविफलजनकौ न भवत इत्यत आह। एतेनेति। ननु परोपदर्शितव्याप्तौ को दोष इत्यत आह। तथा चेति। संस्कारः स्वसन्ताने फलजनकः संस्कारत्वादिति व्यधिकरणो विगता[३] धिकरणः। त्वया संस्कारस्यानभ्युपगमादित्याश्रयासिद्धिरित्यर्थः। अथ ज्ञानगतजातिविशेषः संस्कारत्वं तत्राह।

(१) धर्माधर्मलक्षण २ पु० पा०।

(२) सन्तानेनोपहित इति २ पु० पा०।

(३) विमता इति पाठः।

विशेषलक्षणस्येति। त्वया जातिमात्रस्य मया ज्ञाने संस्का[१]रस्यातिरिक्तस्यानभ्युपगमात् स्वरूपासिद्धिः। ननु कार्यप्रवाह एव संस्कारस्तथा च नाश्रयासिद्धिस्स्वरूपासिद्धी इत्यत आह। अविशिष्टेति। नीलानुभवोत्तरकार्यप्रवाहो घटपटादिसन्तानोऽपि भवति तत्र स्मृतिरूपं फलजनकत्वं विरुद्धमित्यर्थः। संस्कारस्य स्वसन्ताने फलजनकत्वं सम्भाव्यते न तु प्रवृत्तिविज्ञानसन्ताने व्यधिकरणत्वात्। किञ्च विशेषलक्षणः स्थिरातीन्द्रिय[२]लक्षणविशेषगुणस्त्वन्मते स्वरूपासिद्धः नीलानुभवोत्तरकार्यप्रवाहमात्रस्यैव संस्कारपदवाच्यत्वं विरुद्धं[३] घटपटादौ सुखादौ च संस्कारपदवाच्यत्वप्रसङ्गादिति वार्थः॥

---

भगी॰ टी॰। ननु संस्कारसन्तान एव संस्कारो जायते ततस्तत्रैव स्मृतिर्न तु प्रवृत्तिविज्ञानसन्तताविव्याशङ्क्य निराकरोति। अतिरिक्तेति। उत्तरबुद्धिधारातिरिक्तसंस्कारपक्षे हेतोः स्मृतिहेतोः संस्कारस्य व्यधिकरणत्वात् प्रवृत्तिविज्ञानरूपात्मनि स्मरणासत्वप्रसङ्गः। न चेष्टापत्तिः। अनुभवितुरस्मरणे योऽहमन्वभूवं सोऽहं स्मरामीत्यनुभवविरोध इत्यर्थः। विशेषलक्षणस्येति। उत्तरबुद्धिधारारूपसंस्कारपक्षे तस्य यो विशेषोऽनुभवितृसन्तानापेक्षया वैजात्यं, तस्याननुभवेन स्वरूपमसिद्धमित्यर्थः। अविशिष्टेति। अविशिष्टोत्तरबुद्धिप्रवाहमात्ररूपत्वे संस्कारस्याननुभवितृसन्तानेऽपि स्मरणप्रसङ्गेन तत्रैव स्मृतिरित्यस्य विरुद्धत्वादिति वरम्।

---

(१) संस्कारत्वजातेरनभ्युपगमादिति २ पु॰ पा॰।

(२) आत्मविशेषगुणत्व इति पाठः।  (३) विरुद्धं नास्ति।

सम्प्रदायविदस्तु हेत्वाभासपरतया व्याचक्षते विगतमधिकरणं व्यधिकरणमिति व्युत्पत्त्याऽऽश्रयासिद्धत्वं व्यधिकरणत्वं ज्ञानातिरिक्तस्य संस्कारस्य सौगतैरनङ्गी* - - - - ।

रघु० टी० । [१]सन्ताने आहितः सन्तानोपात्तः । अतिरिक्तेति संस्कारसन्तानान्तःपातिनः स्मृतिहेतोः संस्कारस्य विज्ञानसन्ताना-दृत्तित्वात्तत्र स्मृतिर्न स्यात्, स्याच्च संस्कारसन्तान इत्यर्थः । तदुक्तं तत्रैव स्मृत्यादिप्रसङ्ग इत्यादि । विशेषेति । तदुत्तरबुद्धिधारा-विशेषात्मकस्य संस्कारस्य यत् स्वरूपं अननुभवितृसन्तानव्यावृत्तं जातिभेदादि भवदभिमतं तस्यासिद्धत्वात् । तदुक्तं चिद्रूपतामात्रेणा-नुवृत्तेरिति । अविशिष्टोत्तरेति । मैत्रीयपीताद्यनुभवोत्तरत्र रूपादि-प्रवाहेऽननुभूतपीतादिकचैत्रीयज्ञानप्रवाहे वा पीतादिस्मरणप्रसङ्गेन तदुत्तरकार्यप्रवाहमात्रस्य संस्कारताया विरुद्धत्वात् । तदुक्तम् । एवं चाननुभूतेऽपि स्मरणप्रसङ्ग इति । अनुभवप्रभवज्ञानत्वं च निराकृत-मिति भावः ।

अतिरिक्तेति । अत्र यदि स्थिरः सन्तन्यमानो वा स्मृतिजनको संस्कारः पक्षः, तदा हेतोर्व्यधिकरण्यमपक्षधर्मत्वं, स्थिरस्यास्थिरोपा-देयताया उभयमतविरुद्धत्वात्, उपादाननाशे उपादेयनाशस्यावश्य-कत्वात् उत्तरस्य च संस्कारस्य पूर्वसंस्कारोपादेयत्वात् । आद्यस्य पक्षत्वे च बाधः, तेन विज्ञानसन्ताने किञ्चिदजननात्, तथा च विशेषणस्य

*व्यधिकरणत्वाद् इत्यारभ्य तदसमर्थेन इत्यन्तं मूलग्रन्थस्य टीका खण्डितास्ति ।

(१) सन्तानेनोपस्थितः सन्तानोपात्त इति १ पु० पा० ।

पक्षतायां विगमेनाधिकरणस्य पक्षस्य विगमादैयधिकरण्यं विगताधिकरणत्वमाश्रयासिद्धत्वं। अथानुभवोत्तरो ज्ञानसन्तानविशेष एव संस्कारः पक्षः, तदा तस्य यत् स्वरूपं वैजात्यादि तस्यासिद्धत्वादाश्रयासिद्धिरित्याह। विशेषेति। अथानुभवोत्तरकार्यप्रवाहमात्रं पक्षः, तदा रूपादिप्रवाहस्य स्मृतिजनकताया विरुद्धत्वाद्बाध इत्याह। अविशिष्टोत्तरेति। अथ पीताद्यनुभवित्वसन्तानोपादेयत्वेन तादृशसन्ताने पीतादिस्मृतिजनकत्वं साध्यते, तदा आन्तरालिकसान्तानिके बाधः, फलानुपस्थिते स्वरूपयोग्यताया अपि भवद्भिरनभ्युपगमात्, शिष्याचार्यस्थले व्यभिचारश्च। आचार्यज्ञाने शिष्यज्ञानव्यावृत्तस्य सन्तानत्वस्य दुर्वचत्वादित्यपि केचित्॥

---

न चातीन्द्रियोऽपि संस्कारः सौगतनये संभवति। तस्य ज्ञानत्वे परोक्षत्वानुपपत्तेः, अज्ञानत्वे ज्ञानोपादानकत्वायोगात्, सन्तानान्तरत्वे ज्ञानस्यापि पारोक्ष्ये तदन्तःपातिनः स्मृतिसुखादेरपि तथा भावप्रसङ्गादिति। तदिदमुक्तरूपं प्रतिसन्धानं निमित्ततया व्याप्तं अनिमित्तकत्वे नियमानुपपत्तेः। तच्चानेककर्तृकत्वे नास्तीति व्यापकानुपलब्ध्या विपक्षान्निवर्तमानं निमित्तवत्येककर्तृकत्वे विश्राम्यतीति प्रतिबन्धसिद्धिः। एवं च सति अन्वयोऽपि नर्तकीभ्रूलताक्षेपादौ द्रष्टव्यः। सैव हि भ्रूलता त एव वा परमाणवः प्रतिसंधीयमाना नाज्ञाननिमित्तत्वेऽवस्थिताः। विरुद्धधर्मविरहिविषय-

त्वेन तु विशेषणीयमत्र प्रतिसन्धानम्। अन्यथा य एव बालस्त्वया दृष्टः स एव युवा मया दृश्यत इत्यनेनाऽनैकान्त्यात्।

शङ्क० टी०। नन्वस्त्वतीन्द्रियः स्थिरः संस्कारः, तथा च न स्वरूपासिद्धिरित्यत आह। न चेति। स यदि ज्ञानातिरिक्तस्तदा ज्ञानोपादानको न स्यात्, परोक्षज्ञानधर्म एव चेत्तदा तत्सन्ताने स्मृतिसुखादेरपि परोक्षत्वप्रसङ्ग इत्यर्थः। उक्तरूपमिति। पूर्वापरप्रत्यय-प्रत्यवमर्षरूपमित्यर्थः। प्रकरणबलात्प्रतिसन्धानबलेन[1] स्मृतिरेवोच्यत इत्येके। स्मृतिः स्वकारणानुभवसमानाधिकरणा स्मृतित्वादिति केवलव्यतिरेकी। न च संस्कारसुखादेः सपक्षाद्व्यावृत्तावसाधारण्यम्, परेण सपक्षानङ्गीकारदशायां व्यतिरेकिप्रवृत्तेः, सपक्षाङ्गीकारे वा सिद्धं नः समीहितमिति भावः। इदानीमन्वयव्यतिरेकिणमाह। एवं च सतीति। विवादपदं प्रतिसन्धानम्, एकविषयं प्रतिसन्धानत्वात् नर्तकीभ्रूक्षेपप्रतिसन्धानवदित्यन्वयी। भवति हि भवन्मतनिपुणानां य एव भ्रूलतायां क्षेप[2]स्त्वया दृष्टः स एव मयापीति प्रतिसन्धानं न तु नर्तकीभ्रूलताक्षेपो न ह्येकः पारमार्थिकः अनेकार्थः समूहत्वा[3]दत आह। अत एवेति। तादृशार्थसमूहस्यापि त्वया प्रत्यक्षत्वेनाभ्युपगमादित्यर्थः। ज्वालादिप्रत्यभिज्ञाने[4] व्यभिचारदर्शनादाह विरुद्धेति।

(१) प्रकरणबलादिति पाठः।

(२) भ्रूलताक्षेप इति पाठः।

(३) अनेकार्थसमूहत्वादिति पाठः।

(४) ज्वातिप्रत्यभिज्ञाने इति पाठः।

भूतचैतनिकमुत्थापयितुं व्यभिचारिप्रत्यभिज्ञानविशेषमुदाहरति । य एवेति ॥

---

रघु० टी० । तस्येति। तेषां ज्ञानमात्रस्य स्वप्रकाशत्वात्। अज्ञानत्व इति। ज्ञानस्याज्ञानोपादानतायास्तैरप्यनभ्युपगमात्। अथ ज्ञानमपि परोक्षरूपमुपेयते संस्कारसन्तानश्च परोक्षज्ञानरूपस्तत्राह। सन्तानेति। स्मृतीति। तेषामतीन्द्रियसन्तानान्तःपातिनोऽतीन्द्रियत्वनियमात्। उक्तरूपं पूर्वापरप्रतीत्योरेकाश्रयत्वावगाहि पूर्वानुभूतार्थावगाहि च। प्रतिसन्धानं प्रत्यभिज्ञानं स्मरणं च। तच्च प्रतिसन्धानं च। अनेककर्तृकत्वे भिन्नाश्रयत्वे। व्यापकस्य निमित्तस्य अनुपलब्ध्या विरहेण। एककर्तृकत्वे अभिन्नाश्रयत्वे। आश्रयत्वविषयत्वसाधारणैकधर्मिसम्बन्धित्वमात्रे साध्येऽन्वयमप्याह। एवं चेति। विरुद्धेति। अभेदप्रतिसन्धानमेवाभेदे मानं, धियामौत्सर्गिकस्य प्रामाण्यस्य विना बाधकमपवदितुमशक्यत्वात्, बाधकं चान्यत्र विरुद्धधर्मसंसर्गो न चेह तत्सम्भव इति रहस्यम्। तदयं सङ्क्षेपः। स्थिरे तावदात्मनि सोऽहमिति प्रत्यभिज्ञानमेव प्रमाणं, बाधकविरहात्, योऽहं घटमद्राक्षं सोऽहं तं स्पृशामीत्यादिप्रतिसन्धानान्यथानुपपत्तिश्च प्रतिपत्तुरनन्यस्यैव प्रत्येतव्यस्याहमास्पदत्वात्। अथ कार्यकारणभावादनहंरूपेऽपि तत्राहन्त्वारोपो वासनादिवशाच्छरीर इव तदभेदश्च स्वात्मन्यारोप्यते तत एव। एतेन पूर्वप्रतीत्याश्रये साक्षात्क्रियमाणत्वं व्याख्यातमिति चेत्। न। बाधकाभावात्। चिरान्तरितानां कार्यकारणभावे मानाभावाच्च। साक्षात्परम्परासाधारणकार्यकारणप्रवाहस्य(१) चाति-

---

(१) प्रदेशेति २ पु० पा०।

दुर्वचत्वात्। नियतं पौर्वापर्यं तावदस्तीति चेत्। न। शिष्याचार्य-धियामपि तत्सत्त्वात्। सादेश्ये सतीति चेत्। न। स्थिरस्यैकदेशस्य भवद्भिरनभ्युपगमात्। अभ्युपगमे वा स एवात्मेति सिद्धं नः समीहितम्। देहस्यापि बाल्यादिभेदेन भेदात् सन्तानैक्यमेव तथास्तीति चेत्। किं सन्तानत्वम्? कार्यकारणप्रवाहत्वमिति चेत्। अनति-प्रसक्तस्य तस्यैव दुर्वचत्वात्, सुषुप्तौ सन्तानविच्छेदाच्च। प्रवृत्तिविज्ञान-सन्तानोपरमेऽप्यालयविज्ञानसन्तानोऽनुवर्तत इति चेत्। न। जागरे स्वतन्त्रसन्तानद्वयाननुभवात्। सर्व एवालयोऽनुभूयते स्वमाच-(१) साक्षिणा स्वेन कश्चित् परेणापि। स च उपादानं प्रवृत्ति-विज्ञानस्यापि, एकस्यापि ज्ञानद्वयोपादानत्वे विरोधविरहात्, अनुपादानस्यापि प्रवृत्तिविज्ञानस्य ज्ञानान्तरनिमित्तत्वान्नासत्त्वं, न वा सन्तानानन्त्यम्। आश्रयश्च प्रवृत्तिविज्ञानस्य सुखादेश्च। अत एवालय इत्युच्यते। गृह्यते चाऽहंज्ञानेऽहं सुखीत्यादिना स्वोपा-देयेन प्रवृत्तिविज्ञानान्तरेणेति चेत्। शिष्याचार्यधियां कुतो नैक-सन्तानत्वं, सादेश्यादेर्नियामकस्य निराकृतत्वात्। वैजात्यादिति चेत्। न। सन्तानयोर्वैजात्ये मानाभावात्। अनन्तालयवैजात्ययोः कल्पनामपेक्ष्य एकालयकल्पनाया एव न्याय्यत्वाच्च। क्षणभङ्गस्य च भग्नत्वात्, क्षणभङ्गे च वैजात्यासम्भवस्योक्तत्वात्। अपि चान्ये-नानुभूतस्यान्येन स्मरणे कुतो नातिप्रसङ्गः? एकसन्तानत्वादेरनु-भवितृप्रभवत्वस्य च नियामकताया निरासात्, एकजातीयशरीर-देशतायाश्च जन्मान्तराव्यापकत्वात्। आद्यप्रवृत्तौ जन्मान्तरानुभूत-

(१) स्वमते साक्षिणेति १ पु० पा०।

स्मरणस्यावश्योपेयत्वात् । अथानुभवशालिना आलयविज्ञानेन वासनाशाली विज्ञानसन्तान उपादीयते, स च न प्रवृत्तिविज्ञानरूपः, स्वप्नादिना तत्सन्तानोच्छेदेनास्मरणप्रसङ्गात्, किन्त्वालयविज्ञानरूपः, तच्च केनचिदुद्भूतवासनाविशिष्टं तेन च स्मरणशालिविज्ञानमुपादीयते कदाचिदेव च स्मृत्युत्पत्तेर्वासनोद्भवस्य भवद्भिरप्युपेयत्वात् । वासना चालयस्य नीलाद्यविषयत्वादतदाकारत्वादनुपलम्भबाधितत्वाच्च यदि नीलादिविषयत्वादिरूपा वैजात्यरूपा वा न सम्भवति, तदाऽतिरिक्तैवास्तु सन्तन्यमाना । मैवम् । व्यधिकरणवासनायाः स्मृतिजनकत्वेऽतिप्रसङ्गात् । स्वाश्रयोपादेये जनकत्वान्न तथेति चेत्, स्वाश्रये जनकत्वमेव किमिव नानुमंस्थाः । क्षणभङ्गभङ्गेन आश्रयवासनायाः स्थैर्ये बाधकाभावादिति ॥

---

न चासिद्धमिदं विशेषणं देहस्यैव चेतनत्वात् । मैवं । देहत्वमूर्तत्वभूतत्वरूपादिमत्त्वादिभ्यः । न च भूतानां समुदाये पर्यवसिते चैतन्यं, प्रतिदिनं तस्यान्यत्वे पूर्वपूर्वदिवसानुभूतस्यास्मरणप्रसङ्गात् । नापि प्रत्येकपर्यवसितं । करचरणाद्यवयवविश्लेषे तदनुभूतस्य स्मरणायोगात् । देहस्य चेतनत्वे बालस्य प्रथममप्रवृत्तिप्रसङ्गाच्च, इच्छाद्वेषावन्तरेण प्रयत्नानुपपत्तेः । इष्टाभ्युपायताप्रतिसन्धानं विना चेच्छानुपपत्तेः । इह जन्मन्यननुभूतस्य प्रतिबन्धस्यास्मृतौ प्रतिसन्धानायोगात्, जन्मान्तरानुभूते चानुभवितरि भस्मसाद्भूतेऽन्येन

स्मरणायोगात्, अनुभवादीनां च प्रवृत्त्यन्तानां कार्य-कारणभावस्य इहैव जन्मनि निश्चितत्वात्, तथा च तदभावे तदभावस्य सुलभत्वात्। अन्यथा त्वति-प्रसङ्गात्। अतएव [1]नेन्द्रियाणि चेतयन्ते, दर्शन-स्पर्शनाभ्यामेकार्थग्रहणाच्च। न च मनस्तथा। तस्य करणत्वेनैवानुमानादिति प्रतिबन्धसिद्धिः, परलोक्या-त्मसिद्धिश्च। अनादिश्चासौ वीतरागजन्मादर्शनात्। अनन्तश्च सतोऽनादित्वात्। द्रव्यं च समवायिकारण-त्वात्। विभुश्च नित्यद्रव्यत्वे सत्यमूर्तत्वात्। अमूर्तश्च निष्क्रियत्वात्। निष्क्रियश्च नित्यत्वे सति अस्मदादि-प्रत्यक्षत्वात्, प्रत्यक्षधर्माश्रयत्वाच्चेति।

शङ्क० टी०। ननु सिद्धमिति। देह एव चेतनस्तस्य च परिमाणभेदेन प्रतिदिनं विरुद्धधर्माध्यासादित्यर्थः। आदिपदा-द्रसवत्त्वगन्धवत्त्वादिपरिग्रहः[2]। दृष्टान्तश्च घटपटादिः। देहः समस्त-श्चेतनस्तदवयवा वा प्रत्येकम्। आद्य आह। प्रतिदिनमिति। अन्त्ये त्वाह। करचरणादीति। दोषान्तरमाह। देहस्येति। प्रथममिति। जन्मानन्तरं स्तन्यपानादौ प्रवृत्तिर्न स्यादित्यर्थः। प्रवृत्त्यभावमुपपाद-यति। इच्छेति। स्तन्यपानस्येष्टसाधनता, अनुमानसाध्या तत[3]स्तत्रेच्छा ततः प्रवृत्तिः इष्टसाधनतानुमितिश्च व्याप्तिस्मरणाधीना व्याप्तिस्मरणं च

(१) इन्द्रियाणि न चेतयन्ते इति पाठः।

(२) रसगन्धादिसंग्रह इति पाठः।

(३) तत इति नास्ति।

संस्काराधीनं संस्कारश्च तदनुभवाधीनः तदनुभवश्च भूयोदर्शनाधीनः, एतच्च सर्वं प्राग्भवीयसंस्कारमन्तरेणानुपपन्नमिति भावः। नन्वियमेव प्रक्रिया कुत इत्यत आह। अनुभवादीनामिति। तदभाव इति। व्याप्त्यनुभवाभावे संस्काराभावस्तदभावात् स्मरणाभावस्तदभावादनुमानाभावस्तदभावादिच्छाभावस्तदभावात्प्रवृत्त्यभाव इति न्यायसिद्धमित्यर्थः। अन्यथेति। बलवत्प्रमाणावधृतकारणमन्तरेण कार्योत्पत्तौ तदाकस्मिकत्वं स्यादित्यर्थः। अत एवेति। प्राथमिकप्रवृत्त्यनुपपत्तेरित्यर्थः[१]। युक्त्यन्तरमाह। दर्शनेति। योऽहं चक्षुषाऽद्राक्षं सोऽहं तमर्थं त्वचा स्पृशामीति कर्तृकरणाभ्यां भेदेनैव ग्रहादित्यर्थः[२]। प्रतिबन्धेति। विरुद्धधर्मविरहिविषयप्रतिसन्धानविषयत्वादेकः कर्तेति प्रतिबन्धसिद्धिरित्यर्थः। आद्यप्रवृत्त्यन्यथानुपपत्तेरेव परलोकयात्मसिद्धिश्च। एतदेवाह। अनादिश्चासाविति। वीतरागेति। रागवज्जन्मदर्शनादित्यर्थः। सत इति प्रागभावव्यवच्छेदार्थम्। समवायिकारणत्वमिच्छादिसत्त्वादेव सिद्धमिति हृदयम्। द्रव्यत्वे सत्यमूर्तत्वादित्यत्रामूर्तत्वमवच्छिन्नपरिमाणायोगित्वं, तच्चाद्यक्षणे घटादावपीति नित्यपदम्। निष्क्रियश्चेत्यत्र सामान्यं दृष्टान्तः। प्रत्यक्षधर्मेत्यत्रापि नित्यत्वे सतीत्यनुषञ्जनीयम् ॥

---

रघु० टी०। इदं विरुद्धधर्मसंसर्गविरहिविषयत्वं। देहस्यैवेति। तथा च [३]पूर्वापराहप्रत्यययास्तदयोर्भेदाग्रहादभेदप्रतिसन्धानं नानुप-

(१) देवेत्यर्थ इति पाठः।

(२) अनुभवादित्यर्थ इति पाठः।

(३) पूर्वापराप्रत्ययविषयोरिति १ पु० २ पुस्तके च पाठः।

पन्नमुपपन्नश्चाऽहं जानामीत्यादिकः प्रत्ययो भवतामिवास्माकमपि ज्ञानस्याज्ञानोपादेयत्वादिति भावः । अचैतन्ये देहत्वादेरप्रयोजकत्व-माशङ्क्याह । न चेति । भेदेऽपि देहानां वासनासन्तानानुवृत्तेर्न स्मरणानुपपत्तिरत आह । देहस्येति । अत एव । देहवच्चक्षुरादेरपि सादित्वेनाद्यप्रवृत्त्यनुपपत्तेरेव । एकार्थग्रहणं एकगृहीतस्यार्थस्यापरेण प्रतिसन्धानं, यमहमद्राक्षं तं स्पृशामि यमस्पार्क्षं तं पश्यामीति, तथाच नयनेन दृष्टस्य त्वचा, त्वचा स्पृष्टस्य च नयनेन प्रत्यभिज्ञानमिति । तस्येति । तथा च सूत्रं "ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्" इति । ज्ञातुश्चाणुत्वे सुखादेरतीन्द्रियत्वादणुदेशत्वापत्तिः, ज्ञातुः सुखादिमत्त्वस्य न्यायानुभवसिद्धत्वादिति विपक्षे बाधकाभावात् । प्रतिबन्धस्य देहत्वादेरचैतन्यव्याप्यत्वस्य सिद्धिः । परलोकी पूर्वजन्म-वान् । प्रथमप्रवृत्तेः प्राग्भवीयमनुभवमन्तरेणानुपपत्तेः । वीतेति । सरागजन्मदर्शनादिति सूत्रार्थः । पूर्वजन्मन्यपि प्रथमप्रवृत्त्यनुरोधेन तत्पूर्वस्य, एवं तत्तत्पूर्वस्य जन्मनः सिद्धिरित्यर्थः । मूर्तेरवच्छिन्नपरि-माणस्य विरहो घटादावाद्यक्षणे ऽस्त्यतो नित्येति । निष्क्रियत्वादिति । नित्यत्वे सतीत्यनुषज्यते । एवं प्रत्यक्षधर्मेत्यत्रापि, तत्र तदंशे च धर्मपदं गुणपरम् ॥

---

तर्काश्चात्र भवन्ति । आदिमत्त्वे प्रथमप्रवृत्त्यनुपपत्तौ सर्वथैवाप्रवृत्तिप्रसङ्गः । सान्तत्वेऽनादेः सत्त्वानुपपत्ति-प्रसङ्गः । अद्रव्यत्वे निर्गुणत्वप्रसङ्गः । अविभुत्वे दहनपव-नादेः क्रियानुपपत्तिप्रसङ्गः[1] । न च संयुक्तसंयोगा-

(१) क्रियानुत्पत्तिप्रसङ्ग इति पाठः ।

त्तदुत्पत्तिः, साक्षात् क्रियावद्द्वारकस्य तस्याभावात्। अतथाभूतस्य च तद्धेतुत्वेऽतिप्रसङ्गात्। मूर्त्तत्वे नित्यस्या-स्मदादिप्रत्यक्षधर्मानाधारत्वप्रसङ्गः, विशेषगुणवता-मारम्भकत्वप्रसङ्गश्च। सक्रियत्वे मूर्त्तत्वप्रसङ्ग इति शास्त्रार्थसंग्रहः।

अणुरेवासौ, विज्ञानासमवायिकारणसंयोगाधार-त्वान्मनोवत्। अणीयांसमणोरपीति बाधप्रतिरोधा-विति[१] कश्चित्। तदयुक्तम्। आत्मन्यविभौ मनसो-ऽणुत्वासिद्धेः, तत् संयोगक्रमादेव क्रियाक्रमोपपत्तेः। आगमस्तु महतोऽपि महीयांसमिति प्रथमपाद-मपहायोपन्यस्तस्तदलमनेन॥

शङ्क० टी०। अचेत्युक्तहेतुषु[२]। अविभुत्व इति। अदृष्टवदात्म-संयोगासमवायिका क्रिया विप्रकृष्टदहनपवनादेरात्मनो विभुत्वमन्तरेण न स्यादित्यर्थः। ननु शरीरसंयुक्तमाकाशं तत्संयोगादेव दहनपवनादौ क्रिया स्यादित्याह। न चेति। संयुक्तसंयोगेन यत्र क्रिया तत्र क्रियावदेव द्वारं संभवति यथा सन्दंशादिक्रियया लौहादिक्रिया, न चाकाशं क्रियावदित्यर्थः। अतिप्रसङ्गादिति। शरीरसंयुक्ताकाश-संयोगादितस्ततः क्रियोत्पत्तिप्रसङ्गादित्यर्थः। न चाऽदृष्टवदात्म-संयोगस्यापि क्रियाहेतुत्वे तदवस्थ एवातिप्रसङ्गः, क्लृप्तक्रियाकारणा-न्तराभावे या क्रिया साऽदृष्टवदात्मसंयोगजन्यैवेति नियमात्।

(१) बाधविरोधादिति इति पाठः।
(२) अत्र। उक्तहेतुषु इति पाठः।

धर्मानाश्रयत्वप्रसङ्गादित्यत्र धर्मपदं गुणपरम् । तेन जातिमत्तया न व्यभिचारः । दोषान्तरमाह । विशेषगुणवत इति । विशेषगुणवन्नित्यं मूर्तमारम्भकमेवेति व्याप्तेः । आद्यविशेषणेन मनसो द्वितीयेनान्त्यावयविनो व्युदासः । आगमेन बाधः अनुमानेन प्रतिरोध इत्याह । बाधप्रतिरोधाविति । क्रियाक्रमोपपत्तेरिति । ज्ञानायौगपद्योपपत्तेरित्यर्थः । महतोऽपि महीयांसमणीयांसमणोरपीति स्तुतिपर आगम इत्याह आगमस्त्विति ॥

भगी० टी० । असिद्धेरिति । साध्यविकलो दृष्टान्त इत्यर्थः । तदन्तमिति । प्रथमविरोधादणुत्वबोधकागमो दुर्बोधत्वपर इति तद्विरोध इत्यर्थः ॥

रघु० टी० । प्रथमेति । प्रवृत्तेरदृष्टसाधनत्वाद्यवगमसाध्यत्वाद्विना च प्रवृत्तिं तदसम्भवादित्यर्थः । अविभुत्व इति । आत्मनो मूर्तत्वे नानादिग्वर्तिनां दहनादीनां युगपददृष्टवदात्मसंयोगाभावात् युगपत् क्रियानुत्पत्तिप्रसङ्गः । न चेति । आत्मगुणो हि प्रयत्नः स्वाश्रयसंयुक्तेन शरीरेण साक्षात् संयोगात् सन्दंशिकायां, क्रियावत्सन्दंशिकासंयोगाच्च लौहे क्रियां जनयति, निष्क्रियद्वारकादपि जनकत्वे शरीरसंयुक्ताकाशसंयोगादपि तथात्वप्रसङ्गात्, तथैव चादृष्टमपि क्रियां जनयेत्, न च तत्सम्भवतीत्यर्थः । अथ जनयतु प्रयत्नो यथा तथा, अदृष्टन्तु यथा कथञ्चित् परम्परया स्वाश्रयसंयोगादेव जनयति, अतिप्रसङ्गस्तु वैभवेऽपि समान इति चेत् । न । लाघवेन स्वाश्रयसंयोगेन

जनकताया एव कल्पनात्। अपकृष्टमहत्त्वे चात्मनोऽवयविलमनित्यत्वं च स्यात्। विशेषेति। नित्यत्वेन विशेषणान्न घटादौ व्यभिचारः। न च स्पर्शवत्त्वमुपाधिः, साधनव्यापकत्वात्। शास्त्रार्थेति। शास्त्रे नानास्थानेषु विस्तरेणाभिहितानामर्थानामेकत्र सङ्क्षेपेणाभिधानमित्यर्थः। बाधेति। बाध आगमेन विरोधः। प्रतिरोधोऽनुमानेन। तदलमिति। आगमो दुर्बोधत्वपर इति भावः॥

स्यादेतत्। सिद्धोऽप्ययमीदृशो हेय एव, आत्मदर्शी हि तदुपकारिणि रज्यते, तदपकारिणं च द्वेष्टि, रागद्वेषौ च मूलं संसारस्य, यस्तु न तं पश्येत् नासौ तदुपकारापकारिणमपि, ततो न रज्येत, न द्विष्यात्, न संसरेदिति जाङ्गलिकेन (विषविद्यावता) नैर्विष्यवत् मुमुक्षुणापि नैरात्म्यमेव भावनीयमिति चेत्। न। अनात्मदर्शिनो मुमुक्षुत्वव्याघातात्। न ह्यात्मानमप्रतिसन्धाय कश्चिद्दुःखं हातुमिच्छेत् सुखं वाऽवाप्तुम्। मया [१]स्वर्गापवर्गफलभागिना भवितव्यमित्यभिप्रायस्य यावदभियोगमनुवृत्तेः। अननुवृत्तावभियोगनिवृत्तौ फलासिद्धेः। इयं च नैरात्म्यदृष्टिर्नास्तिक्यं द्रढयेत्। तच्च प्रबलविषयतृष्णा[२]निष्णातमनर्थमनन्तं प्रसुवीत, न चेदेवं कुतो यावज्जीवेत् सुखं जीवेदित्या-

(१) स्वर्गापवर्गपदे सुखदुःखाभावपर इति टिप्पणी।
(२) संप्लुतमिति १ पु० पाठः।

दयोऽपि [1]निःशङ्कमुल्लापाः। यदुक्तमुपकारिणि रज्येत, अपकारिणं द्विष्यादिति तदेवमेतदिति। यो हि मोक्षमुपकारं मनुते स तद्धेतौ रक्तः तमुपाददानः तत्परिपन्थिनं द्वेषादसंप्रत्ययाद्वा परिहरन्नेव समीहितं समासादयेत्, न तु विपर्ययात्। यस्तु भोगं, सोऽपि तथा इत्यनुकूलमेव प्रतिकूलत्वेन गृहीतं मन्दैः। अन्यत्रानुरज्येत, अन्यत्रापि द्विष्यादिति तु न दृष्टं गोवैद्यकेऽपीति॥

शङ्क० टी०। अयमीदृश इति। आत्मा नित्यविभुरित्यर्थः। हेयत्वे हेतुमाह। आत्मदर्शी हीति। अनात्मदर्शिन इति। दुःखवन्तमात्मानं दृष्ट्वैव तद्दुःखहानेच्छा मुमुक्षा सा आत्मदर्शिन एवेत्यर्थः। एतदेवोपपादयति। न हीति। सुखं वा आप्नुमिति दृष्टान्तार्थम्। अभियोगः। सुखाप्तिदुःखहानानुकूलो व्यापारः। नास्तिक्यमिति। नास्ति कर्म नास्ति कर्मफलमिति निश्चयवत्त्वं नास्तिक्यं, ततः किमित्यत आह। तच्चेति। विषयतृष्णा तावदगम्यागमनाभक्ष्यभक्षणापेयपानाद्यभिलाषः तत्परिप्लुतं तदुपरक्तमनर्थं नरकहेतुभूतमधर्मं बहु जनयेदित्यर्थः। न चेदर्वागिति। यदि नास्तिक्यं न दृढयेदित्यर्थः। सुखं जीवेदिति। भक्ष्यपेयादावविगानतः प्रवृत्तिपरः स्यात्। तद्धेतौ। मोक्षहेतौ। तत्परिपन्थिनं भोगाभिलाषम्। विपर्ययात् मोक्षपरिपन्थिसेवनात्। सोऽपि तथेति। भोगपरिपन्थिनं परिहरेदित्यर्थः। अन्यत्रापीति। समीहितादन्यत्रेत्यर्थः।

(१) निःशङ्कप्रलापा इति १ पु० पा०।

गोवैद्यको गोचिकित्सकः, सोऽपि हि गवां पाटनशोषणादिसाहस-मनुतिष्ठत्येवेत्यर्थः ॥

---

भगी० टी० । इयता प्रबन्धेनात्मतत्त्वविवेकः सिद्धोऽपि न मोक्षहेतुः, प्रत्युत विरोधीति निष्फलः प्रयास इत्यत आह । सिद्धोऽपीति । आत्मा हेयः संसारनिदानरागद्वेषहेतुत्वात् शरीरादिवत् । नैवास्य भावनं मोक्षहेतुः वैराग्यहेतुज्ञानत्वात् दुःखज्ञानवत् । आत्मज्ञानं न मोक्षहेतुः रागद्वेषहेतुज्ञानत्वादित्यर्थः । तथा सति मोक्षसाधनेऽपि प्रवृत्तिर्न स्यात्, तस्या इष्टसाधनताधीजन्यत्वादात्माभावे चेष्टसाधनत्वाभावादित्याह । अनात्मेति । अभियोगः प्रयत्नः । प्रत्युतात्मनोऽस्तित्वधीरेव रागादिहेतुः, परलोकभागिनो निषिद्धकर्मभोक्तुरभावेऽनिष्टसाधनेऽपि प्रवृत्तेरप्रत्यूहादित्याह । इयञ्चेति । नास्तिक्यं नास्ति कर्मफलमिति निश्चयः । भोगमिति । उपकारं मनुते इत्यनुषज्यते ॥

रघु० टी० । सुखं चावाप्नुमिति दृष्टान्तार्थम् । अभियोगः प्रयत्नः । नास्तिक्यं नास्ति परलोकः नास्ति कर्मफलमिति निश्चयः । तच्चेति । परलोकाद्यभावनिश्चयनिवर्तकस्य[१] नरकभयस्य विरहेण रागवशान्निःशङ्कमभक्ष्यभक्षणाद्याचारान्नरकसन्ततिरुत्पद्यत इत्यर्थः । विपर्ययान्मोक्षहेतोरनुपादानात् मोक्षपरिपन्थिनश्चापरीहारात् ।

(१) निश्चये निवर्त्तकस्य इति पाठः ।

भोगमिति । उपकारं मनुते इत्यनुषज्यते । अन्यथाभिलषितहेतोरन्यच्च(१) अभिलषितपरिपन्थिनश्च(२) ॥

---

तथापि दुःखहेतुत्वादिन्द्रियादिवदसौ हीयतामिति चेत्? यादृशो दुःखहेतुस्तादृशो हेय एव, सोपाधिश्च तथा। निरुपाधिरपि हीयतामिति चेत्? न। अशक्यत्वात्, निष्प्रयोजनत्वाच्च। न हि तस्य हानं विनाशो नित्यत्वात्। नापि विप्रयोगो व्यापकत्वात्। नाप्यप्रतिपत्तिः, यथा यथा तदर्थं यत्नः, तथा तथा प्रतिपत्तेः। उपेक्षात इति चेत्? कृतैवैतावन्तं कालमुपेक्षा, तथापि तद्धानासिद्धेः। निष्प्रयोजनं चैतत्, सोपाधेर्हि त्यागो दुःखहानाय, निरुपाधेस्तु किमर्थम्। पुनः सोपाधित्वशङ्कया इति चेत्। न। बीजाभावादिति। कुतः पुनरुपादेयः? तथा सति भावनाक्रमेण निःश्रेयससिद्धेः। किमस्योपादानं? विवेकः। कुतः? अनात्मनः शरीरादेः।

शङ्क० टी०। सोपाधिरिति। शरीरादिसम्भिन्न इत्यर्थः। अशक्यत्वादिति स्फोरयति। न हीति। विप्रयोगो विप्रकर्षः। अप्रतिपत्तिरित्यत्र हानमित्यनुषञ्जनीयम्। उपेक्षात इत्यत्राप्रतिपत्तिरित्यनुषञ्जनीयम्। कृतैवैतावन्तमिति। आत्मप्रतिपत्तावुपेक्षा

(१) अन्यदिति १ पु० पाठः।

(२) चेति १ पु० नास्ति।

कृता श्रवणादौ यत्नो न कृतस्तथाऽप्यात्मज्ञानं न सिद्धमित्यर्थः। निष्प्रयोजनत्वादिति विवृणोति। निष्प्रयोजनं चेति। किमर्थमिति। हेयमिति शेषः। सोपाधित्वेति। पुनः शरीरादिप्राप्त्यापत्तिशङ्कयेत्यर्थः। बीजाभावादिति। संसारबीजं धर्माधर्मौ तदभावादेव न पुनरावृत्तिरित्यर्थः। निरुपाधेरात्मनः प्रतिपत्त्यर्थं प्रणिधानं किमर्थमिति पृच्छति। कुत इति। मननार्थं न्यायानुसरणेन(१) मनने जाते भावनया निदिध्यासनेन साक्षात्कारान्निःश्रेयससिद्ध्यर्थमित्याह। तथा सतीति। नित्यविभुतया हानवदुपात्तस्यैवोपादानमप्यशक्यमित्याह। किमिति। विवेक इति। भेदेन ज्ञानमित्यर्थः।

---

भगी० टी०। सोपाधिरिति। शरीरेन्द्रियाद्युपाधिमानित्यर्थः। अशक्यत्वं विवृणोति। न हीति। नापीति। यद्यपि व्यापकस्यापि विभागरूपो विप्रयोगोऽस्त्येव, तथापि पुनस्तस्य संयोगान्तरमावश्यकमिति भावः। यथायथेति। स्वात्मविषयाप्रतिपत्त्यर्थं यत्नस्तद्विषयज्ञानजन्य इत्यात्मप्रतिपत्तिरवर्जनीयेत्यर्थः। उपेक्षात इति। आत्मप्रतिपत्त्यर्थं न यत्न उपेयत इति आत्मज्ञानं न स्यादित्यर्थः। कृतेनेति। यत्नाभावेऽप्यात्मज्ञानस्यावश्यकत्वाच्छरीरादिभिन्नात्मज्ञानस्य चाद्य यावदवृत्तत्वेन संसारस्यैव सत्त्वादित्यर्थः। पुनरिति। मोक्षेऽप्यात्मनो निदानस्य सत्त्वात् पुनर्दुःखादिमत्त्वशङ्कया मोक्ष इत्यर्थः। बीजेति। तत्सत्त्वेऽपि मुक्तस्यादृष्टाभावादित्यर्थः। भावनेति। शरीरादिभिन्नात्मनिदिध्यासनेनेत्यर्थः। किमिति। हानवदुपादानमप्यात्मनोऽशक्यमित्यर्थः।

---

(१) न्यायानुसार इति २ पु० पा०।

रघु॰ टी॰। उपाधिः शरीरादिः। विप्रयोगो व्यवधानं, वैदेश्यं वा। उपेचात इति। आत्मनः प्रतिपत्तये यत्नाभावादप्रतिपत्तिरित्यर्थः। कृतैवेति। यत्नाभावेऽप्यहं गौरोऽहं सुखीत्यादिप्रतिपत्तेः सत्त्वन्यमानत्वादित्यर्थः। तत्त्वज्ञानविरहेऽपि संसारस्यानुवर्तमानत्वादिति भावः। नित्यविभोरात्मनो हानवदुपादानमप्यशक्यमित्याशयेन पृच्छति। किमिति।

---

किं पुनरत्र प्रमाणं? न्यायः, आम्नायश्च। शरीरमेव हि तावन्मूर्धाभिषिक्तमनात्मानमात्मानं मन्यमानस्य तदुपादाय तदनुकूलत्रैलोक्यविषया तृष्णा विजृम्भते, तथा तत्प्रतिकूलविषयो द्वेषः। न चैतत्केवलात्मदर्शिनः सम्भवति, निरुपाधेः पुत्रवित्तलोभाभावात्, तैरनुपकार्य्यत्वात्, छेदक्लेददाहशोषाद्यनुपपत्तेः विधिनिषेधानधिकाराच्च। जन्मजातिवयोवित्तसंस्काराद्युपग्रहेण तत्प्रवृत्तेः। ततोऽनात्मन्यात्मग्रहो निदानं संसारस्य, मिथ्याज्ञानं च तत्त्वज्ञानान्निवर्तते, तच्च श्रवणमननादिक्रमेणोत्पद्यते, कारणनिवृत्तौ च कार्यं न जायते, उत्पन्नश्च धर्माधर्मप्रचयो भोगेन क्षीयत इति न्यायार्थमारसङ्क्षेपः॥

शङ्क॰ टी॰। अत्रेति। अनात्मनः शरीरादेर्भेदेनात्मा प्रतिपत्तव्य इत्यत्र किं प्रमाणमित्यर्थः। न्यायमत्र सङ्क्षेपतो दर्शयति। शरीरमेवेति। शरीरमेवात्मेति मन्यमानस्य तदनुकूले रागस्तत्-

प्रतिकूले च द्वेषः सदा स्यादित्यर्थः। रागाभावे हेतुमाह। पुत्रेति। तैः पुत्रादिभिः। द्वेषाभावे हेतुमाह। छेदादीति। केवले त्वात्मनि छेदादिदुःखानुभवो नास्तीति न तद्धेतुषु द्वेष इत्यर्थः। ननु केवलात्मदर्शिनोऽपि विधिनिषेधबलाद्यागहिंसादौ प्रवृत्तिनिवृत्ती स्यातामेवात आह। विधीति। तत्प्रवृत्तेरिति। विधिप्रवृत्तेरित्यर्थः। जन्म उच्चाभिजने, जातिः ब्राह्मणत्वादिः, वयो दीर्घायुष्ट्वं, न चैतत्सर्वं वीतरागस्य काम्यमित्यर्थः। तत इति। तथाच तद्विवेकार्थं मुमुक्षुणा यतितव्यमेवेति भावः। ननु रागद्वेषयोरपि मिथ्याज्ञानं निदानं तत्संस्कारस्य चानादेः कथमुच्छेद इत्यत आह। मिथ्याज्ञानमिति। तत्त्वज्ञानमेव कुत इत्यत आह। तत्त्वेति। ननु निवर्ततां मिथ्याज्ञानं, तथापि रागद्वेषयोस्तु कुतो निवृत्तिरित्यत आह। कारणनिवृत्ताविति। कारणस्य मिथ्याज्ञानस्य निवृत्त्या दोषो दोषनिवृत्त्या च प्रवृत्तिस्तन्निवृत्त्या च जन्म, कार्यं निवर्तते मोत्पद्यते इत्यभिमतम्। तथापि पूर्वोत्पन्नधर्माधर्माभ्यां पुनः संसारापत्तिस्तदवस्थैवेत्यत आह। उत्पन्नस्येति। न्यायानुसारेति। एतदर्थं मननानुकूलन्यायानुसरणमित्यर्थः।

---

भगी० टी०। अत्रेति। आत्मविवेकस्य मोक्षसाधनत्वे इत्यर्थः। शरीरमेवेति। तत्राहम्प्रत्ययस्य सार्वलौकिकत्वादित्यर्थः। एतत् रागद्वेषवत्त्वम्। तत्र रागाद्युपपत्तिमाह। निरुपाधेरिति। पुत्रादेः शरीरघटितत्वादित्यर्थः। द्वेषाभावमुपपादयति। छेदेति। जन्मेति। जन्म शरीरं, जातिर्ब्राह्मणत्वादिः, संस्कार उपनयनादिः, विधिनिषेधशास्त्रयोर्जात्यादिपुरस्कारेणेत्यर्थः। यद्यपि भिन्नात्मदर्शिनो-

ऽपौष्कादेषौ सम्भवत एव, शरीरादिसम्बन्धेनात्मन्येव सुखदुःखयो-रुत्पादात्। तथापि न धर्माधर्मवत्त्वप्रयोजकौ, स च केवलात्मदर्शिनः क्रमेण निवर्तत इति भावः।

---

रघु० टी०। अत्र शरीरादिविविक्तात्मज्ञानस्य मोक्षहेतुत्वे। शरीरस्य प्राधान्यं नैसर्गिकाहंप्रत्ययविषयत्वात्। एतत् तृष्णाद्वेष-जृम्भणम्। अस्य शरीरं। तत इति। मिथ्याज्ञानवत एव रागद्वेषाभ्यां प्रवर्तमानस्य विहितनिषिद्धानुष्ठानादपूर्वधर्माधर्मोपचयात् संसारा-विच्छेदो, न तु तत्त्वज्ञानवतो वीतरागादिकस्य। ननु तत्त्वज्ञानवतोऽपि शरीरित्वाद्बलवत्तरविषयोपनिपातात् सुखदुःखतद्भोगोत्पादात्तदधीनौ रागद्वेषौ दुर्वारौ। अत्मप्रत्ययादिना न तौ तथा च श्रुतिः "असक्तो रज्यन्नद्विषंश्चोपभुङ्क्ते" इति चेत्? अस्त्वेवम्। तथापि भोगेनोपात्त-कर्मक्षयार्थं प्रवर्त्तमानस्य विहितनिषिद्धानुष्ठानादपूर्वधर्माधर्मोपचयो दुर्वार इति चेदत्रापौदमेवोत्तरं अनात्मन्यात्मग्रहो निदानं संसारस्येति मिथ्याज्ञानवासनासहायं हि कर्म धर्माधर्मजननक्षममिति।

ननु मिथ्याज्ञानवासनाया धर्माधर्मजनकत्वे मानाभावः। अथ भोगेन कर्मक्षयार्थं प्रवृत्तस्य तत्त्वज्ञानवतोऽप्यपूर्वधर्माधर्मोत्पादे मोक्षासम्भवात् श्रुतिप्रामाण्यान्यथानुपपत्त्या तत्सिद्धिरिति चेन्न। आहत्यैव तत्त्वज्ञानस्य धर्मनाशकत्वात्। 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति स्मृतेर्नैवमिति चेत्। न। प्रायश्चित्तेनापि दुरितनाशात्। न च तस्याधिकारसम्पत्तिरेव प्रयोजनं, अधिकारा-विरोधिन्यपि पातके तद्विधानात्, क्वचिच्च प्राणान्तिकस्यापि तस्य विधानाच्च। न च जन्मान्तरीणमपि पातकमधिकारं विरुणद्धि।

न च प्रायश्चित्ताचरणदुःखमेव पातकफलं, नरकादेरिव तस्य तत्फलत्वेनाश्रवणात्, प्रायश्चित्तविधानवैयर्थ्याच्च, तेन विनापि नरकादेरिव तस्यापि गलेपादिकया दुरितेनैव सम्पादनीयत्वात्, न खलु निवृत्तये कर्मजन्यमनिष्टं विधीयते, अपि तु कर्मणोऽनिष्टसाधनत्वं बोध्यते, विना प्रायश्चित्ताचरणदुःखं तत्तन्महारौरवादिनरकोपभोगेनापि पापस्याविनाशप्रसङ्गाच्च, "तस्मादेनसः पूतो भवति" तरति ब्रह्महत्यां "योऽश्वमेधेन यजते," "ब्रह्महत्यां व्यपोहति" इत्यादिश्रुतिस्मृतिभ्यो दुरितनाशस्यैव प्रायश्चित्तफलत्वावगमाच्च। अत एव गृहदाहेष्ट्यादिवन्नैमित्तिकमेव प्रायश्चित्तमिति परास्तम्। फलान्तरकल्पनागौरवप्रसङ्गात्, कीर्तनकर्मनाशापारगमनादीनामपि धर्मनाशकत्वस्यागमिकत्वाच्च। स्मृतेरागमबोधितनाशकानाश्यकर्मपरत्वात्, बोधयति चागमो ज्ञानस्यापि कर्मनाशकत्वं, तथा च श्रुतिः

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे"॥

इति। स्मृतिरपि

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथेति"।

अत्राहुः। श्रुत्या हि ज्ञानस्य न कर्मक्षयजनकत्वं बोध्यते परन्तु ज्ञानानन्तर्यं कर्मक्षयस्य, तच्च क्लृप्तकारणभावभोगद्वारैव उपपद्यमानं न कारणत्वव्यवस्थापकम्। न च व्यभिचारेण भोगो न तत्त्वज्ञानस्य द्वारमिति वाच्यम्। युगपदनेकदेहसम्पादनीयभोगानां तदधीनत्वात्। जन्यजनकभावः परमस्ति न वेत्यन्यदेतत्।

समानाधिकरणभोगप्रागभावासमानकालीनो भोगस्तत्त्वज्ञानेन जन्यत इत्यपि कश्चित्।

स्मृतेरपि वह्नेः परम्परया भस्मजनकत्ववत् ज्ञानस्यापि विशिष्टभोगद्वारा कर्मनाशकत्वमित्यत्र कर्मपदमुख्यार्थत्वानुरोधात् तत्त्वज्ञानेन प्रतिबन्धाद्विहितनिषिद्धक्रियातो न धर्माधर्मोत्पाद इत्यत्र वा तात्पर्यं, न त्वाहत्यैव ज्ञानस्य कर्मनाशकत्वे, "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इत्यन्यथोपवर्णयितुमशक्यायाः श्रुतेर्विरोधात् । तदर्थश्च तस्यात्मसाक्षात्कारवतः तावदेव चिरं विलम्बो, यावन्न विमोक्ष्ये विमोक्ष्यते उपात्तकर्मराशेः सकाशात् फलोपभोगेन, अथ तस्मिन् सति सम्पत्स्ये सम्पत्स्यते कैवल्येनेति । वाक्यशेषश्च भवति "भोगेन त्वितरे क्षपयित्वेति" । अथाहत्यैव तत्त्वज्ञानं धर्माधर्मप्रतिबन्धकं न तु मिथ्याज्ञानवासनासमुन्मूलनद्वारेति चेत् । न । शरीरभिन्नात्मसाक्षात्कारविशेषविरहमपेक्ष्य लाघवेन शरीराहंवासनाया विपरीताहंवासनाया ( विपरीतवासनाया ) एव वा कारणत्वादिति ।

आम्नायमारभ्याक्षेपस्त्वशरीरं वाव सन्तमित्यादि । तदप्रामाण्यं प्रपञ्चमिथ्यात्वसिद्धान्तभेदतत्त्वोपदेशपौनःपुन्येषु अनृतव्याघातपुनरुक्तदोषेभ्य इति चेत् । न । सतात्पर्यत्वात् । निष्प्रपञ्च आत्मा ज्ञेयो मुमुक्षुभिरिति हि तात्पर्यं प्रपञ्चमिथ्यात्वश्रुतीनाम् । आत्मन एकस्य ज्ञानमपवर्गसाधनमित्यद्वैतश्रुतीनाम् । दुरूहोऽयमिति पौनःपुन्यश्रुतीनाम् । बहिःसंकल्पत्यागो निर्मनस्कश्रुतीनाम् । आत्मैवोपादेय इत्यानन्दश्रुतीनाम् । गारुडवदनुष्ठाने तात्पर्यं

प्रकृत्यादिश्रुतीनाम्, तन्मूलानां साङ्ख्यादिदर्शनानां चेति नेयम्। अन्यथा ["जैमिनिर्यदि वेदज्ञः कपिलो नेति का प्रमा।] [तावुभौ यदि वेदज्ञौ व्याख्याभेदस्तु किं कृतः॥] इति॥

शङ्क० टी०। [१]निरुपाधेरात्मन उपादाने आम्नायं सङ्क्षेपतो दर्शयति। अशरीरमिति। वावसन्तं चिरकालं वसन्तं प्रियाप्रिये सुखदुःखे न स्पृशत इत्यर्थः। तदप्रामाण्यमिति। आम्नायाप्रामाण्यमित्यर्थः। प्रपञ्चमिथ्यात्वप्रतिपादकाम्नायस्यानृतत्वं प्रपञ्चस्य प्रत्यक्षत एवोपलब्धेः। सिद्धान्तभेदे, "सदेव सौम्येदमग्र आसीन्नाहरासीन्न रात्रिरासीदित्यादौ" सिद्धान्तभेदप्रतिपादनाद्व्याघातः। तत्त्वोपदेशे सिद्धान्तभेदोपदेशे आत्मोपदेशे वा "त्रिः प्रथमामन्वाह त्रिरुत्तमा"-मित्यादौ वा पौनरुक्त्यमित्यर्थः। तासां श्रुतीनामन्यत्र तात्पर्यान्नैते दोषा इत्याह। नेति। तदेव दर्शयति। निष्प्रपञ्चेति। इदानीं सिद्धान्तभेदप्रतिभासश्रुतीनामन्यपरत्वं दर्शयति। बहिरिति। गारुडवदिति। शरीरादितो भिन्नं स्वकीयं तत्त्वमजानत एवात्मनस्तत्त्वज्ञानार्थं प्रणिधानं विधेयमित्येतदर्थं साङ्ख्यमतोत्थानं, तत्रापि ह्यचेतनाया एव प्रकृतेर्महत्तत्त्वस्य वा चेतनोपरागप्रतिपादनं, यथा जाङ्गलिकेनाचेतनस्यैव दष्टस्य कष्टेन चैतन्यमुत्पाद्यत इत्यर्थः। अन्यथेति। यदि न तात्पर्यभेदकल्पनमित्यर्थः।

भगी० टी०। तदप्रामाण्यमिति। तदित्याम्नायः, प्रपञ्चो घटादिः, सिद्धान्तभेदः श्रुतावेवाद्वैतादिः। तत्त्वेति। एकस्यैव ब्रह्मणः

(१) निरुपधेरिति २ पु० पा०।

पुनःपुनरुपदेश इत्यर्थः। एतत्त्रयं यथासङ्ख्यमनृतत्वादौ हेतुः। अनृतत्वं बाधितार्थकत्वं। यद्यपि पौनरुक्त्यं नाप्रामाण्ये हेतुः, सत्यस्यापि पुनःपुनरभिधानसम्भवात्। तथापि निष्फलत्वेनाऽनाप्तत्वं सूचितं, तद्दृष्टान्तेन वेदान्तस्यापि वेदत्वादप्रामाण्यं साध्यमिति भावः। आत्मन एवेति। "द्वे ब्रह्मणी वेदितव्ये" इत्यादिश्रुतिविरोधादयोगव्यवच्छेद एव वाक्यार्थः। अन्यथेति। तथा च तेषामेकमत्यमेवार्वाचीनैर्व्याख्यातृभिरन्यथाऽन्यथा व्याख्यानाद्विरोधः प्रतिभातीत्यर्थः॥

---

प्रामाण्यं तु तस्य कुत इति चेत्? आप्तोक्तत्वात्। तदसिद्धमिति चेत्। न। विश्वस्य कर्तुरनुमानसिद्धत्वात्। विवादाध्यासितकर्तृकं सकर्तृकं कार्यत्वादिति।

शङ्क० टी०। नन्वेतावता तावदप्रामाण्यं परिहृतं, प्रामाण्यन्तु कुत इत्याह। प्रामाण्यमिति।

---

भगी० टी०। विवादेति। ननु विवादाध्यासितः कर्ता यस्येति यद्यर्थस्तदाऽसिद्धिः, कर्ता यस्येत्यंशस्यैवासिद्धेः। न च सकर्तृकत्वाकर्तृकत्वविवादविषयः पक्षः, घटादावपि तस्य कदाचित्सम्भवात् विवादविषयतावच्छेदकरूपस्यैकस्याभावात्, भावे वा, तदेव पक्षतावच्छेदकमस्तु, अत एव तादृशसंशयविषयः पक्ष इत्यपास्तम्। वादिनो निश्चितत्वात्, तादृशमध्यस्थसंशयस्य च वाद्यनुमानप्रवृत्त्युत्तरकालभावित्वात्। शरीराद्यनपेक्षोत्पत्तिकत्वं पक्षतावच्छेदकमिति चेत्। न। शरीरध्वंसादौनामसङ्ग्रहात्। शरीरापेक्षेण कर्त्रा यच्च

कृतमिति तस्यार्थ इति चेत् । न । शरीरकृपादेरप्यदृष्टद्वारास्मदादिना जनने शरीरापेक्षत्वात् । निमित्तकारणीभूतशरीरसाक्षाज्जन्यकार्यातिरिक्तोत्पत्तिमत्त्वं विवक्षितमिति चेत् । न । शरीरसाक्षाज्जन्यत्वं हि शरीरजन्याजन्यत्वं तच्चाप्रसिद्धं कार्यमात्रस्यैव शरीरजन्यादृष्टजन्यत्वात् । किञ्चैवं ध्वंसस्यापि पक्षत्वे तस्यानुपादानतया साध्यबाधः । अपक्षत्वे च तेनैव सन्दिग्धानैकान्तात् । एतेन द्व्यणुकाद्येकैकमेव पक्षः तावतैवेश्वरसिद्धिबाधकस्यापि पक्षान्तर्भावे गौरवादित्यपास्तम् । न च निश्चितसाध्याभाववति साधनसदसत्त्वसंशयात् स इति वाच्यम् । साध्याभाववद्गामित्वसंशयस्य दूषकत्वात् । तस्य च साध्याभाववति हेतुसन्देहादिव साधनवति साध्याभावसन्देहादपि दूषकत्वाविशेषात् । साध्यमपि सकर्तृकत्वं यदि कर्तृसाहित्यं, कर्तृजन्यत्वं वा, तदा सिद्धसाधनं । न च साक्षात् कृतिजन्यत्वमसिद्धेः, जन्यमात्रस्यैव कृतिजन्यादृष्टजन्यत्वात् । न च कृतिसमानकालीनासमवायिकारणकत्वं तदर्थः । घटादेर्दृष्टान्तस्य साध्यवैकल्यापत्तेः । तस्य चेष्टाद्वारा कृतिसाध्यत्वात् । चेष्टामात्रस्य दृष्टान्तत्वे चेष्टान्यत्वेन सम्प्रतिपक्षत्वापत्तेः । किञ्चास्मदादिनाऽर्थान्तरं पक्षधर्मताबलादस्मदाद्यात्मन्येव नित्यैकत्वपरममहत्त्ववन्नित्यज्ञानादेरपि सिद्धेः धर्मिकल्पनातो धर्मकल्पनाया लघुत्वात्, अतस्तद्द्वारा सिद्धसाधनं च । उपादानगोचरापरोक्षज्ञानादिमज्जन्यत्वस्य साध्यत्वेऽपि सिद्धसाधनम् । किञ्चोपादानपदेन यदि यत्किञ्चिदुपादानं विवक्षितं तदा पटाद्युपादानज्ञानादिनार्थान्तरम् । न चान्योपादानज्ञानादेरन्यत्राजनकत्वनियमः, पटोपादानविषयज्ञानजन्येच्छाप्रयत्नसंस्कारेषु व्यभिचारात् ।

स्वोपादानज्ञानादिपरत्वे चाप्रसिद्धिरनैकान्तिकत्वञ्च, घटादावेवंविध-साध्याभावात् । न च स्वोपादानेतिकरणे निस्तारः । स्वत्वस्यानन्-गततया तदन्तर्भाव्य व्याप्तिग्रहात् । अथोपादानशब्दस्य सम्बन्धि-शब्दत्वेन मातृपदवदुपस्थितविशेषपरत्वं सामान्यत एव निर्णीत-मिति चितिपदसमभिव्याहारात् सर्वं समञ्जसम्, अन्यथा यत् कार्यं तत् कारणजन्यमित्यपि व्याप्तिरुक्तरीत्या न सिद्ध्येदिति चेत् । न । एतस्या व्युत्पत्तेः शाब्दानुभवमात्रविषयत्वात् न चात्र तथा, वादिनो-ऽनाप्तत्वात् । किञ्चैवं सामान्यरूपेण क्वचिदनुपस्थितेर्व्याप्तिग्रह एव न स्यात् व्युत्पत्तावपि ज्ञानपटादेरपि समभिव्याहाराज्ज्ञानो-पादानजन्यमित्यन्वयप्रसक्तौ अर्थान्तरत्वप्रसङ्गेन तत्परत्ववारणाय सम्बन्धित्वेन यत्समभिव्याहृतमिति वाच्यं न चात्र चित्याद्युपादानं सम्बन्धित्वेनोपात्तम् । अपि च साध्याप्रसिद्धिः, अपरोक्षज्ञानस्या-स्मदादिष्वतावज्जनकत्वात् । चिकीर्षाकृत्योश्च स्वेष्टसाधनताधीजन्य-त्वात्, प्रत्युत घटादेस्तादृशानुमितिजन्यत्वदर्शनादीश्वरेऽप्यनुमिति-रेव सिद्ध्येत् । द्वेषयोनिजीवनयोनिकृतिसाध्ये चिकीर्षाविरहात् व्यभिचारश्च, तद्दृष्टान्तेन चित्यादौ द्वेषजन्यत्वानुमितेरीश्वरे द्वेषो-ऽपि सिद्ध्येत्, द्वेषवतः संसारित्वेन भगवतोऽपि तथा स्यात् । किञ्च कार्यत्वं न तावत् कृतिसाध्यत्वं, परस्यासिद्धेः । नापि किञ्चित्कालावृत्तित्वे सति किञ्चित्कालवृत्तित्वम् । एतत्क्षणत्वादौ, प्रागभावे च, व्यभिचारात् । नापि प्रागभावप्रतियोगित्वम्, ध्वंसे व्यभिचारात् । न च सत्त्वेन हेतुर्विशेष्यः, सत्ताजातेः परं प्रत्यसिद्धेः, स्वरूपसत्त्वस्य च ध्वंसेऽपि सत्त्वात् । नापि पूर्वकालासत्त्वे सत्युत्तर-कालसम्बन्धः । सकलपूर्वकालस्याप्रसिद्धेः, तत्तत्पूर्वकालस्य चानन्-

गमात्। किञ्च कृत्याश्रयजन्यत्वस्य साध्यस्याप्रसिद्ध्या साध्यविकलो दृष्टान्तः। कुलालाद्यात्मनोऽपि जनकत्वासिद्धेः, कारणीभूतकृत्याश्रयस्यैव कर्तृत्वात् हेतुत्वे सतीत्यस्य वैयर्थ्यात्। कर्तरि कारकव्यपदेशस्य नागृहीतविशेषणान्यायेन कृतौ पर्यवसानात्। न वा नित्यविभोरात्मनः कारणत्वमपि सम्भवति, तद्व्यापककालदेशगर्भव्यतिरेकाभावात्। न च ज्ञानवत्कार्यत्वादात्मजन्यत्वमनुमेयम्। स्वात्मसमवेतत्वस्योपाधित्वात्। अन्यथा शब्दवदाकाशजन्यत्वानुमित्यापत्तेः। अपि च सामान्यलक्षणप्रत्यासत्तिजन्योपादानज्ञानादिमताऽस्मदादिना ऽर्थान्तरम्।

अत्रोच्यते। द्व्यणुकमेव पक्षः। न च क्षित्या सन्दिग्धानैकान्तिकम्। पक्ष-पक्षसमनैरपेक्षेण घटादौ निश्चितव्याप्तेर्लिङ्गस्य तयोर्दर्शनेनोभयत्रानुमित्यविरोधात्। न चानुमित्योरन्योन्याश्रयः। न च क्षितौ पक्षधर्मताज्ञानाभावः। सिषाधयिषाविरहसहकृतसाधकमानाभाववतः पक्षत्वात्। तच्च द्व्यणुके पञ्चावयववाक्यात् क्षितावप्यत इति न विशेषः। यदि च द्व्यणुके लिङ्गनिश्चयदशायां तदन्तया क्षितेर्न निश्चयः, क्व तदा सन्दिग्धानैकान्तिकम्। न चैवं सकलविषयकज्ञानासिद्धिः, लाघवादेकज्ञानादिसिद्ध्या-वुत्पत्तिमत्त्वेनानादिकार्याजनकत्वेन नित्यत्वसिद्धेः। कारणं ततो निवर्तमानं नियतविषयतामादायैव निवर्तत इति तत् सिद्धेः। तस्याः कारणाधीनत्वात् सामान्यतोपि साध्यनिर्देशे पक्षधर्मताबलेन साध्यविशेषस्य सिद्धेर्नोपादानखण्डनम्। अपरोक्षज्ञानविषयीभवदुपादानकमिति साध्यनिर्देशाददृष्टप्रागभावव्याप्यप्रागभावाप्रतियोगित्वेन ज्ञानाद्भेदकमननुगतमपि भवतीति भावः।

रघु० टी०। विवादेति। विवादो मीमांसकानां, तथा च मीमांसकैरकर्तृकत्वेनाभ्युपगतं सकर्तृकत्वेनानभ्युपगतं वा जन्यमात्रं सत्त्वेन विशेषितमविशेषितं वा पक्षः, अदृष्टाजनककृतिजन्यभिन्नं स्वजनकादृष्टाजनककृतिजन्यभिन्नं वा जन्यमात्रं वा। न चैवं शब्दफूत्कारलौकिककृतिसाक्षात्कारादीनां पक्षबहिर्भावे तत्र सन्दिग्धानैकान्तिकत्वम्। व्याप्तेर्निश्चये तदनवकाशात्। पक्ष इव तत्समेऽपि साध्यसिद्धेरप्रत्यूहत्वात्। प्रतिज्ञाविषयत्वादेरकिञ्चित्करत्वात्। तदनिश्चये तु पक्षेऽपि तथात्वस्य दुर्वारत्वात्। उपादानगोचरत्वमपि वा कृतेर्वैशिष्ट्यं द्व्यणुकमात्रं नित्यसमवेतमतीन्द्रियसमवेतं वा जन्यमात्रं वा तथा। अपरोक्षज्ञानेच्छाकृतिमज्जन्यत्वं तादृशज्ञानादिजन्यत्वं वा सकर्तृकत्वं, तादृशज्ञानस्याश्रयत्वेन चेश्वरसिद्धिः। न च प्रवर्तिकाया इष्टसाधनत्वानुमितेरेव कार्यजनकत्वं, विनोपादानप्रत्यक्षमप्रवृत्तेस्तस्यापि तथात्वात्। अथादृष्टद्वारा ज्ञानादिजन्यत्वात् सिद्धसाधनं। ननु यजेत, न हिंस्यादित्यादिना यागहिंसादेः क्रियाया एवेष्टानिष्टसाधनत्वं श्रुत्या बोध्यते न तु ज्ञानादीनामिति न तेषामदृष्टजनकत्वं मानाभावात्, इच्छाविशेषस्य यागादेस्तत्त्वेऽपि ज्ञानकृत्योरतथात्वादिति चेत्। तथाप्यनुत्पादितक्रियाणामपि ज्ञानादिविशेषाणां स्वर्गनरकजनकत्वस्य श्रुत्या बोधनाददृष्टद्वारा तज्जन्यत्वेनार्थान्तरत्वात्।

नैवम्। ज्ञानादेरुपादानगोचरत्वस्य विवक्षितत्वात्। ननु यत्किञ्चिदुपादानगोचरत्वमतिप्रसक्तम्, स्वोपादानगोचरत्वं च स्वत्वाननुगमादननुगतमिति चेत्, न, अनवबोधात्। एकार्थप्रत्यासत्त्या हि

कार्यज्ञानादीनां जन्यजनकभावः, प्रत्यासत्तिश्च कार्यस्य समवायो ज्ञानादीनां च विषयत्वं, तथा च कारणतया ज्ञानादिकं सिध्यत् कार्यसमवायिविषयकमेव सिध्यतीत्यभिप्रायात्। इविरादिगोचर-ज्ञानस्य सामान्यलक्षणादिना कथञ्चित्परमाणुविषयत्वेऽपीच्छायाः कृतेश्च तदभावात् समानाधिकरणादृष्टाजनकत्वं, अदृष्टजनकजन्यान्यत्वम्, (अदृष्टजनकं यज्जन्यं तदन्यत्वमित्यर्थः), अदृष्टाद्वारकत्वं वा, ज्ञानादिविशेषणम्। तद्द्वारकत्वं च तत्प्रत्यासत्तिकत्वं, नित्यस्य च स्वत एव सत्त्वान्नादृष्टं[१] प्रत्यासत्तिः। न चैवं शब्दादिसाधारणपक्षताया-मंशतः सिद्धसाधनं, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्याया[२] असिद्धत्वात्। अतीन्द्रियाणि द्रव्याणि द्रव्याणि वा ज्ञानेच्छा-कृतिशालीनि कार्यात्। अतीन्द्रियत्वं चात्र साक्षात्कारकारणत्वे-न्द्रियसंयोगस्य चक्षुःसंयोगस्य वा ऽनाश्रयत्वं, स्वविषयसाक्षात्कार-जनकान्यत्वं, विषयतया साक्षात्काराजनकत्वं, उद्भूतरूपवन्महदन्य-त्वादिकं वा। न च साक्षात्कारविषयत्वं, साक्षात्कारकारणेन्द्रिय-संयोगाश्रयत्वं, साक्षात्कारकारणसंयोगाश्रयत्वं। वोपाधिः, ज्ञानादि-कार्ययोरेकैकार्यप्रत्यासत्त्या कार्यकारणभावेन हेतोः साध्यव्याप्यतया तद्व्यापकत्वेन साध्याव्यापकत्वादिति वा साधनप्रकारः। कार्यत्वं च सत्त्वेन विशेषितमविशेषितं वा प्रागभावप्रतियोगित्वम्। न च कार्यत्वं न कर्तृजन्यतावच्छेदकं अपितु घटत्वपटत्वादिकमिति वाच्यम्। अनन्तत्वात्। तावतापि घटत्वाद्यवच्छिन्नं प्रति कपालादिगोचरज्ञान-त्वादिना कारणत्वे कुलालाद्यजन्यानामाद्यघटादिसान्तानिकानां

(१) सत्त्वाद्वादृष्टमिति २ पु० पा०।
(२) उद्देश्यतया इति २ पु० पा०।

कर्तृत्वेनेश्वरसिद्धेरप्रत्यूहत्वात्। शरीरजन्यत्वं तथा, शरीरत्वं च चेष्टाश्रयत्वं चेष्टात्वं च जातिरखण्डोपाधिर्वा इत्यन्यदेतत्, चेष्टाजन्यत्वं वा तथेति चेत्। न। एवमप्यस्मदाद्यकर्तृकाणां शरीरपवनसंयोगादीनां बुद्ध्यादीनां च चेष्टाजन्यानां सुखदुःख-धर्माधर्मसाक्षात्काराणां कर्तृत्वेनेश्वरसिद्धेरावश्यकत्वात्। लाघवेन जन्यत्वस्यैवावच्छेदकत्वौचित्याच्च।

---

विशेषविरुद्धोऽयं हेतुरिति चेत्। न। विरोधि-विशेषाप्रतीतौ विरोधस्य प्रत्येतुमशक्यत्वात्, तत्प्र-तीतौ वा सहोपलम्भनियमेन विरोधस्य बाधित-त्वात्। सर्वथैवाप्रतीतस्याभिप्रायगोचरत्वमपि कथ-मिति चेत्। न। स्वार्थानुमानसिद्धत्वात्। ततोऽपि कथं सिध्यत्विति चेत्, अप्रतीतप्रत्यायकं प्रमाणं, न त्वप्रतीतेन विरोधः शक्यनिश्चय इत्यतो विशेषात्। का पुनरनुमानस्यैवम्भूतप्रत्यायने शक्तिरस्तीति चेत्? आकाङ्क्षानुपपत्तिनियमभेदेन त्रिविधः सम्बन्धः। तत्राकाङ्क्षानियमाभ्यामन्वयी, अनुपपत्तिनियमाभ्यां व्यतिरेकीति विभागः।

शङ्क० टी०। विशेषेति। पक्षधर्मताबलायातं नित्यसर्वज्ञत्वं(१) व्याप्तिबलायातशरीरिकर्तृकत्वविरुद्धमित्यर्थः। विरोधी ह्यशरीरिकर्त्ता, स च न सिद्धः, सिद्धश्चेन्न विरोध इत्याह। नेति। अभिप्रायेति।

---

(१) सर्वज्ञमिति मूलपुस्तके पाठः।

अभिप्रायो ज्ञानमिच्छा वा तदुभयं कथमत्यन्ताप्रसिद्धे, सप्तमे रस इवेत्यर्थः। स्वार्थेति। पक्षधर्मताबलेन स्वार्थानुमाने तज्ज्ञानमावश्यकमित्यर्थः। ततोऽपीति। पक्षधर्मतापि व्याप्तिबलानीतमर्थं पक्षे साधयति न तु सर्वथैवाप्रतीतमित्यर्थः। प्रमाणमहिम्ना तदुपस्थितिरित्याह। अप्रतीतेति। रसे तु सप्तमे न प्रमाणमहिमेति भावः। ननु विरोधोऽपि तादृशेनैव निरूप्यतामित्यत आह। नन्विति। प्रतीतिदशायां च सहोपलम्भादेव अविरोध इत्यर्थः। का पुनरिति। एवम्भूतार्थप्रत्यायन इति। अप्रसिद्धार्थप्रत्यायन इत्यर्थः। आकाङ्क्षेति। आकाङ्क्षानुपपत्तिनियमयोर्भेदेन त्रिविधः सम्बन्धः, एकोऽन्वयसहचारमात्रग्राह्यः, अपरोऽन्वयव्यतिरेकसहचारग्राह्यः, अन्यश्च व्यतिरेकसहचारमात्रग्राह्यः। तत्राकाङ्क्षा प्रतीत्यपर्यवसानम्, अनुपपत्तिश्च प्रतीतापर्यवसानम् अनयोरन्यतरस्यानुमितौ नियम एवेत्यर्थः। क्वचित्तु द्विविधः सम्बन्ध इति पाठः, स तु सुगम एव। इममेव पाठं विशदयति। तत्रेति। उपादानगोचरापरोक्षबुद्धिमत्पूर्वकत्वं हि सकर्तृकत्वं तथा चाऽऽद्यणुकाद्दा च भूगोलकात् सकलपक्षीकरणे क्षितिः सकर्तृकेत्यन्वय एव तावन्न पर्यवस्यति, यावत्कर्तुः सार्वज्ञ्यमनुमितौ न भासत इत्यर्थः।

रघु० टी०। शङ्कते। विशेषेति। विशेषः पक्षधर्मताबललभ्योऽशरीरिकर्तृकत्वरूपः, तदिच्छुश्च तदभावव्याप्यः। तदभावव्याप्यवत्त्वे च गृह्यमाणे न तदन्वयग्रहः सम्भवतीति भावः। तत् सिद्ध्यसिद्धिभ्यां विरोधासम्भवेन निराकरोति। न विरोधीति। न च व्याप्तिपक्षधर्मताभ्यामुपनेययोर्विरोधान्नानुमानप्रवृत्तिः, तादृप्येण

व्याप्तेरभावात्, ततस्तथोपनयायोगात्। सर्वथैवेति। तथाच न तत्सिद्धये न्यायप्रयोगादिसम्भव इति। ततोऽपीति। ताद्रूप्येण व्याप्ते-रग्रहान्न तथासिद्धिः सम्भवतीत्यर्थः। सामान्येनैव रूपेणानुमानं विशेषं प्रत्याययति, न तु विशेषेण ताद्रूप्येणानुमितौ ताद्रूप्येण व्याप्तिग्रहस्य निमित्तत्वात्, अन्यथाऽतिप्रसङ्गादित्याशयेन पृच्छति। का पुनरिति। सहकारिविशेषस्य नियामकत्वान्नातिप्रसङ्ग इत्युत्त-रयति। आकाङ्क्षेति। एकविशेषबाधे विशेषान्तरविषयत्वं विना सामान्यप्रतीतेरपर्यवसानमाकाङ्क्षा। विशेषान्तरं विना पक्षे साध्य-स्यासम्भवोऽनुपपत्तिः। ताभ्यां तदुभयरूपेण वा नियमस्य व्याप्ते-र्भेदो विशेषस्तेन आकाङ्क्षानुपपत्तिभ्यामिति यावत्। यद्यप्यनुप-पत्तावप्यस्त्येवाकाङ्क्षा तथापि यदि प्रसिद्धविशेषशून्यमिदं विशेषा-न्तरवन्न स्यात्साध्यवन्न स्यात् यदि च साध्यवन्न स्यात्, साधनवदपि न स्यात् साध्याभाववति साधनाभाववत्त्वनियमावधारणादिति (१)विपक्षबाधकबोधनायानुपपत्तिरूपात्ता। त्रिविधः सम्बन्धः, अस-द्विपक्षस्य सपक्षसत्त्वम्। असत्सपक्षस्य विपक्षासत्त्वम्। सदुभयस्य तदुभयं, विशेषरूपेण साध्यसिद्धेर्निमित्तमित्यर्थः। तत्र सामान्य-व्याप्तिबलप्रवृत्तः केवलान्वयी एकविशेषबाधाद्विशेषान्तरस्य साधकः, यथा शब्दोऽनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान् प्रमेयत्वादिति शब्दधर्मातिरिक्तधर्मबाधादनित्यत्वस्य। व्यतिरेकी तु दिवसाभोजी चैत्रो भुङ्क्ते पीनत्वादिति रात्रिभोजनस्य, अन्वयव्यतिरेकी च, अष्टद्रव्यानाश्रिता इच्छा द्रव्याश्रिता गुणत्वादिति अष्टद्रव्यातिरिक्त-द्रव्याश्रितत्वस्य। अत्र च प्रथमं कथञ्चिद्विशिष्टोपस्थितौ विशिष्ट-

(१) विपक्षबाधतायेति १ पु० पाठः।

प्रकारिका। अन्यथा तु विशेष्ये विशेषणं तत्र च विशेषणान्तरमवगाहमानाऽनुमितिरुत्पद्यते विशिष्टोपस्थितिस्तु चरमं मनसा।

अथवा साध्यविशेषविषयतामन्तरेण पक्षे साध्यवत्ताबुद्धेरपर्यवसानमाकाङ्क्षा यथा अष्टद्रव्यानाश्रिता इच्छा द्रव्याश्रिता गुणत्वादित्यत्राष्टद्रव्यातिरिक्तद्रव्याश्रितत्वविषयतामन्तरेण तादृशि पक्षे द्रव्याश्रितत्वबुद्धेः पक्षे साध्यसामान्यवत्त्वसिद्धौ सत्यां साध्यविशेषबाधोऽनुपपत्तिः। तत्र च विशेषान्तरबाधविशिष्टेन[१] व्यतिरेकिणाऽन्वयिना वा साधनेन साध्यविशेषस्य सिद्धिः। यथा इच्छाया द्रव्याश्रितत्वे सिद्धे अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वेनाष्टद्रव्यातिरिक्तद्रव्याश्रितत्वस्य, यथा वा तत्रैव पृथिव्याश्रितत्वबाधे पृथिव्यनाश्रितत्वे सति द्रव्याश्रितत्वेन पृथिव्यतिरिक्तद्रव्याश्रितत्वस्य।

कचिच्च लाघवादपि यथा जीवनमरणान्यतरप्रतियोगी प्राणित्वादिति जीवनस्य, प्रमाणस्यात्रानुभवः, तदनन्तरं विशेषसन्देहाभावः। सामान्याकारेणैव प्रमाणस्य परिच्छेदकत्वे तस्यौत्सर्गिकं लघ्वर्थपरिच्छेदकत्वमित्यपि न सिद्ध्येत्। फलानिर्णयात्। एवं च यत्रैकविशेषबाधानन्तरं सामान्यतोदृष्टस्यावतारस्तत्र तत एव विशेषान्तरस्य सिद्धिः। अन्यत्र तु व्यतिरेकिण इति मन्तव्यम्।

---

अस्तु तर्हि सत्प्रतिपक्षत्वं शरीराजन्यत्वादिति चेत्। न। असमर्थविशेषणत्वेनासिद्धभेदस्यातुल्यबलत्वात्। असिद्धिपरिहारे विशेषणं समर्थमिति चेत्। न। एकामसिद्धिं परिहरतो द्वितीयापत्तेः। अन्यथा

(१) तद्विशेषाभावविशिष्टेनेति प्र० १ पु० पाठः।

विवादाध्यासितं नादृष्टहेतुकं शरीराजन्यत्वादित्यनेनापि जन्यत्वस्य सत्प्रतिपक्षप्रसङ्गादिति ।

शङ्क० टी० । असमर्थेति । व्यभिचारावारकविशेषणान्तर्भावेन व्याप्यभावाद्व्याप्यत्वासिद्धिरित्यर्थः । अजन्यत्वमात्रे कृते स्वरूपासिद्धिः स्यात् तथाच तद्वारणे विशेषणं सार्थकमित्याशङ्कते । असिद्धीति । अत एव व्याप्यत्वासिद्धिरित्याह । एकामिति । स्वरूपासिद्धिपरिहारेऽपि व्याप्यत्वासिद्धेरपरिहारादित्यर्थः । गौरवेण नौलधूमत्ववद्विशेषणान्तर्भावेन व्याप्तिग्राहकप्रमाणानुदयादिति भावः । अनिष्टान्तरमाह । अन्यथेति । चित्यादेरदृष्टजन्यत्वं त्वदभ्युपगतमेवं सति निवर्त्ततेत्यर्थः ।

रघु० टी० । असमर्थेति । हेतुविशेषणस्यार्थः प्रयोजनं व्यभिचारवारणं तदभावादसमर्थत्वं, व्यभिचारवारणवत् स्वरूपासिद्धिवारणमपि प्रयोजनं परामर्शोपयोगित्वादित्याशङ्कते । असिद्धीति । एकां स्वरूपासिद्धिम् । द्वितीयाया व्याप्यत्वासिद्धेरापत्तेः । व्यभिचारावारकविशेषणविशिष्टस्य नौलधूमादेरव्याप्यत्वात् ।

ननु नौलधूमादिकं व्याप्यमेव । अथ व्याप्यतावच्छेदकरूपेणैव हेतोः कथायामुपन्यासः, न च नौलधूमत्वादिकं व्याप्यतावच्छेदकमिति चेत् । किमिदमवच्छेदकत्वं नाम? स्वरूपसम्बन्धविशेष इति चेत्तर्हि विनौनं द्रव्यं रूपादित्यादिना रूपादिचतुर्विंशतौ द्रव्यत्वव्याप्तेर्लाघवेन एकेन गुणत्वेनैवावच्छेदात् व्याप्यमात्रवृत्तित्वादिकं च नौलधूमत्वादावक्षतम् । अपि च जन्यत्वप्रतियोगिकाभावमात्रस्य व्यभिचारात् जन्यत्वत्वावच्छिन्नप्रतियोगिका-

भावत्वं वक्तव्यं न चेतच्छरीरजन्यत्वत्वावच्छिन्नप्रतियोगिताकेऽतिरिक्ते-ऽभावे। न च विशिष्टस्यावच्छेदकत्वे विशेष्यस्य जन्यत्वत्वस्याऽप्यवच्छेदकत्वं तथा सति दण्डजन्यत्वाभावादौ व्यभिचारस्य दुर्वारत्वात्। न चैकस्मिन् लघौ धर्मिणि व्याप्ये सम्भवति गुरोरन्यस्य धर्मिणो न व्याप्यत्वम् अतिप्रसङ्गात्। न च हेतुना पक्षधर्मताबलादप्रसिद्धः कर्ता साध्यः, प्रतिहेतुना च प्रसिद्धकर्त्रभावः, अप्रसिद्धस्य निषेद्धुमशक्यत्वादिति भिन्नविषयत्वान्न सत्प्रतिपक्षत्वमिति वाच्यम्। सकर्तृकत्वसामान्याभावस्य साध्यत्वात्। प्रतियोगितावच्छेदकावलीढयत्किञ्चिद्व्यक्तिज्ञानादेव तज्ज्ञानादिति। नैवम्। अप्रयोजकत्वात्, अजन्यत्वस्योपाधित्वाच्च। पूर्वसाधनव्यतिरेकस्य चानुपाधित्वे साध्यव्यापकताग्राहकप्रमाणाभावस्य तन्त्रत्वात् प्रकृते च लाघवेन जन्यत्वावच्छेदेन कर्तृजन्यत्वात्तदभावस्य तदभावव्यापकत्वात्।

---

तर्हि तर्कापरिशुद्धिरस्तु दूषणम्, शरीरनिवृत्तौ बुद्धिनिवृत्तेः, बुद्धिनित्यत्वे शरीरानुपयोगवत् प्रयत्ननित्यतायां ज्ञानेच्छानुपयोगादिति चेत्। न। प्रयत्नस्य द्विधर्मकत्वात्। स हि ज्ञानकार्यो ज्ञानैकविषयश्च कर्तृत्वं, तत्र कार्यत्वनिवृत्तौ कारणतया ज्ञानं मा पेक्षिष्ट, विषयार्थं तु तदपेक्षा केन वार्यते! न चास्य स्वरूपेणैव विषयप्रवणत्वं ज्ञानत्वप्रसङ्गात्, अयमेव हि ज्ञानात् प्रयत्नस्य भेदः, यदयमर्थाप्रवण इति। न च निर्विषय एवास्त्विति वाच्यम्। अकारणत्वप्रसङ्गात्। तथा च

सोऽप्येकः कथं सिद्ध्येत्?। मा सैत्सीदिति चेत्। न। तच्च साधनस्य निर्दोषत्वात्। दोषे वा स एव बाधः। सर्वविषयत्वात्तस्य किं विषयनियमार्थेन ज्ञानेनेति चेत्। न। तस्य स्वरूपेणार्थप्रवणत्वाभावात्, भावे वा ज्ञानत्वप्रसङ्गादित्युक्तम्। जीवनयोनिप्रयत्नवद्विषयव्यवस्था भविष्यतीति चेत्। न। जात्यन्तरत्वात्। एकजातीयत्वे तस्याऽपीच्छापूर्वकत्वप्रसङ्गात्, इच्छाया वा तत्कारणत्वं न स्यात्, तामन्तरेणाऽपि तज्जातीयस्योत्पत्तेः। तस्मात् कृतिजातीयस्य ज्ञानेच्छाभ्यामेव सविषयव्यवस्था। स च साधयितुमिष्ट इति॥

शङ्क० टी०। [१]कणिकाकारोक्तां तर्कापरिशुद्धिमाशङ्कते। तर्हीति। दूषणमिति। अनुमानस्येत्यर्थः। शरीरेति। तर्कैरपरिशुद्धिरनुमानस्येत्यर्थः। शरीरं विना तत्कार्या बुद्धिर्न स्यात्। यदि नित्यायां बुद्धौ न शरीरापेक्षा तदा नित्येच्छाप्रयत्नयोर्ज्ञानापेक्षाऽपि न स्यादितीश्वरे ज्ञानमपि न सिद्ध्येदित्यर्थः। नित्यावपीच्छाप्रयत्नौ विषयलाभार्थं ज्ञानमपेक्षेते एवेति परिहरति। नेति। सत्यीति। प्रयत्न एव कर्तृत्वपर्यवसन्नः, स च ज्ञानकार्यः सन् ज्ञानसमानविषयोऽवश्य[२]मभ्युपगन्तव्य इत्यर्थः। तत् किमीश्वरेऽपि कार्यः प्रयत्न इत्यत आह। तत्रेति। विषय-

(१) कार्णिकेति २ पु० पा०।

(२) अवश्यं वाच्य इति २ पु० पा०।

प्रवणत्वं विषयनिरूपणाधीननिरूपणत्वम्। अर्था[1]प्रवण इति। न स्वरूपसम्बन्धेन। विषयनिरूपणाधीननिरूपणः ज्ञानद्वारा तु तत् स्यादित्यर्थः। ननु सविषयत्वे यदि ज्ञानापेक्षा तदा प्रकृते प्रयत्नो निर्विषय एवास्त्वित्यत आह। न चेति। विषयनिष्ठव्यापारजनकतया हि यत्नस्य कारणत्वमविषयत्वे तु कारणतैव न स्यादित्यर्थः। सोऽपीति। प्रयत्नोऽपीत्यर्थः। तत्रेति। कार्यत्वेन कृतिमज्जन्यत्वे साध्ये दोषाभावादित्यर्थः। जीवनेति। जीवनयोनियत्ने। ज्ञानमन्तरेणैव यथा [2]प्राणादिविषयत्वं तथाऽत्रापि स्यादित्यर्थः। नासौ कृतिजातीयो येन तज्ज्ञानमपेक्षेतेत्याह। नेति। वैजात्ये हेतुमाह। एकजातीयत्व इति। तत्कारणं कृतिकारणमित्यर्थः। उपसंहरति। तस्मादिति। कृतिजातीयस्येति। चिकीर्षाधीनस्येत्यर्थः।

---

रघु० टी०। जात्यन्तरत्वादिति। यद्यपि वैजात्येऽपि जीवनयोनियत्नस्य स्वतोऽर्थप्रवणत्वे ज्ञानत्वापत्तिः, अर्थाप्रवणस्य च यत्नत्वे मानाभावः। तथापि स एव नास्ति मानाभावात्। वाय्वन्तरेवाऽऽन्तरस्याऽपि पवनस्यादृष्टवदात्मसंयोगादेव क्रियोत्पत्तिसम्भवात्। ज्ञानमिच्छां च विना यत्नानुत्पादात्। सुषुप्तौ च तदभावादित्यत्र तात्पर्यम्। एकजातीयत्वे। वैजात्यविरहे। तस्यापि जीवनयोनियत्नस्यापि। तत्कारणत्वं यत्नकारणत्वं। तथापि कथमिच्छादिसिद्धिरत आह, ज्ञानेच्छाभ्यामिति। इच्छया कृते-

(१) अथाप्रवणा इति २ पु० पा०।
(२) श्वासादीति पु० पा०।

रिच्छायाश्च ज्ञानेन विषयनियम इत्यर्थः। स च सविषयः कृति-जातीयश्च। वस्तुतस्तु कृतेरिव ज्ञानेच्छयोरपि कार्यजनकत्वेन साधनं न पुनरिच्छाकृत्योः कारणत्वेन विषयनियामकत्वेन वेति न कश्चिदपि दोषः।

---

तार्किकगर्ववाहस्त्वाह—ननु सपक्षविपक्षयोर्दर्शनादर्शनमात्रस्य शतशः प्रवृत्तावपि व्यभिचारोपलम्भात्, तल्लक्षणस्यानुपलब्धव्यभिचारस्यापि तथाभावसंभावनाक्रांतत्वात् लक्षणान्तरं प्रतिबंधस्य वक्तुमुचितम्। तच्चोपाधिविरहो वा स्यात्, तदुत्पत्तिर्वा, विपक्षे बाधकं वेति संक्षेपः, तत्र न प्रथमः, अदृश्योपाध्यभावनिश्चयोपायाभावात्। दृश्येनैवोपाधिना भवितव्यमिति च नियमानुपपत्तेः। नापि द्वितीयः, सा ह्यन्वयव्यतिरेकाभ्यां निश्चीयते, तौ च दृश्यशरीरवच्चेतननिष्ठौ वा स्याताम्। उपाधिविधुरदृश्यादृश्यसाधारणचेतनमात्रनिष्ठौ वा। न प्रथमः। विटपादौ व्यभिचारात्, प्रकृतासिद्धेश्च। न द्वितीयः। घटादिकार्यव्यतिरेकसमये तत्प्रयोजककुलालव्यतिरेकवद् दृश्यचेतनमात्रव्यतिरेकस्य निश्चेतुमशक्यत्वात्। न हि कुलालादिदृश्यव्यतिरेकस्यावश्यं व्यतिरेको विटपादावपि तथाभावप्रसंगात्। तर्हि सन्तानान्तरानुमानमपि कथम्, कुम्भकारव्यतिरेके

दृश्यादृश्यचिन्मात्रव्यतिरेकासिद्धिवत् स्वचित्तव्यतिरेकेऽपि कम्पं प्रति चिन्मात्रव्यतिरेकासिद्धेरितिचेत्। न। वादान्तरत्वात्। यदापि तत् प्रस्तावः तदापि स्वदेहे स्वपरसन्तानसाधारणचिन्मात्राविनिर्भागवृत्तिदृश्यदेहमात्रस्यैव प्रत्यक्षानुपलम्भाभ्यां कम्पं प्रति कारणत्वप्रतीतेः, परचित्तस्यापि कारणत्वं प्रतीयत इति। नापि तृतीयः। विपक्षे बाधकाभावात्। देशकालनियमादीनां स्वकारणायातसन्निधिना कादाचित्केन प्रतिनियतशक्तिना कारणेनाचेतनेनाप्युपपत्तेरिति।

शङ्क० टी०। बौद्धमुत्थापयति, तार्किकेति। व्यभिचारोपलम्भादिति। पार्थिवत्वलोहलेख्यत्वादाविति शेषः। तल्लक्षणस्येति। अव्यभिचारित्वलक्षणस्याविनाभावस्य निश्चेतुमशक्यत्वात् तदतिरिक्तमविनाभावलक्षणं वक्तव्यमित्यर्थः। उपाधिविरहो वेति। अनौपाधिकः सम्बन्धो वा, कार्यकारणभावो वा, विपक्षे बाधकवत्त्वं वेत्यर्थः। सा द्वौति। तदुत्पत्तिरित्यर्थः। कार्यकारणभावो हि तदुत्पत्तिः, स चान्वयव्यतिरेकगम्यः। तौ चान्वयव्यतिरेकौ शरीरिणि चेतने सति कार्यं तमन्तरेण नेति वा प्रवर्तते चेतने सति कार्यं न तु तमन्तरेणेति वा प्रवर्तेत इति विकल्पार्थः। उपाधिविधुरेत्यत्रोपाधिः शरीरम्। विटपादाविति। शरीरिचेतनमन्तरेणाप्यङ्कुरादिदर्शनादित्यर्थः। प्रकृतेति। त्वदभिमताशरीरिकर्तृसिद्धेरित्यर्थः। घटादौति। कुलालादिव्यतिरेकप्रयुक्तो घटादिव्यतिरेक इति यथा

सुग्रहं तथा चेतनव्यतिरेकात् कार्यव्यतिरेको निश्चेतुमशक्य इत्यर्थः। ननु कुलालादिव्यतिरेकनिश्चयादेव चेतनान्तरव्यतिरेकोऽपि निश्चेष्यत इति सुग्रह एव चेतनव्यतिरेक इत्यत आह। न हीति। विटपादावपीति। तत्रापि कुलालादिव्यतिरेकग्रहे चेतनमात्रव्यतिरेको दुर्ग्रहेति कार्यत्वहेतोस्तत्रैव सकर्तृकत्वव्यभिचारः स्यादित्यर्थः।

तदुक्तं ज्ञानश्रिया—

दृश्यस्यैव्यतिरेकसिद्धिमनसा कर्ता समाश्रीयते।
तत्त्यागेऽपि तथा तृणादिकमिति व्यक्तं विपक्षे क्षणम्॥
कार्यत्वस्य विपक्षवृत्तिहतये सम्भाव्यतेऽतीन्द्रियः।
कर्ता चेद्व्यतिरेकसिद्धिविधुरा व्याप्तिः कथं सेत्स्यति॥

कीर्तिरप्याह—

"दृश्यैकव्यतिरेकोऽयं दृश्यादृश्यसमो यदि।
तृणादौ व्यभिचारः स्याद्दृश्यैकव्यतिरेकतः॥
दृश्याभावेऽप्यदृश्यस्य तृणादौ यदि संशयः।
तस्यान्यत्रापि शङ्कायां सन्दिग्धव्यतिरेकितेति"॥

बौद्धः शङ्कते। कथं तर्हीति। येन चेष्टया तावत् परचित्तसन्तानोऽनुमीयते, तत्रापि व्यतिरेको दुर्ग्रह एव यथा कुलालव्यतिरेके तृणादौ चेतनमात्रव्यतिरेको दुर्ग्रहः, तथा परदेहचेष्टां प्रति स्वचित्त(व्यतिरेकग्रहेऽपि चिन्मात्र)व्यतिरेकस्य दुर्ग्रहत्वादन्वयव्यतिरेकाभ्यां चेष्टां प्रति सन्तानस्य कारणता न स्यादित्यर्थः। बौद्ध एव परिहरति। नेति। अर्थान्तरमेतदित्यर्थः। ननु तत्रापि तदुत्पत्तिग्रहस्त्वयाऽवश्यं वाच्य इत्यत आह। यदाऽपीति। स्वदेहचेष्टां प्रति स्वचित्तसन्तानावच्छेदकशरीरत्वेन कारणताग्रह-

काले चिन्मात्रावच्छेदकदेहत्वेन सामान्येनैव कारणताग्रहोऽन्वय-व्यतिरेकाभ्यामित्यर्थः। अविनिर्भागो नियतः संश्लेषः। कम्प इह चेष्टा। देशकालेति। यदि कर्ता न स्यादिदानीं कार्यं न स्यादित्यनेन विपक्षबाधकेन व्याप्तिर्ग्राह्या, तत्र कर्तृव्यतिरेकप्रयुक्तो न कार्यव्यतिरेको न वा कर्त्रन्वयप्रयुक्तस्तदन्वयः। किन्तु कारणान्तरा-न्वयव्यतिरेकप्रयुक्त एवेत्यर्थः।

---

रघु० टी०। तस्येति। अदृश्यचेतनस्येत्यर्थः। कम्पश्चेष्टा। स्वदेह इत्यादि। चेष्टाकर्तव्यतादिज्ञानविरहेण स्वदेहे चेष्टाविरहेण चेष्टातत्कर्तव्यतादिज्ञानयोः कार्यकारणभावग्रहः तथाविधज्ञान-सामान्यविरहस्य स्वदेहे शक्यग्रहत्वादित्यर्थः।

---

उत्तानोत्थापितमेतत्। विकल्पत्रयस्याप्युपपत्तेः। तथाहि चत्वारो जगति भावा भवन्ति। विरोधी बहिर्वृत्तिः सहवृत्तिरन्तर्वृत्तिश्चेति। न च पंचमः प्रकारः काङ्क्षितुमपि शक्यते। विरोधाविरोधयोः साहित्या-साहित्ययोः आधिक्यानाधिक्ययोः परस्परनिषेधरूप-त्वात्। तत्र द्वयमत्र नोपाधित्वेन शङ्कनीयम्। कार्यस्येवाकार्यस्यापि वा सकर्तृकत्वप्रसंगात्। न चेदमिष्टम्। अकार्यस्य कारणवत्तामात्रेण सहज-विरोधे कारकविशेषस्य कर्तुरनवकाशात्। नापि तृतीयः, तुल्ययोगक्षेमयोरविशेषात् व्यभिचारशङ्का

नापादकत्वाच्च। चतुर्थस्तु स्यात्। सोऽपि न शरीरान्तर्भूतवृत्तिः, चेष्टमानशरीरहेतुकस्यापि कस्यचिदचेतनपूर्वकत्वप्रसंगात्। न चेदमिष्टं, चेष्टाचेतनयोरविनाभावभंगप्रसंगात्। नापि सहवृत्तिः, देहस्यानुपाधित्वे तस्याप्यनुपाधित्वात् तयोस्तुल्ययोगक्षेमत्वात्। अतथाभावे वा सहवृत्तिनियमानुपपत्तेः।

शङ्क० टी०। समाधत्ते। विकल्पेति। प्रकारचयेणापि प्रतिबन्धः सुग्रह इत्यर्थः। अनौपाधिकत्वमुपपादयितुं पीठं रचयति। जगतीति। विरोधी साधनविरोधी। बहिर्वृत्तिः साधनव्यापकः। सहवृत्तिः साधनसमनियतः। अन्तर्वृत्तिः साधनव्याप्यः। ननु कथं चत्वार एवेत्यत आह। विरोधाविरोधयोरिति। द्वयमिति। विरोधी बहिर्वृत्तिश्चेति द्वयम्। कार्यस्येति। साधनं विरोधी चेदुपाधिः, स साध्यव्यापकत्वे सति साध्यव्याप्यो वाच्यः, तथाच साध्यव्याप्येनोपाधिना कार्यविरोधिनाऽकार्यस्य गगनादेरेव सकर्तृकत्वं सिद्धेदित्यर्थः। साधनव्यापकस्योपाधेर्दोषमाह। अकार्यस्यापीति। इदमपि समव्याप्त्यभिप्रायमेव। ननु भवत्वकार्यमपि सकर्तृकं को दोष इत्यत आह। अकार्यस्येति। यस्य कारणवत्त्वमेव विरुद्धं तस्य सकर्तृकत्वं सुतरां विरुद्धमित्यर्थः। साधनसहवृत्तिरुपाधिरित्यत्राह। तुल्येति। तर्हि कार्यत्वेन वा सकर्तृकत्वमनुमीयतां तत्समनियतेनोपाधिना वेति न कश्चिद्विशेष इत्युभयथाऽप्यपेक्षितसिद्धिरित्यर्थः। नन्वेवं साधनस्य सोपाधित्वं स्यादेवेत्यत आह। व्यभिचारेति। साध्यव्यापकेन साधनाव्यापकेन चोपाधिना व्यभि-

चारशङ्का(भि)धानं भवेत् न तु साधनसमनियतेनेत्युपाधिपरि-भाषामात्रमित्यर्थः। चतुर्थस्तु स्यादिति। साधनव्याप्य इत्यर्थः। शरीरेति। शरीरजन्यत्वव्याप्यः कुलालजन्यत्वादिरित्यर्थः। चेष्ट-मानेति। कुलालजन्यत्वं चेतनपूर्वकत्वस्य साध्यस्य व्यापकं चेत्, तदा कुविन्दजन्यपटादौ तन्निवृत्त्या चेतनपूर्वकत्वं निवर्तेतेत्यर्थः। ननु चेष्टमानशरीरहेतुकमपि चेतनपूर्वकं मास्तु किन्तत इत्यत आह। चेष्टेति। सहवृत्तिरिति। शरीरसहवृत्तिरित्यर्थः। शरीरजन्य-त्वतत्तद्वोकृजन्यत्वादिकमपि नोपाधिरित्यर्थः। तयोरिति। देह-तद्व्याप्योरित्यर्थः। अतथाभाव इति। तुल्ययोगक्षेमत्वाभावे इत्यर्थः।

---

रघु० टी०। भावा धर्माः। तद्विरोधी तदभावव्याप्यः। तद्बहिर्वृत्तिः तत्सहचरितत्वे सति तदभावसमानाधिकरणः। तत्सह-वृत्तिः, तत्समव्याप्तः। तदन्तर्वृत्तिस्तद्विषमव्याप्तः। न चेत्यादि। व्यतिरेकिणो हि धर्मस्य धर्मान्तरं विरोधि वा स्यादविरोधि वा, तृतीयप्रकाराभावात्। अविरोधि च तदवश्यं तत्समानाधिकरणं तच्च तदभावसमानाधिकरणं न वा ? आद्ये बहिर्वृत्तित्वं, अन्त्ये च तद्व्याप्यत्वं, तत्रापि समव्याप्तत्वं विषमव्याप्तत्वं वेति द्व्येव गतिरिति न पञ्चमप्रकारसम्भव इत्यर्थः। तत्र तेषु मध्ये। इयं कार्यत्वस्य विरोधि-बहिर्वृत्ति च। अत्र सकर्तृकत्वसाध्ये। कार्यत्वस्य विरोधिन उपाधित्वे। अकार्यस्यैवेति। बहिर्वृत्तेस्तथात्वे। अकार्यस्यापीति। साध्यप्रयोजकधर्मस्यैवोपाधित्वात्। न च तेन विनापि सतस्तस्मिन् सत्यप्यसतो वा तत्प्रयोजकत्वं नाम। तुल्ययोगक्षेमयोः समनियत-

वृत्त्योरविशेषात्। न्यूनाधिकदेशवृत्तित्वविरहेण लक्षणाभावादुपाधित्वविरहात्। समव्याप्यस्यैवोपाधित्वात्।

समनियतवृत्त्योरेकस्य साध्यव्याप्यत्वेऽन्यस्यापि तथात्वनियमादित्यर्थ इत्यन्ये।

दूषकताबीजाभावमाह। व्यभिचारेति। शङ्का ज्ञानं। शरीरान्तर्भूतवृत्तिः शरीरिकर्तृकत्वन्यूनवृत्तिः कुलालकर्तृकत्वादिः। अचेतनपूर्वकत्वं चैतन्यकर्तृकत्वाभावः। चेतनाकर्तृकस्य सकर्तृकत्वविरोधोऽपि द्रष्टव्यः, चेतनस्यैव कर्तृत्वात्। तुल्येति। एकस्योपाधित्वानुपाधित्वयोरितरस्यापि तथाभावनियमात्।

---

शरीरस्य च नोपाधित्वं, कर्त्रव्यापकत्वात्। तत्कार्यत्वस्योपाधेर्विद्यमानत्वात्। नाप्यायतनतया तथाभावोभोगोपाधित्वात्। नाप्युपकरणप्रापकतया साक्षात् प्रयत्नानधिष्ठेयतोपाधित्वात्। अन्यथापि तत्प्राप्तेरिति। नाप्यधिकवृत्तिः। शरीरविनाकृतस्य कर्तुः स्वयमनभ्युपगमात्। अस्तु पाक्षिकोऽभ्युपगमः, तेन न कार्यत्वमात्रात् कर्तृमत्त्वसिद्धिः, शंकितोपाधित्वात्। न चोपाधेरेव तत्सिद्धिः, तस्य स्वयं संदिग्धासिद्धत्वादिति चेत्। न। उभयथाप्यशरीरिकर्तृव्यवस्थितिनियमात्। किं तु कथंचिदुपाधिमादाय स व्यवतिष्ठताम्। यदा कार्यत्वमेवेति सन्देहः परिशिष्यते गत्यन्तराभावादिति सोऽपि निवार्यते। न तावत् देहव्यतिरेकेऽनित्यज्ञानसम्भवः, तयोः

कार्यकारणभावनियमात्। ततो नित्यं भवेत् ततः सर्वविषयं च नियतविषयताया अनित्यत्वेन व्यापनात् विषयनियमस्य सामग्रीशक्तिसमवधानाधीनतया नित्यात्तस्याः सव्याप्यमुपादाय निवर्तमानाया अनित्ये विश्रामात्। सर्वगोचरे च ज्ञाने चिकीर्षाप्रयत्नयोरपि तथाभावः, तदेकविषयत्वात्तयोः। तथा च कंचिदुपाधिमादायाशरीरपूर्वकमपि किंचिदेव कार्यं कर्तृपूर्वकं भविष्यतीति शंकापिशाच्या क्वावकाशः। एवमन्यत्राप्यनया दिशा उपाधिशंका निराकरणीयेति निरुपाधिसम्बन्धसिद्धिः। विपक्षसम्भवे च साधनप्रयुक्तसाध्यसद्भावसिद्धौ साध्याभावप्रयुक्तसाधनाभावलक्षणस्य व्यतिरेकस्यापि सिद्धेः न तदर्थं पृथगपेक्षेति।

शङ्क० टी०। ननु शरीरजन्यत्वमेव तत्रोपाधिः स्यादत आह। शरीरस्य चेति। सकर्तृकत्वे साध्ये शरीरजन्यत्वं नोपाधिः, कर्तृत्वे वा साध्ये शरीरित्वं नोपाधिः, उभयत्रापि शरीरनिष्पाद्यकार्यविशेषस्योपाधित्वान्नोपाधेः साध्यव्यापकतेत्यर्थः। कर्तुः शरीरापेक्षा किमायतनत्वेन सहकार्यन्तरसन्निधापकत्वेन वा, नाद्य इत्याह। भोगोपाधित्वादिति। द्वितीये त्वाह। साक्षादिति। यत्र कर्त्ता साक्षात्प्रयत्नेनाधिष्ठातुं न शक्यते तत्रैवोपकरणप्रापकतया शरीरापेक्षा, ईश्वरे तु न भोगो येन भोगायतनतया शरीरमपेक्षेत, न वा तत्प्रयत्नाविषयः किञ्चित्, येन तत्प्रापकतया शरीरमपेक्षेतेत्यर्थः। अन्यथापीति। साक्षात्प्रयत्नेनापीत्यर्थः। अधिकवृत्तिरिति।

शरीरापेक्षया अधिकवृत्तिरित्यर्थः। अशरीरेति। शरीराधिकवृत्तिरुपाधिः, सकर्तृत्वस्य साध्यस्य व्यापकत्वे सति व्याप्योऽपि वाच्यस्तथा च शरीरविनाकृतस्यापि कर्तृत्वमायातमतस्त्वयाऽपसिद्धान्तभयेन नैतादृश उपाधिर्वाच्य इत्यर्थः। ननु शरीराधिकवृत्तिरुपाधिर्निश्चितो नोच्यते येन तद्बलादशरीरी कर्ता सिद्ध्येत्, अपि तु सन्दिग्धोपाधिरसावित्याह। अस्त्विति। तत्प्रयोजनमाह। तेनेति। ननु साध्यस्य सकर्तृकत्वस्य व्याप्योऽप्युपाधिरिति तद्बलादशरीरस्यापि कर्तृत्वं मेत्स्यतीति स एवापसिद्धान्तस्तवेत्यत आह। न चेति। त्वया तस्योपाधित्वं न स्वीक्रियते येन तद्बलात् साध्यं सिद्ध्येदित्यर्थः। नोभयथापीति। शरीराधिकवृत्तेरुपाधित्वेऽनुपाधित्वे वेत्यर्थः। यदि तस्योपाधित्वं तदा तद्बलादेवाशरीरी कर्ता सिद्धः। अनुपाधित्वे तु निरुपाधेः कार्यत्वादेव हेतोः क्षित्यादावशरीरी कर्ता सिद्ध इति भावः। किमत्र तत्त्वमिति निर्द्धारयितुं विमृशति। किन्त्विति। उपाधिबलाद्वा स्यादशरीरी कर्ता निरुपाधिहेतुबलाद्वेति सन्देह इत्यर्थः। सोऽपि सन्देहोऽपि। उपाधिशङ्काप्यशरीरपूर्वकमपि किञ्चित्कार्यं सकर्तृकमेव स्यादिति शङ्कामापादयेत् स च न सम्भवति अशरीरेऽपि कर्तरि सिद्धे तस्य ज्ञानेच्छाप्रयत्ना नित्याः सर्वविषयाश्च वाच्यास्तथा च यत् कार्यमकर्तृकत्वेन शङ्क्यते तदुपादानमपि तज्ज्ञानादिभिर्विषयीकर्तव्यमिति कुतः कार्यस्य कस्याप्यकर्तृत्वशङ्केति न तावद्धेतुव्यतिरेकेणेत्यादि फक्किकार्थः। एवमिति। विरोधीसहवृत्तिरित्यादिविकल्प (सकर्तृकादिपक्षात् कार्यत्वस्य हेतोर्व्यावृत्तिरित्यादिविकल्प) चतुष्टयमुखेनेत्यर्थः। निरुपाधीति। यत् कार्यं तत् सकर्तृकमिति प्रतिबन्धसिद्धिरित्यर्थः।

नन्वाकाशादेरसकर्तृकादिपक्षात् कार्यत्वस्य हेतोर्व्यावृत्तिरुपदर्शनीया भवतीत्यत आह। विपक्षेति। व्यतिरेकिणो धर्मस्यान्वयव्याप्ते-र्व्यतिरेकव्याप्यत्वादन्वयदर्शनेनार्थाद्व्यतिरेकोऽपि दर्शित एवेत्यर्थः।

---

रघु० टी०। अस्तु शरीरिकर्तृकत्वमप्युपाधिरत आह। शरी-रस्य चेति। शरीरिकर्तृकत्वस्येत्यर्थः। कर्त्रव्यापकत्वात् सकर्तृक-त्वाव्यापकत्वात् मानाभावादिति भावः। अथ शरीरसापेक्षेणैव कुविन्दादिना कर्त्रा पटादिकार्यजननादवश्यं सकर्तृकत्वस्य शरीरि-कर्तृकत्वमत आह। तदिति। तत्कार्यत्वस्य शरीरकार्यत्वस्य। उपाधेर्नियामकस्य शरीरजन्ये पटादौ जनयितव्ये सहकारित्वेन कर्ता शरीरमपेक्षते न तु तदजन्ये विटपादावित्यर्थः। कर्तु-रायतननियमात्तथात्वं निराकरोति। नापीति। भोगविति, भोगादिजननार्थं कर्तुरायतनापेक्षा न तु कर्तृत्वार्थमेव। नित्यस्य कृत्यादेस्तदनपेक्षत्वात्। उपकरणाधिष्ठानार्थं तदपेक्षां निरा-करोति। नापीति। नाप्यधिकवृत्तिः। शरीरकर्तृकत्वाभाव-वद्वृत्तिः। तादृशस्योपाधित्वे तत एवाशरीरकर्तृसिद्धौ तवाप-सिद्धान्त इत्याह। शरीरेति। सन्दिग्धासिद्धत्वं साध्यव्याप्यत्व-सन्देहेन। उभयथा तादृशस्य साध्यव्याप्यत्वे तत एव साध्याव्याप्यत्वे निरुपाधेः कार्यत्वादेवेति। सोऽशरीरी कर्ता। कार्यत्वमेवेति। आद्यायेत्यनुषज्यते। शङ्कापिशाची इति। ननु साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवोपाधित्वं साध्यव्याप्यत्वस्य दूषकतायामप्रयो-जकत्वात्। तथा च शरीरिकर्तृकत्वातिरिक्तवृत्तिशरीरजन्यत्वादिक-मेवोपाधिरिति कथमशरीरिकर्तृसिद्धिरिति चेत्। न। कार्यत्वस्य

लाघवेन कर्तृजन्यतावच्छेदकत्वेन साध्यव्याप्यत्वात् तद्व्यापकत्वेन साध्याव्यापकत्वविचारणाच्चेति ।

- - - -

द्वितीयेऽपि श्रवणसम्पुटमवधाय कलकलस्त्यज्यताम् । तथाहि दण्डादिषूदासीनेषु दृश्योऽदृश्यो वा (नाना) कारकव्यापाराविनिर्भागवृत्तिश्चेतनो निवृत्तो न वेति त्वमेव प्रष्टव्यः । न चेत्, कुतः कारणान्युदासते । निवृत्तश्चेत कथमदृश्यव्यतिरेकसंशयः । तथापि यादृशस्यान्वयः तादृशस्य व्यतिरेकोऽपि उपयुज्यत, इति चेत् । कोऽत्र विप्रतिपद्यते, कारकप्रयोक्तृरुभयत्रापि तुल्यत्वात् । देही तादृश इति चेत् ! कोऽस्यार्थः ! किं देह-(देहव्यापारसंपादन-) द्वारैव सर्वाणि कारकाणि प्रयुङ्क्ते चेतनः, आहो देहं प्रयुञ्जान एवेति । न पूर्वः, देहस्यापि कारकतया देहान्तरप्रयोज्यतायामनवस्थानात् । न द्वितीयः विपक्षकलत्रचालनादौ व्यभिचारात् । देहं धारयन्निति चेत् ! सोऽयं देहो धार्यः किं कारकतया तत्कारकान्तरप्रयोगार्थं ! अथ स्वकर्मोपात्ततामात्रेण ! प्रथमे न विरोधः । देहस्य क्वचित् कार्यकारकतयाऽधिष्ठाननियमात् । यच्च तु न तत् कारकं तत्रापि तदधिष्ठेयमिति कश्चेतनोऽभिदध्यात् । द्वितीयेऽपि यः साक्षादधिष्ठातुमशक्तः स साक्षादधिष्ठेयमुपादाय

त्त प्रयुञ्जीत, नत्वेकस्य साक्षादधिष्ठानायोग्यमन्यस्यापि तथेति नियमः। देह एव व्यभिचारात्। तृतीये त्वजागलस्तनकल्पः कायो नोपयुक्तांशविवेचने स्वं निवेशयति, यथा धूममात्रं प्रति तार्णदहनान्वयव्यतिरेकयोरालोकवर्त्तेति। यदि चाकारकस्याप्यतत्प्रयो[गद्वार]जक[1]स्यापि अवश्यमपेक्षा स्यात्, य एव कुलालकायवान् घटस्य कर्त्ता स एव करभशरीरवानपि दण्डादीन् प्रयुञ्जीत, न खलु स्वकर्मोपात्ततामात्रेण करभकुम्भकारशरीरयोः कश्चिद्विशेषः। कार्यविशेषे कायविशेषोऽनुपयोग्यपेक्षणीय इति चेत्! तच्च कार्येऽनुपयुक्तश्चावश्यापेक्षणीयश्चेति व्याघातः। अव्याघाते वा कुम्भे कर्तव्ये करभशरीरमप्यवश्यमपेक्षणीयमविशेषादिति। तस्मात् सन्दंशवदयःपिण्डवत्[2] कारकतत्प्रयोजकतयैव[3] शरीराधिष्ठाननियमो न तु शरीरत्वेनैव। न च शरीरस्य सर्वत्र कार्ये कारकत्वं तत्प्रयोजकत्वं वेति। एवं तर्हि न प्रतिनियतदेहाधिष्ठातृसिद्धिः। अङ्कुरादिकारकाधिष्ठात्रापि तत्सिद्धेरिति चेत्। न। वादान्तरत्वात्।

(१) कस्यापि देहस्येति २ पु० पा०।

(२) अयःपिण्डे, इति १ पु० पा०।

(३) का॰कप्रयोजकतयैवेति २ पु० पा०।

यदापि तत्प्रस्तावः, तदापि न कार्यमात्रेण कारकाधिष्ठानमात्रेण वा तदनुमानं, ततः कर्तृमात्रसिद्धेः, किं तु हर्षभयशोकस्मितादिलिङ्गैस्तानुन्नीय तैर्भोक्तुरनुमानमिति न किंचिदेतत् ।

शङ्क० टी० । द्वितीयेऽपीति । दृश्यादृश्यचेतनसाधारण्येन तदुत्पत्तिग्रहो न शक्य इत्यत्रेत्यर्थः । कारकव्यापाराऽविनिर्भागवृत्तिरिति । कारकव्यापारनियत इत्यर्थः । निवृत्तश्चेदिति । नूनमदृश्यचेतनव्यतिरेकोऽपि तत्र त्वया वाच्य इति न व्यतिरेकसंशय इत्यर्थः । ननु तत्र दण्डादिव्यापारे शरीरिचेतनस्यान्वय इति व्यतिरेकोऽपि तस्यैव वक्तव्य इति शङ्कते । तथाऽपीति । गूढाभिसन्धिः परिहरति । कोऽत्रेति । उक्तमाशयमात्रेणाह । देहीति । आशयमुद्घाटयति । किमिति । चेतनस्य देहित्वं सर्वत्र कार्ये न प्रयोजकमिति समुदायार्थः । विपेति । तत्र देहप्रयुक्तेरभावादित्यर्थः । सुगममन्यत् । देह एवेति । चैत्रदेहो मैत्रानधिष्ठेयोऽपि चैत्राधिष्ठेय एवेति व्यभिचार इत्यर्थः । उपयुक्तांशेति । कारकव्यापारस्तादृशं देहमन्तरेणैवेत्यर्थः । यथेति । धूममात्रं प्रति तार्णदहनान्वयव्यतिरेकयोरुपयुक्तांशविवेचने कर्तव्ये यथाऽऽलोकवत्ता स्वमात्मानं न निवेशयति स्वप्रयोजकत्वात्, तथा कार्यं प्रति चेतनस्यान्वयव्यतिरेकयोः शरीरवत्ताऽप्यप्रयोजिकैवेत्यर्थः । अत्रैव विपक्षे दण्डमाह । यदि चेति । एकस्यात्मनोऽदृष्टवशात् ( कुलालवत् ) कुलालकरभशरीरोपग्रहः सम्भाव्यत एव तथा(च) करभशरीरावच्छेदेनापि तस्यात्मनो घटकर्तृत्वं प्रसज्येतेत्यर्थः । अतत्प्रयोजकेति । अकारकव्यापारत्वादेवेत्यर्थः ।

ननु घटकर्तृत्वे कुलालशरीरोपग्रहः प्रयोजको न तु करभशरीरोपग्रहोऽपीति शङ्कते । कार्यविशेषेति । कार्यस्याप्रयोजकत्वम्, अपेक्षणीयत्वं चेति व्याहतं, स्वकर्मोपात्तत्वमात्रेण तदवच्छेदकत्वे[1] दोषस्योक्तत्वादित्यर्थः । अव्याघात इति । कर्मोपात्ततामात्रेणैवापेक्षणीयत्व इत्यर्थः । कारकत्वे मन्दांशो दृष्टान्तः, [2]कारकाश्रयत्वेऽयःपिण्डः । ननु क्षित्यादावपि शरीरं कारकमेव कारकप्रयोजकं वेत्यत आह । न चेति । पूर्वं निरस्तत्वादित्यर्थः । नन्वेवं किं कुलालादिना ईश्वरेणैव घटादिनिर्वाहादित्याह । एवमिति । वादान्तरत्वादिति । ईश्वरः सिद्ध एव स एव तु साधयितुमुपक्रान्तः, किमधुना कुलादिकर्तृत्वसाधनेनेत्यर्थः । नन्वेवं दृश्यमानस्यापि कर्तृत्वं न समाहितमिति महानयमपकर्ष इत्यत आह । यदापीति । घटादिकर्तृत्वेन कुलालात्मा न साध्यते येनेश्वरेणान्यथा सिद्धिः स्यात्, किन्तु स्मितरुदितकम्पहर्षभयशोकादीन्युन्नीय तदाधारकुलालाद्यात्मसिद्धिरित्यर्थः ।

---

रघु० टी० । अविनिर्भागवृत्तिः नियतः । यद्यप्यदृश्यस्याशरीरिणो नित्यज्ञानेच्छाकृतिमतो निवृत्तिरसम्भावितैव, तथापि तत्तत्कार्यविशेषकर्तृविशेषाणामन्वयव्यतिरेकाभ्यां जायमानः कार्यकारणभावस्य ग्रहः कार्यत्वकर्तृत्वाभ्यां तं परिच्छिनत्ति, असति बाधकावतारे विशेषान्वयव्यतिरेकाभ्यामेव सामान्यतः कार्यकारणभावग्रहात्, तथैवान्वयव्यतिरेकात् । प्रतिपादयन्ति च प्रतिशास्व-

(१) तत्प्रयोजकत्व इति २ पु० पा० ।

(२) कारकव्यापाराश्रयत्वे इति २ पु० पा० ।

मीमांसकास्तु: श्रुतयो जगत्कर्तृत्वादिकं, न च तासामसति बलवत्तरे बाधके स्वार्थहानिरुचिता। साधितं च सिद्धार्थप्रामाण्यं, अविशिष्टश्च [1]स्वर्गादिबोधिकानामिव तासामपि विधिसमभिव्याहारः, तत्र तत्रेश्वरमुपासीतेत्यादिश्रवणात्।

एतेन ज्ञानत्वाद्यवच्छिन्नं प्रति आत्मनः[2] शरीरादेः, इच्छात्वाद्यवच्छिन्नं प्रति च ज्ञानस्य, कृतित्वावच्छिन्नं प्रति चेच्छाया, लाघवेन कारणत्वावधारणात् न नित्यज्ञानादिसिद्धिरिति परास्तम्।

लाघवमात्रबलप्रवृत्तेनानुपजीव्येन मानेन तादृक् श्रुतिसहस्र-बाधायोगात्, प्रत्युत तद्विरोधादनन्ताया: पटत्वघटत्वाद्यवच्छिन्नं प्रति तन्तुकपालादिगोचरज्ञानत्वादिना कारणताया दुर्वारत्वात्, दैववश-सम्पन्नखण्डपटादिकं प्रति च कुविन्दादिज्ञानादीनामजनकत्वात्। ज्ञानादेर्जन्यत्वेऽवच्छेदककोटौ जन्यत्वान्तर्भावस्यैवौचितत्वात्। अथैव-मानन्दमयत्वादिश्रुतेरानन्दोऽपि नित्यो भगवति भवेदिति चेद्भवत्येवेति ब्रूमः।

विशेषेति। विनापि शरीरप्रयुक्तिं ध्यानादेव तज्जननादित्यर्थः। यः साक्षादिति। ईश्वरस्तु साक्षादेव सकलकारकाधिष्ठानशक्त इत्यर्थः। देह एवेति। चैत्रेण साक्षादनधिष्ठितस्यापि मैत्रदेहस्य मैत्रेण साक्षादधिष्ठानात्। किञ्चेत्यादि। हर्षभयशोकानां यानि स्मितकम्परुदितानि लिङ्गानि तैः। तान् हर्षभयशोकान्। उन्नीयेति। क्वचित्तान्युन्नीयेति पाठः। स च यत्र स्मितादीन्यपि लिङ्गान्येयानि तत्परतया कथञ्चित्सङ्गमनीयः।

(१) यज्ञाद्यङ्गादि ३ पु० पा०।
(२) आत्ममन इति २ पु० पा०।

तृतीयेऽपौर्ष्याकषाये चक्षुषी निमील्य न्यायानुसारः श्रूयताम्। इह जगति नास्त्येव तत्कार्यं नाम, यत्कारकचक्रमवधीर्यात्मानमासादयेदित्यविवादम्। तच्च सर्वं चेतनोपहितमर्यादम्। अन्यथा तल्लक्षणव्यवस्थाऽनुपपत्तेः। तथा हि आधेयकारकोपहितमर्यादमधिकरणस्य रूपम्। आधारत्वात्। अपनेयापगन्तृकारकोपहितं च स्वरूपमपादानस्य। तदवधित्वात्। करणीभूतकर्मोपहितं च रूपं सम्प्रदानस्य। तदभिप्रेयत्वात्। करणोपहितं च रूपं कर्मणः। तद्व्याप्यत्वात्। कर्त्रुपहितं च रूपं करणस्य। साक्षात्तद्व्यापारविषयत्वात्। समस्तकारकोपहितं च रूपं कर्तुः। तत्प्रयोजकत्वात्। ज्ञानचिकीर्षाप्रयत्नाधारत्वव्यवस्थितेश्च न चक्रकेतरेतराश्रयदोषः। एवं सति कर्तृव्यावृत्तेस्तदुपहितसीमसमस्तकारकव्यावृत्तावकारककार्योत्पत्तिप्रसङ्ग इति स्थूलः प्रमादः।

भवेदेवं यदि कर्त्रा कारकमात्रस्य व्याप्तिः स्यात्, सैव तु कुत इति चेत्। कुतः पुनरव्याप्तिः, न हि षड्भ्योऽन्यत् कर्त्रनुपहितं कारकमस्ति, न चैषामेव कर्त्रुपधानशून्यं लक्षणमस्ति, एकैकमपोह्य शेषतः कार्यसम्भावनायां सर्वापोहसम्भावनाप्रसङ्गात्। न च समस्तविशेषापोहे सामान्यस्थितिः, यतः षट्कारकव्यावृत्तावपि कारकमात्रतः कार्यप्रत्याशा स्यात्,

एकप्रवृत्तौ तु सर्वप्रवृत्तिरप्रत्यूहेति शृङ्खलाबन्धेन व्यवस्थितेः।

शङ्क० टी०। इतीयेऽपीति। विपक्षे बाधकवत्त्वं यत् प्रतिबन्धलक्षणं तत्रेत्यर्थः। आधारमारभ्य कर्तृपर्यन्तं षण्णां कारकत्वं व्युत्पाद्य कर्त्रधीना तदितरकारकव्यापारपरम्परा, अतो न कर्तारमन्तरेण कार्योत्पत्तिरिति। विपक्षे बाधकमाह। आधारत्वादिति। आध्रियन्ते गुणकर्मादयोऽस्मिन्नित्याधारस्तं चान्तरेण कार्यानुपपत्तेस्तत्कारकमित्यर्थः। अपनेयेति। अपनेयस्याज्यो वृक्षादिः। अपगन्तृ पर्णादि, तथा च वृक्षात्पर्णं पततीत्यत्र विभागक्रियायां वृक्षस्य पर्णस्य च कारकत्वम्। तदवधित्वादिति। तन्निरूप्यत्वादित्यर्थः। यद्वा अपनेयं यदपगन्तृ पर्णादि तदुपहितं तद्विशिष्टं स्वरूपमपादानस्येत्यर्थः। तदवधित्वादिति। अपनयरूपक्रियावधित्वादित्यर्थः। करणीभूतेति। कर्मणा यमभिप्रैति स सम्प्रदानमिति सूत्रानुसारेण सम्प्रदानस्वरूपमाह। करणीभूतेति। विप्राय गां ददातीत्यत्र दानक्रियां प्रति विप्रस्य कारकत्वं तमन्तरेण दानक्रियानुपपत्तेः। अत एव ब्राह्मणस्वीकरणान्तस्त्यागो दानमिति वृद्धाः। तदभिप्रेयत्वादिति। देयस्वत्वभागित्वेन दातुरभिप्रायविषयत्वादित्यर्थः। [1]करणोपहितमिति। करणनिरूप्यमित्यर्थः तदेवाह। तद्व्याप्यत्वादिति। करणव्यापारविषयत्वादित्यर्थः। कर्त्रुपहितमिति कर्तृनिरूप्यमित्यर्थः। तदेवाह। साक्षादिति। कर्तृव्यापारविषयः करणमित्यर्थः। साक्षादिति कर्मव्यावर्तनाय, कर्मणोऽपि

(१) करणोपस्थितमिति इ पु० पा०।

कर्तृव्यापार्यत्वं परन्तु करणद्वारेति भावः। समस्तकारकोपहितमिति। समस्तकारकनिरूप्यमित्यर्थः। तदेवाह। तत्प्रयोजकत्वादिति। इतरकारकप्रयोक्तृत्वस्य कर्तृलक्षणत्वादित्यर्थः। ननु कर्तृनिरूप्यं करणं करणनिरूप्यं कर्म कर्मनिरूप्यश्च कर्तेति चक्रकम्। एवं कर्तृनिरूप्यं करणं करणनिरूप्यश्च कर्तेत्यन्योन्याश्रय इत्यत आह ज्ञानेति। उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वमित्यनेन प्रकारेण कर्तृलक्षणं करणादिनिरूप्यत्वं नाप्नोति न चक्रकादिरित्यर्थः। इदानीं विपक्षबाधकं स्फुटयति। एवं सतीति। प्रमाद इति। कर्त्तारमन्तरेण कार्यमभ्युपगन्तुः पूर्वपक्षिण इति शेषः।

ननु यत् कारकं तत् सर्वं कर्तृव्यापारविषय एवेति न व्याप्तिरतः किञ्चित् कारकं कर्तृव्यापार्यमस्तु तत एव चाङ्कुरादिरित्याह। भवेदेवमिति। न हीति। षट्सु कारकेषु तावत्कर्त्रपेक्षा दर्शितैव, तदन्यत्तु कारकं नास्त्येवेत्यर्थः। नन्वेतेष्वेव मध्ये किञ्चित्कर्तृव्यापार्यमस्त्वित्याह। न चैषामिति। ननु कर्त्तारमन्तरेणापि कार्यं स्यादित्यत आह। एकैकमिति। तर्हि कर्मान्तरेण करणमन्तरेणापि सम्भाव्येतेत्यर्थः। करणकारणनिरूप्यं च परस्परसहकारिता प्रदर्शनार्थः।

---

रघु० टी०। आधेयेति। आधेयं यत्कारकं कर्तृकर्मान्यतरत् तदुपहितम्। आधारत्वात्। कर्तृकर्मान्यतरद्वारा क्रियाश्रयत्वात्।

तथा च वृद्धाः

> कर्तृकर्मव्यवहितामसाक्षाद्धारयन्क्रियाम्।
> उपकुर्वन् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति॥

अपनेयेति । अपनेयस्त्याज्यो वृक्षादिः । अपगन्ता खगादिः । तदवधित्वात् । विभागावधित्वात्[१] । स्वभिन्नकर्तृकत्यागजन्यविभागाश्रय एव च विभागावधिः, अपादानत्व त्यक्तरि खगादावव्याप्त्यादिव्यवहारविरहात् । करणीभूतेति । करणीभूतेन कर्मणा उपहितं कर्मणः करणोपहितत्वात् करणस्य कर्त्रुपहितत्वात्तदुपहितस्य संप्रदेयस्य कर्तृघटितत्वमिति भावः । तदभिप्रेयत्वात् । तेन कर्मणा देयद्रव्येन दातुरभिप्रेतत्वात् । तथा च पाणिनिसूत्रम् । कर्मणा यमभिप्रैति स सम्प्रदानमिति । अत्र कर्मणेति तृतीयया करणत्वं प्रत्याय्यते । त्यक्तुस्त्यज्यमानस्वत्वभागित्वेनोद्देश्यत्वमपि चेतनोपहितमेव त्यागविशेषश्चात्र ग्राह्यः, क्रेतरि सम्प्रदानव्यवहारविरहात् । तद्व्याप्यत्वात् तद्व्यापारविषयत्वात् । साक्षादिति, कर्मव्यवच्छेदाय । ननु साक्षात्कर्तृव्यापार्यं करणं करणव्याप्यं कर्म कर्मप्रयोजकश्च कर्तेति चक्रकं, एवं साक्षात्कर्तृव्यापार्यं करणं करणप्रयोक्ता च कर्तेति अन्योन्याश्रय इत्यत आह । ज्ञानचिकीर्षेत्यादि । ननु ज्ञानादिमतः कार्य्यमात्रं प्रति जनकत्वस्यासिद्धौ तद्घटितमूर्तिकस्य कारकविशेषस्यापि न तथात्वं सर्वं च कारकं न चेतनोपहितं, तथाहि परम्परया क्रियाश्रयत्वमधिकरणत्वम् । परकीयक्रियाजन्यविभागाश्रयत्वमेवापादानत्वम् । अत एव वृक्षात् पर्णं पततीत्यादावपि वृक्षादेरपादानत्वं विभागावधित्वमेवापादानत्वं अवधित्वं च सम्बन्धविशेषः स च क्वचिदेवानुभवबलादित्यपि केचित् ।

---

(१) तादृशविभागावधित्वादिति २।३ पु० पा० ।

अथ मतं तवैवेयं प्रक्रिया, अस्माकं तु कार्येणानुविहितभावाभावं चेतनमचेतनं वा कारणमुच्यते। संहतौ तु सर्वं स्वप्रधानम्। उपादानेतरव्यवस्था तु कथञ्चिदिति चेत्। न। तथापि निरुपादानत्वप्रसङ्गात्। जातिप्रतिनियतहेतुत्वेन तदवश्यमभ्युपेयं, तस्य प्रमाणसिद्धतयाऽपह्नोतुमशक्यत्वादिति चेत्। न, उपादानमात्रस्य तद्धेतुत्वे निमित्तवैचित्र्येऽप्येकजातीयत्वप्रसङ्गात्। निर्निमित्तं वा प्रसज्येत, उपादानादेव तथाविधात्तदुपपत्तेः। न किञ्चिदेकमेकस्मात्, सामग्र्याः सर्वसम्भव इति चेत्। कुत एतत्। निमित्तसहितस्यैवोपादानस्य प्रत्यक्षानुपलम्भाभ्यां कारणत्वावधारणादिति चेत्। न। दृश्यमात्रविषयत्वात्तयोः। दृश्यत्वं तस्य कथञ्चिदविवक्षितमिति चेत्। न। चेतनेऽपि तथा किं न स्यादिति। तस्मादुपादाननिमित्तयोर्यथा परस्परसहितयोरेव कार्यशक्तिस्तथा चेतनाचेतनयोरपौत्येकनिवृत्तावितरनिवृत्तिप्रसङ्गः।

अपि च मृत्पिण्डदण्डादिषु स्वव्यापारे पारतन्त्र्यं तावन्नियमेनोपलभ्यते, तदिदं दण्डादित्वमात्रानुबद्धं वा स्यात, अदृष्टविशेषोपग्रहानुबद्धं वा, अचैतन्यमात्रानुबन्धं वेति निपुणं निरूपय।

शङ्क० टी०। इयमिति। सर्वकारकसमवधाननियमप्रक्रियेत्यर्थः। अस्माकमिति। अर्थव्यतिरेके कर्त्रादिसमवधाननियम

इत्यर्थः। उपादानेतरव्यवस्थेति। समवाय्यसमवायिनिमित्तापेक्षा तु नियतेत्यर्थः। एवं सति कार्यमुपादानं नापेक्षेतेत्याह। तथापीति। पृथिवीजातीयकार्यं पृथिवीजातीयसमवायिकारणकमेवेति व्यवस्था निरुपादानत्वे न स्यादित्याह। जातिप्रतिनियतेति। एवं सति उपादानमात्रमेव कारणमस्तु किं निमित्तकारणेन तथा च दण्डवेमादिनिमित्तवैचित्र्येऽपि घटपटादीनामेकजातीयत्वप्रसङ्ग इत्यत आह। उपादानमात्रस्येति। तथाविधात्--विचित्रात्। तदुपपत्तेः--कार्यवैचित्र्योपपत्तेः। एकमात्रकारकत्वे सततोत्पत्तिप्रसङ्गात्सामर्थ्यापेक्षेत्याह। न किञ्चिदिति। साम्यमापादयितुं पृच्छति। कुत एतदिति। प्रत्यक्षानुपलम्भाभ्यामन्वयव्यतिरेकाभ्यां पुनः साम्यापादनामाह। दृश्यमात्रेति। चेतनेऽपीति। तत्रापि दृश्यत्वातिप्रसज्यतामित्यर्थः। प्रकृतमुपसंहरति। तस्मादिति। अचेतनत्वावच्छेदेनैव पारतन्त्र्यमतस्तदवच्छेदेनैव चेतनाधिष्ठेयत्वं तेन परमाणुदृष्टादीनामपि चेतनाधिष्ठेयत्वमवश्यं वाच्यं न चास्मदादिभिस्तदधिष्ठानं सम्भवतीति ईश्वरस्तदधिष्ठाताऽवश्यं स्वीकर्तव्य इत्यभिधातुं पीठमारचयति। अपि चेति।

---

रघु० टी०। करणत्वं न कर्तृव्यापार्यत्वं गुणकर्मणोरतथात्वप्रसङ्गात्, परन्तु व्यापारवत्कारणत्वादिकं न वा करणत्वेन कारणत्वं मानाभावात्, परन्तु कार्यविशेषं प्रति कारणतावच्छेदकतत्तद्रूपेण। कर्मत्वं च परसमवेतक्रियाफलशालित्वादिकं सम्प्रदानादिकं च विना कार्यसामान्योत्पत्तिस्तवाप्यनुमता निरुक्तयोश्च करणाधिकरणयोर्व्यतिरेको न क्वचिदपि कार्येऽस्माकमपीत्याशयवानाशङ्कते।

अथेति। किमस्मदाद्यकर्तृकं कार्यजातं सर्वथैव भवतामकर्तृकं? नेत्याह। संहतौ वेति। स्वप्रधानं स्वीये व्यापारे प्रधानं कर्तृ।

तथा चाहुः।

स्वव्यापारे च कर्तृत्वं सर्वत्रैवास्ति कारक इति।

कथञ्चित् प्रधानक्रियामपेक्ष्य। कर्तृविशेषकार्यविशेषाणामन्वयव्यतिरेकाभ्यां सामान्यत एव तदुत्पत्तिग्रहात् अकारणककार्योत्पत्तिप्रसङ्ग एव विपक्षे बाधकः। अन्यथा तन्तुपटादीनामन्वयव्यतिरेकयोर्विशेष एव विश्रामात् सामान्यत उपादानस्य कारणत्वासिद्ध्या निरुपादानमपि कार्यं जायेतेत्याह। तथापीति। निमित्तवैचित्र्यस्थलेऽप्युपादानगतमेव वैचित्र्यं कल्पनीयं तत्राह। निर्निमित्तं वेति। तथाविधात् विचित्रात्। सामग्र्या इति। सामग्री च निमित्तघटितेति भावः।

---

तत्र न प्रथमः। वेमादीनां स्वातन्त्र्यप्रसङ्गात्। तेषां वेमादित्वमात्रानुबन्धमिति चेत्। न। दण्डादीनां स्वातन्त्र्यप्रसङ्गात्। न चैतत्कार्यविशेषनियतं, गवाभ्याजनादौ दण्डादीनां स्वातन्त्र्यप्रसङ्गात्। न द्वितीयः। तस्य जातिविशेषानियतत्वे घटार्थमपि तेषां कदाचित् स्वातन्त्र्यप्रसङ्गात्। तन्नियतत्वे स एवोच्यताम्। न च घटपटशकटकटाहादिगतं दण्डवेमवासीसन्दंशादिगतं वा सामान्यविशेषमुपलभामहे। अस्त्यसौ यतः शरीरिकर्तृकत्वानुमानमिति चेत्। न। घटत्वादेरेव तथाभावात्।

अस्तु वा संस्थानविशेषः । न च स एवात्र निबन्धनम् । तस्याभावेऽपि जलानलादीनां चेतनप्रेर्यत्वदर्शनात् । न च शरीरप्रयोज्यं यत् तदेव चेतनप्रेर्यमिति नियमः । शरीरस्यैव स्वातन्त्र्यप्रसङ्गादित्युक्तप्रायम् ।

तस्माद्चैतन्यमात्रनिबन्धनमेतद्दण्डादिषु तथा च परमाण्वदृष्टादिष्वपि तस्य भावात्तथाभावो दुर्वारः । तदेतत् कार्यं कारणवत्तया व्याप्तं, सा च विपक्षेऽसंभवन्ती स्वव्याप्यमुपादाय व्यावर्तमाना सपक्षे विश्राम्यतीत्युभयमुखी प्रतिबन्धसिद्धिः ।

शङ्क० टी० । तेषामिति । वेमादीनां वेमादित्वेनैव पारतन्त्र्यमित्यर्थः । ननु दण्डादीनां पारतन्त्र्यं घटादावेव जनयितव्ये, न त्वन्यत्रापीत्यत आह । न चेति । तस्येति । दण्डादावदृष्टविशेषोपग्रहोऽस्ति येन घटादिकं जनयति तत्रैव पारतन्त्र्यं, क्षित्यादौ तु तत्कारणानां स्वातन्त्र्यमेवेति तदा स्याद्यदि जातिविशेषनियतोऽदृष्टविशेषग्रहः स्यात्, न च तादृशो जातिविशेषोऽस्ति । तथा च घटेऽपि जनयितव्ये कदाचिद्दण्डादिः स्वतन्त्रः स्यादित्यर्थः । तन्नियतत्वत इति । यज्जात्यवच्छिन्नं जनयद्दण्डादि परतन्त्रं स एव जातिविशेषोऽभिधीयतामित्यर्थः । न चेति । कार्यं कारणं च तादृशं सामान्यं नास्ति, यत्प्रयुक्तमचेतनानां पारतन्त्र्यमित्यर्थः । अमाविति । सामान्यविशेष इत्यर्थः । शरीरिकर्तृकत्वव्याप्यतावच्छेदकं सामान्यमस्तीत्यर्थः । घटत्वादेरेवेति । व्याप्ये चानुगमो न दोषमावहतीत्यर्थः ।

ननु तथाप्यनुगमकं किञ्चिदाश्रेयमेवेत्यत आह । अस्तु वेति । यद्दृष्टेरक्रियादर्शिनोऽपि कृतबुद्धिरुत्पद्यते तदङ्कुरादिव्यावृत्तं घट-पटाद्यनुगतं संस्थानविशेषवत्त्वमेव शरीरिकर्तृकत्वव्याप्यतावच्छेदक-मस्त्वित्यर्थः । ननु (स्वकर्तृ)चेतनपूर्वकत्वेऽपि तदेव प्रयोजकमस्तु न त्वचेतनत्वमात्रमित्यत आह । न चेति । तादृशसंस्थानविशेष-विरहिणामपि जलानलादीनामपि चेतनप्रेर्यत्वदर्शनादेवेत्यर्थः । ननु तथाऽप्यचेतनत्वनिबन्धनं मास्तु, किन्तु शरीरप्रेर्यत्वनिबन्धनमेवास्तु चेतनप्रेर्यत्वमत आह । न चेति । शरीरं न शरीरप्रेर्यमथ च परतन्त्रमेव तदिति न तन्निबन्धनमित्यर्थः ।

यदर्थोऽयमारम्भस्तदुपसंहरन्नेव स्फुटयति । तस्मादिति । तस्य भावादिति । अचेतनत्वस्य भावादित्यर्थः । तथाभाव इति । चेतनप्रेर्यत्वमित्यर्थः । सा च कारणवत्ता विपक्षेऽसकर्तृके गगनादा-वसम्भवन्ती स्वव्याप्यं कार्यत्वमुपादायैव व्यावर्तमाना सपक्षे सकर्तृके विश्राम्यतीत्यर्थः । उभयमुखी अन्वयमुखी व्यतिरेकमुखी च । यद्यत् कार्यं तत्तत् सकर्तृकं, यन्न सकर्तृकं तत् न कार्यमिति प्रतिबन्ध-सिद्धिरित्यर्थः ।

---

भगी० टी० । अस्तु वेति । अङ्कुरादिव्यावृत्तः शरीरकर्तृक-त्वानुमापक इति शेषः । अचेति । चेतनव्यापार्यत्व इत्यर्थः । शरीरस्यैवेति । यदि शरीरव्यापार्यमेव चेतनप्रेर्यं स्यात्तदा शरीरमेव तादृशं न स्यात्, न च पूर्वशरीरव्यापार्यमुत्तरशरीरं, आद्यशरीरस्या-व्यापार्यत्वापत्तेरित्यर्थः । उक्तप्रायमिति । न च शरीरजन्यक्रिया-श्रयत्वं तत्र प्रयोजकं तच्च शरीरेऽप्यस्तीति वाच्यम् । शरीरावयवे

तस्याप्यव्याप्तेरित्यर्थः। तस्येति। अचेतनत्वस्य भावाश्चेतनव्यापार्यत्व-मित्यर्थः। उभयमुखीति। अन्वयव्यतिरेकमुखीत्यर्थः।

---

रघु० टी०। तस्येत्यादि। अदृष्टोपग्रहस्य कार्यगतेन कारण-गतेन वाऽनुगतजातिविशेषणाप्रयुक्तत्वे(१) क्वचिदेव कार्ये कस्यचिदेव तदुपग्रहे कार्यान्तरे, तत्रैव वा कार्ये कारणान्तरस्य तदभावात्तन्नि-बन्धनपारतन्त्र्यविरहे स्वातन्त्र्यं स्यात्। अनुगतस्तु जातिविशेषोऽनु-पलम्भबाधित इत्यर्थः। स एव संस्थानविशेष एव। अत्र चेतनप्रेर्यत्वे। सा कारणवत्ता। विपक्षे। अकर्तृके गगनादौ। स्वव्याप्यं कार्यत्वं। सपक्षे सकर्तृके। उभयमुखी-अन्वयव्यतिरेकमुखी।

कः पुनरयं प्रतिबन्धः? स्वाभाविकः संबन्धः। कः स्वाभाविकार्थः? निरुपाधित्वम्। कः पुनरुपाधिः? साध्यप्रयोजकं निमित्तान्तरम्। किमस्य लक्षणम्? साधनाव्यापकत्वे सति साध्यव्यापकत्वम्। कथं पुन-रेवं लक्षणकोऽर्थः प्रत्येतव्यो निराकर्तव्यो वा? विपर्ययाविरोधबाधकाभ्याम्। किं बाधकं? अन्वय-व्यतिरेकभूयोदर्शनसाहायकमाचरन्ननुत्तरस्तर्कः। स चाऽऽत्माश्रयेतरेतराश्रयचक्रकानवस्थानिष्टप्रसङ्गभेदेन पञ्चविधोऽपि क्वचिद् व्यभिचारं निराकुर्वाणः क्वचित्त-न्निबन्धनमुपाधिमवधून्वन् सहायीभवतीति फलतो

---

(१) शोपयुक्तत्व इति ग पु० पाठः।

न कश्चिद्विशेषः। तदुदाहरणानि चात्रैव यथायथं परिचेयानीति ॥

शङ्क० टी०। निमित्तान्तरमिति। साध्यप्रयोजकान्तरमित्यर्थः। समव्याप्योपाधौ तात्पर्यम्। विपर्ययाविरोधेति। विपक्षबाधकाभावेन निराकर्त्तव्य इत्यर्थः। अन्वयेति। अन्वयसहचारग्रहे व्यतिरेकसहचारग्रहे वा साहायकं सहायत्वमाचरन्नुत्तरस्तर्क एव विपक्षे बाधक इत्यर्थः। साहायकमिति योपधाद्गुरूपोत्तमाद्वुञिति भावे वुञ्प्रत्ययान्तं पदम्। अनुत्तर इति। नास्त्युत्तरं यस्मादित्यर्थः। कर्त्तारं विनाऽपि कार्यं स्यादिति विपक्षशङ्का, सा च न भवति। एतावता प्रबन्धेनाचेतनव्यापारस्य कर्तृव्यापारसहभावनियमे दर्शिते अकारणककार्योत्पत्तिशङ्कापर्यवसन्नायास्तस्याः स्वक्रियाव्याघातादिनाऽनु(१)दयादित्यर्थः। स चेति। स्वापेक्षित्वमात्माश्रयः। स्वापेक्षापेक्षित्वमन्योन्याश्रयः। स्वापेक्षापेक्षापेक्षित्वादिश्चक्रकम्। आपत्तिप्रयोजकीभूतरूपवदापाद्यापादनमनवस्थेत्यादि वादिविनोदे स्फुटम्। व्याप्त्युपाधेश्च लक्षणं, ग्रहणोपायो विवेचनं चानुमानमयूखे लीलावतीकण्ठाभरणे च दर्शितमिति तत्रैव अन्वेष्टव्यम्।

ननु किं कुर्वंस्तर्कः सहाय इत्यत आह। क्वचिदिति। तदुदाहरणानीति। आत्माश्रयादीनामुदाहरणानि। अत्रैवास्मिन्नेव ग्रन्थे क्षणिकतावादेऽपोहवादे विज्ञानवादादौ च परिचेयानीत्यर्थः।

---

(१) दिनान्वयादर्शनादिति १ पु० पा०।

भगी० टी०। ईश्वरसिद्धौ व्याप्तिर्मूलं सैव केत्याह। क इति। ननु स्वभावजन्यत्वमजन्यसम्बन्धाव्यापकं स्वभावाश्रितत्वं च व्यभिचारिसाधारणमित्याह। क इति। निरुपाधित्वमिति। यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यमित्यर्थः। ननूपाधिः साध्यव्यापको वाच्यः व्यापकत्वं च व्याप्तिनिरूप्यमित्यन्योन्याश्रय इत्याह। कः पुनरिति। उपाधेः स्वरूपमाह। साध्यप्रयोजक इति। यद्धर्मावच्छिन्नसाधने साध्यसामानाधिकरण्यमित्यर्थः। साधनाव्यापकत्व इति। व्यापकत्वं तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं प्रतियोगित्वं चाभावविरहात्मत्वमिति नान्योन्याश्रयः। अधिकस्तु व्याप्त्युपाधिषु पल्लवः प्रमाणचतुष्कोपायेऽस्माभिः प्रपञ्चितो विस्तरतया नेह विविच्यते। कथं पुनरिति। सहचारव्यभिचारदर्शनादर्शनयोर्व्यभिचारिसाधारणत्वादिति भावः। विपर्ययस्येति। विपक्षे बाधकाभावादुपाधेर्ज्ञानं विपक्षे बाधकाज्ञानौपाधिकत्वज्ञानमित्यर्थः। अन्वयेति।

एतेन यावद्भिर्दर्शनैर्विपक्षबाधकावतारस्तावन्ति भूयांसि दर्शनानि विवक्षितानीति नाननुगम इत्युक्तम्।

यद्यपि तर्कोऽपि व्याप्तिमूलक इति तत्रापि तर्कानुसरणेऽनवस्था। तथापि सहचारदर्शनव्यभिचारशङ्कानिरास एव व्याप्तिग्राहकः स च क्वचित्तर्कात्, क्वचित् स्वतः सिद्ध एव, स्वक्रियाव्याघातेन व्यभिचारशङ्काया अनुदयादिति सङ्क्षेपः।

स चेति। आत्माश्रयादीनामप्यनिष्टप्रसङ्गरूपतया गोवृषन्यायादिभागः। न चात्माश्रयप्रपञ्चत्वमन्योन्याश्रयादेरिति वाच्यम्। दूषकताबीजसाम्येऽपि लक्षणभेदस्याविरोधात्। लक्षणं च स्वापेक्षा-

नपेक्षित्वे सति स्वापेक्षित्वाभ्युपगम आत्माश्रयः। साक्षात् स्वापेक्षा-पेक्षित्वाभ्युपगमोऽन्योन्याश्रयः। स्वापेक्षापेक्षापेक्षित्वाभ्युपगमश्चक्रकं तच्च त्रिचतुरादिसाधारणम्। आपत्तिप्रयोजकरूपवत्तयाऽऽपाद्यापादनमनवस्था।

---

रघु० टी०। विपर्यये साध्यं विना साधनसत्त्वेऽविरोधेन बाधकाभावेन प्रत्येतव्यो बाधकेन च निराकर्तव्यः। अन्वयः साध्य-साधनयोः सहचारः। व्यतिरेकः तदभावयोः। चक्रकान्तानां साक्षात्परम्परासाधारणमात्माश्रयत्वमेव दुष्टौ बीजं। व्यवहारे पुन-रवान्तरविशेषाः। यद्यप्यात्माश्रयादावप्यनिष्टप्रसङ्गः। तथापि गोबलीवर्दन्यायेन पृथगुपन्यासः।

---

अथ न्यायदुर्ललस्य प्रतिबन्दीकरणं, यद्येवं शश-विषाणस्यापि सिद्धिः स्यात्, दृश्यमात्रनियतत्वात् प्रत्यक्षबाधस्य, न च दृश्यत्वनिवृत्तेरेव विषाणत्व-निवृत्तिः, अव्यापकनिवृत्तावव्याप्यनिवृत्तेरयोगात्। विषाणगतकार्यत्वप्रयुक्तत्वाच्च दृश्यत्वव्याप्तेः, तेन तन्नि-वृत्तावपि नाकार्यस्य शृङ्गस्य निवृत्तिरिति। तच्च महार्थ-मिथ्या कृतकृत्यस्य न परिभ्रंशाय, निष्प्रयोजनविषय-त्वात्। तथापि सम्भावितस्याकीर्तिभिया नोपेक्षामर्हति प्रतिबन्दिरिति चेत्, तर्हि मा भैषीरियमुन्मोच्यते। तथाह्यर्थतः स्वशिरःशृङ्गसाधनप्रवृत्त इदं प्रष्टव्यः,

किं ते विषाणशब्देनान्यदेव किञ्चिदभिप्रेतं रोमादि-विषाणजातीयं वा द्रव्यम्?। प्रथमे सिद्धसाधनं, लोक-विरोधश्च। लोके तद्विपरीतस्यैवार्थस्य विषाणशब्दे-नाभिधानात्। द्वितीये त्वन्वयव्यतिरेकाभ्यां संस्थान-विशेषकार्यत्वात् व्यवहारलक्षणायास्तदभिव्यक्तेः कथं तद्रहितेषु परमाण्वादिषु तत्सम्भवः। सम्भवे वा कथं न तत्र घटत्वादिकमपि। ओमिति ब्रुवतः कथं न जातिसङ्करप्रसङ्गः, कारणं विना कार्यसम्भवप्रसङ्गो वा, न वान्वयव्यतिरेकौ कार्यकारणभावे प्रमाणमिति सर्वं समाकुलमेवाकुलमतेः। तस्मादतीन्द्रियं नित्यं वा विषाणमेव न भवति यच्च विषाणं तत् प्रत्यक्ष-बाधितमेव कुतस्तदनुमानावकाशः।

शङ्क० टी०। न्यायेन दुर्बलो न्यायदुर्बलः, न्यायेनास्मत्प्रयुक्तेन दुर्बलस्य सदुत्तरास्फुरणेन हीनशक्तेरिति वार्थः। सुगममन्यत्। सहार्थसिद्धेति। सहार्थं ईश्वरस्तत्सिद्धा तत्र त्वया दूषणानभिधानात्। परिभ्रंशो भङ्गः। निष्प्रयोजनेति। नहि प्रतिबन्दिर्दूषणफला, नापि साधनफलेत्यर्थः। मा भैषीरिति। प्राणित्वादिना स्वशिर-स्यपि विषाणसिद्धिभयं मा कार्षीरित्यर्थः। अत एवोक्तमर्थादिति। लोकेति। लोमादौ लोके विषाणपदप्रयोगाभावादित्यर्थः। तद्वि-परीतस्येति। लोमादिभिन्नस्येत्यर्थः। विषाणत्वं जातिर्घटत्वादिवत् संस्थानविशेषव्यङ्ग्यैव, तथा च यत्र संस्थानविशेषो नास्ति तत्र विषाणत्वमपि नास्ति, सम्भवे वा परमाणुषु घटत्वपटत्वादिकमपि

स्यादित्यर्थः। पटत्वादिकमपि तत्रास्तु को दोष इत्यत आह। ओमिति। तादृशावयवसंयोगं विनापि यदि विषाणरूपं द्रव्यं स्यात्, तदाऽकारणकार्योत्पत्तिरित्याह। कारणमिति।

यद्वा संस्थानविशेषमन्तरेणाऽपि यदि विषाणत्वाभिव्यक्तिः स्यात् तदाऽकारणककार्योत्पत्तिरित्यर्थः।

न चेति। अन्वयव्यतिरेकाभ्यां तादृशावयवसंयोगस्यैव विषाणारम्भकत्वं विषाणत्वाभिव्यञ्जकत्वं च गृहीतं तत्तिरस्कारे कारणत्वनिश्चयस्तु क्वापि न स्यादित्यर्थः।

---

भगी० टी०। एवमिति। यदि तादृश्ये प्रत्यक्षबाध इत्यर्थः। महार्थेति। महानर्थः प्रयोजनं विश्वसृष्ट्यादि यस्मात्, स ईश्वर इत्यर्थः। अवान्तरत्वात्तन्नेदानीं समाधेयमिति भावः। ओमिति। यदि व्यञ्जकाभावेऽपि तद्व्यङ्ग्यजातिमत्वं तदा व्यञ्जकाभावेऽपि मिथो विरुद्धजातीनामेकत्र प्रवृत्तौ जातिसङ्करप्रसङ्गः स्यादित्यर्थः। कारणं विनेति। व्यञ्जकज्ञानाभावे व्यङ्ग्यज्ञानापत्तेरित्यर्थः। सर्वमिति। गृङ्गत्वं दृश्यमेव योग्यानुपलब्ध्या बाध्यते, तत्साधने च प्रत्यक्षबाधः। परात्मा तु परस्यायोग्योऽपि चेष्टयाऽनुमीयत इति न तत्र योग्यानुपलब्धिर्बाधिकेत्यर्थः।

तथाऽप्यतीन्द्रियं गृङ्गं मूर्तत्वात् कुतो न सिद्ध्यतीत्याह। तस्मादिति। गृङ्गत्वस्य दृश्यसन्तानव्यङ्ग्यत्वादतीन्द्रियस्य व्यतिरेकाग्रहाद्व्यतिरेकिणोऽप्रवृत्तेः त्वन्मते केवलान्वयी नास्त्येव विपक्षे बाधकाभावाच्चेत्यर्थः।

रघु० टी०। तद्विपरीतस्य तद्भिन्नस्य। व्यवहारेति। व्यवहारो लक्षणं चिह्नं यस्यास्तस्याः कार्यस्य कारणसिद्ध(चिह्न)त्वात्। तद्रहितेषु व्यञ्जकाभिव्यक्तिव्यवहाररहितेषु। तत्सम्भवोऽभिव्यङ्ग्यसम्भवः। कारणं विनेति। घटादिजातीयं प्रति संस्थानविशेषस्यान्वयव्यतिरेकाभ्यां कारणत्वाऽवधारणात्।

---

एवं तर्हि नित्यं ज्ञानमित्यपि व्याहतम्। इन्द्रियादिविकारमात्रव्यक्तिमात्रव्यङ्ग्यत्वात् ज्ञानत्वसामान्यस्येति चेत्। न। अतद्भावत्वात् अतदाक्षेपकत्वाच्च। न हि मातृत्वस्य वन्ध्यात्ववत् नित्यत्वस्याभावो ज्ञानत्वम्। अचेतनानामपि चेतनत्वप्रसङ्गात्। नापि नित्यत्वं ज्ञानत्वाभावमाक्षिपेत्। ज्ञानत्वेनाविरोधात्। विरोधमूलस्य विपक्षे बाधकस्याभावात्, दर्शनादर्शनयोश्चार्थप्रवणत्वाप्रवणत्वोपाधिग्रस्तत्वात्। रूपत्वानित्यत्वयोश्चक्षुर्मात्रग्राह्यव्यक्तित्ववत्। न चेन्द्रियादिविकारो ज्ञानत्वाभिव्यक्तिहेतुरर्थप्रवणव्यक्तिमात्रस्यैव तन्निरपेक्षस्य तथाभावात्। एतदनपेक्षस्य तस्यातिप्रसञ्जकत्वादिति॥

शङ्क० टी०। एवं तर्हीति। इन्द्रियादिविकारमन्तरेणैव ज्ञानत्वाभिव्यक्तौ तत्रापि दोषाः समाना एवेत्यर्थः। अतद्भावत्वादिति। ज्ञानत्वनित्यत्वयोः परस्परविरहस्वरूपत्वाभावान्न विरोधः न हि ज्ञानत्वाभाव एव नित्यत्वं नित्यत्वाभावो वा ज्ञानत्वमित्यर्थः।

कुत एवमित्यत आह। नहीति। जनकत्वीत्वं मातृत्वमजनकत्वीत्वं च वन्ध्यात्वमत्र जनकत्वाजनकत्वयोर्यथा परस्परविरहरूपत्वं न तथा प्रकृत इत्यर्थः। कथं न तथा प्रकृत इत्यत आह। अचेतनाना-मिति। अचेतनानां नित्यत्वाभाववतां घटपटादीनां चेतनत्वप्रसङ्गो ज्ञानत्वाधिकरणत्वप्रसङ्ग इत्यर्थः। ननु परस्परविरहाक्षेपकत्वं विरोधो-ऽस्त्वित्यत आह नापीति। नित्यमपि भवतु ज्ञानं चेति विपक्ष बाधकमिह नास्तीत्यर्थः। ननु यद्यज्ज्ञानं तत्सर्वमनित्यमेव दृश्यते यच्च नित्यं तन्न ज्ञानात्मकं दृश्यते तथा च नित्यं ज्ञानमित्यपि व्याहतमित्यत आह। दर्शनेति। नित्यमनित्यं वा यदर्थप्रवण[1] तदेव ज्ञानं न तु दर्शनादर्शने तन्त्रमित्यर्थः। तथा च विवादा-ध्यासितं न ज्ञानं नित्यत्वादाकाशवदित्यत्रार्थाप्रवणत्वमुपाधिः। विवादाध्यासितं ज्ञानमनित्यं ज्ञानत्वान्मतवदित्यत्र जन्यत्वमुपाधिः, धर्मिग्राहकमा[2]नाबाधो वेति भावः। रूपत्वेति। अन्यथा यद्रूपं तदनित्यमेवेति व्याप्त्या जलपरमाणुरूपं न सिध्येत्। तत्र सहचार-दर्शनव्यभिचारादर्शने चक्षुर्मात्रग्राह्यव्यक्तित्वौपाधिके यथा, तथा प्रकृतेऽपीत्यर्थः। ग्राह्यत्वमिह ग्रहणयोग्यत्वं। नन्विन्द्रियादिविकार-व्यंग्यत्वनिवृत्त्या तत्र ज्ञानत्वं निवर्ततामत आह। न चेति। अर्थप्रवणत्वमर्थनिरूपणाधीननिरूपणत्वं स्वरूपसंबन्धेन सविषयत्वं वा इच्छादौ तु विषयेण न स्वरूपसंबन्धः किंतु ज्ञानमेव संबन्ध इति भावः। तस्येति। इन्द्रियविकारमात्रस्यार्थप्रवणत्वनिरपेक्षस्य ज्ञान-त्वाभिव्यञ्जकत्वे सुखादीनामपि ज्ञानत्वप्रसङ्ग इत्यर्थः।

(१) यदर्थप्रधानं २ पु० पा०।
(२) मानाभावो वेति २ पु० पा०।

भगी० टी० । इन्द्रियादीत्यादिपदादात्ममनःसंयोगादि तस्य विकारः कार्यं । विरोधः परस्पराभावरूपत्वं परस्पराभावाक्षेपकत्वं वा, आद्ये । तदभावादिति । अन्त्ये । अतदाक्षेपकत्वादिति । अचेतनानामिति । नित्ये चेतनेऽनित्यत्वाभावादित्यर्थः । मापीति । स्वभावाक्षेपे विरोधो मूलं, स च ज्ञानत्वनित्यत्वयोर्नास्ति, ज्ञानमनित्यमिति व्याप्तिः विपक्षे बाधकाभावान्नास्ति, अन्यथा सुखं दुःखसम्भिन्नमेवेति व्याप्तेः स्वर्गादि न सिद्ध्येत्, न ह्यनित्यत्वमेव ज्ञानत्वव्यवस्थापकं, किन्तु

सविषयकत्वमेव ज्ञानत्वव्यवस्थापकं तु ।

सविषयकत्वं, तच्च नित्यत्वेऽप्यविरचितं, यथा चक्षुर्मात्रग्राह्यगुणत्वमेव रूपत्वप्रयोजकमिति नित्यमपि रूपं सिद्ध्यतीत्यर्थः । इन्द्रियादिविकारमात्रं न ज्ञानत्वव्यञ्जकमतिप्रसङ्गादिति सविषयत्वविशिष्टं तत् तस्य वाच्यं तत्र च व्यर्थविशेष्यत्वमित्याह । न चेति ।

रघु० टी० । एवं तर्हीति । व्याहतं विरुद्धम् । विरोधं निराकरोति । नेत्यादि । इह मात्रत्वबन्ध्यात्वे जनकत्वाजनकत्वमात्रे । चेतनं—ज्ञानं । ज्ञानभिन्नानामनित्यानां ज्ञानत्वप्रसङ्गात् । ज्ञानत्वस्यानित्ये दर्शनं नित्ये चादर्शनं तयोः । चक्षुरिति । चक्षुर्ग्राह्यत्वगग्राह्यजातिमद्गुणत्ववत् । गुणेति प्राचां प्रभाद्रव्यस्य वारणाय । त्रसरेणुपरिमाणगतावान्तरजातेस्त्वचा ग्रहीतुमयोग्यत्वे परिमाणान्यत्वमपि वक्तव्यम् । तदयमर्थः यथाऽनित्यस्य रूपत्वे तादृग्गुणत्वं प्रयोजकं नित्यस्य चारूपत्वे तदभावः तेन नित्यजलपरमाण्वादिरूपसिद्धिस्तथाऽनित्यस्य ज्ञानत्वेऽर्थप्रवणत्वं प्रयोजकं नित्यस्य चाज्ञानत्वे तदभाव

इति न नित्यज्ञानसिद्धिर्विरुद्धत इति। तथेन्द्रियविकारस्य। अतिप्रसङ्गः संयोगसुखादौ जातिविशेषाणामेव चान्वयव्यतिरेकवत्त्वान्नियतव्यञ्जकव्यङ्ग्यत्वं न जातिमात्रस्येच्छात्वादिरूपत्वादिषु व्यभिचारात्। तथा चार्थप्रवणत्वस्य इच्छादौ सत्त्वेऽपि न क्षतिरिति मन्तव्यम्।

---

अथ क्षुद्रोपद्रवाः। केवलस्य कर्तृत्वे विश्वस्य वैश्वरूप्यव्याघातः, सततोत्पत्तिप्रसङ्गश्च। अदृष्टापेक्षायां कल्पनागौरवम्, तत एव तदुत्पत्तेः। स्वार्थं प्रवृत्तावनीश्वरत्वप्रसङ्गः। परार्थं प्रवृत्तावदुःखमयसर्गप्रसङ्गः। एवमेव प्रवृत्तावचैतन्यम्। एकत्वे प्रमाणाभावः। अनेकत्वे त्वसार्वज्ञ्यम्, प्रतिनियतसामग्रीविज्ञत्वादित्येवमादयः।

शङ्क० टी०। उपद्रवाणां क्षुद्रत्वं सिद्धासिद्धिपराहतत्वम्। केवलस्य अदृष्टनिरपेक्षस्य। वैश्वरूप्यम् वैचित्र्यम्। तथा च सर्वमेकजातीयं स्यादित्यर्थः। सततेति। एकस्य न क्रमः क्वापीत्यर्थः। कल्पनागौरवमिति। ईश्वरकल्पनागौरवमित्यर्थः। तत एवेति। अदृष्टादेवाङ्कुराद्युपपत्तेरित्यर्थः। स्वार्थमिति। स्वसुखार्थं प्रवृत्तौ सुखवत्त्वेन संसारित्वापत्तेरित्यर्थः। एवमेवेति। प्रयोजनं विनैवेत्यर्थः। प्रमाणाभाव इति। नह्युक्तमीश्वरानुमानं तदेकत्वमपि विषयीकरोतीत्यर्थः। नियतेति। क्षितिकर्तुस्तदुपादानमात्राभिज्ञत्वम्। अङ्कुरकर्तुश्च तदुपादानमात्राभिज्ञत्वमित्यसार्वज्ञ्यमित्यर्थः।

---

भगी० टी०। तद्रूत्वमुपद्रवाणां सिद्धासिद्धिव्याघातात्। स्वार्थमिति। स्वार्थस्य सुखादिरूपस्यादृष्टजन्यतया तदङ्गीकारेऽस्मदादिवत् संसारित्वप्रसङ्गः इत्यर्थः। एवमिति। स्वार्थपरार्थानुद्देशेनेत्यर्थः। एकस्येश्वरस्यान्येश्वरकार्याऽकारितया तदुपादानाद्यनभिज्ञत्वादित्यर्थः। आदिग्रहणादतथात्वेऽनात्मत्वमित्यादि।

---

रघु० टी०। स्वार्थमिति। स्वार्थस्य सुखादेः, तज्जनकादृष्टस्य च सत्त्वात्संसारित्वप्रसङ्गः। एवमेव प्रयोजनमनुद्दिश्यैव। प्रवृत्तौ कार्यजनने।

---

तच्च कारणचक्रस्यैकमुपादाय शेषवैयर्थ्यप्रसञ्जने सर्ववैयर्थ्यप्रसङ्गः। अन्वयव्यतिरेकाभ्यां सिद्धकारणभावस्य न वैयर्थ्यमिति चेत्! अनुमितकारणभावस्याऽप्येवम्, प्रमाणसिद्धत्वाविशेषात्। यच्च यदनुगुणत्वेन कल्पितं तस्य तेनैव विफलीकरणे सर्वत्रादृष्टमुपादाय दृष्टवैफल्यप्रसङ्गः। तथाच तदपि न स्यात्। प्रमाणाभावात्। दृष्टेन ह्यदृष्टमनुमीयते। परार्थं च प्रवृत्तिः, स्वार्थाभावात्। न च दुःखस्पृष्ट्या कारुण्यापवादः। जनकाध्यापकचिकित्सादिषु व्यभिचारात्।

अथ दौर्जन्यादेव किन्नेवमिति चेत्। न। दोषाभावात्। तदभावश्च मोहाभावात्। तदभावोऽपि सर्वज्ञत्वादिति।

शङ्क० टी० । सिध्यसिद्धिपराघाते सत्यपि प्रकारान्तरेणाऽपि परिहरति । तत्रेति । अदृष्टमुपादायेश्वरवैयर्थ्योपादाने करण-मुपादाय कर्मवैयर्थ्यं, कर्मोपादाय करणवैयर्थ्यमित्याद्यपि प्रसज्येते-त्यर्थः । उपजीव्यविरोधमाह । यच्चेति । अदृष्टाधिष्ठातृत्वेन सिद्ध ईश्वरो नादृष्टेनान्यथा सिद्धः कर्तुं शक्य इत्यर्थः । तदपीति । अदृष्टमपीत्यर्थः । जनकेति । पित्रादयः पुत्रादिहितार्थं पुत्रादौ दुःखमुत्पादयन्त्येवेत्यर्थः । दौर्जन्यं कौटिल्यम् ।

---

भगी० टी० । तत्रेति । ननु कार्यं सहेतुकमिति व्याप्तिः कादाचित्कत्वस्य हेतुतयाऽन्यथा सिद्धत्वात् । न च हेतुत्वेनैव कर्तुरपि प्रयोजकत्वं, कार्यं सहेतुकं कादाचित्कत्वादित्यत्रोपादानादिनैव सिद्धसाधनात् । नैवम् । उपादानादिवत् कर्तृव्यतिरेकादपि व्योमादौ कार्यत्वव्यतिरेकात् तदन्वये च घटादौ तत्सत्त्वात्तुल्यन्यायतया कर्तुरपि कारणत्वात् । उपजीव्यविरोधमाह । यच्चेति । यथा दृष्टानुग्राहकत्वेनादृष्टं कल्पितं तददृष्टाधिष्ठातृत्वेनेश्वरोऽपीत्यर्थः । स्वार्थश्च यदि स्वेष्टमात्रं तदाऽनुमन्यत एव, जगत एव तदिच्छा-विषयत्वात्, अथ स्वनिष्ठं सुखादि, तत्राह । स्वार्थाभावात् । जनकेति । कारुणिकाः पित्रादयः पुत्रादावधिकतरदुःखहानाय ताडनादिना दुःखमुत्पादयन्तीत्यर्थः ।

---

रघु० टी० । सिद्ध्यसिद्धिव्याघाते सत्येवान्यदप्याह । तत्रे-त्यादि । अनुमितेति । अनुमानात् कार्यस्य कर्तृजन्यत्वे सिद्धाति कर्तुरपि कार्यजनकत्वसिद्धेरक्षमनुमितेति । यद्यपि विशेषणा-

मन्वयव्यतिरेकाभ्यामेव सामान्यतः कार्यकारणभावस्य परिच्छेदा-दीश्वरस्याऽपि कारणत्वं सिद्धं, तथापि सामान्यलक्षणायां विप्रतिपत्तेः, कर्तृकार्यविशेषाणामेकेन्द्रियावेद्यत्वादित्यमभिधानम्। यद्येत्यादि। ईश्वरस्य कारणत्वे सिद्धे कार्यस्य सततोत्पत्तिवारणायादृष्टं सहकारि कल्प्यते, तेन चेश्वरस्य कारणत्वमपाकर्तुं न शक्यते, उपजीव्यविरोधात् अन्यथाऽऽशुविनाशिनो यागादेः कालान्तरभाविफलजननान्यथानुप-पत्त्या कल्पितेनादृष्टेन व्यापारेण यागादेः कारणत्वेऽपाकृतेऽदृष्टमपि न सिद्ध्येत् प्रमाणाभावात्। दृष्टेन हि यागादिनाऽन्यथानुपपद्यमाना-वगतकारणभावेनादृष्टमुन्नीयते। अथ सुखादिना कार्येण कारण-मदृष्टमुन्नेतव्यमिति चेत्? तस्य निरपेक्षस्य जनकत्वे प्रागपि कार्यो-त्पत्तिप्रसङ्गः, दृष्टकारणस्य चन्दनादेरपेक्षायान्तु तेनैव तत्कारणता-बाधः। अथेश्वरस्य सत्त्वासत्त्वयोरवश्यापेक्षणीयाददृष्टादेव कार्यो-त्पत्तिसम्भवे नेश्वरे प्रमाणमिति मतं तन्न: तस्य प्रागेव दर्शितत्वा-दिति। जनकेति। वस्तुतः परदुःखप्रहाणेच्छा परसुखोत्पादेच्छा वा तस्य कारुण्यं, न तु परदुःखानुत्पादेच्छा, सामग्रीसत्त्वे कार्योत्पादस्य दुर्वारत्वात्। सर्वज्ञत्वेन भ्रमविरोधिदर्शनं दर्शयति, अदृष्टादिरूप-ज्ञानसामान्यसामग्रीशून्यस्य चेश्वरस्य न तद्विशेषभ्रमसम्भावनापि।

---

एकद्व्यणुककारी च[१] परमाणुमदृष्टमुपकार्यत्र्यणु-कादिभोगपर्यन्तं द्रव्यादिपदार्थषट्कं च जानाति नून-मित्यविवादम्। एषामुपादानादिरूपत्वात्। अव-च्छेद्यावच्छेदकभावापरिज्ञानेन वोपादानादिपरि-

(१) तु इति १ पु० पा०।

ज्ञानानुपपत्तेः, यश्च यज्जातीयमेकं कर्तुं ज्ञातुं वा समर्थः स तज्जातीयं सर्वमेवेति नियमः। सामर्थ्यस्य जातिनियतत्वात् केवलं समर्थोऽपि सहकार्यसन्निधेर्न कुर्यान्न जानीयात्। तच्च प्रथममिष्यते। कार्यस्य कालदेशनियमोपलम्भात्। द्वितीयस्तु संभवेदपि यदि कार्यमस्य ज्ञानं स्यात्। न च तत्तथा। कथमिति चेत्? शरीरापाये तदाश्रितानां इन्द्रियादीनामपायात्। न चान्वयव्यतिरेकसिद्धहेतुभावस्याभावेऽपि हेत्वन्तरात् कार्यजन्म। निर्हेतुकत्वप्रसङ्गात्। न चाहेतुकं कार्यं नाम। ततः स्वतःसिद्धैवास्य ज्ञानचिकीर्षाप्रयत्नशक्तिर्यत्गोचरा तज्जातीयसमस्तगोचरेति सार्वज्ञ्यसिद्धिः।

शङ्क० टी०। असार्वज्ञ्यं परिहरति। एकेति। एषामिति। परमाण्वदृष्टादीनामुपादाननिमित्तादिरूपत्वादित्यर्थः। तर्हि तदुपादानादिज्ञानात्तद्गतसामान्यज्ञानं कुतस्त्यमित्यत आह। अतश्चेति। यश्चेति। यथा घटपटादिकर्तुः कुलालकुविन्दादेः सर्वतदुपादानजातीयताभिज्ञत्वमित्यर्थः। सततोत्पत्तिप्रसङ्गमपाकरोति। केवलमिति। शरीरोपाय इति। ज्ञानकारणं नास्ति ज्ञानं चास्तीति तन्नित्यत्वमवर्जनीयमित्यर्थः। ननु शरीरादिभिन्नमेव तच्च कारणं स्यादित्यत आह। न चेति। स्वतःसिद्धेति। नित्येत्यर्थः।

---

भगी० टी०। एकेति। सर्गादिद्व्यणुकादिपक्षीकरणे तावदुपादानाद्यभिज्ञ एक एव सिद्ध्यति लाघवात्। यत्रैव लघविषयता

सम्भवत्तद्ग्राहकमानेन लघोरेव विषयीकरणात् । नित्यत्वेनानियतविषयज्ञानस्यासिद्धेरित्यर्थः । अवच्छेदेति । इतरकारणव्यावृत्तानुगतरूपाज्ञाने उपादानादेरज्ञानादित्यर्थः । योग्यतापरत्वेनाह । यस्येति । सामर्थ्यस्येति । प्रतिव्यक्तिव्यभिचारेण कारणत्वांश्चग्रहा-दात्मत्वेनैव समस्तज्ञानयोग्य इत्यर्थः । स्वतःसिद्धा स्वग्राहकमानमित्यर्थः ।(२)

रघु॰ टी॰ । सार्वज्ञ्यं साधयति । एकेत्यादिना । वस्तुतोऽनाद्यनन्ताया द्व्यणुकादिकार्यपरम्परायाः (१)पञ्चीकरणाल्लाघवेन तावदुपादानविषयकत्वेनैकमेव ज्ञानं सिध्यति । तत्तत्प्रकारकत्वं च तस्य तत्तद्धर्मविशिष्टतावत्पदार्थोपदेशवशादेव तदधिकं तु सार्वज्ञ्यं श्रुतिबलादेव ।

कारणाधीनो ज्ञानस्य विषयनियमो नित्यस्य तदभावादनियतविषयत्वमिति तु टीकाकृतः ।

जन्यस्य तत्तद्विषयत्वं तत्प्रयोजककारणाधीनं तदन्यविषयताविरहस्तु तत्प्रयोजककारणविरहात् अन्यथा जन्यस्य क्वचित् किञ्चित्प्रकारकत्वं तत्तत्कारणविशेषाधीनमिति नित्यस्य तद्व्यावृत्त्या सर्वत्र सर्वप्रकारकत्वं स्यादिति तु तत्त्वम् ।

कारणत्वाद्यवच्छेदकानुगतधर्मज्ञानं साधयति । अवच्छेदेति । प्रवृत्तिमतोऽनुगतरूपावच्छिन्नकार्यकारणग्रहवत्त्वनियमादिति । यस्येति । लाघवादात्मत्वेनैव कार्यमात्रजननज्ञेयमात्रज्ञानयोग्यत्वा-

(१) पञ्चीकरणानुरोधेनेति १ पु॰ पा॰ ।

(२) इतः परं भागोऽग्रो न लभ्यते ।

दिति भावः। प्रथमं सहकारिविरहे कार्याकर्तृत्वं। निर्हेतुकत्वेति। सर्वेषामेव हेतुत्वभिमतानां व्यभिचारेणाहेतुत्वात्।

---

शरीरापाय एव कथमिति चेत्? दृश्यस्य प्रत्यक्षबाधितत्वात्, अदृश्यस्यापि सावयवतया मूर्ततया च निविडतरपाषाणमध्यवर्तिनि भेकादौ[1] कार्ये कर्तव्ये नाभग्नस्य प्रवेशः। न च परमाणुरूपं तच्छरीरम्। अनन्तरालत्वेन निर्मनस्कतया इन्द्रियाश्रयत्वानुपपत्तेः। न च बहिर्वृत्ति मनोज्ञानजननोपयोगि शरीरवैयर्थ्यप्रसङ्गात्, न च दविष्ठ एव सूर्यादिस्तत्कुर्यादिति साम्प्रतम्। कारकानधिष्ठानात्, शरीरस्य तदायतनतया प्रयत्नस्याव्यापकत्वात्। तथापि व्यापकत्वे त्वसमवायिकारणाननुरोधेनाकारणकतया तदैव नित्यत्वम्। न चोद्देशमात्रसंबन्धेन क्रियाहेतुत्वमस्मदादिप्रयत्नस्यापि तथाभावप्रसङ्गात्। न च संयुक्तसंयोगादधिष्ठानं, साक्षादधिष्ठानस्य विवक्षितत्वात्। विषापनोदादौ कथमिति चेत्। न[2]। तत्रास्मदादेर्ज्ञानमात्रं प्रतियत्नस्याविरोधात्। विषापनोदादौ तु तत्सहकारिणस्तज्जन्यादृष्टसहकारिणो वा अन्यस्यैव तत्रत्यो यत्नः क्रियाहेतुरिति। सर्गादौ तु न शरीरगन्धोऽपीति

(१) भेकशरीरादाविति १ पु० पा०।

(२) तस्य शरीरस्य दूरस्थत्वादितिभावः।

सर्वथा कलेवरविगमात् अकारणतया बुद्धेः सर्वज्ञत्व-मनिवार्यं विश्वेषां कर्तुरेकस्येति ।

शङ्क० टी० । भग्नस्य च प्रवेशे भेकादेः शरीरजन्यत्वं सिद्ध-मित्यर्थः । ननु पाषाणस्य सच्छिद्रतया परमाणुरूपं शरीरं तत्र प्रविशेदेवेत्यत आह । न चेति । शरीरान्तर्गतमेव च मनोज्ञानं जनयतीति भावः । तत्कुर्यादिति । पाषाणमध्यवर्तिभेकादि कुर्यादित्यर्थः । कारकेति । भेकशरीरं प्रति यत् कारकं तदधिष्ठानं तत्र व्यापारोपधानं तद्विषयेण प्रयत्नेन भवेत्, न च विदूरवर्तिना प्रयत्नेनान्यत्र व्यापार आधातुं शक्य इत्यर्थः । ननु तस्य प्रयत्नो व्यापक एवास्त्वित्यत आह । तथापीति । तथाच सूर्यपदेन नित्य-व्यापकप्रयत्नवानीश्वर एवाभिधीयत इत्यायातमिति भावः । ननु दविष्ठोपीच्छाविषयतया प्रयत्नविषयः स्यादित्यत आह न चेति । उद्देश इच्छा । तथाभावेति । विदूरे क्रियाजनकत्वप्रसङ्गादित्यर्थः । ननु सूर्यादिशरीरसंयुक्तमाकाशं तत्संयुक्तं च भेककारकचक्रमिति तत्प्रयत्नेन तत्र क्रिया स्यादित्यत आह । न चेति । साक्षादधिष्ठानस्येति । प्रयत्नवदात्मसंयोगेनाधिष्ठानं विवक्षितं, तच्चास्मदादीनां शरीरद्वार-मीश्वरस्य तु न तद्द्वारमित्यर्थः । ननु गारुडिकप्रयत्नेन व्यवहितेनापि दष्टविषापनोदः कथं क्रियत इत्याह । विषेति । तत्रेति । गारुडिकमन्त्रपाठादिना गरुडदेवतायास्तादृशं ज्ञानं जन्यते, येन दष्टो जीवति, तत्र चास्मदादेर्गारुडिकस्य प्रयत्नो न विरुद्ध इत्यर्थः । ननु तथापि दष्टनिष्ठं विषं गारुडिकप्रयत्नेन व्यवहितेन कथं चलति कथं वाभिध्यानेन विषशकलं (न) चलतीत्यत आह । विषापनोदादाविति । तत्सहकारिण इति । मन्त्रादिपाठसहकारिण

इत्यर्थः । तत्त्वन्येति । मन्त्रादिपाठजन्यादृष्टसहकारिणोऽन्यस्यैवेश्वर-स्येत्यर्थः । सर्गादौ न शरीरजन्योऽपीति । न सूर्यादिशरीरजन्योऽपि येन तत्प्रयत्नाधिष्ठेयत्वं स्यात् । तथा चेश्वर एवाशरीरोऽप्यधिष्ठातेति सिद्धमित्यर्थः । अत एव ज्ञानकारणशरीराद्यभावात्तदधीनप्रति-नियमानुपपत्तेः सर्वज्ञत्वमनिवार्यमित्याह । सर्वथेति ।

---

रघु॰ टी॰ । परमाणुरूपमिति । तथाच सच्छिद्राण्यवयवि-द्रव्याणीति न तस्य पाषाणाभ्यन्तःप्रवेशविरोधः । सूर्यादिरिति शरीरमात्रोपलक्षकं । तथा च विप्रकृष्टशरीरोत्पन्नज्ञानादिरेवेश्वरो दूरस्थानि कार्याणि कुर्यादित्यर्थः । कारकेति । अन्यावच्छेदेनोत्पन्न-प्रयत्नस्यात्मनः संयोगेऽपि कारकव्यापारानुत्पादात् ।

एतेन परमाणुरूपमेव शरीरमस्तु, न च प्रयत्नवदात्मसंयोगा-समवायिकारणकक्रियावदन्त्यावयवित्वमेव शरीरत्वं, अन्त्यावयविपद-वैयर्थ्यात्, मनस इव शरीरस्यापि ज्ञानादिजनकत्वान्न वैयर्थ्यं, आत्ममनोयोगस्य च जनकत्व आन्तरत्वं न तन्त्रं चक्षुरादिनिखिलेन्द्रिय-संयोगविशेषवशाच्च तस्य रूपादिसाक्षात्कारकारणत्वं श्रोत्रस्य च कर्णशष्कुल्यवच्छेदो न सार्वत्रिको भुजङ्गे व्यभिचारात् । दृष्टं च चक्षुरादेरपि शरीरस्य महाद्रव्यप्रेरकत्वमिति प्रत्युक्तम् ।

असमवायिकारणेति उत्पादनियामकसंयोगोपलक्षकम् । प्र-यत्नस्य चाणुदेशत्वे न दवीयसि क्रियोत्पादसम्भवः । प्रयत्नावच्छेदका-वच्छेदेनैव प्रयत्नवदात्मसंयोगस्य क्रियोत्पादकत्वात् । अन्यथाऽति-प्रसङ्गात् शरीरादिसंयोगानवच्छेदेन च न प्रयत्नोत्पादो विप्रकृष्टेऽपि क्रियोत्पादप्रसङ्गादिति न तस्य प्रयत्नस्य व्यापकत्वमतोव्यापकस्याजन्यत्व-

मेवेत्यर्थः। न चेति। उद्देश इच्छा। ईश्वरप्रयत्नस्य क्रियाहेतुत्वं स्यादिति। यद्यपि परम्परयैवाधितिष्ठन्तः कुविन्दादयो व्यापारयन्ति वेमादीनि तथापि क्रियावद्वारैव तथा। निश्चलगगनादिद्वारा-प्यधिष्ठाने चलत्येव शरीरे सर्वत्र क्रियोत्पादप्रसङ्गात्। ज्ञानेति। ज्ञानमभिध्यानं। ज्ञानेति च मन्त्रपाठादेरुपलक्षकम्। अन्यस्य ईश्वरस्य। तत्रत्यः तदवच्छेदेन वर्तमानः। कार्यस्य नियतकालता-सम्पत्तये तत्सहकारिण इत्यादि। न चाऽनन्तान्येव परमाणु-रूपाणि शरीराणि सन्तु तेन युगपदनन्तकारकाधिष्ठानं नानुपपन्न-मिति वाच्यम्। अनन्तकोटिशरीरेन्द्रियज्ञानादिव्यक्तिकल्पना-जालमपेक्ष्य लाघवेन नित्यस्यैव ज्ञानादिव्यक्तित्रयस्य कल्पनात्। वस्तुतोऽनादिद्व्यणुकादिपरम्पराकारणत्वेन लाघवात्सिद्धस्यानादि-ज्ञानादिव्यक्तित्रयस्य जन्यत्वं सुदूरपराहतमिति। सर्गादाविति। शरीरस्य सावयवत्वनियममभिप्रेत्य। सर्वज्ञत्वं सर्वविषयत्वम्।

अस्तु तावदसौ सर्वज्ञः कर्ता, वक्ता तु कथमिति चेत्? न। वचनशक्तौ सत्यां परार्थैकतानत्वात्। यो हि हिताहितविभागं विद्वान् परार्थमभिप्रायः संस्थान-करणपाटवे सत्यविदूषे ऽवश्यमुपदिशेत् यथा अन्धाय दक्षिणेन याहि वामेन मा गाः इति पृथग्जनोऽपि तथा भगवानिति। स्थानकरणपाटवमसिद्धं देहा-भावात्। तेषां ताल्वादिविवृतादिरूपत्वात्। न च तदन्तरेण वर्णनिष्पत्तिः, तदुत्पत्तेरवधारणात्। न च

तत्कारणान्यनधितिष्ठतः तत्कर्तृत्वमीश्वरस्यापीति चेत् ? न। यस्य कार्यस्य यत्कारणमन्वयव्यतिरेकसिद्धं तत्कारणाधिष्ठानयोः स्थूलसिद्ध्यर्थं तदवयवपरम्पराकारणाधिष्ठानवदवश्यम्भावनियमात्। ननु सर्वत्र कार्ये कायः कारणमिति प्रागुपेक्षितः। पितृत्वाद्वोपदेशानुमानम्। तथापि कतम आगमस्तेन प्रणीत इति चेत् ? वेदायुर्वेदादिरित्यरिकरिकण्ठीरवः सिंहनादः।

शङ्क० टी०। ईश्वरस्य शरीराभावादक्तृत्वमाक्षिपति अस्त्विति। परार्थैकतानत्वादिति। परप्रयोजनैकपरत्वादित्यर्थः। परार्थैकतानत्वमेव कथयति। यो हीति। स्थानं कण्ठताल्वादि। करणं संवृतविवृत्तादिलक्षणः प्रयत्नः। तथा चेति। स्थानकरणपाटवे सति हिताहितविद्वानित्यर्थः। पूर्वपक्षी आशयमुद्घाटयति। स्थानेति। तदुत्पत्तेरिति। वर्णं प्रति ताल्वादीनां कार्यकारणभावावधारणादित्यर्थः। नन्वीश्वरस्तदन्तरेणापि वर्णान् संजनयेदित्यत आह। न चेति। करणाधिष्ठानयोरवश्यंभावनियमादिति। वाक्यं यावन्न परिसमाप्यते तावदेवानुरूपं दृष्टान्तमाह। स्थूलेति। तर्ह्यङ्कुरादौ जनयितव्ये कथमीश्वरस्य कायो नाभ्युपगम्यत इत्यत आह। न चेति। पितृत्वादिति। जनकत्वादाप्तत्वादित्यर्थः। पिता पुत्रं जनयित्वोपदिशत्येव, यो यदाप्तः स तमनभिज्ञमुपदिशत्येवेति भावः। कतम इति। भवदभ्युपगतो ऽस्मदभ्युपगतो वेत्यर्थः। अरिकरीति। तवातिदुःसहं मम वचनं यतस्त्वदनुमीयमानमण्डलीकरणादीनामप्रामाणिकत्वेन तव अमर्वैयर्थ्यमिति भावः।

रघु॰ टी॰। ईश्वरस्य शरीरविरहिणो वक्तृत्वासम्भवान्न तद्वक्तृत्वेन वेदानां प्रामाण्यं, न वा तस्य व्यवहारप्रवर्तकत्वमित्याशयेन शङ्कते। अस्त्वित्यादि। प्राक् द्व्यणुकादिजनने। उपेक्षितोऽनभ्युपगतः। पितृत्वाद्वेति। निर्दोषोऽभिज्ञः पिता निर्दोषायाविद्विषे पुत्राय सति प्रतिबन्धकविरहादौ हिताहितमवश्यमुपदिशतीति व्याप्तेः। वेदानां प्रामाण्यमसहमानः पृच्छति। तथापीति। आयुर्वेदेति। वेदप्रामाण्यसाधने दृष्टान्तार्थम्।

तथाहि न तावदयमायुर्वेदोऽप्रमाणं, संवादस्य प्रायिकत्वात्। विसंवादस्य काकतालीयतया कर्तृकर्मसाधनवैगुण्यहेतुकत्वात्। पुनस्तत्साद्गुण्ये तत एव फलसिद्धेः। न च निर्मूलस्तथा भवितुमर्हति। अतिप्रसङ्गात्। न चान्वयव्यतिरेकभावोऽस्य मूलं आवापोद्वापेन योगानामनन्ततयाऽर्वाचीनेनाशक्यत्वात्। विषादौ तथाकरणे बहुतरानर्थप्रसङ्गात्। कः प्रेक्षावान् अनाकलितवस्तुतत्त्वः पाटवपोषणच्छेदनक्षारणशिरावेधनलङ्घनादि योग्यायै कारयेत्, कुर्याद्वा। न चोपदेशस्य उपदेशपारम्पर्यमात्रं मूलं, अवश्यमुपदेशस्य क्वचित् प्रमाणे विश्रान्तेरिति हि व्याप्तेः। न च नित्यागमसम्भवो वाक्यत्वात्। तस्मादतीन्द्रियार्थदर्शिपूर्वकोऽयमिति परिशेषः। तथा चानेन दृष्टान्तेन महाजनपरिगृहीतत्वाद्वेदा अपि सर्वज्ञपूर्वका इत्युन्नीयते।

शङ्क० टी० । प्रथमं दृष्टान्तमुपपादयितुमाह । कर्तृकर्मेति । दश[1]मूलीकषायपानं ज्वरोपशमहेतु तुलनाद्यसाद्गुण्यं कर्तुश्चाजीर्ण-ज्वरत्वाद्यसाद्गुण्यमित्यर्थः । तत एव दशमूलीकषायपानादेरेव । अस्य मूलमिति । दशमूलीकषायपानं ज्वरोपशमहेतुरित्यस्येत्यर्थः । योगानामिति । तत्तद्भेषजसंयोगानामित्यर्थः । तथा करण इति । स्वयमुत्प्रेक्ष्य योगकरण इत्यर्थः । किञ्चाप्तोपदेशमन्तरेण पाठनादौ प्रवृत्तिरेव न स्यादित्याह । कश्चेति । योग्यायै अभ्यासाय । अवश्यमिति । प्राथमिकस्योपदेष्टुरुपदेश्यसाक्षात्कार एव मूल-मित्यर्थः । यदर्थं दृष्टान्तोपपादनं [2]तत्राह । तथा चेति ।

रघु० टी० । दृष्टान्तमुपपादयति । तथाहीत्यादिना । कर्तु-र्विनियोक्तुर्वैगुण्यं तदौषधविनियोगायोग्यत्वयोऽवस्थादिवैशिष्ट्यं, साधन-स्यौषधस्य कषायरसादेर्न्यूनाधिकाङ्गत्वं यथाविहितपचनभावनशोध-नादिशून्यत्वादिकं च, कर्मणः क्रियाया विनियोगस्य न्यूनाधिक-मात्रत्वाविहितकालीनत्वादि । यद्यपि वेदानां प्रामाण्ये साध्ये प्रामाण्यसिद्धेव दृष्टान्तसम्भवस्तथापि सर्वज्ञपूर्वकत्वे साध्ये तदर्थमाह । न चेत्यादि । योगानामौषधानां परस्परमिलनानाम् । विषादा-विति । व्याधिविशेषषु तेषामप्यौषधत्वात् । योग्यायै शिक्षायै । न चेति । आगमानां वाक्यत्वेनानित्यत्वात्, स्वतन्त्रपुरुषप्रणीतत्वाच्च । अयमायुर्वेदः । वेदा अपीति । यद्यप्यत्र वेदत्वं प्रमाणशब्दविशेषत्वं प्रामाण्यासिद्धावसिद्धं, एवं त्रैवर्णिकनिष्ठप्रत्यवायजनकव्यतिरेकप्रति-

(१) दशमूलीकषायस्य तुलनाद्यसाद्गुण्यमिति २ पु० पा० ।

(२) तदाहेति २ पु० पा० ।

योग्यध्ययनविषयत्वमपि स्वाध्यायोऽध्येतव्य इत्यस्यापि प्रामाण्यासिद्धेः । तथापि महाजनानां निरुपधिवेदव्यवहारविषयत्वमेव तत् । महाजनपरिग्रहेण प्रामाण्ये सिद्धे तद्गर्भितवेदत्वस्य पक्षतावच्छेदकत्वेऽपि न क्षतिः । महाजनेति । प्रमाणान्तरामूलकत्वे सतीति देयं, तेन मन्वादिस्मृतेर्महाजनपरिगृहीतत्वेऽपि न क्षतिः ।

---

ननु महच्छब्दोऽत्र यदि प्रामाणिकवचनस्तदा सन्दिग्धासिद्धविशेषणो हेतुः, अथ बह्वर्थः ? तदा सुगताद्यागमैरनैकान्तः तेषामपि वा [१]सर्वज्ञपूर्वकत्वमिति चेत् । न । बहुत्वातिशयस्य विवक्षितत्वात् । कोऽतिशयः ? सर्वदर्शनान्तःपातित्वम् । कस्तैः परिग्रहः ? तदर्थानुष्ठानं, स्वीकृतव्यवहारव्याकरणादिपालनीयत्वं, स्वीकृतप्रामाण्यायुर्वेदादिस्वीकृतार्थत्वञ्च । तथाहि नास्त्येव तद्दर्शनं यत्र सांवृतमित्युक्त्वापि गर्भाधानाद्यन्त्येष्टिपर्यन्तां वैदिकीं क्रियां जनो नानुतिष्ठति, स्पृश्यास्पृश्यादिविभागं वा नानुमनुते, व्यतिक्रमे चाऽऽचमनादिस्नानादिप्रायश्चित्तं वा नानुतिष्ठति । न सर्वत्र सर्वो जन एवमिति चेत् ? मा भूत्, न हि सर्वैं रोगिभिरायुर्वेदार्थो नानुष्ठीयत इति न तस्य महाजनपरिग्रहः । अपि तु सर्वदर्शनान्तःपातिभिरित्येव । तथापि न सर्वो वेदार्थ एवमिति चेत् ?

(१) सर्वदर्शनकर्तृभिः परिगृहीतत्वमित्यर्थः ।

मा भूत्। न हि सर्वो वेदकार्थ एवमपि तु कश्चित् केनापि। एवं तर्हि सौगताद्यागमार्थोऽपि कश्चिद्-हिंसादिः सर्वदर्शनान्तःपातिभिरनुष्ठीयत एव कैश्चि-दिति सोऽपि महाजनपरिगृहीतः स्यात्। न। सन्देहात्। किमयमहिंसादिर्वैदिक एवार्थो विडाल-व्रतन्यायेन श्रद्धाऽऽपादनाय शौद्धोदनिप्रभृतिभिरुप-निबद्धः, आहो स्वयं दृष्ट एवेति। न तावत् स्वयं दृष्टः, श्रमणकाद्यागमसाधारणत्वात्। यस्त्वसाधारणो मण्डलीकरणादिः केशोल्लुञ्चनादिर्वा नासौ सर्वैरनु-ष्ठीयते वैदिकस्तु असाधारण एव निषेकादिस्तथेति। अपि च वाचकापभ्रंशविभागोऽस्तु न वा, तद्यवहार-स्तावत् सर्वैरेव तीर्थिकैरविगानेन स्वीकृतः। तथा शिक्षाज्योतिश्छन्दोनिगमनिरुक्ताद्यर्थश्च। तेषां च वेदरक्षैव परमं प्रयोजनमिति।

शङ्क० टी०। संदिग्धेति। मन्वादीनां प्रामाणिकत्वसन्देहा-दित्यर्थः। तदेति। बहुपरिगृहीतस्यापि सुगताद्यागमस्य त्वया सर्वज्ञपूर्वकत्वानभ्युपगमादित्यर्थः। तेषामिति। सुगताद्यागमानामपि त्वदुक्तहेतुबलात् सर्वज्ञपूर्वकत्वं स्यादित्यर्थः। बहुत्वेति। अति-शयितानां बहूनां महच्छब्देनाभिधानादित्यर्थः। सर्वेति। सर्वाणि दर्शनानि न्यायमीमांसाप्रभृतीनि तदन्तःपातित्वं तत्प्रतिपाद्यमुख्यार्थ-स्वर्गापवर्गादिस्वीकर्तृत्वमतिशयः। सौगतादिदर्शनानि तु दर्शन-प्रतिरूपकाणि न तु दर्शनानीति भावः। कस्मैरिति। एते

तावन्महाजना भवन्तु परिग्रहस्तु तेषां क इत्यर्थः। एकं परिग्रहमाह । तदर्थेति । अस्मदभिमतस्य वेदस्यार्थो निषेकादिस्तैरनुष्ठीयते न तु त्वदागमस्यार्थो मण्डलीकरणादिरित्यर्थः। द्वितीयं महाजनपरिग्रहमाह । स्वीकृतेति। स्वीकृतप्रामाण्यं यद्व्याकरणं पाणिन्यादिप्रणीतं तत्साधितासाधारणपदकत्वं महाजनपरिगृहीतत्वमित्यर्थः । छन्दसि बहुलम्। छन्दसि परेऽपि। व्यवहिताश्चेत्यादिसूत्रप्रतिपादितासाधारणपदकत्वं यथास्मदागमे न तथा त्वदागमेऽपीति। तृतीयमाह। स्वीकृतेति। आयुर्वेदबोधितविध्यर्थविषयकत्वमित्यर्थः। गतत्वो गायत्रीमभ्यस्य नीरुग्भवतीत्यादौ गायत्र्या अस्मदागम एव सत्त्वादिति भावः। प्रथमं महाजनपरिग्रहं विवेचयति। तथा हीति। नास्त्येवेति। तद्दर्शनं नास्ति यदन्तःपाती जनो वैदिकक्रियां नानुतिष्ठतीत्यर्थः। [1]वेदान्तमतमाश्रित्याह। सांप्रतमिति। एवमिति, वैदिकक्रियानुष्ठातेत्यर्थः। अपि त्विति। भूयःसर्वदर्शनान्तःपातिजनानुष्ठीयमानार्थत्वेनैव महाजनपरिगृहीतत्वमित्याहादित्यर्थः। न सर्व इति। न राजसूयादिरपीत्यर्थः। न हि सर्व इति। अनेकधनव्ययाऽऽयाससाध्य[2] महाकुब्जप्रसारिण्यादिरित्यर्थः। एवं तर्हीति। यदि क्वाचित्को कतिपयमहाजनप्रवृत्तिः परिग्रहार्थ इत्यर्थः। सन्देहाकारं दर्शयति। किमित्यादि स्वयं दृष्ट एवेत्यन्तेन। श्रमणकः क्षपणकः, तदागमस्य सौगतैरपि प्रामाण्यानभ्युपगमात्। तत्राप्यहिंसाश्रवणाद्वेडालव्रतन्यायेनैव तदनुष्ठानं सौगतानामिति भावः। केशोल्लुञ्चनं व्रतान्ते निर्विघ्नत्वज्ञानाय

(१) वेदान्तिनमधिकृत्याहेति २ पु० पा० ।
(२) महाकुब्जप्रसारिणी तैलं महौषधम् ।

गुरुणा शिष्यस्य केशोत्पाटनम्। तथेति। सर्वानुष्ठानगोचर इत्यर्थः। द्वितीयं महाजनपरिग्रहं स्फुटयति। अपि चेति। ननु वाचकापभ्रंशविभागफलं व्याकरणं, तद्विभाग एव वस्तुगत्या नास्तीत्यत आह। वाचकेति। तद्व्यवहारश्चेत् अस्ति सोऽपि व्याकरणाधीन एवेत्यर्थः। व्याकरणं हि प्रकृतिप्रत्ययागमादिपरिकल्पकवाक्यम्, न च गोशब्दवद्गाविशब्देऽपि तत्कल्पनास्ति तथा च तत्परिकल्पकत्वेन सर्वैरनुमतेन व्याकरणेन बकुलं कुंदसौत्यादिना, भद्रं कर्णेभिरित्यादीनां (१)समाधानात्तत्पालनीयत्वं सिद्धम्। किञ्च व्याकरणव्याख्यातृभिर्महाभाष्यकारादिभिः सुगताद्यागमानामप्रामाण्यस्यैव व्युत्पादनादिति भावः।

रघु० टी०। सन्दिग्धेति। परिग्राहकाणां प्रामाण्यासिद्धेस्तथात्वम्। सर्वेति। न्यायादिदर्शनाभिज्ञत्वं, पाषण्डपुस्तकानि तु न दर्शनानि। विशिष्य वा न्यायादीन्युपादेयानि। अर्थेति। तथा च न्यायाद्यभिज्ञानुष्ठीयमानार्थत्वं न्यायाभिज्ञादिभिर्वाऽनुष्ठीयमानार्थत्वमेकं महाजनपरिगृहीतत्वम्।

तत्तद्दर्शनप्रतिपाद्यस्वर्गापवर्गादितत्साधनाद्यङ्गीकर्त्रनुष्ठेयार्थत्वं तदित्यपि केचित्।

द्वितीयं तदाह। स्वीकृतेति। स्वीकृतो निखिलतीर्थिकैरङ्गीकृतो वाचकत्वव्यवहारादिर्येषां तानि व्याकरणानि प्रकृतिप्रत्ययादिविभागेन साधुशब्दव्युत्पादकानि इन्द्रचन्द्रपाणिन्यादिप्रणीतानि शास्त्राणि तैः पालनमुद्देश्यीभूतं तदर्थानामवधारणमनुष्ठानं च। सुगताद्यागमार्थावधारणं तु न तेषामुद्देश्यम्।

---

(१) साधनादिति २ पु० पा०।

स्वीकृतो—यथार्थत्वेनाभ्युपगतो व्यवहारः—प्रकृतिप्रत्ययविभागादिना व्युत्पादनं येषां पाणिन्यादिव्याकरणानां तैः पालनीयत्वं तथा व्युत्पाद्यासाधारणपदशालित्वं, सुगताद्यागमस्थानि तु पदानि नासाधारणानि, असाधारणानि तु छान्दसानि गृभ्णामीत्यादीनीत्यपि कश्चित् ।

स्वीकृतेत्याद्यप्रयोजकत्वशङ्काव्युदासार्थम् । एवमग्रेऽपि । द्वितीयं तदाह । स्वीकृतेति । प्रथमं तद्व्युत्पादयति । तथा हीति । सांवृतमिति वेदान्तमधिकृत्य । संवृतिरविद्या । एवं वेदार्थानुष्ठाता । एवं महाजनैरनुष्ठेयः । मा भूदिति साम्प्रतिकमनुष्ठानमधिकृत्य, राजसूयाश्वमेधादीनामपि महाजनैरनुष्ठानस्य प्रमाणसिद्धत्वात् । सौ(शौ)द्धोदनिर्बौद्धविशेषः । तथा श्रमणकादिरपि । असाधारणस्तदुपजीविभिन्नग्रन्थाप्रतिपादितः, तथा च महाजनानुष्ठीयमानासाधारणार्थकत्वं पर्यवसितोर्थः । द्वितीयं तद्विशदयति । अपि चेति । स्यादेतत् । अपभ्रंशवत् साधवोऽपि न वाचकाः, वेदे विश्वेदेवाः शृणुतेममित्यादौ लोके गां गृहाणेत्यादौ प्रायशो वाचकयोः प्रकृतिप्रत्यययोरन्यतरस्याऽप्यभावात्, विकारादेशौ तु न प्रामाणिकौ न वा सम्भवद्वाचकभावौ, लोपे तु शब्दसंकथैव नास्तीत्यत आह । वाचकेत्यादि । तेषां वाचकत्वप्रकृतिप्रत्ययविभागादिव्यवहारभाजां व्याकरणानां तत्तदर्थबोधकानां च शिक्षादीनां, वेदरक्षा वेदार्थानामवधारणमनुष्ठानं च तदेव परमं प्रयोजनं, तदुद्दिश्यैव मुनिभिस्तेषां प्रणयनात् वेदानां पुनरप्रामाण्ये तदर्थावधारणमुद्दिश्य मुनीनां शास्त्रप्रणयनस्यानुपपत्तेः ।

---

स्यादेतत्, व्याकरणादीनि तावत् सर्वैरभ्युपगतार्थानि, वेदा अपि तैः पालनीया भवन्तु। त एवेति तु कुतः, संसारमोचकागमोऽपि तत्पालनीयः किन्न स्यादिति चेत्। न। तत्कर्तृभिस्तथानभ्युपगमात्, अव्युत्पादनात्, असाधारणलिङ्गाभावात्, विरुद्धलिङ्गसद्भावाच्च। न हि वेदशब्दार्थाविव सुगताद्यागमासाधारणशब्दार्थावनुरुध्य तेषां प्रवृत्तिः यत एवमुन्नीयेत, प्रत्युत विरोध एव, तैस्तदप्रामाण्यव्युत्पादनात्। तस्मात् सर्वाभ्युपेतव्यवहारव्याकरणादिपालनीयत्वमपि वेदानामेव नान्येषाम्। सर्वाभ्युपेतप्रामाण्यैरायुर्वेदादिभिः स्वीकृतश्चैषामर्थः, प्रतिपदं तदीयशान्तिकपौष्टिकप्रायश्चित्ततपोजपदानहोमाद्युपदेशात्। न चैष भागस्तत्राप्रमाणमेव। तुल्ययोगक्षेमत्वात्। एतदेवासिद्धं, प्रक्षेपस्यापि संभवादिति चेत्। न। अध्येत्रध्यापयितृ-संप्रदायाविच्छेदात्।

"अन्यथाकरणं चास्य बहुभ्यः स्यान्निवारणम्"।

इति न्यायात्।

तस्मादेवंरूपोऽपि महाजनपरिग्रहो वेदानामिति सोऽयमीदृशो महाजनपरिग्रहोऽसर्वज्ञपूर्वकत्वेऽसंभवन् सर्वज्ञपूर्वकत्वेन व्याप्यते।

शङ्क० टी०। संसारमोचकागमोऽपीति। तत्रापि पञ्चस्कन्धममस्काराऽपोहादिपदमसाधारणं यदस्ति तदपि व्याकरण-

व्युत्पाद्यमेवेत्यर्थः । तत्कर्तृभिरिति । व्याकरणकर्तृभिरिन्द्रपाणिनि-प्रभृतिभिः । तथानभ्युपगमात् संसारमोचकागमप्रतिपाद्यार्थ-शब्दयोरनभ्युपगमादित्यर्थः । अनभ्युपगमे हेतुमाह । अव्युत्पाद-नादिति । यथा छन्दःसूत्रैर्वैदिकानि पदानि व्युत्पाद्यन्ते तथा न तदागमस्थान्यपि । पञ्चस्कन्धादिपदानि तु भाषायामेव सिद्धानीति भावः । अव्युत्पादने हेतुमाह । असाधारणेति । भाषायां यत् पदं न प्रयुज्यते तदसाधारणं लिङ्गं, तदभावादित्यर्थः । न हीति । वैदिकाः शब्दाः उषादयः, अर्थाश्च यागादयः षडोंकारादयः, सुगताद्यागमेषु शब्दस्तादृशो नास्त्येव, अर्थोऽपि मण्डलीकरणादिः । तेषामिति । इन्द्रपाणिनिप्रभृतीनामित्यर्थः । विरुद्धलिङ्गसद्भावाच्चेति(१) विवृणोति । प्रत्युतेति । उपसंहरति । तस्मादिति । नान्येषामिति । न संसारमोचकाद्यागमानामित्यर्थः । तृतीयमहाजनपरिग्रहं (२)स्पष्टयति । सर्वेति । तदीयेति । वेदे यच्छान्तिकपौष्टिकाद्यस्ति तस्याऽऽयुर्वेदेनोपदेशादित्यर्थः । शान्त्यै प्रभवतीति शान्तिकम् । पुष्ट्यै प्रभवतीति पौष्टिकम् । तस्मै प्रभवति सन्तापादिभ्य इति ठञ् । एष भाग इति । शान्तिकाद्युपदेशभाग इत्यर्थः । तत्रेति । आयुर्वेदे इत्यर्थः । तथा च नैतन्महाजन-परिगृहीतमिति शङ्कार्थः । तुल्ययोगेति । तथा च दशभस्मी-कषायाद्युपदेशभागोऽपि न प्रमाणं स्यात् । न चेष्टापत्तिः, तत्प्रामाण्यस्य संवादेन गृहीतत्वादिति भावः । ननु तुल्ययोग-क्षेमत्वं तदा स्यात् यदि शान्तिकादिविधिरायुर्वेदे भवेत्, तदेव

(१) विरुद्धलिङ्गसंसर्गसंभवाच्चेति २ पु॰ पा॰ ।

(२) स्फुटयतीति २ पु॰ पा॰ ।

नास्ति, अनुभूयमानस्तु तद्भागः प्रक्षिप्त इत्याह। एतदेवेति। अर्थेष्विति। चरकसुश्रुतादिपरंपरागतत्वाच्च शान्तिकादिभागस्तत्र प्रक्षिप्त इत्यर्थः। अन्यथाकरण इति। अस्य—आयुर्वेदभागस्य। अन्यथाकरणे—प्रक्षेपशङ्काकरण इत्यर्थः। बहुभ्य इति बहूना-मित्यर्थः। भवदागमेऽपि सर्वत्र प्रक्षेपशङ्का स्यादित्यर्थः। महाजनपरिगृहीतत्वे हेतौ सिद्धे तत्साध्यमाह। सर्वज्ञपूर्वकत्वे-नेति। वेदाः सर्वज्ञपूर्वकाः एतादृशमहाजनपरिग्रहविषयत्वात् यन्नैवं तन्नैवमिति व्यतिरेकीत्यर्थः।

---

रघु० टी०। संसारेत्यादि। तथा च तेनैवानैकान्तिकत्व-मिति भावः। तथाऽनभ्युपगमात् तदर्थावधारणादेरनिष्टत्वात्। तादृशेच्छायां प्रमाणाभावमाह। अव्युत्पादनादिति। व्युत्पादनं पदानामर्थावधारणोपायप्रदर्शनम्। व्याकरणव्युत्पादितानामपि पदानां सुगताद्यागमे सत्त्वादसिद्धेराह। असाधारणेति। तन्मात्रावस्थितपदव्युत्पादनं तस्योद्देश्यतायां लिङ्गं न च वेदवत्तत्र तदस्तीत्यर्थः। असाधारणपदविरहेण तदव्युत्पादनेऽपि साधारण-पदव्युत्पादनेन तथात्वसम्भवात् सन्दिग्धानैकान्तिकत्वमत आह। विरुद्धेति। लिङ्गाभावं व्युत्पादयति। न हीति। विरोधिलिङ्ग-सद्भावं व्युत्पादयति। नैरित्यादिना। तृतीयं तद्विशदयति। सर्वेत्यादि। अन्यथेति भट्टकारिका।

अन्यथाकरणे चाऽस्य बहुभ्यः स्यान्निवारणम्।

एकस्य प्रतिभानन्तु क्षतकाम्न विशिष्यत इति।

अस्य वेदस्य बहुभ्यः सम्प्रदायप्रवर्तकेभ्योऽध्यापकेभ्यः, न विशिष्यते

न व्यावर्त्यते। यदि कश्चिद्भ्रमादिना वेदमन्यथाकारमधीयीत तदा तमन्येऽध्यापका निवारयेयुर्नैवमधीयीथा नेदृशो वेदः परन्त्वेवमाकार इति, अतो न सकलाध्यापकसम्प्रदायसम्प्रतिपन्नवेदे कल्पितत्वशङ्कावकाशः, एकमात्रपुरुषपूर्वकं तु कल्पितत्वशङ्कास्पदमिति तादृशसम्प्रदायाविच्छेदेऽपि प्रक्षेपाऽऽशङ्कायां क्वचिदपि प्रसिद्धप्रणेतृप्रणीतत्वनिर्णयो न स्यात् तस्याः सर्वत्र भागे सुलभत्वात्। बहुभ्य इति बहूनामिति पर्यवसितोऽर्थ इति वदन्ति। तदेतन्महाजनपरिग्रहचिन्तयमन्यथाऽनुपपद्यमानं वेदानां सर्वज्ञपूर्वकत्वं साधयतीत्याह। सोऽयमिति। असर्वज्ञपूर्वकत्वे सर्वज्ञापूर्वकत्वे।

---

यथा हि पूर्वविरुद्धापूर्वव्याकरणादिवैद्यकादिषु विगानादपरिग्रहः, तथा तथाविधे धर्मशास्त्रेऽपि। व्यामोहाद्भवन्नपि कस्यचिदेव न तु सर्वेषाम्। अथ पूर्वाविरुद्धं चेत्तथापि पूर्वस्य पूर्ववदपरिग्रहे केनचित परिग्रहे वा कथं तन्मूलस्यान्यस्य सर्वैः परिग्रहः। न च नासीदेवं पूर्वं धर्मशास्त्रं मानान्तरस्यात्र वस्तुनि कुण्ठतयाऽनुष्ठानाभावप्रसङ्गात्। तथा च धर्माभावे तत्कार्यस्य सुखस्याप्यभावे रागानुत्पत्तौ लोकसमीहोच्छेदे लोकोच्छेदप्रसङ्गः।

शङ्क० टी०। अत्र तर्कमाह। यथा हीति। विवादाध्यासितं धर्मशास्त्रं यदि सर्वज्ञपूर्वकं न भवेत् उक्तमहाजनपरिग्रहविषयो न स्यात्, आधुनिकव्याकरणवैद्यकादिवदित्यर्थः। व्यामोह-

पूर्वकत्वं परिग्रहस्य निवर्तयितुमाह। न चेति। व्यामोहादिति। सर्वतादृशपुरुषपरिग्रहो न व्यामोहपूर्वको भवितुमर्हतीत्यर्थः। इदानीन्तनं धर्मशास्त्रं पूर्वधर्मशास्त्राविरुद्धमेव यदि तदपि धर्मशास्त्रं स्वमूलभूतपूर्वाविरुद्धमेवेति तत्पूर्वमपीति स्वीकर्तव्यमेव, यदि तादृशं न स्यात् तदा महाजनपरिग्रहविषयो न स्यादिति तर्कस्य तत्र तत्र प्रवृत्तिरित्याह। अथेति। ननु येन धर्मशास्त्रेणेदानीन्तनधर्मशास्त्राविरोधस्तन्नासीदेवेत्यताह। न चेति। अत्र वस्तुनीति। यागदानादीनामिष्टसाधनत्व इत्यर्थः। तथा च यागादौ प्रवृत्तिमन्तरेण धर्मो न भवेत्, तदभावे तदसाधारणकारणकं सुखं न स्यात्, सुखाभावे तदनुभवाधीनः सुखान्तरे रागो न भवेत्, तदभावे तदधीना प्रवृत्तिर्न स्यादिति निरीहं जगज्जायेत, तथा च पुत्राद्युत्पत्तिरपि न स्यादिति लोकोच्छेद इत्यर्थः।

---

रघु० टी०। [१]वक्ष्यमाणतीर्थिकोपेतप्रकारत्रयमन्तरेणापि प्रकारान्तरेण [२]तदुपपत्तिं तावदादौ निराकुरुते। यथाहीत्यादिना प्रसङ्ग इत्यन्तेन। पूर्ववदिति पूर्वागमविरुद्धार्थत्वात्। नासीदेव तत्पूर्वमागमान्तरमतो न तद्विरोधसम्भावनापीत्याशङ्कां निराकुरुते। न चेत्यादिना। अत्र वस्तुनि यागादेरिष्टसाधनत्वे। विशिष्टशिष्टाचाररूपानुमानपूर्वकत्वन्तु [३]विजातीयागमपरंपरापूर्वकत्वेन समं समानयोगक्षेमम्।

---

(१) आस्तिकाङ्गीकृतेत्यर्थः।

(२) महाजनपरिग्रहीतत्वोपपत्तिमित्यर्थः।

(३) विजातीययागपरम्परेति २। ३ पु० पा०।

तस्मान्महाजनपरिगृहीतपूर्वपूर्वागमपूर्वकत्वात्, प्रवाहनित्यत्वाद्वा, प्रलयविच्छेदे सर्गादौ सर्वानुविधेयपुरुषधौरेयपूर्वकत्वाद्वा महाजनपरिग्रहो, न तु पूर्वागमानपेक्षार्वाचीनपुरुषपशुपूर्वकत्वात्। पूर्वागमप्रामाण्याप्रामाण्ययोरुभयथापि तस्य विप्रलम्भकत्वात्। प्रामाण्ये हि तद्विरुद्धाभिधानं विप्रलम्भ एव। अप्रामाण्येऽप्युपायमविदुषोऽननुष्ठाने तदा(भाव)भासानुष्ठाने वाऽसर्वज्ञस्योपदेशो विप्रलम्भ एवेति।

शङ्क० टौ०। तत्तत्तौर्थिकमतानुसारेण विकल्प्योपसंहरति। तस्मादिति। संसारमोचकाद्यागममभिप्रेत्याह। न त्विति। तस्येति। अर्वाचीनपुरुषस्य तत्प्रणीतागमस्य वेत्यर्थः। प्रामाण्ये हौति। यदि पूर्वागमं वेदं प्रमाणं मनुषे तदा तद्विरुद्धार्थनरःशिरःपात्रित्याद्यभिधायकाभिधानं विप्रलम्भ एवेत्यर्थः। पूर्वागमं चेत् प्रमाणं न मनुषे तदा तदुक्तयागाद्यनुष्ठानविमुखीकरणान्नूनमर्वाचीनेन विप्रलब्धोसि तदाभासो मण्डलीकरणादिस्तदनुष्ठानोपदेशो वा तदुपदेशको वा विप्रलम्भक एवेत्यर्थः।

---

रघु० टौ०। प्रलयविच्छेदे। प्रलयेनागमप्रवाहविच्छेदे। उक्तप्रकारत्रयविरहिणि पाषण्डागमे महाजनपरिग्रहासम्भवं व्युत्पादयति। न त्विति। प्रामाण्यं प्रामाण्यस्य निश्चयः अभ्युपगमो वा। अप्रामाण्यं प्रामाण्यनिश्चयविरहः, अप्रामाण्याभ्युपगमो वा। तस्यार्वाचीनपुरुषस्य। विप्रलम्भकत्वात् विप्रलम्भककल्पत्वाद्वा। तद्विरु-

ह्वाभिधानं तेन विहितस्य निषेधो निषिद्धस्य च विधानम्। उपायमविदुषो यागादेरिष्टोपायत्वमविदुषः। उपायाभासानुष्ठाने स्वयं परिकल्पितस्योपायाभासस्य लोकपरिग्रहार्थमनुष्ठाने प्रमाणान्तरामूलकोऽसर्वज्ञस्योपदेशः विप्रलम्भ एव विप्रलम्भकल्प एव अर्थनिर्णयापूर्वकत्वात्। न च [१]विप्रलम्भस्तत्कल्पो वा भवति भाजनं महाजनपरिग्रहस्येत्यर्थः।

---

तत्र न प्रथमः। वेदपरम्परानुपलम्भात्, अर्वाचीनानां पाठपारतन्त्र्यमात्रेण प्रवाहोपपत्तौ तत्कल्पनायां प्रमाणाभावात्। नापि द्वितीय; वेदह्रासदर्शनात्। यत इदानीमश्रूयमाणस्यापि वेदस्यार्थोऽनुष्ठीयते निबध्यते च मन्वादिभिः, पुरुषाणामपचीयमानशक्तिकत्वाच्च। यथा ह्यश्वमेधराजसूयाद्यनुष्ठानशक्तेरपचयस्तथाध्ययनशक्तेरपि। न च पूर्वमपि नानुष्ठिता एव राजसूयादयः, तदर्थस्य वेदराशेर्वैयर्थ्यप्रसङ्गात्। न च नित्यानुमेयवेदसम्भवः। वर्णानां नित्यत्वेऽप्यानुपूर्व्याः पाठाश्रयत्वात्। न चानुपूर्वीशून्यवर्णाः पदं नाम, न चाऽऽकाङ्क्षाद्युपेतपदकदम्बादन्यद्वाक्यं नामेति गुरुरपि लघुरेव। तस्मात् पुरुषाणामनुष्ठानशक्तिवत् अध्ययनशक्तिरपि युगक्रमेणापचीयते ततो वेदानां शाखोच्छेदः तदर्था-

(१) विप्रलम्भक इति ३ पु० पा०।

नामनुष्ठानोच्छेदः, वर्णाश्रमाचारव्यवस्थाविप्लवश्चेति। अत एव भगवतो व्यासस्य पुरुषशक्त्यपचयमवेक्ष्य वचनानि "अल्पायुषोऽल्पसत्त्वा" इत्यादीनि। वेदोच्छेदमवेक्ष्य "प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते" इत्यादीनि। अनुष्ठानोत्सादमवेक्ष्य "दानमेकं कलौ युगे" इत्यादीनि। आचारविप्लवमवेक्ष्य "प्रजास्तत्र भविष्यन्ति शिश्नोदरपरायणा" इत्यादीनि। तथा च श्रूयमाणा अपि वेदा उच्छेदमुपयास्यन्ति वेदत्वाद्वाक्यत्वाद्वा उच्छिन्नशाखावदिति न्यायात्। यथा चैतत्तथा पर्वता अपि चूर्णीभविष्यन्ति पार्थिवत्वात् घटवत्। समुद्रा अपि शोषमेष्यन्ति जलाशयत्वात् स्थलीपल्वलवत्। सूर्योऽपि निर्वास्यति तैजसत्वात् प्रदीपवत्। ब्रह्मापि प्रेष्यति शरीरित्वात् अस्मदादिवदित्यागमाविरोधेनानुमीयताम्।

शङ्क० टी०। इदानीं स्वमतमात्रस्य प्रामाणिकत्वं सिषाधयिषुर्विकल्पितानि तीर्थिकमतानि दूषयति। तन्नेति। पूर्वपूर्वागमपरिगृहीतत्वमिदानीन्तनागमस्येति तावन्न संभवतीत्यर्थः। कुत इत्यत आह। वेदेति। ननु गुरुशिष्यपरम्परया वेदपरम्परापि अनुभूयत एवेति कथमनुपलम्भ(१)एव इत्यत आह। अर्वाचीनानामिति। तत्कल्पनायामिति। मूलभूतवेदकल्पनायामित्यर्थः। नापीति। द्वितीय इति। प्रवाहनित्यतापक्षोऽपि न संभवतीत्यर्थः।

(१) एवेति २ पु० नास्ति।

ह्रासदर्शनादिति। अध्ययनविच्छेदेन तद्भागविलोपदर्शनात् समस्त-वेदस्यापि विलोपस्य साधनीयत्वादित्यर्थः। ननु यावानेव वेदभाग इदानीमध्ययनविषयः, पूर्वमपि तावानेवाऽऽसीदिति कुतो ह्रास इत्यत आह। यत इति। होलकाकर्तव्यताबोधकवेदभागस्याश्रवणेऽपि तदर्थानुष्ठानस्य सार्वजनीनत्वात्, अष्टकाः कार्या इत्यादि वेदाश्रवणेऽपि मन्वादिभिः स्मृतत्वाच्चेत्यर्थः। ननु ह्रासोऽस्तु, स कथमित्यत आह। पुरुषाणामिति। अनुष्ठानाऽशक्तिवदध्ययनाऽशक्तिरप्युन्नीयत इत्याह। यथेति। तदर्थेति। इदानीं पाठ्यमानस्यापि वेदराशेरश्वमेधराजसूयार्थकत्वोपलम्भेन तद्वैयर्थ्यप्रसङ्गादित्यर्थः। ननु होलकादिकर्तव्यताबोधको वेदः कदापि न पाठगोचरः, किन्तु अनुमितादेव तस्मात् स्मृत्याचाराविति गुरुमतमाशङ्क्य, आह। न चेति। अभ्युपेत्याह। वर्णानामिति। आनुपूर्व्या इति। घकारोच्चारणानन्तरोच्चारणघटिताया उत्पत्तावभिव्यक्तौ च तुल्यत्वादा(च्चा)नुपूर्व्याः पाठाश्रयत्वादित्यर्थः। ननु स्मृत्याचारानुमितस्य वेदस्यार्थप्रतिपादकत्वे विलक्षणैव सामग्री सा च न वर्णानुपूर्वी, न चाकाङ्क्षाद्युपेतपदकदम्बं वाऽपेक्षते तवेश्वरवत् पक्षधर्मताबलेन तदर्थज्ञापकत्वेन ज्ञातादेव फलसिद्धेरिति चेत्। न। उच्छिन्नवेदादर्थं प्रतीत्य स्मृत्याचारयोः संभवे विलक्षणसामग्रीकल्पनायां गौरवप्रसङ्गादिति भावः। गुरुरपीति। एवं वदन्निति शेषः। सुगममन्यत्। शाखाह्राससिद्धौ किं सिध्यतीत्याह। तथा चेति। पार्थिवत्वादिति। पृथिवीसमवेतद्रव्यत्वादित्यर्थः। जलाश्रयत्वादिति। जलसमवेतद्रव्यत्वादित्यर्थः। तैजसत्वादिति। तेजःसमवेतद्रव्यत्वादित्यर्थः। प्रेष्यतीति। ज्ञानजनकमनःसंयोगनाशकज्ञानजनकमनःसंयोगाना-

श्यात्ममनोविभागवान् भविष्यतीत्यर्थः । द्रव्यत्वं कार्यद्रव्यानधिकरणाधिकरणध्वंसप्रतियोगिवृत्ति कार्यद्रव्यत्वात् शब्दत्ववत् सुखत्वादिवत् अन्त्यावयविकर्मत्वादिवदित्यवान्तरप्रलये, कर्मानधिकरणाधिकरणध्वंसप्रतियोगिवृत्ति, गन्धानधिकरणाधिकरणध्वंसप्रतियोगिवृत्तीति वा साध्यं प्रक्षिप्य तावेव हेतुदृष्टान्तौ महाप्रलये मानमागमसंवलितं द्रष्टव्यम् ।

---

रघु० टी० । विजातीयवेदपरम्परायां न प्रत्यक्षं मानं, तस्यानुपलम्भात् । नाप्यनुमानं साम्प्रतिकवेदप्रवाहवत् सजातीयप्रवाहपूर्वकत्वेनैवोपपत्तौ विजातीयप्रवाहपरम्पराणां तत्प्रणेतॄणां च कल्पनानवकाशादित्याह । वेदेत्यादिना । एकदेशोच्छेददर्शनेन सकलवेदोच्छेदानुमानान्न प्रवाहनित्यत्वनिबन्धनो महाजनपरिग्रह इति व्युत्पादयति । वेदेत्यादिना न्यायादित्यन्तेन । ह्रासः एकदेशाध्ययनसम्प्रदायविच्छेदः । ह्रासे मानमाह । यत इति । ह्रासासम्भवं निरस्यति । पुरुषाणामिति । तथा चैकस्य सकलशाखाध्ययनसामर्थ्यविरहादेकैनैवान्यैरप्यनध्ययनं नासम्भवीत्यर्थः । पूर्वपूर्वस्मृत्याचारानुमितवेदादर्थं प्रतीत्य उत्तरोत्तरस्मृत्याचारयोः सम्भवे शाखोच्छेदे न मानमित्यत आह । न चेति । नित्यत्वेऽपीत्यभ्युपगमवादः । ज्ञानघटिताया आनुपूर्व्याः पाठाधीनत्वात् पाठाश्रयत्वमुक्तम् । न चेति । घटवत् घटस्यार्थप्रत्यायकत्वाभ्यदीदीनत्यादौ अर्थभेदप्रत्ययाच्चेति भावः । स्यादेतत् प्रतिपक्षिशाख्यादिनेव कस्मिंना व्यवधानेऽपि मन्वादौ प्राचीनैरेव चिरञ्जीविमहर्षिसम्प्रदायाध्यात्मिकशक्तिसम्पन्नानामन्तेवासिनामध्यापनाद्योच्छेद इत्यतः प्रलयं साधयति ।

यथा चेत्यादिना। चूर्णीभविष्यन्तीत्यादेर्नङ्क्ष्यन्तीत्यर्थः। भविष्यत्व-मविवक्षितमन्यथा व्यभिचारात्। न च क्रमेणैकैकद्रव्यनाशेऽपि न प्रलयसिद्धिरिति वाच्यम्। गगनादिवृत्तिध्वंसाप्रतियोगीनि कार्य-द्रव्याणि कार्यद्रव्यानधिकरणवृत्तिध्वंसप्रतियोगीनि कार्यभावत्वात् ध्वंसप्रतियोगित्वाद्वा सुखादिवदिति विवक्षितत्वात्। न च विभु-वृत्तित्वमुपाधिः, मनःस्पन्दादौ साध्याऽव्यापकत्वात्।

---

स्यादेतत्, भविष्यन्नुच्छेदोऽनुमितः। स तु भूतोऽपीति कुत इति चेत्? यत एव उच्छेदानन्तरं पुनः सर्गेण भाव्यम्। अन्यथा संसारिणां कृतहान-प्रसङ्गात्। न हि विश्वनिर्माणमन्तरेण भोगज्ञानयोः संभवः। न च तेन विना कर्मप्रवाहसंरोधः, ततो यथा भविष्यन् विश्वसर्ग उच्छेदपूर्वकस्तथायमपीति। समयनियमस्तु प्राणिनां कर्मवैषम्येऽपि वर्षादिनियम-वदुदयास्तनियमवद्वा द्रष्टव्यः। कर्मणामेवैवं स्वभाव-त्वात्। एतदर्थमेव हि पुराणेषु सृष्टिप्रलययो-र्दिवसरात्रिव्यवहारः। तथापि सर्वप्राणिनाशयौग-पद्ये किं प्रमाणमिति चेत्? द्विःसप्तभौमभुवनप्रसाद-भङ्गेऽपि निर्भया एव [1]ग्रामकुटीहट्टविहारिणः शरीरिण इति महती प्रेक्षा। तस्मात् सर्गादि-महाजनमन्वादिपरिग्रहपूर्वकोयमद्ययावदनुवर्तत इति नानवसरदोषावकाशोऽपीति युक्तमुत्पश्यामः।

(१) ग्रामटीहट्टकुटीविहारिण इति २ पु० पा०।

शङ्क० टी०। भविष्यमुच्छेद इति। चूर्णीभविष्यन्तीत्यादि [1]साध्यवत्त्वादित्यर्थः। अन्यथेति। वर्तमाने सर्गे यत्कर्म संसारिभिः कृतं तस्यागिमसर्गं विना विफलत्वं स्यात्। तथा चायमपि सर्गः प्रलयपूर्वकः सर्गत्वाद्भाविसर्गवदिति, सोऽपि सोऽपीत्यनादिरेवायं सर्गप्रलयप्रवाह इत्यर्थः। भोगज्ञानयोरिति। भोगः—समानाधिकरणसमानकालीनसाक्षात्कारविषयताव्याप्यजातिमत्साक्षात्कारः। ज्ञानं च मोक्षानुकूलं तत्त्वज्ञानम्। ननु मा भूद्भोगज्ञानयोः संभवः किमतोऽत आह। न चेति। तेनेति|न| उभयसंभवेनेत्यर्थः। न चैवं ब्रह्मागतवर्षादिनियमः कथमत आह। समयेति। तर्हि कर्मवैषम्यं विषमविपाकसमयत्वं कथं समाधेयमत आह। कर्मणामिति। विषमविपाकसमयान्यप्येकदा निरुद्धवृत्तीनि संभवन्त्येव सुषुप्त्यवस्थावदित्यर्थः। एतदर्थमेवेति। युगपद्वृत्तिनिरोधख्यापनार्थमेव दिनरात्रिभ्यां सर्गप्रलयौ पुराणादिषु निरूप्येते इत्यर्थः। ननु कतिपयप्राणिकर्मणामेवयुगपद्वृत्तिरोधारोधौ स्यातां न तु सर्वेषामिति शङ्कते। तथापीति। द्विःसप्तेति। चतुर्दशभौमभुवनरूपस्य प्रासादस्य कालक्रमाच्च भङ्गस्तत्रास्मदादीनां कतिपयानामवस्थानमसंभावितमित्यर्थः। लघुग्रामो ग्रामटीः। ननु सर्गादौ महाजना एव न सन्ति तथा च तदवसरे महाजनपरिग्रहः पराहत एवेत्याशङ्क्य निरस्यन्नेवोपसंहरति। तस्मादिति। ईश्वरेण वेदरचनावसर एव मन्वादयो मानसा महाजनाः सृष्टास्तैः परिग्रहः सर्गादावप्यस्त्येवेति नानवसरदोष इत्यर्थः।

---

(१) साध्यबलादिति २ पु० पा०।

रघु० टी० । विद्यमानघटादीनां विना आगामिनं प्रलयं साध्यासम्भवात्तस्यावश्यकत्वेऽतीते तत्र प्रमाणाभावः। तथा चानादित्वादेव प्रवाहस्य महाजनपरिग्रहो भविष्यतीत्याशयेन शङ्कते। स्यादेतदिति। कृतहानेति। अथ सकलादृष्टनाशान्महाप्रलयोत्पत्तौ कुतः कृतहानप्रसङ्गः, न चादृष्टाधिकरणत्वेन साध्ये कार्यद्रव्यानधिकरणं विशेषणीयं, तथा सति विभुवृत्तित्वादेरुपाधित्वात्। नैवम्। प्रागभावाधिकरणत्वेन तस्य विशेषणात्। इदानीन्तनत्वेन पक्षस्य हेतोश्च विशेषणात् न महाप्रलयाऽव्यवहितपूर्वसर्गीयकार्ये अंशतो बाधो व्यभिचारो वेति। यद्यपीदानीन्तनानि कार्याणि प्रलयपूर्वकाणि कार्यत्वात् प्रलयोत्तरकार्यवदित्येतावतैव कृतार्थता। तथापि विनाऽदृष्टं कार्योत्पादासम्भवाददृष्टसत्त्वप्रतिपादनम्। भोगः सुखदुःखसाक्षात्कारः। ज्ञानं तत्त्वज्ञानम्। अयमपीति। एवमेतत्पूर्वः तत्पूर्वोपीत्यनादिरेव सर्गप्रलयप्रवाहः। ननु प्राणिकर्मणां विषमविपाकसमयत्वात् कस्यचित् प्राणिनः कर्मभ्यो द्विवत्सरान्तरितावपि सर्गप्रलयौ स्यातां, कदाचिच्च प्राण्यन्तरकर्मभ्यो न्यूनाधिकसमयान्तरितावपीत्यत आह। समयेति। समयनियमः सर्गप्रलययोरागमसिद्धो ब्रह्मवर्षशतनियमः। कर्मणामिति। यथा वर्षादिजनककर्मणां तावत्तावत्कालान्तरितानामेव वर्षादीनां जनकत्वं न त्वपि दण्डप्रहरमात्रान्तरितानां वत्सराद्यन्तरितानां वा, तथा सर्गप्रलयजनकानामपि कर्मणां ब्रह्मवर्षशतान्तरितयोः सर्गप्रलययोर्जनकत्वमिति। एतदर्थमेवेति यथा दिवसरात्र्योः प्रतिनियततत्तत्कालान्तरितत्वं, तथा सर्गप्रलययोरपि प्रतिनियततत्तत्कालान्तरितत्वख्यापनार्थमेव।

केचित्तु प्राणिनां कर्मणामनन्तत्वात्कथं युगपद्वृत्तिनिरोध इत्यत आह। कर्मणामिति। एवंस्वभावत्वात्—अनन्तत्वेऽपि सुषुप्तिवत् कदाचिन्निरुद्धवृत्तिकस्वभावत्वात्। एतदर्थं कर्मणां वृत्तिलाभयुगपद्वृत्तिनिरोधख्यापनार्थमित्याहुः।

यद्यप्युपदर्शितानुमानमप्रयोजकं, गगनादिवृत्तिध्वंसप्रतियोग्यवृत्तिद्रव्यत्वं कार्यद्रव्यानधिकरणप्रागभावाधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति इदानीन्तनकार्यसमवेतत्वात्, अनादितावच्छेदकत्वाद्वा। गगनादिवृत्तिप्रागभावाप्रतियोग्ययं घटः कार्यद्रव्यानधिकरणवृत्तिप्रागभावप्रतियोगी कार्यत्वात् सुखादिवदित्यादिकमपि तथा। तथापि सर्गप्रलयबोधकागमानुरुद्धत्वान्न दोषः। ननु सर्गादावीश्वरेण प्रणीतानां वेदानां तदानीं महाजनविरहेण (१)क्व परिग्रहावसर इत्याशङ्कां निरस्यन्नुपसंहरति। तस्मादिति।

---

तदैवं कथं मन्वादिभिः परिगृह्यन्तां वेदा इति चेत्? आयुर्वेदवदाप्तोक्तत्वनिश्चयात्। स एव कुत इति चेत्? अध्यक्षतः, तेषामप्यतीन्द्रियार्थदर्शित्वात्। तादृशां तेषां तत्परिग्रहेण किं प्रयोजनमिति चेत्? अस्मद्व्यवहारेणास्मदपत्यादि व्युत्पद्यताम्, तथा च धर्मसंप्रदायः प्रवर्ततामिति भूतदया, स्वाधिकारसम्पादनं च।

अथवा सर्गान्तरगृहीतव्याप्तिप्रादुर्भावे सुप्तप्रति-

(१) कुत इति १ पु० पा०।

बुद्धवत् पितृत्वेनाविप्रलम्भकत्वमुच्चावचभूतनिर्माणदर्शनेन सार्वज्ञ्यमनुमायाऽऽप्तत्वनिश्चयस्तस्य तेषाम् ।

यद्वा भगवानेव संप्रदायप्रवर्तनव्यसनव्यग्रः कायसहस्राणि व्युत्पाद्यव्युत्पादकभावव्यवस्थितानि निर्माय तदातनं महाजनं परिग्राहितवान्, नटनोपाध्याय इव स्वयं नटित्वेति सर्वं सुस्थम् । पक्षत्रयेऽप्यत्र पुराणादिसंकथाप्यस्तीति ।

शङ्क० टी० । ननु सन्तु तदानीं महाजनास्तैस्तस्य परिग्रहः कथमित्यत आह । तदैवमिति । स एवेति । आप्तोक्तत्वनिश्चय एवेत्यर्थः । अध्यक्षत इति । वेदप्रयोक्तुर्यथार्थवाक्यार्थज्ञानवत्त्वमाप्तत्वं मन्वादिभिः प्रत्यक्षेणैव गृह्यत इत्यर्थः । ननु परकीयं ज्ञानं कथं तेषां प्रत्यक्षमत आह । तेषामिति । ननु तेऽपि चेत् सर्वज्ञा एव तदा स्वयमेव धर्माधर्मौ साक्षात्कृत्य व्यवहरन्तु किमिति वेदं परिगृह्णन्तीत्याशङ्कते । तादृशामिति । अस्माभिर्वेदार्थोऽनुष्ठीयते तथा चास्मदपत्यान्यपि अनुतिष्ठन्तीति तद्दृष्टान्तेनान्येऽपीति भूतदया, तत्परिग्रहहेतुरिति शेषः । स्वाधिकारेति । ईश्वरेणैव वेदं प्रणीय तत्परिग्रहे मन्वादयोऽधिकारिणः कृता इत्यर्थः ।

ननु मन्वादीनां सार्वज्ञ्ये प्रमाणं नास्तीत्यनुशयेनाह । अथवेति । ईश्वरो न विप्रलम्भकः पितृत्वात् यो यस्य पिता स तं न विप्रलभत इति प्राग्भवीयसंस्काराधीनव्याप्तिस्मृतिबलात्तदाप्तत्वानुमानं तेषामित्यर्थः । ननु नाविप्रलम्भकत्वमात्रमाप्तत्वं किं तु यथार्थज्ञानवत्त्वमपीत्यत आह । उच्चावचेति । उच्चावचमनेकविधं क्षित्यादि, तत्कर्तृत्वानुमानान्तर्गतैव सार्वज्ञ्यसिद्धिरित्युक्तमेवेत्यर्थः ।

ननु वर्णशतान्ते संस्कारोद्बोध इत्यप्यसंभावितमित्यनुशयेनाह । यद्वेति । अत्र संवादमाह । पञ्चषेऽपीति ।

रघु० टी० । प्रामाण्यानिश्चये न परिग्रहसम्भव इत्याशङ्कते । तद्वेवेति । आप्तत्वानिश्चयेनाप्तोक्तत्वनिश्चयासम्भव इत्याशङ्कते । स एवेति । तादृशां अतीन्द्रियार्थदर्शिनां यागहिंसादेः स्वयमेव हिताहितसाधनत्वनिर्णयादिति भावः । व्यवहारेण वेदाध्ययनादिना । व्युत्पत्तिर्वेदाध्ययनादिः । दर्यति । दयालूनां परहितसम्पादनमेव प्रयोजनम् । अधिकारः त्वमेवं कुर्विति ईश्वरनियोगः । पुराणादिभिः सङ्कथा सङ्कथनमभिधानं, संवाद इत्यपि कश्चित् ।

स्यादेतत् परमेश्वरप्रवर्तितोऽयमेव वेदसंप्रदायः सर्गान्तरवेदापेक्ष एवेति सेश्वरमीमांसापक्षः कपिलपक्षो वा स्यादिति चेत् ! किमर्थं पुनरियमपेक्षा ! पूर्ववेदे जगन्नाथस्य न तावद्वेदार्थोपलम्भाय । नित्यसर्वज्ञत्वात् । नापि रचनार्थं । स्वभावतः सर्वकर्तृकतया आदर्शानपेक्षणात् । नापि विरोधपरीहारार्थम् । प्रतिपाद्यानां तदनुसन्धानविधुरत्वात् । अवैधुर्ये वा कर्तुः सार्वज्ञ्यविज्ञानादेव समस्तविरोधविधूननात् । तथापि पूर्वसर्गान्तरवेदव्यवहारोऽपि परमेश्वरस्य गोचर इति चेत् ! कः सन्देहः यदि चैतदेव वेदस्य प्रवाहनित्यत्वं, न केवलमेतस्य किं तु घटादेरपीति

न्याय एव दर्शनम्। अन्यथा मीमांसेति क्व सेश्वर-मीमांसेति। तस्मादुक्तरूपः परिग्रहो नान्यथा संभव-तीति प्रतिबन्धसिद्धिः। तथा चाप्तोक्तत्वात् प्रामाण्य-सिद्धिः।

शङ्क० टी०। सेश्वरेति। ईश्वरस्य वेदकर्तृत्वाभ्युपगमा-त्सेश्वरत्वं पूर्वपूर्ववेदापेक्षत्वलक्षणमीमांसात्वमिति सेश्वरमीमांसापक्षः कपिलस्येव धर्मविज्ञानैश्वर्यसंपन्नस्य सुप्तप्रबुद्धवत् सर्गान्तरगृहीतवेद-स्मृतिमतस्तत्प्रत्यभिज्ञानवतो वा वेदप्रद्योतकत्वमिति कपिलपक्षः प्रतिपाद्यानामिति। मन्वादीनां पूर्वं वेदानुसन्धानं यदि स्यात्तद-तद्विरोधपरिहारार्थं तत्प्रतिपादितार्थप्रतिपादकत्वबोधनाद्विरोधभङ्ग भवेत् नत्वेवमित्यर्थः। ननु मन्वादयोऽपि सर्वज्ञा एव कथं पूर्वसर्गवे-न प्रतिसन्धास्यन्तीत्यत आह। अवैधुर्ये वेति। यदि ते सर्वज्ञा-स्तदा वेदप्रणेतुरेव सार्वज्ञ्यं ज्ञात्वा तत्प्रणीतत्वेनैवाविरोधज्ञाना-दित्यर्थः। नन्वीश्वरस्य पूर्वसर्गवेदज्ञानवत्त्वाभ्युपगमपक्ष एव सेश्वर-मीमांसापक्ष इत्यत आह। तथापीति। एतदेवेति। ईश्वरज्ञान-विषयत्वमित्यर्थः। ईश्वरस्य पूर्वसर्गघटादिरपि ज्ञानविषय इ-घटप्रवाहोऽपि नित्यः स्यात्तथा चेदं न्यायदर्शनमेव। स एव वेदप्रवा-हदामीमप्यस्तीति मीमांसापक्ष एव स च दूषित इति सेश्वर-मीमांसापक्षो नातिरिक्त इत्यर्थः। प्रतिबन्धेति। वेदा व्यासो-महाजनपरिगृहीतत्वादिति प्रतिबन्धसिद्धिरित्यर्थः। किमतो यथे-मत आह। तथा चेति।

कथं पुनः सुगताद्यागमेषु नाऽऽदरश्छान्दसानां, वेदविद्वेषिदर्शनान्तःपातिपुरुषप्रणीतत्वादिति मा शङ्किष्ठाः। जिनेन्द्रजगदिन्द्रप्रभृतिप्रणीतेष्वप्यादरात्। तत्कस्य हेतोः महाजनपरिगृहीतपूर्वागमाविरुद्धतया तदनुसारित्वात्। कुतस्तर्हि? सिद्धप्रामाण्यवेदविरोधात्। कथं तर्हि कतिपयैरपि तत्परिग्रहः? अलसभीरुभिर्दुःखमयजात्यकर्मविद्वेषात्। उदुंबरगर्तीयतन्तुवायवत्। नत्वेवं वेदे कर्मण्येव निर्भरत्वात्। त्रैवर्णिकबहिष्कृतैरनधिकारिभिरनन्यगतिकत्वात् कीर्तिप्रज्ञाकरवत्। ननु एवं श्रुतौ परैः पूज्यानामप्यत्राप्रवेशात् इतः पतितानामपि परैरुपादानात्। भक्ष्यपेयाद्यद्वैतरुचिभिश्च रागात् मरभादिवत् न त्वेवमाम्नाये तद्विभागव्यवस्थापरत्वात्। कुतर्काभ्यासिभिश्च मोहात् काणाचार्यादिवत् न त्वेवं ब्रह्मणि आबालभावं प्रवृत्तेः। अविवेकिभिश्च पाषण्डसंसर्गात् शौण्डिकादिवत् न त्वेवं प्रकृते पित्रादिक्रमेण प्रवर्तनात्। योगाभ्यासाभिमानिभिश्चाव्यग्रताभिसन्धः सुभूत्यादिवत् न त्वेवं प्रस्तुते प्रथमस्य कर्मकाण्ड एव नियोगात्। अयोग्यैराजी[जी?]वनात् सामान्यश्रमणकवत् न त्वेवं प्रक्रान्ते आगन्तुकानामनधिकारात्। कुहकवञ्चितैः समीचीनप्रत्ययात् दीपङ्करसुपिरदर्शिबालिशवत् न त्वेवं

प्रकृते तदभावात्। किन्तु महाजनपरिग्रहात् वक्तृ-प्रामाण्यमनुमाय आयुर्वेदे नैरुज्यकामवदिति।

शङ्क० टी०। कथं पुनरिति। सर्वज्ञप्रणीतत्वाविशेषादिति भावः। स एवैकग्रन्थेनाह। वेदेति। शङ्काभावे बीजमाह। जिनेन्द्रेति। तत्कस्येति। जिनेन्द्रादीनामेव कथं तदादर इत्यर्थः। जिनेन्द्राणां तदादरे हेतुमाह पूर्वपक्षी। महाजनेति। इयं शङ्का मास्तु तथापि छान्दसानां कुतस्तत्र न समादर इत्याह। कुत इति। सिद्धान्ती तत्र हेतुमाह। सिद्धेति। नरशिरःपावित्रादिविधानाद्विरोध इत्यर्थः। अलसभीरुभिरिति। अलसाश्च भीरवश्चेत्यर्थः। उदुंबरगर्तो देशः। तन्तुवायः कुविन्दः तेनालस्येन वैदिकं कर्म त्यक्त्वा संसारमोचकागमोपदिष्टं कर्म परिगृहीतमित्यर्थः। कर्मण्येवेति। कष्टमयबहुविधकर्मप्रतिपादकत्वादित्यर्थः। अनन्यगतिकत्वात्—वैदिककर्मानुष्ठानरूपगत्यभावात्। पित्रादीति। अप्रच्युताधिकारपरम्पराकत्वादित्यर्थः। सुभूतिर्बौद्धविशेषः। प्रथमत इति गार्हस्थानन्तरं [(१)]योगविध्युपासनस्योपदिष्टत्वात्तत्र च कष्टबहुकर्मोपदेशादित्यर्थः। अयोग्यैरिति, जीविकायामक्षमैः। सामान्यश्रवणको बीजभूतः [?] श्रवणकः स हि बहुधनं दत्वा बौद्धे स्वदर्शने प्रवर्तितः। आगन्तुकानामिति। पाखण्डानामित्यर्थः। कुहकः ऐन्द्रजालिकः। दीपंकरः बहुशुषिरः पुरुषप्रमाणकः तृणकाष्ठखण्डस्तत्र हि एक एव दीपः शुषिरनिस्सरत्प्रभो बहुदीपभ्रमं जनयति। बालिशो मूर्खः। तदभावादिति। मूलभूतस्य बालिशत्वाभावादिति

(१) योगविध्युपन्यासस्येति २ पु० पा०।

भावः। किंत्विति। यथायुर्वेदे नैरुज्यकामः प्रवर्त्तते तथा यागादौ स्वर्गादिकामो न तु विप्रलम्भकत्वादित्यर्थः।

---

रघु० टी०। सत्यपि बहुभिः परिग्रहे सुगतादीनां वेदेष्विव भवतामपि विद्वेषमात्रादेव तदागमेषु नाऽऽदर इत्याशयेनाशङ्कते। कथं पुनरिति। अप्रामाण्यादेव तत्र नादरोऽस्माकमित्यभिप्रायेण प्राह सिद्धान्ती। वेदेत्यादि। तत् तेष्वेवादरणम्। कस्य हेतोः, यदि तादृशपुरुषप्रणीतं निष्प्रमाणं तेषां स्वतोऽप्रामाण्येऽपि प्रमाणमूलकत्वात्तथेत्याह। महाजनेत्यादि। पृच्छति। कुतस्तर्हीति। उत्तरयति। सिद्धेति। अविरुद्धभागस्यापि प्रमाणामूलकत्वेनाप्रमाणत्वात्। उडुम्बरगर्तो देशविशेषस्तदीयस्तन्तुवायः कुविन्दः बौद्धविशेषः। सरभो बौद्धविशेषः। अच्छता अलेपता। तथा च वदन्ति।

अत्यन्तमलिनः कायो देही चात्यन्तनिर्मल इत्यादि॥

सुभूतिर्बौद्धभेदः। सामान्यश्रमणकः सामान्यनामा क्षपणकः स हि बहुधनं दत्वा स्वदर्शने बौद्धैः प्रवर्तितः। दीपङ्करो बहुसुषिरो यन्त्रविशेषः तन्मध्यस्थितो ह्येक एव प्रदीपः परितो निस्सरत्प्रभोऽनेकवत्प्रतिभाति।

---

किं पुनरमीषां मूलं, न ह्येतावन्तो ग्रन्थराशयः परविप्रलम्भनार्थं प्रणीयन्ते, न च विश्वमेव विप्रलभ्यमिति चेत्! भवतु किञ्चिन्मूलं किमनेन चिन्तितेन। अतिनिर्बन्धे तु क्षणिकनैरात्म्यादिप्रतिपादकानां

तर्काभ्यासः। प्रतिपादितं च तथा। शून्यसाकारादि-प्रतिपादकानां तु दुरभ्यासः। योगशास्त्रेष्वभ्यस्यतः स्वरूपशून्यमिव भाव्यमेकमेवेति प्रतिपादनात्। चैत्यचीवरादिप्रतिपादकानां तु स्वस्थितिमभिसन्धाय दर्शनान्तरस्थितिद्वेषः। स्वस्थितौ प्रमाणमनपेक्ष्य पर-स्थितौ विगानात्। ब्रह्मचर्यप्रतिपादकानां तु वेदा एव, न्यायाविरुद्धं परतन्त्रोक्तमप्यानुकूल्यप्रसिद्धेर्गृह्यत इति विमर्षात्। मन्त्रकोषप्रतिपादकानां तु प्रणव-बीजजातयः सर्वसाधारण्यः, अज्ञेयदेवतानामाङ्कस्त्व-धिकः। अज्ञापरिगृहीतश्चाकारो देवतेति हस्तसमा-लोचः। सत्यतपःशालीनां वचनं मन्त्रो विषयवत्यां चिन्तायां चित्तस्थैर्यं प्रयोजनं, कथमन्यथा महर्षीणां शापानुग्रहक्षमता, कथं वा चतुर्भुजाष्टभुजाद्यवस्थेति [1]दुरूहादिति। एकविप्रलम्भनार्थं वा केनचित् कियदेव प्रणीतं तेनानुष्ठितं अपरैस्तदनुयायिभि-र्गृहीतमनुष्ठितं व्याख्यातं विवर्द्धितं चेति किमनुप-पन्नम्। तस्माद्विरुद्धागमव्युदासेन वेदा एवार्वाचीन-पुरुषपूर्वकत्वशङ्काव्युदासेन परमेश्वरप्रणीतत्वादेव भूतार्थभागस्याप्रामाण्यशङ्काव्युदासेन प्रमाणमेवेति नियमः।

(१) दुरूहत्वादितिग्रन्थसम्मतः पाठः।

मङ्क० टी० । अमीषां सुगताद्यागमानाम् । भवत्विति । आगमप्रामाण्यसाधनादेव वयं कृतकृत्या इति भावः । तर्काभ्यास इति । कुतर्काभ्यास इत्यर्थः । स्थैर्यं यदि स्यादर्थक्रियायां क्रमयौगपद्ये न स्याताम्, आत्मा यदि स्यादात्मदर्शी [1]तदात्मनो न मुच्येतेत्यादिकुतर्काभ्यासः । तथेति । एषां कुतर्कत्वमित्यर्थः । दुरभ्यासमेवाह । योगेति । बहिर्व्यावृत्तं मनः प्रणिधानबलात् शून्यमेव जगदिति भावयता केनापि शून्यतैव सिद्धान्तितेत्यर्थः । चैत्येति । चैत्यो बौद्धदेवता । चीवरं परित्याज्यमित्यादिप्रतिपादकानामित्यर्थः । चैत्यवन्दनाच्चीवरपरित्यागाच्च न किञ्चिदन्यदपेयमिति दिगम्बराणां स्वस्थितिः स्वाभ्युपगमस्तत्रैव च प्रमाणपरित्यागकल्पनयाऽन्यत्र विगानमित्यर्थः । परमतमप्रतिषिद्धमनुमतमिति ब्रह्मचर्यप्रतिपादकानां मूलमित्याह । ब्रह्मचर्येति । मन्त्रकोषो मन्त्रसमुदायः यः प्रणवोऽस्माकं तज्जातीय एव, यान्येव तत्तद्देवताबीजाक्षराणि तान्येव च तत्र प्रतिपादितानि तद्ब्रह्मादेवादित्यस्तम्भनप्रतिमाजल्पनादिशक्तिरपि बौद्धानामित्यर्थः । सर्वसाधारण्य इत्यत्र मूलमित्यनुषञ्जनीयम् । तर्हि सूर्यादिदेवतास्वीकारस्तेषां न कथमत आह । श्रद्धेयेति । तत्तद्देवतानामेव चैत्यादिनामान्तरधारणं परं विशेष इत्यर्थः । ननु य एवाकारः श्रद्धया ध्यायते सैव देवता ननु त्वदभ्युपगत इन्द्रादिरित्यत आह । श्रद्धेति । हस्तसमावरणमात्रमेतन्न तु तात्त्विकोऽयमिन्द्र इत्यर्थः । सत्येति । तद्वचनमेव मन्त्रो न तु वेदभागस्त्वदभ्युपगतः । अष्टभुजचतुर्भुजादिरपि त्वदभ्युपगता न देवता, किंत्वेतादृशविषयस्य चेच्चिन्तनं क्रियते तदा मनः स्थिरम्भवतीत्ये-

(१) तत्रानुरक्तो न मुच्येतेत्यादि २ पु० पा० ।

तावन्मात्रार्थं तदभिधानम् अत्रैवोपपाद्यद्वये उपपादकद्वयमाह । कथमन्यथेति । दुरूहत्वादिति । नायं पन्था इति शेषः । यदि तादृशानां वचनमेव मन्त्रस्तदा तद्वचनानामनेकत्वान्मन्त्रत्वेन कस्योहः स्यात् । यदि च चित्तस्थैर्यमात्र एवाष्टभुजाद्युपयोगस्तदा यत्किञ्चिद्विषयवत्यैव चिन्तया चित्तस्थैर्यं भवतीति मूर्तिविशेषो देवतात्वेन दुरूह इत्यर्थः । वेदा एव सर्वज्ञप्रणीता एव प्रमाणमेवेति पूर्वप्रघट्टकसाधितं नियमत्रयं हेतुत्रयोपक्रममुपसंहरति । तस्मादिति ।

---

रघु० टी० । तर्काभ्यासः कुतर्काभ्यासः । तथा-क्षणिकत्वाद्यनुगुणानां कुतर्कत्वं । दुरभ्यासः मनसो बहिर्व्यावृत्तये योगशास्त्रेषु भाष्यत्वेनाभिहितस्य शून्यत्वादेः शास्त्रतात्पर्यापरिचयाद्वास्तवत्वनिश्चयः । चैत्यचीवरादि—चैत्यवन्दनचीवरपरित्यागादि । वेदादिविद्वेषिभिः किमित्र तदक्रमभिहितमत आह । न्यायेति । एकदेशसंवादेन भागान्तरे लोकानामाश्वासार्थमित्यर्थः । सर्वसाधारण्यः—सर्ववैदिकमन्त्रसाधारण्यो मूलं अस्माकं वैदिकेषु मन्त्रेषु प्रणवबीजानि दृष्ट्वा तत्प्रतिरूपकाणि कल्पयित्वा स्वमन्त्रेषु ते प्रक्षिप्तवन्तः । क्वचिच्च वास्तवान्येव बीजानि तद्बलाच्च कुतश्चित्तदीयमन्त्रादादित्यस्तम्भनादिकमिति । श्रद्धामात्रेण कथं चैत्यादेर्देवतात्वं तत्राह । श्रद्धेति । हस्तसमालोचः—कल्पना । तेषां यथायथं तत्तद्बीजाचरादिशालीनि श्रद्धेयदेवतानामाङ्कितानि वाक्यान्येव मन्त्रत्वेन ते परिकल्पितवन्त इत्यर्थः । मन्त्रत्वेन परिकल्पितस्य वाक्यमात्रस्य जपात् कृशायाश्च देवतायाः परिचिन्तनात् कदाचित् फलसिद्धेरसम्भावितत्वात् कथं तादृशकल्पनासम्भव इत्यत आह । सत्येति । महर्षिभिरिवास्माभि-

रपि सत्यादिशालिभिर्यदाक्यं जपादिना फलदायकमभिधीयते तदेवास्मदादीनां तपःप्रभावात्तथाभूतं सत् फलमादधाति तपसा-मसामर्थ्य मन्दवीर्याणामेव कुतः शापानुग्रहचमता परिक्लृप्तायामेव च देवतायां यत्र यस्य श्रद्धा सम्पद्यते तस्मिन्विषये श्रद्धावशान्निरन्तर-मुत्पद्यमानायां चिन्तायां चित्तस्थैर्यं जायते चित्तस्थैर्यातिरिक्तं च न देवतापरिच्छिन्नप्रयोजनं। वास्तवत्वे तु देवतानामेकस्या एव तस्याः क्वचिच्चतुर्भुजत्वाभिधानं, क्वचिदष्टभुजत्वाद्यभिधानं, तीर्थिकानां कथं न विरुध्यते इति। दुरूहात्—दुरूहणादित्यर्थः। एकेत्यादि। सिद्धप्रमाणभावानां वेदानां विरोधादप्रामाण्यप्रौव्येऽनन्यगतिकत्वा-दीदृशीकल्पनेति भावः। उपसंहरति। तस्मादिति। भूतार्थः सिद्धार्थकः। वेदा एवेति नियमेन पाषण्डागमप्रामाण्यस्य, प्रमाण-मेवेत्यनेन च एकदेशाप्रामाण्यस्य निरासः।

---

कथं चरम इति चेत्? महाजनपरिग्रहस्य तत्सा-ध्यस्य वा सर्वज्ञपूर्वकत्वस्य पुरुषदोषाभावस्य वा प्रामा-ण्यहेतोर्भूतभाव्यार्थभागयोः साधारणत्वात्। किं तस्य फलमिति चेत्? स्वार्थप्रतिपादनं, किं तेन प्रयोजनं? यथायथमुपादानं हानं मोक्षश्च। तत्रानर्थहेतूनां तत्त्वज्ञानाद्धानं अर्थहेतूनामुपादानं आत्मनो मोक्ष इति॥

शङ्क० टी०। ननु प्रमाणमेवेत्ययोगव्यवच्छेदपरेणैवकारेण सकलवेदप्रामाण्यमभिधीयते। न चैतद्युक्तम्। अर्थवादानामप्रमा-णत्वादित्याशङ्कते। कथमिति। किं तस्येति। भाव्यार्थस्य प्रवृत्ति-

निवृत्तौ फलम्। न तु भूतार्थस्य तत्फलमित्याह। किमिति। किं तेनेति। निष्प्रयोजनकप्रतिपत्तिजनकस्य रथ्यापुरुषवाक्यवदना-देयत्वादिति भावः। प्रयोजनमाह। यथायथमिति। वायुर्वै क्षेपिष्ठा देवतेत्यादीनामुपादानं फलम्। अन्धं तमः प्रविशन्ति ये के चात्महनो जना इत्यादीनां हानं फलम्। उपनिषद्भागस्य च मोक्षःफलमित्यर्थः।

---

रघु० टी०। आद्यव्युत्पत्तौ व्यवहारात् कार्यान्विते शब्दानां शक्त्यवधारणात् सिद्धार्थानामनुभावकत्वमेव नास्ति दूरे तद्विशेष-प्रमाणत्वमित्याशयेनाशङ्कते। कथमिति। चरमो नियमः। पदार्थ-मात्रशक्त्यैव कार्यताबोधकशब्दसमभिव्याहारादिवशात् कार्यान्वित-बोधजनकत्वोपपत्तौ न विशिष्टशक्तिकल्पनमित्याशयेन शङ्कां निर-स्यति। महाजनेत्यादि। कर्तव्यत्वाद्यबोधकस्य सिद्धार्थस्य न प्रवर्तक-त्वादिसम्भव इत्याशयेन पृच्छति। किमिति। उत्तरयति। स्वार्थेति। सर्वस्य सिद्धार्थस्य साक्षात् स्वार्थप्रतिपादनं फलं तद्द्वारा च यथायथ-मुपादानादि। "सर्वं पाप्मानं तरति", "तरति ब्रह्महत्यां योऽश्वमेधेन यजत" इत्यादेरुपादानं, "अन्धं तमः प्रविशन्ति ये के चात्महनो जना" इत्यादेश्च हानं, आत्मोपनिषदां च मोक्षः। तासां च तात्पर्यनिर्णायनेन न्यायाः साहायकमाश्रयन्ते। तत्त्वज्ञानादिति च सर्वत्र सम्बध्यते। इष्टानिष्टसाधनत्वज्ञानयोः प्रवर्तकत्वनिवर्तकत्वे लोकतः सिद्धे आत्मतत्त्वज्ञानस्य मोक्षहेतुत्वं तमेव विदित्वातिमृत्युमेतीत्यादेः, आत्मा वा अरे मैत्रेयि द्रष्टव्यः श्रोतव्य इत्यादेश्च वेदराशेरिति।

---

कः पुनरयं मोक्षः? आत्यन्तिकी दुःखनिवृत्तिरात्मनः। किमात्यन्तिकत्वं? तज्जातीयात्यन्ताभावविशिष्टत्वं। तेषामभावः कथं? कारणमात्रोच्छेदात्। अपुरुषार्थोऽयमिति चेत्। न। असत्यस्याकाम्यस्याशक्यस्य दुरन्तस्य तथाभावात्। नत्वयं तथा। सत्योऽयं, प्रमाणसिद्धत्वात्। सर्वैरभ्युपगमात्। काम्यश्च, दुःखस्य स्वभावहेयत्वात्। सुखार्थं तद्धानमिति चेत्। न। अतद्धेतुत्वात्। व्याप्तेरिति चेत्। न। असिद्धेः। न हि दुःखाभावः सुखेन व्याप्यत इति। सुखं तावत्तेन व्याप्यत इति चेत्? तर्हि सुखे सत्यवश्यं दुःखाभावो भवेदिति सुखप्रार्थनेति विपरीतापत्तिः। नावेद्यत्वादसौ काम्य इति चेत्। न। दुःखार्त्तानां तदभाववेदनमनभिसन्धायैव तज्जिहासादर्शनात्। कथमन्यथा देहमपि जह्युः। अविवेकिनस्त इति चेत्? किमत्र विवेकेन, इष्यमाणतामात्रानुबन्धित्वात् पुरुषार्थत्वस्य गम्यागम्ययोः[1] कामवत्। बहुतरानर्थप्रसक्तिशङ्कया शास्त्रमनुकूलयन्तस्त इतरेभ्यो भिद्यन्ते। अपि चैवं कण्टकादिजन्यदुःखनिवृत्तिरपि पुरुषार्थो न स्यात्। अवेद्यत्वात्। प्रथमं विद्यते तावदसाविति चेत्? तुल्यं मोक्षेऽपि। नाध्यक्षेणेति चेत्।

(१) काम्यत्ववदिति १ पु० पा०।

तर्हि दुरितक्षयकामस्य कर्मानुष्ठानानर्थक्यप्रसङ्गः। तदभावतत्फलाभावयोरप्यनध्यक्षत्वात्। उपलब्धियोग्यतापन्नानिष्टनिवृत्तिरूपत्वादयमदोष इति चेत्। तुल्यं। दुःखवत् सुखस्याप्युच्छेदादकाम्योऽयमिति चेत्। न। तृष्णाया दोषतिरस्कारेण प्रवृत्तिवदलम्प्रत्ययेन गुणतिरस्कारान्निवृत्तेरपि दर्शनात्। मधुविषसंपृक्तमन्नमत्रोदाहरणं। सन्ति च केचनालम्प्रत्ययवन्तः। न च समत्वं, दुःखस्यैव प्राचुर्यात्। दुःखे सुखहेत्वननुषङ्गेऽपि सुखे दुःखहेत्वनुषङ्गनियमात्। तथा हि न्यायोपार्जितेष्वेव विषयेषु कियती सुखखद्योतिका कियन्ति चार्जनरक्षणादिभिर्दुःखदुर्दिनानि। अन्यायोपार्जितेषु यद्भविष्यति तन्मनसापि चिन्तयितुमशक्यम्। विदाङ्कुर्वन्तु च सन्तो यदि कण्टकादिजन्येषु दुःखेषु लेशतोऽपि सुखानुषङ्गः। अस्ति च स्वर्गादिसुखेष्वपि बहुलो दुःखशल्यसम्भेदः। अत एव विविच्य भुज्यतां तुषतण्डुलवदित्यशक्यमिति। शक्यश्चायं निवर्त्यत्वात्। स्वन्तश्च, अपरावृत्तेरनर्थवासनाननुकूलाभिसन्धित्वाच्चेति।

शङ्क० टी०। मोक्षस्यानुपादेयत्वान्न फलत्वमित्याशयेनाह। क इति। आत्यन्तिकीति। दुःखात्यन्ताभाव इत्यर्थः। तथा च

लोष्टादयोऽपि मुक्ताः स्युरित्यत आह। आत्मेति। दुःखवत्यात्मनि कथं तदत्यन्ताभाव इत्याशयेनाह। किमिति। दुःखत्वावच्छिन्न-प्रतियोगिकदुःखात्यन्ताभाववत्त्वमेवात्यन्तिकत्वमित्याह। तज्जातीयेति। ननु पुनः स एव दोष इत्याह। कथमिति। उत्तरं। कारणमात्रेति। सर्वदुःखकारणोच्छेदो न लोष्टादिनिष्ठेनापि दुःखात्यन्ताभावेन सहात्मनः सम्बन्ध इत्यर्थः। समानाधिकरणसमान-कालीनदुःखप्रागभावासहवृत्तिदुःखध्वंस एव वा मोक्षो मोक्षेण दुःखात्यन्ताभावेन वा सम्बन्ध इति भावः। स्वरूपतो दुःखं न हेयं किं तु सुखार्थं तद्धानं काम्यमित्यन्येच्छाधीनेच्छाविषयत्वान्नासौ मुख्यः पुरुषार्थ इत्याह। सुखार्थमिति। अतद्धेतुत्वादिति। दुःख-हानस्य सुखाहेतुत्वादिति भावः। तथापि यदा दुःखाभावस्तदा सुखमस्तीति तद्धानमित्याह। व्याप्तेरिति। न हि यदा दुःखा-भावस्तत्र सुखमस्त्येवेति व्याप्तिः सुषुप्त्यादौ व्यभिचारादित्याह। नासिद्धेरिति। ननु यदा सुखं तदा दुःखाभावोऽस्त्येवेति व्याप्ति-स्तावदस्तीत्याशङ्कते। सुखं तावदिति। तर्हि दुःखाभावार्थं सुख-मुपादेयमिति मुख्यः पुरुषार्थो दुःखाभाव एवेत्याह। नहीति। नावेद्यत्वादिति। "दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते" इति भावः। वेद्यत्वान्तर्भावेण न दुःखाभावस्य पुरुषार्थत्वं किं तु स्वतन्त्रस्यैवेत्याह। दुःखार्तानामिति। तर्हि सर्वे तत्र प्रवर्तेरन्नित्यत आह। बहुतरेति। तत्प्रेक्षावन्त इतरेभ्योऽप्रेक्षाकारिभ्यः। प्रथम-मिति। उत्पन्नमात्रेत्यर्थः। मोक्षोऽपि शब्दानुमानादिवेद्य इति वेद्यता तुल्येत्याह। तुल्यमिति। वैषम्यमाह। नाध्यक्षेणेति। तदभावतत्फलाभावयोरिति। दुरिताभावतत्फलदुःखाभावयो-

रित्यर्थः। उपलम्भेति। [१]यावद्दुःखनिवृत्तिरुपलब्धियोग्या तत्रैव वेद्यत्वान्तर्भावेण पुरुषार्थत्वं नान्यत्रेत्यर्थः। समव्ययफलत्वमाशङ्क्य निराकरोति। दुःखवदिति। तथा च यथा तृष्णया दोषं तिरस्कृत्य अगम्यागमनादौ प्रवृत्तिः तथा विरक्तस्य [२]गुणं तिरस्कृत्यापि निवृत्तिरित्यर्थः। तृष्णेति। केचनेति। दुःखदुर्दिनभीरव इत्यर्थः। प्रकारान्तरेण समव्ययफलत्वं निरस्यति। न चेति। न हि दुःखे सुखक्लेशानुषङ्ग आवश्यकः नरकदुःखादौ सुखलेशाभावात् सुखे तु दुःखक्लेशानुषङ्गोऽधौव्यम्। एतदेव उपपादयति। तथा हीति। न्यायार्जितधनमत्यन्तदुःखहेतुस्तत्रापि सुखमल्पीयं एतद्धनार्जनपरिपालनदुःखं तु महीय इत्यर्थः। [३]अन्यायार्जिते लैहिकं पारलौकिकं चात्यन्तिकं दुःखमित्याह। अन्यायेति। साम्याभावमेव पुनराह। विद्वाङ्कुर्वन्त्विति। विविच्येति। दुःखं हीयतां सुखमुपादीयतामित्यपि न सम्भवति। [४]परस्परानुषङ्गादित्यर्थः।

अशक्यत्वं निराकरोति। शक्यस्तायमिति। दुःखात्यन्ताभावो विशिष्टदुःखसाधनध्वंससम्बन्धोत्पादनद्वारा साध्यस्तादृशदुःखध्वंसस्य त्वत एव साध्यो यदि च दुःखप्रागभाव एव मुक्तिस्तदा सोऽपि कारणविघटनमुखेन साध्य इत्यर्थः। दुरन्तत्वं परिहरति।

(१) या दुःखनिवृत्तिरिति २ पु० पा०।

(२) विषयजन्यगुणमिति २ पु० पा०।

(३) अन्यायादैहिकमिति १ पु० पा०।

(४) परस्परप्रसङ्गादिति १ पु० परस्परानुषङ्गादिति २ पु० पा०।

अन्तस्येति। न तद्वकचूडाहरणवद्दुरन्त इत्यर्थः। अन्तत्वे हेतुमाह। अपरावृत्तेरिति। पुनर्दुःखानुत्पत्तेरित्यर्थः।

---

रघु॰ टी॰। दुःखस्य निवृत्तिर्ध्वंसः तस्यात्यन्तिकत्वं सदातनत्वमसम्भवि अविनाशित्वं च साधारणमित्याशयेन पृच्छति। किमिति। उत्तरयति। तज्जातीयेति। अत्यन्तं यावत् सत्त्वमभावविशिष्टत्वं भाववैशिष्ट्याभावः। प्रतियोगिजातीयाधिकरणक्षणावृत्तित्वमिति यावत्। अथेदानीन्तनमुक्तावव्याप्तिरत उक्तमात्मन इत्यादि, तथा च [१]स्वाधिकरणात्मवृत्तिदुःखाधिकरणक्षणावृत्तिः स्वाश्रयसमवेतदुःखाधिकरणक्षणवृत्तिभिन्नो वा दुःखध्वंसो मोक्ष इति पर्यवसितोऽर्थः।

केचित्तु यद्यपि दुःखात्यन्ताभाववत्त्वं अवच्छेदभेदेन दुःखसत्त्वेऽपि सुषुप्तौ स्वर्गित्वे चाऽस्ति तथापि चरमदुःखध्वंसादिप्रत्यासत्त्या स्वीयदुःखतत्प्रागभावानधिकरणकालावच्छेदेन वा तद्वत्त्वं तथेति प्राहुः।

नावेद्यत्वादिति। यदाहुः—

> दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते।
>
> न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः॥ इति

दुःखस्य निसर्गप्रतिकूलस्वभावतया तदभावस्य स्वरूपत एव काम्यत्वमित्याह। दुःखार्तानामिति। किमत्रेति। विवेकिनामपि दुःखार्तानां सुषुप्तिकामनायाः प्रामाणिकत्वादित्यपि द्रष्टव्यम्। तर्हि विवेकिनोऽपि दुःखार्ता निषिद्धमपि देहत्यागमाचरेयुरित्यत आह।

(१) स्वाश्रयसमवेतेति १ पु॰ पा॰।

बहुतरेति। अनुकूलयन्तः प्रमाणयन्तः। ते विवेकिनः। अवेद्यत्वात् यावत् सत्त्वमज्ञायमानत्वात्। कदाचिज्ज्ञायमानत्वमेव पुरुषार्थत्वे तन्त्रमित्याशयेनाशङ्कते। प्रथममिति। विद्यते ज्ञायते। ज्ञायमानत्वमात्रं न तन्त्रं परन्तु साक्षात्क्रियमाणत्वमित्याशयेनाशङ्कते। साध्यत्वेनेति। तदभावेति। प्रायश्चित्ते हि पापध्वंसं तत्साध्यदुःखप्रागभावं वोद्दिश्य प्रवृत्तिः तदुभयमपि साध्यत्वमित्यर्थः। पुरुषार्थत्वे नोपलब्धिस्तन्त्रं परन्तु तद्योग्यता सा चाभावस्य योग्यप्रतियोगिकत्वम्, अस्ति च दुःखप्रागभावस्येदमित्याशङ्कते। उपलब्धीति। तृष्णया उत्कटरागेण। ननु भोजनयागादेरनिष्टमायासादिकमपेक्ष्य तृप्तिस्वर्गादेर्बलवत्त्वात् प्रवर्तन्त इत्यत आह। मधुविषेति। तदुक्तं—अविवेकिनो हि मधुविषसम्पृक्तमप्यन्नं मधुमधुरतयाऽऽपातरमणीयं विषविषङ्गात्तु मारयतु मा वा मीमरत् उपभुञ्ज्महे तावदापातसुखं को हि हस्तगतं पादगतं करोतीति विचिन्त्य भुञ्जत इति। सन्ति चेति। तदुक्तं—विवेकिनस्त्वायतिमालोचयन्तः स्वर्गमपि कुपितफणिफणामण्डलच्छायप्रतिममित्यपजहतीति। वास्तवं सत्त्वमपि नास्तीत्याह। न चेति। कण्टकादीति। आदिपदात् खड्गाघातादिपरिग्रहः। नरकादेरप्युपलक्षकं स्वर्गादीति। तदुक्तं

स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः॥ इति।

स्वन्तः शुभोदर्कः। अपरावृत्तेः पुनर्दुःखस्यानुत्पत्तेः। अनर्थेति। वासना अभिसन्धिश्च कामना। यथाहि सुखलिप्सूनां सत्यपि सुखोपभोगे भूयोभूयः सुखे तदुपाये च कामना जायते अलाभे चानिषिद्धस्योपायस्य निषिद्धेऽपि यथा कामुकानां स्वदाराणामलाभे

परदारेषु सा च कामना अनर्थहेतुरिति सुखकामनानर्थकामनानुकूला न तथा दुःखात्यन्तविमोक्षकामनेत्यर्थः।

---

नित्यं तु सुखं न सत्यं। योग्यानुपलम्भबाधितत्वात्। श्रुतिस्तत्र मानमिति चेत्। न। योग्यानुपलब्धिबाधिते तदनवकाशात्। अवकाशे वा[1] ग्रावप्लवनश्रुतेरपि तथाभावप्रसङ्गात्। नापि काम्यं सदातनत्वात्। न हि यद्यस्यास्ति स तत् कामयते, भ्रान्तेरेवं, कण्ठस्थचामीकरवदिति चेत्। न। स्वसंवेद्ये तदभावात्। नापि शक्यं। न हि तन्निर्वर्त्यं नित्यत्वात्। नापि विकार्यम्। अपरिणामित्वात्। नापि संस्कार्यमनाधेयातिशयत्वात्। न प्राप्यं नित्यसंबन्धवत्त्वात्। न ज्ञेयं ज्ञानस्यापि नित्यत्वात्। अनित्यत्वे वा शरीरादिकारणापाये तदनुत्पत्तेः। उत्पत्तौ वा तेषामकारणत्वप्रसङ्गात्। तथा च सर्वः सर्वदर्शी स्यात्। आत्ममनःसंयोगादेः सर्वत्राविशेषात्। ज्ञानज्ञेययोर्नित्यत्वेऽपि तत्संबन्धो जन्यते स च षट्पदार्थव्यतिरेकात् उत्पन्नोऽपि न निवर्त्तते ध्वंसवदिति चेत् न। भावाभावयोः प्रकारान्तराभावात्। तच्च स नाभावः। प्रतियोग्यनुपपत्तेः। भावत्वे त्ववश्यमुत्पन्नो निवर्त्तेत उपाध्यन्तराभावात्। अविद्याविध्वंसनमेव

---

(१) संभवे चेति प० पा०।

तत्प्राप्तिरिति चेत् ? अत्र न नो विवादः। न ह्येकविंशतिप्रभेदभिन्नदुःखव्यतिरिक्ता अविद्या नाम। तद्विध्वंसनञ्च पुरुषार्थ इति प्रतिपादनादिति। दुरन्तं च तत्। तदभिसन्धेः सुखसंस्कारसहकारितया तदुद्भवे विशिष्टसुखाभिलाषिणो वैषयिकेऽपि प्रवृत्तिसंभवात्।

अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता। इति उदाहरणादिति।

शङ्क॰ टी॰। न सत्यमिति। न परमार्थसदित्यर्थः। सुखत्वं न नित्यवृत्ति। ईश्वरगुणावृत्त्यात्मगुणवृत्तिजातित्वात् दुःखत्ववदिति भावः। योग्येति। सुखस्य च योग्यतैकनियतत्वादित्यर्थः। न ह्यसंविदिते सुखे दुःखे वा प्रमाणमस्तीति भावः। श्रुतिसंवेद्यत्वान्नासंविदितत्वमित्येत्याह। श्रुतिरिति। संसारावस्थायां योग्यतायां सत्यामप्यनुपलम्भेन तद्बोधकश्रुतेरनवकाशादित्याह। योग्येति। ननु "नित्यं विज्ञानमानन्दं ब्रह्म" "आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्" इत्यादिश्रुतयः कथमुपपादनीया इत्यत आह। संभवे वेति। तथाभावप्रसङ्गादिति। शावसुखनबोधकत्वप्रसङ्गादित्यर्थः। तथाच तद्वदेवेयमपि श्रुतिर्मोक्षावस्थायां दुःखात्यन्ताभावपरेति भावः। भवतु वा नित्यं सुखं तथापि न स पुरुषार्थः, अकाम्यत्वादित्याह। नाप्नोतीति। काम्यताविरहे हेतुमाह। न ह्येति। ननु ममेदं नास्तीति भ्रान्त्या सदपि काम्यत एव। यथा

कण्ठगतं [१]चामीकरमपश्यन् भ्रान्त्या चामीकरमिति शङ्कते। भ्रान्तेरिति। तत्सुखं विज्ञानात्मकत्वात् स्वसंवेद्यमेव भवताभ्युपगम्यते। तच्च कथमसत्त्वारोपः स्यादित्याह। स्वसंवेद्य इति। ननु भवतु कथंचित् काम्यं तथापि प्रयत्नाविषयत्वान्न तत्पुरुषार्थं इत्याह। नापीति। निर्वर्त्त्यं हि काम्यते वैषयिकसुखवत् इदं तु नित्यत्वादनिर्वर्त्त्यमित्याह। न हीति। ननु नित्ये सुखे योगविधिना कथंचिद्विकार आधीयते येन मोक्षोऽभिव्यज्यत इत्यत आह। नापीति। विकारो हि तद्गतः परिणामः स च तत्र नास्तीत्यर्थः। ननु व्रीहीन् प्रोक्षतीत्यत्र व्रीहेर्यथा संस्कार्यत्वं तथाऽत्रापि स्यादित्यत आह। नापि संस्कार्यमिति। ननु नित्यस्यापि वेदस्याध्ययन[२]लक्षणा यथा प्राप्तिस्तद्वदेवैतत्प्राप्यं कर्म स्यादित्यत आह। नेति। ननु ज्ञानलक्षणाप्राप्त्याधानात् प्राप्यमेव तत् कर्म स्यादित्यत आह। न ज्ञेयमिति। ननूत्पाद्यज्ञानवेद्यत्वमेवास्तु को दोष इत्यत आह। अनित्यत्वे चेति। ननु तद्विज्ञानीयज्ञानं न शरीरादितन्त्रं किन्तु विषयमात्रजन्यमत आह। तथा चेति। इदानीमपि सन्ति रूपादयो विषयाः, अस्ति चात्ममनोयोग इति सर्वदर्शितापत्तिरित्यर्थः। ननु तदानीं सर्वदर्शिता नानिष्टेति वाच्यम्। शरीरादिविरहदशायां मया त्वया च तदनभ्युपगमादिति भावः। तत्संबन्धनिवृत्तिदशायां संसारितापत्तिमाशङ्क्याह। स चेति। स [३]उत्पाद्यो ज्ञानसुखसम्बन्धो भावोऽभावो वा। अन्त्ये आह।

---

(१) कुण्डलान्तर्गतः पाठो २ पु० नास्ति।
(२) अध्ययनकर्मता इति २ पु० पा०।
(३) आपाद्य इति २ पु० पा०।

प्रतियोगीति। न हि निष्प्रतियोगिकोऽभावो नामेत्यर्थः। उपाधीति। अन्यस्य विनाशित्वे भावत्वस्यैवोपाधित्वादित्यर्थः। ननु ध्वंस एव नित्यज्ञाननित्यसुखयोः सम्बन्धोऽस्तु स च न विनाशीत्यत आह। अविद्येति। एकविंशतिप्रभेदभिन्नदुःखात्मिका चेदविद्या तदा तद्विध्वंसस्य पुरुषार्थत्वमस्मदभिमतमेवेत्याह। न हीति। नित्ये ज्ञाने सुखे च प्रमाणमेव नास्ति योग्यानुपलब्धिनिरस्तत्वादित्युक्तमिति भावः। दूरन्तं चैतदिति। न नित्यसुखकाम्यत्वमित्यर्थः। अत्र हेतुमाह। तदभिसन्धेरिति। नित्यसुखाभिलाषिणो वैषयिकसुखेऽप्यभिलाषः स्यात्। स च मोक्षविरोधीत्यर्थः। उत्कृष्टाभिलाषे तदप्राप्तावपकृष्टाभिलाषे दृष्टान्तमाह। अलाभेति।

---

रघु॰ टी॰। नित्यं सुखं मोक्ष इति पक्षं दूषयति। नित्यन्त्विति। भ्रान्तेरिति। यथा कण्ठस्थचामीकरमसत्त्वभ्रमेण काम्यं तथैतदपीत्यर्थः। स्वसंवेद्य इति। स्वस्मिन् सति अवश्यं संवेद्ये सतः सुखस्य क्वचिदप्यनुपलम्भादर्शनेन तत्सत्त्वे मनोयोगादिसत्त्वेनावश्यं तत्साक्षात्कारात् प्रतिबन्धकाभावादित्यर्थः। वेदान्तिनान्तु तदेव स्वप्रकाशविज्ञानरूपं, सत्यं विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतेः। शक्यं कृतिकर्म। निर्वृत्तिरुत्पत्तिः। पूर्वरूपपरित्यागेन रूपान्तरप्राप्तिर्विकारः। पूर्वरूपाविरोधेन रूपान्तरलाभः संस्कारः। प्राप्तिः सम्बन्धः। सुखस्य नित्यत्वेऽपि आत्मत्वादिवत्तस्याप्यात्मनि नित्यसम्बन्धवत्त्वात्। वेदान्तिनां पुनरात्मना सह सुखस्य सम्बन्धस्तादात्म्यमेव स्यात्तच्च नित्यमेव। नित्यं सुखं स्वतोऽशक्यमपि साक्षात् क्रियमाणतया शक्यं तथैव च काम्यं अज्ञायमानस्य सुखस्याकाम्यत्वादिति मतं निरस्यति।

न श्रेयमिति। अनित्यत्वे वेति। पूर्वस्य ज्ञानस्य विनाशादुत्तरस्य कारणाभावादनुत्पत्तेरमुक्तत्वप्रसङ्ग इत्यर्थः। उपाध्यन्तरेति। अन्यस्य विनाशित्वे भावत्वस्यैव नियामकत्वादित्यर्थः। तत्प्राप्तिः तयोर्नित्ययोर्ज्ञानसुखयोः प्राप्तिः सम्बन्धः। अत्र मोक्षदशायामविद्याविध्वंसे। ननु नैयायिकानामतिरिक्ताऽविद्याभ्युपगमेऽपसिद्धान्त इत्यत आह। न हीत्यादि। मानाभावादिति भावः। तद्विध्वंसनं चेति। प्राप्ताप्राप्तविवेकेन तत्रैव पुरुषार्थत्वपर्यवसानात् तस्य ज्ञानसुखसम्बन्धत्वे मानाभावात् ज्ञायमानत्वस्य ज्ञानविषयत्वानतिरेकाच्चेति भावः। तन्नित्यं सुखं। अभिसन्धेः कामनायाः। उत्कृष्टसुखे कामनायां तदसम्पत्तावपकृष्टेऽपि तत्र कामना जायत इति। अत्र दृष्टान्तमाह। अलाभ इति।

यद्यपि "परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति"। "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्"। "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"। "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति, नास्याब्रह्मवित्कुले भवति"। "तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति"। "ब्रह्मविदाप्नोति परं"। "ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढं विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वा अमृता भवन्ति"। "यस्मात् परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्"। "ततो यदुत्तरतरं तदरूपमनामयम्"। "य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति" इत्यादिनाना-श्रुतिभ्यः परमेश्वरतत्त्वज्ञानस्यैव मोक्षहेतुत्वं प्रतीयते।

द्वे विद्ये वेदितव्ये तु शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥
द्वे ब्रह्मणी वेदितव्ये परं चापरमेव च ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

इत्येताभ्यामपि श्रुतिस्मृतिभ्यां परब्रह्मतद्बोधकागमतत्त्वज्ञानस्य न तु कुतोऽप्यागमात् स्वात्मतत्त्वज्ञानस्य । तथापि मोक्षे जनकस्य स्वात्मगोचरमिथ्याज्ञानवासनासमुच्छेदस्य स्वात्मसाक्षात्कारादेवोत्पातात् तद्द्वारा तस्यापि मोक्षहेतुत्वमिति वदन्ति ।

तदसङ्गतं । यदि तत्त्वज्ञानादचिरेणैव मोक्षो यदि वा कर्मणां भोगेन क्षयादुभयथापि वासनोच्छेदस्य मोक्षजनकत्वे मानाभावात् । भोगेन कर्मक्षयार्थं विहितनिषिद्धयोः प्रवर्तमानस्य धर्माधर्मानुत्पत्तावुपयुज्यते वासनोच्छेद इति चेदुपयुज्यतां । नचैतावता मोक्षजनकतासिद्धिः ।

तत्त्वज्ञानवतो धर्माधर्मयोः प्रागभावस्य सत्त्वे तयोरुत्पादो दुर्वारः । असत्त्वे तु तदभावादेव नोत्पाद इत्यपि केचित् ।

वस्तुतस्तु "न वा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति" इत्यादिना ईश्वरासम्भविप्रियत्वाख्यानेन जीवात्मानमुपक्रम्य "आत्मा वा अरे द्रष्टव्यः" इत्यादिप्रतिपत्तिचतुष्कं विधाय "एतावदरे खल्वमृतत्वम्" इत्युक्तं फलावश्यंभावद्योतनाय कारणे कार्योपचाराद्दर्शनादिरेवामृतत्वमित्युक्तं अतः श्रुतित एव स्वात्मज्ञानस्य मोक्षहेतुतासिद्धिः । यच्च तत्र तत्र तस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीति तदात्मसाक्षात्कारात् सार्वज्ञ्यं स्यादिति बोधनाय । यदपि तदनन्तरं "एतस्यैव महतो

भूतस्य निःश्वसितमेतद् यदृग्वेद" इत्यादीश्वरधर्मकथनं तदपि जीवे-श्वराभेदबोधनाय। यथा "यतो वा इमानि भूतानि जायन्ते" इत्यादिना ईश्वरं प्रक्रम्य "तत्त्वमसि श्वेतकेतो" इति जीवेश्वराभेद-प्रदर्शनं तदुभयमपि ईश्वराभिन्नतया आत्मभावनं मोक्षहेतुरिति ज्ञापनाय। श्रुत्यन्तरं "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुर-मृतत्वमिच्छन्"। तरति शोकमात्मविदिति वेदाच्च प्रत्यगात्मशब्दो जीवपरः। "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येद्" इति। "आत्मानमन्विच्छ गुहां प्रविष्टम्" इत्यादिश्रुतयश्च।

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।

किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेद्॥ इति

श्रुतिभिः स्वात्मज्ञानस्य प्रवृत्त्यभावद्वारापि हेतुत्वमुक्तं। ईश्वर-ज्ञानस्य हेतुताबोधकश्रुतिरपि तत्त्वमस्यादिवाक्यस्वरसादीश्वराभिन्न-स्वात्मज्ञानपरैव। वेदान्तेषु जीवेश्वराभेदात्मज्ञानं तत्त्वज्ञानमेव। न्यायनये तु तयोर्भेदेऽप्यभेदभावनं श्रुतिबलान्मोक्षहेतुरिति ध्येयम्।

यत्तु वेदान्तिभिर्जीवेश्वराभेदात् प्रियत्वमुपपाद्येश्वरपरत्वमुक्तं तत्तेषामेव शोभत इति। मोक्षस्तु नात्यन्तिको दुःखध्वंसः। दुःख-मनुत्पाद्य तस्योत्पादयितुमशक्यत्वात् तदुपाये प्रवृत्त्यनुपपत्तेश्च। कथं तर्हि दुःखसाधने शिराछेदनभेदनादौ तपोयोगादौ च प्रवर्तन्त इति चेत्। बलवत्तरमर्थान्तरमुद्दिश्य न खल्वु तमेवानर्थं विनाशयितुं तं तत्साधनं वा कश्चिदुपादत्ते। यदाहुः—

प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्। इति

अन्यथाऽनवरतमेव शिराभेदनोरस्ताडनादौ प्रवर्तेत न निवर्तेत च दुःखैकसाधनाद्बलवत्तरदुःखसन्तानसाधनाद्वा ततोऽपि तावद्

दुःखरागेनुत्पादे तद्विनाशस्यावश्यकत्वात्। नाप्यसौ तत्त्वज्ञानसाध्यः। कृच्छ्रादेव दुरिताद्दुःखस्य भोगाच्च तद्विनाशस्य सम्भवात् ताभ्यां च विना तत्त्वज्ञानसहस्रेणापि तयोरुत्पादयितुमशक्यत्वात्। समानाधिकरणदुःखासमानकालीनदुःखध्वंसत्वं च न अन्यतावच्छेदकं मानाभावात्। अन्यथा शुकादिदुःखासमानकालीनदुःखध्वंसत्वादिना मैत्रासमानकालीनघटत्वादिना च अन्यताप्रसङ्गात्। सत्यां मिथ्याज्ञानवासनायां प्रवर्तमानस्यापूर्वधर्माधर्मसञ्चये संसारानुच्छेद-प्रसङ्ग इति चेत्। एतावता तत्त्वज्ञानस्य तादृशवासनाविनाशद्वारा धर्माधर्मानुत्पादप्रयोजकत्वं स्यान्न तादृशदुःखध्वंसजनकत्वं, दुःखजन्मे-त्यादिकं सूत्रं कारणाभावे कार्योत्पादाभावस्यैव बोधकं, उत्पन्नयोस्तु धर्माधर्मयोराप्तस्य तत्त्वज्ञानादिनाशो भोगद्वारा वेत्यन्यदेतत्। नापि दुःखात्यन्ताभावः, तस्यासाध्यत्वात्। सिद्धोऽपि ग्रामपशुहिरण्यादिवत् स्वसम्बन्धित्वेन साध्यः सम्बन्धः तस्यात्यन्तिको दुःखध्वंस इति चेत्। न। प्राप्ताप्राप्तविवेकेनात्यन्तदुःखध्वंस एव साध्यत्वपर्यवसानात्। तस्य चापुरुषार्थतायाः प्रतिपादितत्वात्। न वा तस्य तत्सम्बन्धत्वे मानमस्ति। अस्ति दुःखेनात्यन्तं विमुक्तश्चरतीति श्रुतिरिति चेत्। न। तस्यास्तथात्वाबोधकत्वात्। संसारिणामपि सुषुप्त्यादौ व्यापक-दुःखात्यन्ताभाववत्त्वाच्च तस्मादात्यन्तिको दुःखसाधनध्वंस एव मोक्षः। दुःखस्य साधनं चेह तन्निदानं दुरितं, आत्यन्तिकत्वं च तद्ध्वंसस्य स्वप्रतियोगिसमवायिवृत्तिदुरिताधिकरणक्षणावृत्तित्वं। अथ दुःख-साधनध्वंसो न स्वतः पुरुषार्थः, दुःखप्रागभावबुद्ध्यैवाध्विकण्टक-नाशादौ प्रायश्चित्तादौ च प्रवृत्तेः। न च मुक्तस्य दुःखप्रागभावसम्भवः, तस्य नाशत्वे दुःखोत्पत्तिप्रसङ्गात्, अनाशत्वे प्रागभावत्वविरोधात्।

प्रतियोग्यनुपपत्तेश्चेति चेत् । न । प्रागभावस्यासाध्यत्वात् । तस्यो-त्तरकालसम्बन्धः साध्य इति चेत् । न । सम्बन्धिद्वयातिरिक्तस्य तस्यानभ्युपगमात् । सम्बन्धिनश्चैकस्यासाध्यत्वात् । अन्यस्य च स्वकारणाधीनत्वात् कण्टकादिनाशस्य तत्सम्बन्धजनकत्वे मानाभावात् । प्रागपि तत्सत्त्वात् । तत्सत्त्वेऽग्रिमक्षणे सत्त्वं तेन विनाऽपि चाग्रिमक्षणेऽवश्यमसत्त्वमित्येवंरूपमेव योगक्षेमसाधारणं तत्साध्यत्वं प्रवृत्त्याद्युपयुक्तमिति चेत् । न । मानाभावात् । पूर्वकालव्यावर्त-कस्याग्रिमत्वावधेर्दुर्वचत्वात् । सत्यप्युद्धिकण्टकादौ चिरकालं दुःखा-नुत्पाददर्शनात् । एकदा सकलकर्मणां वृत्तिलाभासम्भवेन विनापि प्रायश्चित्तं दुःखप्रागभावस्यातिचिरं सत्त्वसम्भवाच्च । तदुक्तं -

'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति ।

सुखदुःखाभावतत्साधनान्यत्वेन दुरितनाशः कथं पुरुषार्थ इति चेत् । यथा हि सुखत्वेष्टसाधनत्वे इच्छायाः, दुःखत्वानिष्टसाधनत्वे च द्वेषस्य प्रयोजके, तथा द्विष्टाभावत्वेष्टाभावत्वे अपि इच्छाद्वेषयोः । अत एव यस्य यत्र दुःखे द्वेषः तस्यैव तदभावे इच्छा, यस्य यत्र सुखे इच्छा तस्यैव तदभावे द्वेष इति सर्वानुभवसिद्धं यथा चेच्छां प्रति स्वरूपयोग्यताज्ञानमेव कारणं फलानुपधाननिर्णयस्तु प्रति-बन्धकस्तथैव द्वेषं प्रत्यपि । संशयनिश्चयसाधारणं फलोपधायकत्वज्ञानं वा तथा । विशिष्टश्च दुरितध्वंसो भवत्युद्देश्यो जन्यते च तत्त्व-ज्ञानेन । तत्त्वं तु जन्यतावच्छेदकं न वेत्यन्यदेतत् ।

स्यादेतत् अचीर्णप्रायश्चित्तानां दुरितानां विना भोगं नाश-यितुमशक्यत्वात् तदवस्थैवापुरुषार्थता इति चेत् । न । कर्म-नाशापारगमनादिवत् प्रायश्चित्तादिवच्च तत्त्वज्ञानस्यापि धर्मा-

धर्मनाशकतायाः श्रुतिस्मृतिसिद्धत्वेनाश्रयैव तत एव तन्नाशात्। यथाहि शीते पाथसि पीते तृषा शाम्यति शीतलतरं सरोऽवगाढवतो निदाघदुःखं व्यपैतीत्यादौ जलपानादेस्तृषाद्युपशमहेतुत्वं स्वरसतः प्रतीयते तथा—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे॥

"तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते अध्यात्मविदः"।

इत्यादिश्रुतावप्यात्मज्ञानस्य पापादिनाशकत्वं न चाऽन्तरेण बलवत्तरं बाधकमपाकर्तुमीशामहे स्वरससिद्धं श्रुतेरर्थम्। अथ [1]कृप्तकारणभावभोगद्वारैव सम्भवति तत्त्वज्ञानस्य कर्मनाशकत्वे साक्षात्तथात्वं न कल्प्यते कल्पनागौरवप्रसङ्गादिति चेत्। न। तत्त्वज्ञानस्य भोगाजनकत्वात्। कायारण्यनिर्माणद्वारा तत्तथेति चेत्। न। तत्रापि तस्याहेतुत्वात्। विनैवात्मतत्त्वज्ञानं तपोयोगर्द्धिप्रभावादेव सौभरिप्रभृतीनां कायारण्यनिर्मातृत्वात्। तथात्वेऽपि तत्त्वज्ञानस्य व्यभिचारेण जनकताया बाधितत्वात्। दुर्घटश्च भोगेन कर्मणां क्षयादपवर्गः। अनन्तानां विषमविपाकसमयानां कर्मणां युगपद्वृत्तिनिरोधवद् युगपद्वृत्तिलाभसम्भवेऽपि कल्पशतादिक्रमकालभोग्यनरकसन्तानजनकानां कर्मणामचिरकालीनभोगेन नाशयितुमशक्यत्वात्। न च तावत्सङ्घनरकजनकत्वमेव तेषां श्रुत्या तथात्वाबोधनात्। तस्य तावदेव चिरमित्यादि श्रुत्यात्मविदोऽपि भोगेन

(१) क्षमकारणभोग इति २ पु० पा०।

कर्मणां क्षयो बोध्यत इति चेन्नस्याः प्रारब्धशरीरकर्मविषयत्वात् । अन्यथा विरोधप्रसङ्गात् । अत एव भोगेन त्वितरे क्षपयित्वेति वाक्यशेषोऽपि । इतरे प्रारब्धशरीरे पापपुण्ये । अमूत्रयच्च भगवान् बादरायणोऽपि । तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् । भोगेन त्वितरे क्षपयित्वा सम्पद्यत इति । तथाऽऽत्मनोऽधिगमे उत्तरस्याघस्याश्लेषः पूर्वस्य विनाशः अश्लेषव्यपदेशः यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापकं कर्म न श्लिष्यत इति । एवंविदि आत्मतत्त्वविदि । दर्शितौ च विनाशव्यपदेशौ वेदेषु पुराणेषु च । अविशेषेण पुनरात्मज्ञानस्य कर्मनाशकत्वे हिरण्यगर्भ-मनूद्दालकप्रभृतीनामात्मज्ञानवतां चिरतरकालजीवित्वं न स्यात् । श्रूयते चैषां श्रुतिस्मृतीतिहासपुराणेषु तत्त्वज्ञता महाकल्पकल्प-मन्वन्तरादिजीविता चेति । अवगम्यते च यथा पुष्करपलाश इत्यादिश्रुतितोऽप्यात्मतत्त्वविदोऽपि देहादिमत्त्वम् । एवं च तत्त्व-ज्ञानेन कर्मणि नाशयितव्ये प्रारब्धशरीरं कर्म प्रतिबन्धकं, भोगेन च तस्मिन् विनष्टे तदात्मकात्तत्समकालीनाद्वा तत्त्वज्ञानादिश्य-मानाखिलपापपुण्यविनाशः । इत्थमेव च तावदेवेत्यादिश्रुति-बोधितं भोगजन्यकर्मनाशानन्तर्यं मुक्तेरुपपद्यत इति वदन्ति ।

स्वीयदुरितसामान्यध्वंसो मोक्षः स चातिरिक्तः सामान्याभावो न भोगादेः साध्यः । अपि तु तत्त्वज्ञानस्यैवेत्यपि केचित् । रीति-स्तुक्तैवानुसर्तव्या ।

स्वसमानाधिकरणदुःखाधिकरणक्षणावृत्तिदुःखध्वंसः स्वीयदुःख-सामान्यध्वंसो वा मोक्षः तस्य चोत्कटतरेच्छाविषयत्वात् तत्साधनतया प्रतियोगिनो दुःखस्याप्युपादेयत्वमित्यपि कश्चित् ।

अपरे तु नित्यसुखाभिव्यक्तिर्मुक्तिः। न च संसारिणां नित्यसुखे मानाभावः।

"आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्" ॥

इति श्रुतेरेव मानत्वात्। परमात्मनो बन्धवन्मोक्षस्याप्यभावात्। आनन्दमिति श्रौतो लिङ्गपरित्यागः रूपं धर्मः, अस्त्यर्थाच्-प्रत्ययान्तत्वेनानन्दयुक्तं स्वरूपमिति वार्थः। मोक्षे—तदीययावद्दुरितसन्तानविनाशे। तथा च श्रुतिः

तावदेवास्य चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य इति।

न विमोक्ष्ये न विमोक्ष्यते उपात्तदुरितराशेः सम्पत्स्ये सम्पत्स्यते कैवल्येनेति प्रतिष्ठा च साक्षात्क्रियमाणत्वं संसारितादशायां सतोऽप्यानन्दस्यानुपलभ्यमानत्वेनासत्कल्पत्वात्। सन्नपि योग्यः कथं तदानीं न गृह्यत इति चेत्। अन्यथानुपपत्त्या दुरितस्य प्रतिबन्धकत्वकल्पनात्। गृह्यते तु तत्त्वज्ञानेनाहत्य भोगद्वारा वा दुरितस्य विनाशे। अस्तु वा तत्त्वज्ञानमेव तत्साक्षात्कारस्य कारणं स च तत्त्वज्ञानेनादृष्टद्वारा जन्यते अदृष्टान्तरस्य तदजनकत्वात्। जन्यभावमात्रस्य अदृष्टजन्यत्वात्। जन्यसुखसाक्षात्कारमात्रस्य धर्मजन्यत्वात्। अविनश्यदवस्थमेव चादृष्टं भावजनकं अन्यथा भोगेन विनाश्यमानादपि तस्माद्भोगान्तरोत्पादप्रसङ्गात्। अस्तु वा विनश्यदवस्थमपि तत् तथा। जायतां चैकसाक्षात्कारादनन्तरमपरः। नाश्यतां चादिमोऽन्त्येन स्वरूपयोग्यस्यापि तस्य न नाशोपधायकत्वं। सहकारिविरहात्। कारणनाशस्य च न ज्ञाननाशकत्वं। व्यभिचारात्। कल्प्यतां वा तत्त्वज्ञानध्वंसादिकमेव किञ्चित्साक्षात्कारविनाशप्रतिबन्धकं। निविशतां वा भावत्ववत् नित्यसुख-

साचात्कारान्यत्वमपि विनाशित्वावच्छेदककोटौ । सन्तु वा अनन्ता एव शरीरतत्त्वज्ञानसुखसाचात्कारसन्ताना: वैषयिकादिसुखविमुखानामेव च मोचेऽधिकारात्त्वानर्थवासनासमुत्थानम् । अशरीरमित्यादिश्रुतेस्तु अशरीरस्य सुखं दुःखं च नोत्पद्यते । नित्यसुखसम्बन्धस्य निषेद्धुमशक्यत्वादिति प्राहुः ।

आनन्दस्य प्रतिष्ठितत्वं सर्वानन्दान्तरातिशायित्वं। तथा चानन्ता एव शरीरतत्त्वज्ञानसर्वातिशायिसुखतत्साचात्कारसन्ताना इत्यन्ये ।

---

स्यादेतत्, आत्मा तु किं स्वप्रकाशसुखस्वभावोऽन्यथा वेति पृच्छामः । आद्धोऽसि चेदुपनिषदःपृच्छ । मध्यस्थोऽसि चेत्, अनुभवं पृच्छ । नैयायिकोऽसि चेन्न वैषयिकसुखज्ञानस्वभाव इति निश्चिनुयाः । तदतिरिक्ते तु सुखज्ञानव्यवहारे बीजाभावात् तद्व्यवहाराभावः अनुग्रहाभिष्वङ्गेन्द्रियप्रसादादिलक्षणं हि कार्यं तद्व्यवहारबीजं, अर्थप्रवणत्वं स्मृतिसंस्कारादिकार्यं ज्ञानव्यवहारादिबीजं लोके, तयोश्चाभाव आत्मनीति ।

शङ्क० टी० । सुखद्भावेन पृच्छति । आत्मेति । प्रतिभावबलेन नित्यसुखस्वाभाव्ये त्वया निरस्तेऽपि न मम संशयोच्छेद इति भाव: । आद्ध इति । श्रद्धावानसि चेदित्यर्थः । उपनिषत्सु ज्ञानसुखभिन्नत्वेनैवात्मन: प्रतिपाद्यत्वात् । यच्चोपनिषदि सुखस्वाभाव्यप्रतिपादनं (१)तच्च तदुपनिषदि चाऽन्यार्थस्य दर्शितत्वादिति

(१) तदुपदर्शितार्थस्येति २ पु० पा० ।

बहुवचनप्रयोजनम् । अनुभवमिति । अहं सुखी अहं जानामी-त्यनुभवे तदुभयवत्त्वाप्रतीतेः । माध्यस्थ्यं स्वपक्षे रागाभावः । नैयायिकोऽसि चेदिति न्यायसिद्धेन विप्रतिपद्यसे चेदित्यर्थः । [1]नन्वागमविरुद्धोऽयं न्यायः, आगमेन नित्यस्य ज्ञानस्य सुखस्य च प्रतिपादनादित्यत आह । तदतिरिक्त इति । वैषयिकज्ञानातिरिक्ते आत्मनीत्यर्थः । अनुग्रहेति । अनुग्रहः स्वीयत्वेन विज्ञानं कोऽयं येनानुग्रहादिकार्यं जन्यते तदेव सुखं न हि त्वदभिमतेन सुखेन तज्जन्यते । यत्तज्ज्ञानमर्थप्रवणं स्मृतिसंस्कारजनकं तदेव ज्ञान-व्यवहारविषय इत्यर्थः । तदभावश्चात्मनीति । मुक्तावस्थायामिति शेषः ।

---

रघु० टी० । स्वप्रकाशसुखरूपस्यात्मनः कुतो दुःखादिसम्भाव-नेत्याशयेन पृच्छति । आत्मा त्विति । श्राद्धः श्रद्धावान्, अविवे-चितश्रुत्यर्थः, श्रद्धालुः । मध्यस्थः—न्यायागमयोरपक्षपाती । अनु-भवमिति । अहं जाने अहं सुखी मम ज्ञानं मम सुखमित्यादिको ह्यनुभवो न त्वहं ज्ञानमहं सुखमित्यादिः । नैयायिको न्यायरुचिः । मिथो विरुद्धार्थानां श्रुतीनां विना न्यायं तात्पर्यस्य दुरवधारणत्वात् । वैषयिकं विषयादिजन्यम् । तद्व्यवहारबीजं सुखव्यवहारबीजं । आत्मनीति । अयमभावः । जीवात्मा तावत् सुखज्ञानविरुद्ध-स्वभावो ज्ञानेच्छाद्वेषप्रयत्नसुखदुःखवान् अनुभवबलेन धर्माधर्मवांश्च न्यायागमाभ्यां सिद्धः । तत्र च बाधिते मिथो विरुद्धस्वभावाभ्यां

(१) ननु वैषयिकसुखज्ञानातिरिक्तसुखज्ञानस्वभाव एवाऽऽत्माऽस्तु अत आह तदतिरिक्त इति २ पु॰ पा॰ ।

ज्ञानसुखाभ्यामभेदे न श्रुतेस्तात्पर्यं। परमात्मनि तु सार्वज्ञ्यजगत्कर्तृत्वादिशालितया न्यायागमाभ्यां सिद्धे विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेत्यादिकाः श्रुतयो मुख्यार्थबाधात् नित्यज्ञानानन्दवत्त्वं बोधयन्ति। तत्र च न विप्रतिपद्यामहे इति।

---

तस्मात्—

श्रुतेः श्रुत्वाऽऽत्मानं तदनु समनुक्रान्तवपुषो
विनिश्चित्य न्यायादथ विहतहेयव्यतिकरम्।
उपासीत श्रद्धाशमदमविरामैकविभवो
भवोच्छित्त्यै चित्तप्रणिधिविहितैर्योगविधिभिः॥

उपास्यमाने च तस्मिन् प्रथमं बहिरर्था एव भासन्ते यानाश्रित्य कर्ममीमांसोपसंहारः चार्वाकसमुत्थानं च, तत्प्रतिपादनार्थं च पराञ्चि खानीत्यादि। तद्धानाय परं कर्मभ्य इत्यादि। अथार्थाकारः, यमाश्रित्य वैदण्डिकमतोपसंहारः, योगाचारसमुत्थानं च तत्प्रतिपादनार्थमात्मैवेदं सर्वमित्यादि तद्धानार्थमगन्धमरसमित्यादि। अथार्थाभावः यमाश्रित्य वेदान्तद्वारमात्रोपसंहारः शून्यनैरात्म्यसमुत्थानं च तत्प्रतिपादनार्थमसदेवेदमग्र आसीदित्यादि तद्धानार्थमन्धंतमः प्रविशन्ति ये के चात्महनो जना इत्यादि। ततो विवेकं यमाश्रित्य सांख्यमतोपसंहारः शक्तिसत्त्वसमुत्थानं च तत् प्रतिपादनार्थं प्रकृतेः

परस्तादित्यादि तज्ज्ञानाय नान्यत् सदित्यादि। ततः केवल आत्मा प्रकाशते यमाश्रित्याद्वैतमतोपसंहारः, तत्प्रतिपादनार्थं यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति, सा चावस्था न हेया। तत्प्रतिपादनार्थं न पश्यतीत्याहुरेकीभवतीत्यादि तज्ज्ञानार्थं नाद्वैतं नापि द्वैतमित्यादि। ततः समस्तसंस्काराभिभवात् केवलोऽपि न विकल्प्यते यमाश्रित्य चरमवेदान्तोपसंहारः॥ मोक्षनगरगोपुरायमाणत्वात्। निर्वाणं तु तस्याः स्वयमेव, यमाश्रित्य न्यायदर्शनोपसंहारः तत्प्रतिपादनार्थं अथ यो निष्काम आत्मकाम आप्तकामः स ब्रह्मैव सन् ब्रह्माप्येति न तस्य प्राणा उत्क्रामन्ति तत्रैव समवलीयन्त इत्यादीनि। तस्मादभ्यासकामोऽप्यपद्वाराणि विहाय द्वारैरेव प्रविशेत् यतो मार्गविमार्गसंमोहमाशङ्कमानैरुच्यते लक्ष्येण धनुषा योग इति।

शङ्क० टी०। इदानीं दर्शनानामेकवाक्यतां द्रढयितुं प्रतिपत्तिचतुष्टयोत्पादनक्रममुपदिशति। श्रुतेरिति। श्रुतेरुपनिषत्प्रपञ्चात्। आत्मानं श्रुत्वा, समनुक्रान्तवपुषो न्यायादनेन ग्रन्थेन सम्यक्प्रकारेणानुक्रान्तमुपक्रान्तं वपुः शरीरं यस्य तादृशाद्विनिश्चित्य। उपासीत निरन्तरमनुचिन्तयेन्निदिध्यासनविषयं कुर्यादित्यर्थः। किंभूतमात्मानमुपासीतेत्यत आह। विहतहेयव्यतिकरमिति। आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गेषु द्वादश-

विधप्रमेयेष्वत्यन्तवर्ज्यं यत् प्रमेयद्वयकं तद्व्यतिकरस्तत्संबन्धो विहतो यस्य तादृशं केवलमित्यर्थः। यादृशस्तदुपासनाधिकारी तमाह। श्रद्धेति। श्रद्धा—वेदबोधिते फलावश्यंभावनिश्चयः। शमः—निर्विकारमनस्कता। दमः—व्रतादिना कायक्लेशसहिष्णुता। विरामः—उपलब्धेष्वपि विषयेष्वसंप्रत्ययो वैराग्यमिति यावत्। स एवैको विभवः सामग्री यस्येत्यर्थः। किमर्थमुपासीतेत्यत आह। भवोच्छित्त्यै—संसारोच्छेदाय। ननु श्रद्धाशमदमादिसम्पत्तिर्दुर्लभेत्यत आह। चित्तेति। चित्तस्य मनसः प्रणिधिः प्रणिधानं निरिन्द्रियप्रदेशेऽवस्थानं। तदर्थविहितैर्योगिविधिभिरित्यर्थः। योगविधिभिरुपासीतेति वा सम्बन्धः। योगविधयश्च पतञ्जलिपादोपदिष्टाः। योगविधिश्चाक्षपादेनापि चतुर्थाध्यायशेषेऽभ्यनुज्ञातः यदाह। तं गुरुशिष्यसब्रह्मचारिभिः श्रेयोर्थिभिरनसूयिभिरभ्युपेयादित्युक्त्वा योगाच्चात्मविध्युपायैरिति सूत्रं।

ननु दर्शनानां वैमत्यात् कथमुपासना स्यादित्यत आह। उपास्यमान इति। आत्मश्रवणार्थं जैमिनिमहर्षिणा श्रुतावनुश्रीयमाणायां कर्मकाण्डप्रतिपादिका एव श्रुतयः प्रथमं प्राप्ताः। तत्र च ग्रामकामो यजेत। पशुकामश्चित्रया यजेत। पुत्रकामः पुत्रेष्ट्या यजेतेत्यादिदर्शनाद्ग्रामपश्वादयो बहिरर्थाः कथं स्युरित्याकाङ्क्षायां कर्ममीमांसा प्रणीता। न तु ब्रह्मकाण्डे तस्यौदास्यमित्याह। बहिरर्था इति। अत एव बहिरर्थमात्रमधिकृत्य बृहस्पतिनापि चार्वाकमतमुत्थापितं नाप्रत्यक्षप्रमाणमिति। न तु तस्याध्यात्मोपासनौदास्यमिति। ननु सुरगुरोरत्र कीदृशो वेदभागो मूलत्वेनाभिमत इत्यत आह। तत्प्रतिपादनार्थमिति। "पराञ्चि खानि

व्यसृजत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन्” इति। यस्मात् स्वयम्भूः खानीन्द्रियाणि पराञ्चि पर[तात्मदर्शन]मात्र-दर्शनफलान्यसृजत्। नात्मदर्शनफलानीति। तस्मान्नात्मा द्रष्टव्य इत्यभिमान इत्यर्थः। नन्वेतावता चार्वाकमतमेवायातमत आह। तद्धानायेति।

कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः।

अथापरे मनीषिणः परं कर्मभ्यो अमृतत्वमानशुः।

अत्र हि परं कर्मभ्य इत्यनेन कर्मपरतां निरस्यात्मपरतैव दर्शिता। पूर्वमात्मा न भासत इत्युक्तमिदानीमर्थाकार आत्मा भासत इत्युच्यते। अथार्थाकार इति। आत्मा भासत इत्यर्थः। भास्करीया हि त्रिदण्डिन आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वमिति स्वमत-मुपसंहृतवन्तः ज्ञानभिन्नं वस्तु नास्त्येवेति ब्रह्मपदेन ज्ञानमेवोक्तमिति व्यामोहनाय स्वगुरुणा योगाचारमतोत्थापनं कृतम्। ननु व्यास-हृहस्पत्योरत्र कीदृशो वेदभागो मूलमित्यत आह। आत्मैवेदं सर्वमिति। इदं नामरूपस्कन्धपञ्चात्मकं विश्वमात्मैव तत्राऽऽत्मपदं ज्ञानपरतया गृहीत्वा योगाचारो व्यामोहितः। आत्मैव तत्त्वतो ध्येय इत्युपचारमाश्रित्य त्रिदण्डिमतमुपसंहृतं व्यासेन। ननु तर्हि सिद्धं योगाचारमतमत आह। तद्धानार्थमिति। अगन्धमित्यादिना पारमार्थिकगन्धान्योन्याभाववत्तयात्मनः प्रतिपादनात्। अथार्थाभाव इति भासते इत्यनुषङ्गेण सम्बन्धः। यमाश्रित्येति। त्रिदण्डमते-ऽप्यर्थप्रत्ययः स्वीक्रियते किन्तु ब्रह्मपरिणामत्वेन प्रपञ्चमिथ्यात्ववादि-भिस्त्वर्थो नाङ्गीक्रियत एव। द्वारमात्रेति। अर्थाभावे सिद्धे तद्द्वारिका द्वैतसिद्धिरित्यर्थः। प्रपञ्चमिथ्यात्वदर्शनादेवात्मनोऽपि प्रपञ्चान्तर्गत-

त्वाभिमानिभिर्दिगम्बरादिभिः शून्यतानैरात्म्यादेः सिद्धान्तीकृतत्वात्। ननु तत्र पाखण्डप्रतारणार्थैव सुरगुरोः का श्रुतिर्मूलं, का च व्यासस्य प्रपञ्चभागे अनास्थाहेतुरित्यत आह। असदेवेति। नन्वेवमसदेवेति सर्वमायातमिति नात्मोपासनेत्यत आह। अन्धं तमः प्रविशन्तीति। आत्महन इति। आत्मानभ्युपगन्तार इत्यर्थः। ततो विवेक इति। अर्थादात्मन इत्यर्थः। प्रकाशत इत्यप्यनुषञ्जनीयं। तद्विवेकार्थैव कपिलस्य प्रकृतिपुरुषविभागाय सूत्राणीत्यर्थः। अस्य सांख्यदर्शनस्य मननेन परिच्छिद्यमानस्यात्मनः स्मर्यमाणेभ्यो बहिरर्थेभ्यः स्वयमेव भेदं प्रतिपद्यते यस्यामवस्थायां तस्यां समुत्थानमिति भावः। प्रकृते परस्तादिति। अर्थप्रसविनी तावत् प्रकृतिः प्रकृतेः परस्तात् पुरुषस्तु कूटस्थनित्य इत्यर्थप्रतिपादिका श्रुतिः। नन्वियमप्यवस्था हेयैव मनसा प्रतियोगित्वेन तदानीं प्रकृतिपरिमाणादीनां ग्रहणादित्यत आह। ततः केवल इति। अद्वैतेति। एकमेवाद्वितीयं ब्रह्मेति मतोपसंहार इत्यर्थः। इयमवस्था न पश्यतीत्यादिनोक्ता। नन्वियमप्यवस्था हेयैव द्रष्टृत्वाभाववत्तयात्मनः प्रतिपादनादत आह। तद्धानार्थमिति। इयमप्यवस्था नाद्वैतं न वा द्वैतमित्यादिना तिरस्कार्यत्वेनाभिमता द्वैताद्वैताभ्यामपि त्रिदण्डिमतानुप्रवेशात्। द्वैताद्वैतविचारोदासीनेन मनसा केवलात्मसाक्षात्कार इहाभिमत इत्यर्थः। तत इति। केवलात्मसाक्षात्कारावस्थायां युञ्जानस्य योगिनः सवासनमिथ्याज्ञानसमुन्मूलनात्। केवलोऽपि न विकल्प्यते। न सविकल्पकेन विषयीक्रियत इत्यर्थः। किं तु निर्विकल्पकमात्रमात्मन्युदेति। तदुक्तं यदा पुनरात्मा निर्विकल्पके चेतसि भासते तदाऽपवर्ग इति। अत एव च चरम-

वेदान्तोपसंहारः। तत्र हि स्वप्रकाशचिद्रूपात्मस्वरूपमेव मुक्तिरिति प्रतिपादनात्। तन्निर्विकल्पकरूपज्ञानं न वाक्‌विषयो निर्धर्मत्वात्। न मनोविषयोऽजन्यत्वादित्याह। यतो वाच इति। सा चावस्थेति। आत्मनिर्विकल्पकविषयिभावावस्थेत्यर्थः। कुत इत्यत आह। मोक्षेति। गोपुरं पुरद्वारं मोक्षनगरप्रवेशद्वारभूतत्वादित्यर्थः। तस्या इति पञ्चमी तस्याः सकाशान्निर्वाणमित्यर्थः। ननु निर्विकल्पकसत्त्वे कथं मुक्तिः, न च तन्नाशकविरोधिगुणान्तरमस्तीत्यत आह। स्वयमेवेति। न तु विरोधिगुणान्तरात् किन्त्वदृष्टनाशविशिष्टात् कालात् तन्नाश इत्यर्थः। तदुक्तं वार्त्तिके कालात्संस्कारादेति। न्यायदर्शनोपसंहार इति। यमाश्रित्येति। यामवस्थामनुरुध्य घटादिसत्त्वव्यवस्थापनमारभ्यात्मगोचरनिर्विकल्पकोत्पत्तये प्रमाणप्रमेयादिषोडशपदार्थोपवर्णनम्। अत एवापवर्गचरमकारणात्मतत्त्वसाक्षात्कारकारणनित्यत्वज्ञानविषयत्वं प्रमेयलक्षणमाहुः। नन्वेतादृशस्योपसंहारस्य मूलं नास्तीत्यत आह। तत्प्रतिपादनार्थमिति। निष्कामो विषयेष्वलं प्रत्ययवान्। आत्मकाम आत्मगोचरमननसाक्षात्कारपरः। आत्मकामः सञ्जातात्मसाक्षात्कारः। ब्रह्मैव सन्—निरञ्जनात्मस्वरूपः सन् ब्रह्मैव समभ्येति—केवलात्मरूपो भवति। कैवल्यमासादयतीत्यर्थः। न तस्येति। ततः परं जीवनमरणे तस्य न भवतो न संसरतीत्यर्थः। तत्रैव समवलीयन्ते—केवलात्मरूपतया व्यवतिष्ठन्ते विलीयन्त इति यावत्। ननु तान्यपि दर्शनान्येकवाक्यतया व्यवस्थितानि चेत्तदा मुमुक्षुभिस्तान्येवोपास्यन्तां किं न्यायदर्शनेनेत्युपसंहरन्नेव शङ्कां निरस्यति। तस्मादिति। तेषां दर्शनानामुत्थाने परमेकवाक्यता, न तूपसंहारेऽपि, भ्रमेण सिद्धान्ता-

न्तरपर्यवसानादनादेयतया विमार्गत्वात्। लक्ष्येण धनुःसंयोगः कदाचिदेवोपपद्यते इति शेषः। लक्ष्यप्रापको धनुर्मार्गो यदि भवतीति। तथा चायमेव मार्गस्तथेति भावः।

---

भगी० टी०। योगेति। योगश्चित्तस्यापेक्षितस्थैर्यहेतुर्वृत्तिनिरोधः। तदुपायानुष्ठानबोधकपातञ्जलादिरीत्येत्यर्थः। श्रद्धा फलावश्यन्तानिश्चयः। शमो—विषयानौत्सुक्यं, दम—इन्द्रियजयो दुःखसहिष्णुता वा, विरामो—निवृत्तिलक्षणो धर्मः विषयेष्वसंप्रत्ययो वा, एषामेकोऽद्वितीयो मुख्यो वा विभवः सम्पद्यस्य स तथा। तथा च योगजात्मसाक्षात्कारिसहकार्यभावान्न मननानन्तरमेव मोक्ष इत्यर्थः।

नन्वेवं स्वर्गादौ दुःखत्वेन तत्त्वे तु यागादिप्रवर्तकानां वेदभागानां तद्धेयत्वस्थापकानां शास्त्राणां च विरोध इत्यविरोधाय ध्यानक्रममेव तेषां काष्ठामाह। उपास्यमान इति। बहिरर्था आत्मभिन्नाः। यः स्वर्गार्थी तं प्रति यागादेः साधनत्वमुक्तं। मुमुक्षुं प्रति यद्यप्यस्य हेयत्वमुक्तं स्थानान्तरे, सर्वस्य त्यागप्रतिपादनात्, तथापि पुरुषेच्छानुरोधात्तन्नोक्तमित्याह। उपसंहार इति। समुत्थानं एतावदेव विश्वमिति व्यामोहात्। ननु प्रबलतरविषयदोषदर्शनं न तेषां कुत इत्यत आह। पराञ्चीति। दृष्टिरियं रागप्रवणेयमित्यर्थः। तत्प्रतिपादनार्थं तद्धानार्थमित्युपसंहारोऽयोनयो मृत्तथा सर्वत्र योज्यम्। अर्थेति। भासत इत्यन्वीयते। उभयरूपभासनाद्भेदाभेदोऽस्तु तावतापि मोक्षोपपत्तेरधिकारनिरूपणमुपसंहारः। समुत्थानञ्च भेदे विषयत्वव्यवस्थाविरहाज्ज्ञानविषययोरभेदाभि-

मानात्। तत इति। ध्यानाधिक्यादर्थाभावो भासत इत्यर्थः। द्वारमात्रोपसंहार इति। अर्थाभावस्य ज्ञानसत्यौदासौन्यमित्यर्थः। शून्येति। अर्थनियतस्य ज्ञानस्यानुरोधे बाध इत्यभिमानादित्यर्थः। आत्मत्वनास्तित्वनिषेधका इत्यर्थः। तत इति। योगस्य परिपाकेना-त्मानात्मनोर्भेदो भासत इत्यर्थः। साङ्ख्येति। आत्मनो धर्मशून्यत्व-निश्चयेऽपि मोक्ष इत्युपसंहारार्थः। शक्तीति। शक्तिरेव विश्व-कारणं, सत्त्व आत्मा त्वलेप इत्युत्थानम्। पूर्वं यद्द्वारमात्रमुक्तं तदाह। अद्वैतेति। धर्मोपरागहानायाह न द्वैतमिति। तत इति। अभ्यासप्रकर्षकाष्ठातो, न विकल्प्यते—निर्विकल्पकमात्रविषय आत्मा भवतीत्यर्थः। चरमेति। अविद्यादशायां कैवल्यदशायां कैवल्या-द्यभिलापो वस्तुतः स्वप्रकाशमात्मतत्त्वमात्मसाक्षिकमेवेत्यर्थः। यतो वाच इति। धर्मधर्मिभावपुरस्कारेण द्वैतमाश्रित्य शब्दानां प्रवृत्तेरित्यर्थः। सा चेति। यस्यामवस्थायां केवलमात्मैव निर्वि-कल्पकविषय इत्यर्थः। तस्या इति पञ्चमी। स्वयमिति। भोगेना-दृष्टक्षयात्तत्कार्यजन्माद्यभावादित्यर्थः। घटादिसत्त्वमारभ्य यावद्दूर-तत्त्वकाष्ठेत्याह। न्यायेति। निष्कामो विषयालम्बप्रत्ययेन तत्त्व-ज्ञानशून्य इत्यर्थः।

---

रघु० टी०। मोक्षजनकात्मसाक्षात्कारार्थकतया श्रवणादीनां मोक्षोपयोगित्वमुपसंहरन्नेव दर्शयति। तस्मादिति। समीचीनैः क्षणि-कत्वभूतचैतन्यक्षणिकज्ञानाद्यात्मत्वादिबाधकैर्मानैः अनुक्रान्तं सम्बद्धं वपुर्यस्य तस्मान्न्यायात्। विशेषैर्ज्ञानादिमत्त्वशरीरादिभिन्नत्वनित्यत्वै-र्निश्चित्य। विहतो वारितो हेयस्य शरीरादेर्व्यतिकरः सम्बन्ध-

स्तादात्म्यं यस्य तादृशं आत्मानम्। भवस्य संसारस्य। उच्छित्त्यै उच्छेदकारणाय साचात्काराय। उपासीत निरन्तरं ध्यायेत्। श्रद्धा फलावश्यम्भावनिश्चयः। शमः—इन्द्रियजयः, दमः—क्लेशसहिष्णुता। विरामो—वैराग्यं, अतिचञ्चलत्वेन मनसो निरन्तरमात्मध्यानमशक्य-मत आह। चित्तेति। चित्तस्य मनसः प्रणिधये बहिर्विषयादाकृष्य आत्मनि स्थापनाय विहितैर्योगविधिभिर्योगशास्त्रोक्तैः प्रकारैरासन-प्राणायामादिभिः तैरात्मनि मनः स्थिरीकृत्य तं ध्यायेदित्यर्थः।

इदानीं ध्यानक्रमं दर्शयन्नेव तदाभासानां यथायोगं विषयभेद-मुत्थानबीजं चाह। उपास्यमान इत्यादिना। प्रथममित्यादि। बुभुक्षुतादशायां ग्रामपशुहिरण्यादीनां निरन्तरमभ्यर्थ्यमानत्वेन समुत्कटवासनावशात् प्रथमं त एव भासन्त इत्यर्थः। कर्मेति। तस्याः कर्मकाण्डविचार एव प्रवृत्तत्वात् न तु ब्रह्मविचार इति भावः। अन्तरात्मनो दर्शनविरहेणासत्त्वमिति शङ्कानिराकरण-परायाः श्रुतेरर्थस्य तदसत्त्वपरत्वकल्पनमपि तन्मतोत्थानबीजमिति प्रतिपादयितुमाह। तदित्यादि।

पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् इति।

स्वयम्भूर्ब्रह्मा खानि इन्द्रियाणि व्यतृणत् हिंसितवान् पराञ्चि पराक्प्रवणानि कृतवान् तस्माज्जीवः पराङ् पराचो बाह्यानर्थान् पश्यति नान्तरात्मन् नान्तरात्मानं धीरः साधनसम्पन्नः आवृत्तचक्षुः बाह्यार्थव्यावर्तितेन्द्रियग्रामः प्रत्यगात्मानं अन्तरात्मानं अमृतत्वं मोक्षं। श्रुतिः

कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः।

अथान्ये ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुरिति। तथा
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः।
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति इति।
ध्यानक्रमवशादर्थाकारत्वेनात्मा भासत इत्याह। अथार्थाकार इति। श्रुत्या जगतो ब्रह्माभेदस्य बोधनात्तज्ज्ञानमेव मोक्षे हेतुरित्यभिमानस्त्रैदण्डिकानाम्। स्वप्रकाशं ज्ञानमेवात्मा ततोऽन्यस्याननुभवात्, भेदे विषयविषयिभावस्यासम्भवादित्यभिमानो विज्ञानवादिनाम्। योगाचारो विज्ञानवादी। श्रुतिः "अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वम्" इति "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इति। अस्य भाष्यम् आत्मादेशः आत्मैव शुद्धेन केवलेनातिदिश्यत इत्यादेशः। अधस्ताद्भूमौ न तद्व्यतिरेकेणान्यद्दिश्यते, एवमुपरिष्टादित्यादि। इदं चराचरात्मकं सर्वमात्मैव तद्व्यतिरेकेणाभावादिति। श्रुतिः "सहोवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन" इति। अस्य भाष्यं एतद्वै तदक्षरं यत्पृष्टवत्यसि। हे गार्गि। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। किन्तत् अक्षरं न क्षरति न क्षीयते वा अक्षरं ब्राह्मणा ब्रह्मविदोऽभिवदन्ति स्थूलाद्यन्यत्वेन निर्धर्मकमेकरसं वस्तु प्रतिपाद्यते। वेदान्तेति। अद्वितीयसच्चिदानन्दात्मकब्रह्मबोधिकानामुपनिषदां प्रपञ्चमिथ्यात्वस्य सिद्धा-

वेव प्रवृत्तेस्तत्साधकानां द्वारत्वं । श्रुतिः "सदेव सोम्येदमग्र आसी-देकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायते कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सदेवेदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति"। अस्य भाष्यं सदित्यस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं। एवशब्दोऽवधारणार्थः। किन्तदवध्रियत इत्याह। इदं जगन्नाम-रूपक्रियावत् विकृतमुपलभ्यते यत् सदेवासीत्। कदा अग्रे जगतः प्रागुत्पत्तेः। एकमिति सजातीयभेदनिषेधः। अद्वितीयमिति विजातीयभेदनिषेधः। एतस्मिन् प्रागुत्पत्तेर्वस्तुनिरूपणे एके वैना-शिकाः आहुः असदभावमात्रं। आत्महनो नैरात्म्याभिमानिनः। श्रुत्यन्तरं

असूर्या नाम ते लोका अन्धेन तमसाऽऽवृताः।

तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ इति। साङ्ख्येति। अतिरिक्तात्मसिद्धिमुद्दिश्य तच्छास्त्रप्रणयनात्। शक्तिः प्रकृतिः सत्त्वो महान् बुद्धितत्त्वरूपः। सुखाद्याश्रयतया महतो मूलकारणतया च प्रकृतेरभ्युपगमस्तन्मतानुयायिनाम्। श्रुत्यन्तरं "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" इति। तमसः प्रकृतेः। तत्प्रति-पादनार्थं केवलात्मप्रतिपादनार्थं। श्रुतिः "एकीभवति न पश्यती-त्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहु-रेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानाती-त्याहुः" इति। तत् किं द्रष्टृत्वाद्यभावविशिष्टस्यात्मनो भावने श्रुते-स्तात्पर्यं नेत्याह तद्धानार्थमिति। नाद्वैतं नापि द्वैतमित्यादि

श्रुतेर्निर्धर्मकात्मकचिन्तन एव तात्पर्यमिति भावः। तत इत्यादि। यद्यपि संस्काराभिभवेऽपि पूर्वविशिष्टज्ञानोपस्थितविशेषणविशिष्टविषयकमेव ज्ञानान्तरमुत्पत्तुमर्हति तथापि ध्यानपरिपाककाष्ठावशादात्मविषयकं निर्विकल्पकमेवोत्पद्यते, प्रमाणं चाऽत्र श्रुतिरेवेति भावः। चरमेति। शुद्धस्वप्रकाशचित्स्वरूपब्रह्मप्रतिपादकवेदान्तानामुपसंहारः प्रतिपाद्यान्तरविरहात्। यत इति। वचसो ध्यानपरिपाककाष्ठाविरहदशायां च मनसो धर्मपुरस्कारप्रवृत्तिकस्य निर्धर्मात्मबोधनक्षमताविरहादिति। तस्या इति पञ्चमी। निर्वाणमपवर्गः। स्वयं भोगेनादृष्टक्षयादित्यर्थ इत्येके। तस्या निर्वाणं विनाशः। स्वयं कालविशेषसहकृतात्तत एवेत्यर्थ इत्यन्ये ॥ ० ॥

इति महामहोपाध्यायश्रीमद्भट्टाचार्यशिरोमणिविरचित
आत्मतत्त्वविवेकभावप्रकाशः सम्पूर्णः(१) ॥

---

(१) Post-colophon statement (?):—

शुभमस्तु शकाब्दाः १५३८ समये आषाढशुक्लचतुर्दश्यां
भौमे संवत् १६७२ ॥ श्रीः ॥

नमो नलिननेत्राय वेणुवाद्यविनोदिने ।
राधाधरसुधापानशालिने वनमालिने ॥

श्रीरामः शरणम् ॥

बहुतरपरतन्त्रप्रान्तरध्वान्तभीत-
स्तिमितपथिकरक्षासार्थवाहेन यत्नात् ।
तदिदमुदयनेन न्यायलोकागमानां
व्यतिहतिमवधूय व्यञ्जितं वर्त्म मुक्तेः ॥ १ ॥
नास्य श्लाघामकलितगुणः पोषयन् प्रीतये नः
कोऽन्धैश्चित्रस्तुतिशतविधौ शिल्पिनः स्यात् प्रकर्षः ।
निन्दामेव प्रथयतु जनः किन्तु दोषान्निरूप्य
प्रेक्षांस्तथ्यस्खलितकथनं प्रीणयेदेव भूयः ॥ २ ॥

इत्याचार्योदयनकृत आत्मतत्त्वविवेकः सम्पूर्णः ॥

शङ्क० टी० । बहुतरेति । बहुतराणि परतन्त्राणि वेदान्तादीनि तान्येव प्रान्तराणि दूरशून्याध्वानः, तत्राज्ञानमेव ध्वान्तं मोहस्तेन भीता अत एव स्तिमिताः संज्ञामप्राप्ता निष्क्रिया ये पथिका मुमुक्षवस्तेषां रक्षार्थं सार्थवाहः वर्त्मदर्शक इति यावत् न्यायस्य लोकस्यागमस्य तेषां व्यतिहतिर्विरोधस्तमवधूय निरस्य । नास्येति । अकलित-गुणो मूर्खः अस्य ग्रन्थस्य श्लाघामादरं पोषयन्नपि कुर्वन्नपि नोऽस्माकं प्रीतये सुखाय [न] भवति । अत्र दृष्टान्तमाह कोऽन्धैरिति । विज्ञस्तु जनः परं निन्दामेव प्रथयतु ख्यापयतु किन्तु दोषान्निरूप्य, तथा च दोषनिरूपको विज्ञोऽत्र दोषाभावान्निन्दां न करिष्यत्येवेति भावः । ननु विज्ञनिरूपणाद्दोष एव वास्तवोऽस्तीत्यत आह प्रेक्षानिति । प्रकृष्टा ईक्षा येषां ते प्रेक्षाः तान् वास्तवदोषकथनं प्रीणयेदेव सुखयेदेवेत्यर्थः ।

(१)स्वभ्रातुर्जीवनाथस्य व्याख्यामाख्यातवान्मयि ।
मत्पिता भवनाथो यां तामिहालिखमुज्ज्वलाम् ॥
पित्रा यद्भवनाथेन व्याख्यातं तदिहालिखम् ।
व्याख्यानगुणदोषाभ्यां संबन्धो मत्पितुर्न मे ॥
अश्रुत्वा मत्पितुर्व्याख्यामदृष्ट्वा मत्कृतामिमाम् ।
आत्मतत्त्वविवेकस्य कस्य व्याख्यानकौशलम् ॥

इति महामहोपाध्यायश्रीभवनाथात्मजमहामहोपाध्यायसन्मिश्र-
श्रीशङ्करकृतात्मतत्त्वविवेककल्पलता समाप्ता ॥

शुभमस्तु ॥

(१) मद्भ्रातुरिति २ पु० पा० ।

| Size. | Contents. | Per unit of 96 or 100 pages. |
|---|---|---|
| Demy octavo .. | Oriental text only .. .. | Rs. 0-12-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | ,, 1-0-0 |
| Royal octavo .. | Oriental text only .. .. | ,, 1-0-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | ,, 1-4-0 |
| Quarto .. | Oriental text only .. .. | ,, 2-0-0 |
| | Text and translation, English notes, etc., mixed; or translation only .. .. | ,, 2-8-0 |

There are some exceptions to this scale, which in each case will be indicated in the price-lists. For the calculation of prices, each part of a unit in excess of the 96 or 100 pages counts again as a full unit.

Single issues may be bought separately, but three years after the completion of a work no complete sets are broken for the sale of loose component parts.

Each issue bears, besides its issue number, a fascicle number indicating its place in the work and volume to which it belongs.

**With the issue of this Notice all previous prices and price-lists are cancelled.**

CALCUTTA,
1st *January*, 1939.

The publications or information about them are obtainable from the Royal Asiatic Society of Bengal, No. 1, Park Street, Calcutta, or from the Society's Agents:—

MESSRS. LUZAC & Co., 46, Great Russell Street, London, W.C.

M. PAUL GEUTHNER, 13, Rue Jacob, Paris, VI^e.

BUCHHANDLUNG OTTO HARRASSOWITZ, 14, Querstrasse, Leipzig.

MESSRS. THACKER, SPINK & Co., LD., 3, Esplanade, East, Calcutta.

*Residents of Europe should order from the Agents.*

When ordering direct from the Society the following rules should be observed:—

Orders should be addressed to the Royal Asiatic Society of Bengal and not to any Official by name or title.

All Cheques, Money Orders, etc., should be made payable to the "Treasurer, Royal Asiatic Society of Bengal".

Orders for books should be accompanied by a full name and address, legibly written, and should be sent on a separate sheet of paper containing no other communication.

In India, books are supplied by V.-P.P.

